साधिकरणकालवृत्तित्वरूपमानंतर्यमर्थस्तदेकदेशध्वंसेआनंतर्यावधितयाऽर्थतोलब्धसद्धेतुनिरूपणस्यानुयोगितयाऽन्वयः॥
अथशब्दस्यैवसद्धेतुनिरूपणानंतर्यमर्थइतिवा॥व्याप्तिपक्षधर्मताप्रकारकभ्रमविशेष्याःहेत्वाभासपदार्थः॥हेतुवदाभासंत
इतिव्युत्पत्त्याभासपदंभ्रमार्थकं शुक्तिकारजतवदाभासतइतिप्रामाणिकप्रयोगदर्शनात्॥आख्यातार्थोविशेष्यता॥ तद्वदित्यस्यत-
त्सादृश्येनेत्यर्थः॥सादृश्यंचव्याप्तिविशिष्टपक्षधर्मतारूपंतृतीयार्थःप्रकारत्वंतस्याभासपदार्थेन्वयः॥ज्ञानजन्यजिज्ञासाधीनत्वंपं
चम्यर्थस्तदेकदेशेज्ञानेप्रकारतयाप्रकृत्यर्थान्वयः॥ आनंतर्यपंचम्यर्थयोर्लक्षणादिप्रकारकज्ञानानुकूलव्यापाररूपेनिपूर्वकरूप
धात्वर्थेनिरूपणेन्वयः॥कर्माख्यातवशाच्चमयेत्यध्याहार्यं॥तत्रकृतिस्तृतीयार्थस्तस्यांप्रकृत्यर्थस्यग्रंथकर्तुराधेयतयान्वयः॥त
स्याजन्यतासंबंधेनधात्वर्थनिरूपणेऽन्वयः॥कृत्यन्वयिवर्तमानत्वंहेत्वाभासपदार्थान्वयिविषयत्वंचकर्माख्यातार्थस्तथाचग्रंथकृ
त्समवेतवर्तमानकृतिजन्यसद्धेतुनिरूपणानंतरतत्वनिर्णयविजयप्रयोजकत्वप्रकारकज्ञानजन्यजिज्ञासाधीननिरुक्तनिरूप
णविषयीभूताव्याप्तिपक्षधर्मताप्रकारकभ्रमविशेष्याइत्यर्थकेतस्मिन्पंचम्यर्थस्यज्ञानजन्यजिज्ञासाधीनत्वस्यनिरूपणेऽन्वया

धीनं ॥ तेषप्यसन्निकृष्टार्थसाधकत्वेनस्वस्वेतरसर्वप्रमाणप्रामाण्यसाधकत्वेनचमूर्द्धन्यत्वादनुमानमेवबहुप्रपंचंनिरूपयामासचिं
तामणिः ॥ तंचव्याचख्यौशिरोमणिः ॥ शिरोमणिव्याख्याःसंतिबह्व्यस्तासांमध्येसंप्रतिगादाधर्येवप्रबला ॥ तस्यामेवाध्ययनाध्याप
नयोर्बहुशःप्रचारदर्शनात् ॥ गादाधर्यामपिसामान्यनिरुक्तिपंचलक्षणीचतुर्दशलक्षणीसिद्धांतलक्षणावयवपक्षताख्याःपंचवादा
मुख्याः ॥ तदध्ययनाध्यापनयोस्तत्रत्यविषयेषेवसभायामूहापोहात्मकविचारस्यचप्रायशोदर्शनात् गदाधरभट्टाचार्यैस्तेषेवब
हुप्रपंचितत्वाच्च ॥ पंचवादेषुहिसंतिदुर्बोधविचारणीयान्यूहापोहार्हाणिबहुस्थानानिवाक्यानिचतानिचकृष्णंभट्टैरतिविस्तरतः
प्रकाशितानीतरैश्चक्वचित्क्वचित् ॥ तत्रतत्रस्थितानामूहापोहानांव्यस्तत्वेनदुरवबोधत्वेनचालोचनालसानांपंचवादेषूहापोहकौ
शल्येच्छावतांकृतेकृष्णंभट्टादिविवरणवाक्यान्यालोच्यतदुदितान्क्वचित्स्वकल्पितांश्चपूर्वपक्षसमाधानसिद्धांतान्संगृह्यसमा
रभ्यते ॥ सामान्यनिरुक्त्यादिक्रमेणन्यायरत्नाभिधेयमभिनवाटिप्पणी ॥ एतांचाधिकोत्क्षेपणेनन्यूनपूरणेनचशोधयंतुदया
लवोविद्वांसोभूषयंतुच ॥ ॥ अथहेत्वाभासास्तत्वनिर्णयविजयप्रयोजकत्वान्निरूप्यंत इतिमूलं ॥ तत्राथशब्दस्यध्वं

साधिकरणकालवृत्तित्वरूपमानंतर्यमर्थस्तदेकदेशध्वंसेआनंतर्यावधित्वयाऽर्थतोलब्धसद्धेतुनिरूपणस्यानुयोगितयाऽन्वयः॥
अथशब्दस्यैवसद्धेतुनिरूपणानंतर्यमर्थइतिवा ॥ व्याप्तिपक्षधर्मताप्रकारकभ्रमविशेष्याः हेत्वाभासपदार्थः ॥ हेतुवदाभासंत
इति व्युत्पत्त्याभासपदंभ्रमार्थकं शुक्तिकारजतवदाभासतइतिप्रामाणिकप्रयोगदर्शनात् ॥आख्यातार्थो विशेष्यता ॥ तद्वदित्यस्यत-
त्सादृश्येनेत्यर्थः॥ सादृश्यंचव्याप्तिविशिष्टपक्षधर्मतारूपंतृतीयार्थः प्रकारत्वंतस्याभासपदार्थेन्वयः॥ ज्ञानजन्यजिज्ञासाधीनत्वंप
चम्यर्थस्तदेकदेशेज्ञानेप्रकारतयाप्रकृत्यर्थान्वयः ॥ आनंतर्यपंचम्यर्थयोर्लक्षणादिप्रकारकज्ञानानुकूलव्यापाररूपेनिपूर्वकरूप
धात्वर्थेनिरूपणेन्वयः॥ कर्माख्यातवशाच्चमयेत्यध्याहार्यं॥ तत्रकृतिस्तृतीयार्थस्तस्यांप्रकृत्यर्थस्यग्रंथकर्तुराधेयतयान्वयः॥ त
स्याजन्यतासंबंधेनधात्वर्थनिरूपणेऽन्वयः॥ कृत्यन्वयिवर्तमानत्वंहेत्वाभासपदार्थान्वयिविषयत्वंचकर्माख्यातार्थस्तथाचग्रंथकृ
त्समवेतवर्तमानकृतिजन्यसद्धेतुनिरूपणानंतरतत्वनिर्णयविजयप्रयोजकत्वप्रकारकज्ञानजन्यजिज्ञासाधीननिरुक्तनिरूप
णविषयीभूताव्याप्तिपक्षधर्मताप्रकारकभ्रमविशेष्या इत्यर्थकेतस्मिन्पंचम्यर्थस्यज्ञानजन्यजिज्ञासाधीनत्वस्यनिरूपणेऽन्वया २

देवसंगतिप्रदर्शनसिद्धौनप्रसंगादितिपूरणमनुचितमित्याशंकांनिरस्यति ॥ हेत्वाभासनिरूपणेति ॥ सद्धेतुनिरूपणानंतर
मितिशेषः ॥ प्रयोजकजिज्ञासाजनकज्ञानविषयत्वंसंगतितत्वपदार्थः ॥ विशिष्टवाचकानामितिन्यायात् ॥ तदेकदेशप्रयोजकत्वेहे
त्वाभासनिरूपणरूपप्रकृत्यर्थान्वितसप्तम्यर्थनिरूपितत्वान्वयः ॥ सद्धेतुनिरूपणानंतर्यस्यहेत्वाभासनिरूपणेन्वयः ॥ तथाचसद्धेतु
निरूपाणानंतरहेत्वाभासनिरूपणप्रयोजकजिज्ञासाजनकज्ञानविषयत्वंसंभवतीतिवाक्यार्थः ॥ यद्वादानेकर्णसमइतिवत्हे
त्वाभासनिरूपणेइत्यत्राभेदःसप्तम्यर्थः ॥ अभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वंसंगतित्वपदार्थस्तदेकदेशाभिधाने
सप्तम्यर्थान्वयः ॥ शेषंपूर्ववदेव ॥ प्रसंगस्यापि ॥उपोद्घातादिपंचकभिन्नस्यापीत्यर्थः ॥ ननूपोद्घातादिपंचकभिन्नत्वविशिष्टानं
तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्यापीत्यर्थस्तथासतिनिरुक्तप्रसंगवृत्तिसंगतित्वमितिबोधस्यनीलघटवात्ति
घटइतिवदप्रामाणिकत्वप्रसंगात् ॥ व्याप्तिपक्षधर्मताविरहरूपंप्रसंगंतस्यनिरुक्तसंगतित्वंचदर्शयति ॥ व्याप्तिपक्षधर्मते
त्यादिना ॥ एकसंबंधिज्ञानस्यैवापरसंबंधिस्मारकत्वान्निरूपणेसतीत्यनेनसद्धेतुरूपैकसंबंधिज्ञानलाभः ॥ व्याप्तिपक्षध

र्मताविरोधीति ॥ एतच्चतद्विरहवतइत्यत्रोभयत्वावच्छिन्नाभाववतोलाभाय ॥ केचित्तुविरोधीतितदसमानाधिकरणेत्यर्थः ॥ विरोधिपदंव्याप्ति
पक्षधर्मत्वाभावस्यस्ववृत्तिधर्मविरोधिधर्मविधयास्मारकत्वलाभायेत्याहुः ॥ यद्यपिअसंकीर्णबाधितादेः स्मृतत्वंनसंभवति तत्रव्याप्तिपक्ष
धर्मत्वोभयस्यैवसत्वात् ॥ तथापिनिरूप्यतावच्छेदकसामानाधिकरण्येनसंगतेस्तदवच्छेदेननिरूपणप्रयोजकत्वाभ्भासंगतिः ॥ तदप्रदर्शने
नेति ॥ प्रसंगस्यसंगतित्वाप्रदर्शनेनेत्यर्थः ॥ तन्निरूपणप्रयोजकत्वमिति ॥ हेत्वाभासनिरूपणप्रयोजकजिज्ञासाजनकज्ञानविषय
त्वमित्यर्थः ॥ दीधितावेतावतेति ॥ एतावता ॥ अवयवांतग्रंथेनेत्यर्थः ॥ निरूप्येत्यत्रनिरूपणान्व य्य भेदस्तृतीयाऽर्थःधान्येनधनवा
नितिवत् ॥ सपरिकरं ॥ व्याप्तिपक्षधर्मताविशिष्टं ॥ हेतुं ॥ लिंगं ॥ विषयत्वंद्वितीयार्थः ॥ निरूप्येत्यत्रप्रतिपत्यनुकूलव्यापाररूपनि
पूर्वकरूपधात्वर्थघटकप्रतिपत्तौतदन्वयः ॥ आनंतर्यंल्यबर्थः ॥ तच्चध्वंसाधिकरणकालवृत्तित्वंतदाभासनिरूपणमित्यत्रज्ञानाकू
लव्यापाररूपनिपूर्वकरूपधात्वर्थनिरूपणेतदन्वयः तादृशनिरूपणएवपंचमीद्वयार्थान्वयः  अन्वयश्चास्यनिरूपणमित्यनेन
व्याख्यायांदर्शितएव ॥ तदाभासेति ॥ सद्धेतुवृत्तिव्याप्तिपक्षधर्मतावत्त्वरूपतत्सादृश्यप्रकारकभ्रमविशेष्येत्यर्थः ॥ निरूपणमित्य ३

स्य द्वितीयार्थो विषयत्वं ॥ प्रतिपूर्वकजानतेरुत्तरकालीनकृतिविषयत्वप्रकारकज्ञानानुकूलव्यापाररूपप्रतिज्ञाऽर्थः ॥ वर्तमानत्वं कृतिश्चाख्या
तार्थः ॥ निरूपणस्य निरूपितत्वसंबंधेन द्वितीयार्थविषयतायामन्वयः ॥ विषयतायाश्चोक्तव्यापाररूपधात्वर्थैकदेशज्ञानेऽन्वयः ॥ व्यापार
स्य जनकतासंबंधेन कृतावन्वयः ॥ वर्तमानत्वस्यापि कृतावन्वयः ॥ कृतेश्चाश्रयतया आख्याताक्षिप्तकर्तरि मणिकारेऽन्वयः ॥ तथाचावयवां
तग्रंथाभिन्नो यः सपरिकरहेतुविषयकज्ञानानुकूलव्यापारस्तदुत्तरकालीनं यत्सपरिकरहेतुनिरूपितप्रसंगसंगतिज्ञानजन्यजिज्ञा
साप्रयोज्यं तत्वनिर्णयादिरूपतत्कार्यकारित्वज्ञानजन्यजिज्ञासाप्रयोज्यं च तदाभासनिरूपणं अनुमितिकारणीभूतेत्यादिशब्दात्म
कं तद्विशेष्यकाव्यवहितोत्तरकालकर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारोऽथेतिशब्दात्मकस्तदनुकूलवर्तमानकृतिमान् मणिकार
इति बोधः ॥ ननु तत्प्रसंगादित्येवास्तु किं निरूप्येत्यंतेनेत्यत आह निरूप्येत्यंतमिति ॥ उक्तक्रमेण ॥ व्याप्तिपक्षधर्मताविशिष्टहेतुनि
रूपणे सतीत्युक्तक्रमेणेत्यर्थः ॥ दुष्टहेतोरिति ॥ अस्य च स्मृतत्वेऽन्वयः ॥ प्रसंगनिर्वाहकस्येति ॥ उपोद्घातादिपंचकभिन्नत्वविशिष्टा
नंतराभिधानप्रयोजकजिज्ञासाजनकस्मृतिविषयत्वरूपप्रसंगत्वविशिष्टप्रसंगसत्ताप्रयोजकस्येत्यर्थः ॥ विशिष्टसत्तां प्रति वि

शेषणसत्तायाः प्रयोजकत्वात् निरूप्येत्यंतेन एकसंबंधिज्ञानरूपापरसंबंधिज्ञानसामग्रीसंपादनात्स्मृतत्वघटितनिरुक्तप्रसंगत्वविशि
ष्टसत्तांप्रतिस्मृतत्वसत्तायाः प्रयोजकत्वंबोध्यं ॥ केचित्तुदुष्टहेतोरित्यस्यहेत्वाभासत्वस्येत्यर्थः॥ प्रसंगनिर्वाहकस्येत्यस्यप्रसंगस्यसंगति
त्वनिर्वाहकस्येत्यर्थस्तथाचानंतराभिधानप्रयोजकजिज्ञासाजनकस्मृतिविषयत्वरूपसंगतित्वंव्याप्तिपक्षधर्मतोभयाभावरूपप्रसंग
स्यहेत्वाभासत्वात्मनोस्मृतत्वंविनानुपपन्नमिति तादृशस्मृतत्वस्यतन्निर्वाहकत्वमितिवदंति॥ननूपोद्घातादिपंचकभिन्नत्वेसत्यनंतराभि
धानप्रयोजकजिज्ञासाजनकस्मरणप्रकारत्वरूपप्रसंगत्वबोधकप्रसंगपदेनैवतादृशोभयाभावरूपप्रसंगस्यस्मृतत्वलाभेनिरूप्येत्य
तंव्यर्थमेवेतिचेन्न ॥ तेनसद्धेतुनिरूपणस्यपूर्वकालीनत्वबोधनात्तादृशस्मरणप्रयोजकैकसंबंधिज्ञानरूपसामग्रीसाकल्यस्यबोधा
त्स्मरणेकथंतानिवृत्तेः॥ निरूप्येत्यनेनसद्धेतुनिरूपणस्यसिद्धत्वोक्त्याऽवसरसंगतिलाभस्तत्प्रयोजनमितिकेचित् ॥ प्रसंगेसद्धे
तुनिरूपितसंगतित्वघटकस्यसद्धेतुनिरूपणोत्तरकालीनत्वस्यलाभायनिरूप्येत्यंतमित्यपरे ॥ सपरिकरहेतुनिरूपितेति ॥ नि
रूपितत्वंतज्ज्ञानाधीनज्ञानविषयत्वरूपं ॥ तज्ज्ञानजन्यजिज्ञासाधीनेति ॥ सपरिकरहेतुनिरूपितस्वनिष्ठव्याप्तिपक्षधर्मतोभ ४

याभावादिरूपप्रसंगसंगतिज्ञानप्रयोज्यजिज्ञासाप्रयोज्येत्यर्थः ॥ जिज्ञासायांसपरिकरहेतुनिरूपितप्रसंगसंगतिज्ञानप्रयोज्यत्वंचावय
वांतग्रंथेनसपरिकरहेतुनिरूपणानंतरंशिष्यस्यतज्ज्ञानंततो इतःपरं निरूपणीयंगुरुस्मृतिविषयवत्किंचित्स्यादितिगुरुस्मृतिविषय
त्वेनसपरिकरहेतुनिष्ठव्याप्तिपक्षधर्मत्वोभयाभावादिरूपप्रसंगसंगतिज्ञानंसामान्यधर्मप्रकारकंततोगुरुस्मृतिविषयावांतरधर्म
प्रकारकज्ञानंमदिष्टसाधनमितीष्टसाधनताज्ञानादिकंततस्तादृशज्ञानंमेभूयादितीच्छेतिक्रमेण ॥ नचहेत्वाभासनिरूपणेहेत्वाभा
सत्वावांतरधर्मप्रकारकज्ञानेच्छाया एवप्रयोजकत्वात् दर्शितज्ञानेच्छा अनुपयुक्तेतिशंक्यं ॥ प्रसंगसंगतेर्हेत्वाभासत्वरूपत्वात्तस्य
तद्व्याप्यत्वाच्चतज्जिज्ञासाधारस्तज्जिज्ञासारूपत्वात् ॥ नचतस्यैवतद्व्याप्यत्वेतत्प्रकारकजिज्ञासातःपूर्वंसामान्यधर्मप्रकारकज्ञानवि
षयातज्ज्ञानस्यावश्यकत्वेनतादृशजिज्ञासाविषयस्यप्राक्सिद्धत्वान्नताज्जिज्ञासोत्पत्तिरितिवाच्यं ॥ एकस्यैवतस्यअनुमितिकारणी
भूताभावप्रतियोगियथार्थज्ञानविषयत्वेनव्याप्यत्वस्यगुरुस्मृतिविषयत्वेनव्यापकत्वस्यसंभवेनप्रसंगसंगतित्वंपुरस्कृत्यपूर्वंहेत्वाभास

टि० स्वनिष्ठव्याप्त्यभावविशिष्टस्वनिष्ठपक्षधर्मत्वाभावः आदिपदार्थः

त्वप्रकारकज्ञानसत्वेपितादृशायथार्थज्ञानविषयत्वेनतत्प्रकारकज्ञानस्यासिद्धतयातथाविधजिज्ञासासंभवात् ।। तादृशजिज्ञास
यांहेत्वाभासनिरूपणप्रयोजकत्वंचतादृशजिज्ञासानंतरंगुरुंप्रतिशिष्यस्यगुरुस्मृतिविषयवान्कइतिजिज्ञासाबोधकशब्दरूपः
प्रश्नस्ततोगुरुस्मृतिविषयव्याप्यत्वोपलक्षितधर्मप्रकारकज्ञानेच्छाविषयविषयकोगुरोःशाब्दबोधःकिंशब्दस्यसमभिव्याहृतपदार्थताव
च्छेदकावांतरधर्मप्रकारकज्ञानेच्छाविषयत्वशक्तेस्ततोऽनुमितिकारणीभूतेत्यादिशब्दप्रयोगात्मकहेत्वाभासनिरूपणानुकूलोप्रसंगसं
गतिव्याप्यप्रकारकज्ञानंशिष्यस्यभवत्वितिगुरोर्बुबोधयिषातदनुकूलंयत्प्रतिपाद्यस्यासिद्धत्वज्ञानंतत्संपादकीभूतस्यासिद्धत्वव्या
प्येच्छाविषयत्वप्रतिपादकस्यगुरुस्मृतिविषयवान्कइतिप्रश्नवाक्यस्यव्यवहर्तव्यज्ञानविधयानिर्वाहकंयाजिज्ञासाप्रत्यक्षंविषयवि
धयातदनुकूलाजिज्ञासेतिक्रमेणबोध्यं ।। ननुदीधितिकृतासंगतिसामान्याप्रदर्शनकृतन्यूनतावारणंतत्प्रसंगादित्यंशापूरणेनत
त्कार्येत्यंशापूरणेनचहेतुव्याकृतंनचायुक्तसंगतिप्रदर्शनस्यशिष्यप्रवृत्तिफलकत्वेनतस्यचयथाश्रुतमूललभ्यावश्यकेष्टसाधनत्वप्र
दर्शनेनैवलाभसंभवादित्याशंकतेयद्यपीति ।। तत्रहेत्वाभासनिष्ठंयत्तत्वनिर्णयविजयप्रयोजकज्ञानविषयत्वमितियोजना ।।

ननु मूलवाक्याद्धेत्वाभासनिष्ठतत्वनिर्णयादिजनकज्ञानविषयतायाः कथंलाभ इति चेदित्थं तादृशमूले प्रयोजकत्वपदं जनकज्ञानविषयता
परं पंचम्यर्थः प्रयोज्यत्वं हेत्वाभासानामिति पूरणीयं तदर्थस्य हेत्वाभासनिष्ठत्वस्य तादृशजनकज्ञानविषयतायामन्वयस्तादृशविषयत्वस्य प्रयो
ज्यत्वरूपे पंचम्यर्थेऽन्वयस्तस्य च धात्वर्थनिरूपणे तस्य चाख्यातार्थविषयत्वेन तस्य हेत्वाभासपदार्थेऽन्वयस्तथा च हेत्वाभासनिष्ठायात त्वनिर्णयादि
जनकज्ञानविषयता तत्प्रयोज्यनिरूपणविषयताश्रयीभूता हेत्वाभासा इति विशिष्टार्थलाभे हेत्वाभासनिष्ठतादृशविषयतालाभः ॥ हेत्वा
भासानामिति पूरणाभावेपि तत्वनिर्णयादिजनकज्ञानविषयता हेत्वाभासनिष्ठा हेत्वाभासनिरूपणप्रयोजकत्वाद्यद्यन्निरूपणप्रयोज
कं तत्तन्निष्ठमिति व्याप्त्या तादृशार्थलाभो बोध्यः ॥ एवं च हेत्वाभासनिष्ठतादृशविषयताज्ञाने तुल्यवित्तिवेद्यतया हेत्वाभासविषयकज्ञा
ने तत्वनिर्णयादिजनकत्वज्ञानात्तादृशज्ञानस्येष्टसाधनताज्ञानरूपत्वेन तत्वनिर्णयादिर्मे भवत्विति फलेच्छासहिततादृशेष्टसाधनता
ज्ञानाच्छिष्याणां प्रवृत्तिरिति भावः ॥ मूलादिष्टसाधनताज्ञानेपि संगत्यप्रदर्शनेऽसंगतत्वज्ञाने नोन्मत्तप्रलपितं च शंकया तादृश
ज्ञानेऽप्रामाण्यनिश्चयाद्येन प्रदर्शितमपीष्टसाधनत्वं प्रवृत्त्यनुपयोग्येव स्यादिति प्रवृत्त्युपयोगीष्टसाधनताज्ञानेऽप्रामाण्यनिश्चय

संपादकोन्मत्तप्रलपितत्वनिश्चयसंपादकासंगतत्वज्ञानविघटकतयासंगतिप्रदर्शनस्यावश्यकतेत्यभिप्रायेण **समाधत्ते** ॥ **त
थापीति** ॥ **तन्मात्रपरत्वे** ॥ शिष्यप्रवृत्त्युपयोगिहेत्वाभासज्ञानेइष्टसाधनत्वमात्रप्रदर्शनपरत्वे ॥ मात्रपदेनसंगतिप्रदर्शनि
व्यवच्छेदः ॥ **न्यूनता** ॥ अप्रवर्तकता ॥ **स्यादिति** ॥ मूलस्येतिशेषः ॥ **एककार्येति** ॥ तत्वनिर्णयादिरूपेतिशेषः ॥ **तथाचा**
संगतत्वज्ञानविघटनस्येष्टसाधनत्वप्रदर्शनस्यचावश्यकत्वेतत्कार्येत्यंशपूरणेइष्टसाधनत्वस्यसंगतिघटकत्वात्संगतिप्रदर्शने
नोभयमपिसंभवतीतितथैवदीधितिकृताकृतमित्यभिप्रायः ॥ **विजयपरिग्रहइति** ॥ पराहंकारखंडनंविजयः ॥ अहं
कारश्चाहमुत्कृष्टइतिज्ञानं ॥ तत्खंडनं ॥ तन्निवृत्त्यनुकूलव्यापारः ॥ **यद्वायमुत्कृष्टइति** मध्यस्थज्ञानानुकूलव्यापारोविजयः ॥
स्फरवविशेषइतिवा ॥ **प्रयोजकत्वंचेति** ॥ यादृशहेतुकेपरामर्शविषयांशेभ्रमएवनास्तितत्रसाध्यादिविषयतानांकारणतावच्छे
दकत्वेगौरवात् ॥ विषयितयासाध्यनिरूपितव्याप्तिविशिष्टहेतुविशिष्टपक्षवज्ज्ञानत्वेनैवकारणत्वाल्लिंगस्यकारणतावच्छेदक
त्वंबोध्यमन्यथाभ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नलिंगतावच्छेदकावच्छिन्नविषयतायाएवकारणतावच्छेदकत्वा ६

लिंगस्यतथात्वाभावादसंगतिः ॥ प्रमितकोटिनिश्चयइति ॥ साध्य वत्पक्षविषयतानिरूपितसाध्यविषयताशालिनि
श्चयइत्यर्थः ॥ तत्र ॥ तादृशविषयताशालिनिश्चये ॥ तद्विपरीतेति ॥ साध्याभावरूपेत्यर्थः ॥ हेत्वाभासत्वज्ञानमपि ॥
दोषज्ञानमपीत्यर्थः ॥ उपयुज्यतइति ॥ पर्वतोवन्हिमान्धूमात्पर्वतोवह्न्यभाववान्जलादितिवादिप्रतिवादिनोर्विवादेजलं
पर्वतावृत्तीतिदोषोपन्यासेनजलेपर्वतावृत्तित्वज्ञानेजातेवह्न्यभावव्याप्यजलवान्पर्वत इतिविरोधिपरामर्शेविशेषणज्ञानादि
घटितसामग्रीसंपत्त्यापर्वतावृत्तिजलनिष्ठप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताशालीदंज्ञानमित्यप्रामाण्यग्रहेजातेअप्रामा
ण्यज्ञानाभावविशिष्टविरोधिपरामर्शस्यैवप्रतिबंधकतयातदभावरूपकारणसंपादनेनदोषज्ञानस्योपयोगित्वमेनदेवाह ॥
प्रतिबंधकीभूतेति ॥ अथवेति ॥ प्रमात्वनिश्चयेति ॥ साध्यवन्निष्ठविशेष्यतानिरूपितसाध्यनिष्ठप्रकारताकत्वनि
श्चयेत्यर्थः ॥ तत्र ॥ तादृशप्रमात्वनिश्चये ॥ सद्धेतुत्वज्ञानमिव ॥ धूमादौव्याप्तिपक्षधर्मतावगाहिवन्हिव्याप्यधूमवान्प
र्वतइतिज्ञानमिव ॥ तादृशज्ञानं पर्वतोवन्हिमानित्यनुमितिविशेष्यकवन्हिमत्पर्वतविशेष्यतानिरूपितवन्हिनिष्ठप्रकारताकत्वरूप

प्रमात्वविधेयकानुमितौ तत्प्रयोजकवन्हिमत्पर्वतविशेष्यतानिरूपितवन्हिनिष्ठप्रकारताकत्वव्याप्यवह्निव्याप्यधूमवत्पर्वतविशेष्यता
निरूपितवह्निप्रकारताकत्ववदितिपरामर्शे विशेषणज्ञानविधया प्रयोजकत्वात्प्रयोजकं ॥ वह्निव्याप्यधूमवान् पर्वत इतिज्ञानविषय
तया सद्धेतुधूमादेः प्रयोजकत्वात्तादृशानुमितिप्रयोजकत्वं बोध्यं ॥ **तद्विपरीतसाधकेति** ॥ तादृशप्रमात्वाभावसाधकेत्यर्थः ॥
हेतोः ॥ **वह्न्यभावव्याप्यजलवत्पर्वतविशेष्यतानिरूपितवह्निप्रकारताकत्वस्य** ॥ **दुष्टत्वज्ञानमपि** ॥ हेतुतावच्छेदकघटकज
लादेः पर्वतावृत्तित्वरूपासिद्धिज्ञानमपि ॥ **उपयुज्यतइति** ॥ उपयोगमाह ॥ **प्रकृतसाध्यग्रहेति** ॥ **प्रकृतसाध्यग्रहे** ॥ प
र्वतो वन्हिमानिति ग्रहे ॥ **योऽप्रामाण्यग्रहः** ॥ निरुक्तप्रमात्वाभावग्रहः ॥ **तद्ग्राहकः** ॥ तद्विधेयकानुमितिजनकज्ञानविषयो यो वह्न्यभा
वव्याप्यजलवत्पर्वतविशेष्यतानिरूपितवह्निप्रकारताकत्वरूपो हेतुः ॥ तत्र तद्विशेष्यकं यद्दुष्टत्वज्ञानं वह्निमत्पर्वतविशेष्यतानिरू
पितवन्हिप्रकारताकत्वरूपप्रमात्वाभावव्याप्यं वह्न्यभावव्याप्यजलवत्पर्वतविशेष्यतानिरूपितवह्निप्रकारताकत्वं पक्षवृत्तीतिज्ञानं ॥
**तद्विघटकत्वात्** ॥ जलादौ पर्वतावृत्तित्वरूपदोषज्ञानस्य तदनुत्पत्तिप्रयोजकत्वात् ॥ तथाच तादृशदोषज्ञाने विषयतया दोषाणां 

प्रयोजकतया तद्विशिष्टस्याप्युपयोगिता बोध्या ॥ स्वज्ञानाधीनेति ॥ अर्थज्ञानविधया स्वज्ञानाधीनत्वं बोध्यं ॥ दोषेष्वतिव्याप्तिरिति ॥ दोषहेतूभयविषयकसमूहालंबनमादाय सर्वत्र लक्षणसत्वं बोध्यं ॥ यद्यपि वह्निसाध्यकेवल्यभाववद्ध्रदस्यापि दुष्टहेतुत्वान्नातिव्याप्तिस्तथापि पर्वतपक्षकवह्निसाध्यकस्थले धूमस्यापि द्रव्यत्वादिना दुष्टत्वात्तद्धर्मावच्छिन्नहेतुकप्रकृतानुमितिप्रबंधकयथार्थज्ञानविषयत्वं तेन रूपेण दुष्टत्वं वाच्यं तथा च वह्निसाध्यकेवल्यभाववद्ध्रदादेर्धूमत्वादिना दुष्टत्वाभावान्नवत्यतिव्याप्तिरिति बोध्यं ॥ बाधादिज्ञानप्रतिबंधकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वादिति ॥ घटत्वमनित्यं घटत्वादित्यादौ बाधज्ञानप्रतिबंधकतायां हेतुविषयताया अवच्छेदकत्वात्प्रायश इति हेतुविषयतात्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावबोधनाय ॥ तथा च यत्र हेतुविषयताया अनवच्छेदकत्वं तत्र बाधितहेतावव्याप्तिरित्यर्थः ॥ अथ बाधितस्थले पक्षे हेतुसत्वे व्यभिचारस्य तदसत्वे ऽसिद्धेरावश्यकतया बाधज्ञानप्रतिबंधकतायां हेतुविषयताया अनवच्छेदकत्वेपि व्यभिचारासिध्यन्यतरज्ञानप्रतिबंधकतायां हेतुविषयताया अवच्छेदकत्वसत्वान्न तत्राव्याप्तिः ॥ अत्र केचित् ॥ असंकीर्णबाधितस्थले नाद

शान्यन्तरानावश्यकत्वाल्लक्षणसमन्वयो न संभवति ॥ नच तत्रापि बाधे व्याप्यसत्प्रतिपक्षावश्यकत्वेन तज्ज्ञानप्रतिबंधकतायां प्रतिहे
तुघटकप्रकृतहेतुविषयताया अवच्छेदकत्वसंभवान्न तत्राप्यव्याप्तिरिति वाच्यं ॥ सत्प्रतिपक्षशरीरे व्यापकसामानाधिकरण्यरूपा
या व्याप्तेर्नप्रवेशः किंतु साध्याभावाभाववदवृत्तित्वरूपाया एवेति मताभिप्रायेणैवाव्याप्त्यभिधानात्तन्मते तादृशव्याप्त्यवच्छिन्नविष
यताकज्ञानप्रतिबंधकतायां प्रतिहेतुविषयताया अनवच्छेदकत्वात् ॥ व्यापकसामानाधिकरण्यघटितव्याप्तिधीप्रतिबंधकताया
मवच्छेदकत्वावश्यकत्वेप्यवच्छेदकधर्मदर्शनादिप्रतिबंधकतामादाय घटाद्युदासीनातिव्याप्तिवारणाय लक्षणघटकप्रतिबंधक
तायां विवक्षणीयज्ञानवैशिष्ट्यानवच्छिन्नत्वविशेषणेन तादृशप्रतिबंधकताया व्यावर्तनात् ॥ तादृशधियः प्रतियोगिवैय्यधिक
रण्याघटितव्यापकतावगाहित्वे यथार्थत्वाभावात्तद्घटितव्यापकत्वावगाहित्वे प्रतिबंधकत्वाच्च ॥ एतेन उत्पत्तिकालीन घटो गंध
वान् पृथिवीत्वादित्याद्यसंकीर्णबाधोदाहरणस्थले गंधव्यापकीभूतं यत्पृथिवीत्वगुणोभयं तदभाववत्ताज्ञानस्य व्यापकाभाववत्ता

टि० गंधाभावव्याप्यपृथिवीत्वगुणोभयाभाववत्त्वस्वरूपसत्प्रतिपक्षावश्यकत्वेन

ज्ञानविधयाप्रतिबंधकत्वात्तत्र पृथिवीत्वस्यहेतुविषयताया अप्यवच्छेदकत्वादव्याप्त्यनवकाशः॥ नन्वगंधव्यापकत्वसहिततादृशो
भयत्वावच्छिन्नाभाववत्ताज्ञानस्यापिनज्ञानवैशिष्ट्यानवच्छिन्नाप्रतिबंधकताकिंतुतादृशोभयत्वावच्छिन्नधर्मिकव्यापकताज्ञान
विशिष्टतादृशोभयाभाववत्ताज्ञानत्वेनैवान्यथागंधव्यापकताग्रहकालीनस्यकेवलपृथिवीत्वगुणोभयत्वावच्छिन्नाभाववत्ता
ज्ञानस्यव्यापकत्वसहिततादृशोभयत्वावच्छिन्नाभावानवगाहितयाऽप्रतिबंधकत्वप्रसंगइतिवाच्यं॥ पृथिवीत्वगुणोभयं
गंधव्यापकमितिग्रहकालीनस्यजलादिवृत्तित्वविशिष्टतादृशोभयत्वावच्छिन्नाभाववत्ताज्ञानस्यप्रतिबंधकतावारणायव्या
पकत्वग्रहधर्मितावच्छेदकांशेप्रतियोगितावच्छेदकतापर्याप्त्यवगाहितानिवेशस्यावश्यकतयाव्यापकतासहिततादृशोभ
यत्वावच्छिन्नाभाववत्ताज्ञानस्यतादृशोभयत्वपर्याप्तावच्छेदकतानवगाहिनोज्ञानद्वयसाधारणदर्शितरूपेणप्रतिबंधकत्वानि
र्वाहेणव्यापकत्वसहिततादृशोभयत्वावच्छिन्नाभाववत्ताज्ञानत्वेनपृथगेवप्रतिबंधकतायाःकल्पनीयत्वात्॥ नन्वसाध्यव्याप
काभाववत्पक्षोप्यदोषात्मावारणीयएवेतितज्ज्ञानीयप्रतिबंधकतापिविशेषणकरणेनवारणीयेतिनतामादायलक्षणसमन्वय

इतिवाच्यं ॥ साध्यासमानाधिकरणधर्मवत्पक्षादेरिवव्यापकाभाववत्पक्षस्यापिबाधरूपतायाबाधग्रंथेंऽगीकृतत्वादितिनिरस्तं
॥ व्यापकभाववत्ताज्ञानस्यप्रतियोगिवैय्यधिकरण्याघटितव्यापकतावगाहित्वेभ्रमत्वमेवतद्घटितव्यापकतावगाहित्वेऽप्रतिबंधक
त्वमेवान्यथावृक्षादौकपिसंयोगसाध्येकेकपिसंयोगव्यापककपिविभागाभाववद्वृक्षादेर्बाधत्वप्रसंगात्पृथिवीत्वव्यापकत्वसाहित्ताद
शोभयत्वावच्छिन्नाभाववत्ताज्ञानस्यतादृशोभयंपृथिवीत्वव्यापकमितिज्ञानविशिष्टपृथिवीत्वव्यापकत्वनिष्ठावच्छेदकताभिन्नता
दृशोभयत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकाभाववत्ताज्ञानत्वेनज्ञानद्वयसाधारणैकप्रतिबंधकताया
वक्तुंशक्यत्वाच्चेत्याहुः ॥ यदपि अनुमितिपदस्यसमूहालंबनपरत्वस्येदानींशिरोमणिनाऽनभिधानाद्यथाश्रुतार्थाश्रयणेनह्र
दोवह्निमानित्यादिबोधितएवाव्याप्तिरभिप्रेता ॥ असिद्धिव्यभिचारज्ञानयोः परामर्शमात्रविरोधिनोरनुमित्यविरोधित्वादितिकै
श्चित्समाधीयते ॥ तदपिन ॥ ह्रदोवह्निव्याप्यधूमवानित्यनुमितिंप्रत्यसिद्धिव्यभिचारज्ञानयोः प्रतिबंधकतयातदवच्छेदक
हेतुविषयतामादायधूमेलक्षणावश्यकत्वात् ॥ नहिह्रदोवह्निमानित्येवानुमितिर्नतुह्रदोवह्निव्याप्यधूमवानितीतिप्राज्ञसमतं ९

व्याप्यवत्तानुमितिर्नपुरःस्फूर्तिकेतिचेत्किमयंव्याप्यवत्तानुमितेर्दोषः॥ नह्ययंधःस्थाणुंनपश्यतीतिस्थाणुदोषइत्यलंविस्तरेणेत्याहुः॥ अ
त्राहुरर्वाचीनाः॥ बाधितहेतावव्याप्तिरित्यस्यह्रदोवह्निमान्धूमादित्यादिस्थलेधूमरूपहेतुर्बाधेनदुष्टइतिव्यवहारानुपपत्तिरित्य
र्थः॥ अस्मिन्व्यवहारेबाधेनेतितृतीयार्थोऽनुमितिप्रतिबंधकतावच्छेदकविषयतारूपदुषधात्वर्थघटकप्रतिबंधकतान्वयिविष
यितावच्छिन्नत्वमेवनतुधान्येनधनवानित्यादाविवाभेदः॥ दुषधात्वर्थेतदन्वयबाधात्॥ नापिएकज्ञानविषयत्वादिरूपवैशिष्ट्यं
हेत्वन्वयितृतीयार्थः॥ घटेनदुष्टइतिव्यवहारापत्तेः॥ एवंच तृतीयांतार्थबाधविषयितावच्छिन्नत्वान्वितप्रतिबंधकतावच्छेद
कविषयताश्रयत्वस्यधूमेबाधात्बाधेनधूमोदुष्टइतिव्यवहारानुपपत्तिरावश्यकीति॥ परेत्वन्यथैवसमादधति॥ ह्रदो
वह्निमान्धूमादित्यादिस्थलीयबाधितधूमरूपहेतौस्वरूपासिद्ध्येकदेशेयथारीत्यालक्षणसमन्वयश्चिकीर्ष्यतेतथैवरीत्यासर्व
त्रदोषैकदेशेऽतिव्याप्तिःस्यात्साचघटाद्युदासीनातिव्याप्तिरिववारणीयैव॥ तथाच दोषाणामेवलक्षणयोगितयायत्रदोषात्मा
त्मकस्यैवधूमादेर्हेतुतातत्राव्याप्तिर्भवत्येव॥ द्वितीयलक्षणस्यतावदेकदेशातिव्याप्तिवारकानतिरिक्तवृत्तित्वरूपतृतीयार्थावच्छेदक

त्वघटिततयायथाश्रुतस्यैवदोषभिन्नेहेतावव्याप्तिः ॥ प्रथमलक्षणेतुशब्दार्थोल्लंघनंविनानाव्याप्तिसंभवइत्यर्थस्यस्फुतरामितिपदेनगदाधरेणैवसूचितत्वात् ॥ **यथाश्रुतमिदमिति** ॥ दीधिताविदंशब्दस्यैकवचनांतत्वेनैकलक्षणपरामर्शकत्वादाह ॥ **इदंलक्षणत्रयमिति** ॥ वक्ष्यमाणरीत्यादुष्टलक्षणत्वसंभवाद्यथाश्रुतेति ॥ **आकांक्षितं** ॥ जिज्ञासितमित्यर्थः ॥ अधिकारेणस्वरूपादीनामाकांक्षाविषयत्वंसूचितं ॥ **लक्षणमेषामाकांक्षितमितिपाठे** प्रथमतोलक्षणमेवाकांक्षितमित्यर्थः ॥ **अन्यविधव्युत्पत्त्येति** ॥ हेत्वाभासंतइतिव्युत्पत्त्येत्यर्थः ॥ **तेचेत्यादिनेति** ॥ **तेचसव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताःपंचेत्यनेनेत्यर्थः** ॥ **तदसंगतेरिति** ॥ यद्रूपावच्छिन्ननिरूपणस्यप्रतिज्ञाविषयत्वंतद्रूपावच्छिन्नस्यैवलक्षणविभागादिनानिरूपणविषयत्वमितिनियमादितिभावः ॥ **ननु** विभागवाक्येसव्यभिचारादिपदानांभावप्रधानतयासव्यभिचारत्वादिपरत्वान्नासंगतिरित्यत **आह** ॥ **एवमिति** ॥ **अप्रकृतत्वे** ॥ प्रतिज्ञाविषयत्वाभावे ॥ **विभागानर्हतयेति** ॥ लक्षणादिनादोषप्रतिपादनस्यैवप्रतिज्ञातत्वादितिभावः ॥ **संकरेण** ॥ एक्येन ॥ **अनवतारादिति** ॥ तेचेत्यादिग्रंथस्यदोषविभागपर

त्वेविरुद्धस्यव्यभिचार्याद्यनतिरिक्तत्वेनहेतूनांपंचत्वकथनासंगतिरित्याशंकायाअनुदयादित्यर्थः॥ उपाध्यसंकरेणेति ॥ व्यभिचार
विरोधरूपाणांदोषाणांपरस्परंभिन्नत्वेनेत्यर्थः॥ स्फुटमिति ॥ स्फुटत्वंचतद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वं॥ नोक्तानुप
पत्तिरिति ॥ दोषलक्षणस्यापिदुष्टप्रतिपत्त्यनुकूलत्वेननाप्रतिज्ञातत्वमित्यर्थः॥ अनुमितिसामान्यपरत्वेति ॥ अनुमिति
त्वरूपजात्याश्रयपरत्वेत्यर्थः॥ ननुयावदनुमितिपरत्वेत्यर्थस्तथासतियावत्तन्निरूपितप्रतिबंधकत्वाप्रसिध्याऽसंभवादतिप्रसंगा
भावात्तत्कथनासंगतेश्च॥ अतिप्रसंगादिति ॥ पर्वतोवह्निमान्धूमादित्यादौह्रदोवह्निमानित्यनुमितिप्रतिबंधकज्ञानविष
यवह्न्यभाववद्ध्रदादावितिशेषः॥ प्रकृतपक्षसाध्यहेतुकेति ॥ पर्वतोवह्निमानित्यादौह्रदोवह्निमानित्यनुमितिमादायवह्न्य
भाववद्ध्रदादावतिव्याप्तिवारणायप्रकृतपक्षकत्वनिवेशः॥ तत्रैवपर्वतोजलत्ववानित्याद्यनुमितिमादायजलत्वाभाववत्पर्वता
दावतिप्रसंगवारणायप्रकृतसाध्यकत्वनिवेशः॥ प्रकृतहेतुकत्वनिवेशस्तुउत्तरत्रतादृशानुमितिकारणज्ञानमात्रपरत्वेत्यत्रता
दृशपदेनप्रकृतहेतुकानुमितिलाभार्थः॥ अन्यथापर्वतोवह्निमान्धूमादित्यादौप्रमेयादिहेतुकानुमितिमादायतत्करणपरामर्श

विरोधिनिवह्निव्यभिचारिप्रमेयादावतिव्याप्तेः ॥ प्रकृतहेतुकत्वानिवेशोव्यभिचारसामान्यासंग्रहापत्त्यातादृशज्ञानसामान्यविव
क्षायाअसंभवादितिकेचित् ॥ परेतु ॥ पर्वतोवह्निमान्धूमादित्यादौपर्वतोवह्निमान्द्रव्यत्वंवह्निव्याप्यमित्यनुमितिप्रतिबंधकज्ञा
नविषयवह्निव्यभिचारिद्रव्यत्वादावतिप्रसंगइतितद्धेतुकत्वनिवेशनं ॥ नन्वेवंतद्धेतुकत्वनिवेशेपिनिरुक्तानुमितेरपिधू
महेतुकत्वानपायात्तद्विशेषणमकिंचित्करमितिवाच्यं ॥ तद्धेतुकत्वपदेनप्रकृतसाध्यव्याप्तिपक्षधर्मत्वावच्छिन्नप्रकृतहेतुविष
यताशालिनिश्चयत्वानवच्छिन्नज्ञाननिष्ठजनकतानिरूपितायाअनुमितित्वावच्छिन्नजन्यताततच्छून्यत्वस्यविवक्षितत्वेनदर्शि
तसमुहालंबनानुमितिव्यावृत्तेः ॥ जनकतायांज्ञाननिष्ठत्वनिवेशादनुमितिसामान्यएवतादृशासिद्ध्यभावादिनिष्ठजनकतानि
रूपितजन्यत्वसत्वात्तादृशजन्यताशून्यानुमित्यप्रसिद्धावपिनक्षतिः ॥ एवंजन्यतायामनुमितित्वावच्छिन्नत्वनिवेशात्तादृशवि
शेषणज्ञानादिनिरूपितजन्यत्वस्यानुमितिसामान्येसत्वेपिनक्षतिः ॥ एतेनतद्धेतुकत्वनिवेशेपिपर्वतोवह्निमान्धूमादित्यादौपर्वतो
वह्निमान्घटाभाववद्भूतलमितिसमूहालंबनानुमितिमादायघटवद्भूतलादिरूपोदासीनेतिव्याप्तिवारणायतादृशानुमितित्व ११

व्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतायालक्षणे निवेशावश्यकत्वेन प्रकृतहेतुकत्वानिवेशेपि पर्वतोवह्निमान्धूमादित्यादौ पर्वतोव
ह्निमान्द्रव्यत्वंवह्निव्याप्यमित्यनुमितिमादायवन्हिव्यभिचारिद्रव्यत्वादावतिव्याप्तिविरहात्तद्धेतुकत्वंव्यर्थमिति निरस्तं ॥ समूहालंब
नानुमितेर्निरुक्ततद्धेतुकत्वविरहेणानुमितित्वव्यापकप्रतिबध्यतानिवेशानावश्यकत्वात् ॥ नन्वेवंतद्धेतुकत्वनिवेशे तत्पक्षकत्वत
त्साध्यकत्वयोर्वैयर्थ्यमिति वाच्यं ॥ पर्वतोवह्निमान् धूमादित्यादौ पर्वतादौ महानसीयवह्निभिन्नवह्न्यभावविषयकबाधज्ञानेअनु
मितेर्महानसीयवह्निविषयकत्वेलाघवमिति लाघवज्ञानकालेवावन्हिव्याप्यधूमवत्तापरामर्शात्पर्वतो महानसीयवह्निमानित्यनुमि
त्युत्पत्त्यातादृशानुमितेर्निरुक्तहेतुकत्वेनतादृशानुमिति प्रतिबंधकज्ञानविषयमहानसीयवह्न्यभाववत्पर्वतादावतिव्याप्तिवारणा
य प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वनिवेशसामर्थ्यात् ॥ नचतादृशानुमितेस्तादृशलाघवज्ञानत्वावच्छिन्नजनकतानिरूपि
तानुमितित्वावच्छिन्नजन्यताशालितयाननिरुक्ततद्धेतुकत्वमितिशंक्यं॥ पक्षताविशिष्टपरामर्शस्यकारणतायांपक्षतायाइवलाघ
वज्ञानादिविशिष्टपरामर्शकारणतायांलाघवज्ञानादेरवच्छेदकत्वमेवंनचविनिगमकाभावः परामर्शविशिष्टपक्षतादेःकारणत्वेन

रामर्शस्यजनकत्वगर्भव्यापारत्वानुपपत्तेरितिपक्षताग्रंथोक्तमताश्रयणेनतत्साध्यकत्वादेः सार्थक्यायनिरुक्ततद्धेतुकत्वस्योक्तानिप्र
संगवारणायनिवेशइत्यभिप्रायवर्णनसंभवात् ॥ नन्वेवंसिध्यभावविशिष्टपरामर्शस्यैवकारणत्वात्जनकतायांज्ञाननिष्ठत्वंव्यर्थमि
तिचेन्नदेयमेतत् ॥ उक्तमतानाश्रयणेपितत्साध्यकत्वादेःसार्थक्यायतद्धेतुकत्वशरीरप्रविष्टजनकतायांप्रकृतपक्षेप्रकृतसाध्यानु
मितिजनकतानवच्छेदकविषयितानवच्छिन्नत्वादिविशेषणेनलाघवज्ञानादिजनकताव्यावर्तनीयेतिकेचित् ॥ एवंतत्रैवस्कंद
रपर्वतविषयकत्वेलाघवमितिलाघवज्ञानसहकारेणजायमाननिरुक्ततद्धेतुकत्वाक्रांतस्कंदरपर्वतोवह्निमानित्यनुमितिप्रतिबंध
कज्ञानविषयवह्न्यभाववत्स्कंदरपर्वतेऽतिव्याप्तिवारणायप्रकृतपक्षतावच्छेदकपर्याप्तावच्छेदकताकोद्देश्यताकत्वरूपतत्पक्षक
त्वनिवेशोप्यावश्यकइत्याहुः ॥ तत्साक्षात्कारेति ॥ अनुमितिनिष्ठकार्यतासाक्षात्कारेत्यर्थः ॥ अनुमितिःपरामर्शकार्ये
त्यनुमितिनिष्ठकार्यतासाक्षात्कारंप्रत्यनुमितिसाक्षात्कारःपरामर्शसाक्षात्कारश्चहेतुः किंचित्प्रतियोगिककिंचिदनुयोगिक
संबंधसाक्षात्कारेसंबंधिद्वयसाक्षात्कारस्यहेतुतायाःसर्वसिद्धत्वात् ॥ संयोगादिवत्कार्यतायाअपितथात्वात् ॥ यद्यपिपरा १२

मर्शानुमितिसाक्षात्कारयोः कार्यतासाक्षात्कारेहेतुत्वंनसंभवतिक्रमेणजायमानयोस्तयोरेकदाक्रमेणवासाक्षात्कारासंभवात्॥ अनुमितिद्विती
यक्षणेपरामर्शरूपविषयस्यैवाभावात्अनुमित्युपरागेणकार्यतासाक्षात्कारकालेअनुमितेरपिनाशात्तथाप्यपेक्षाबुध्यात्मकपरामर्शानु
मित्योः साक्षात्कारेबाधकाभावः॥ नच योग्यविभुविशेषगुणनाशेस्वोत्तरविशेषगुणस्यहेतुतयापरामर्शरूपापेक्षाबुद्धेस्तृतीयक्षण
एवानुमित्युसत्तिः स्वीकार्यातथाचोक्तानुपपत्तिर्दुर्वारैवेति वाच्यं ॥ अनुभवानुरोधेनज्ञानादीनांतत्तत्क्षणसंबंधस्यैवनाशकत्वंस्वी
कृत्यापेक्षाबुध्युत्तरंविशेषगुणोत्पादस्यपक्षताग्रंथेगदाधरैरेवस्वीकारात् ॥ यद्वा घटादिसाक्षात्कारेविषयस्यकार्यकालवृत्तित
याहेतुत्वनियमेपिज्ञानेच्छास्थलेनायंनियमस्तत्रस्वप्रत्यक्षेज्ञानादेः पूर्वकालवृत्तितयाहेतुताया अनुभवानुरोधेनस्वीकारात् ॥ त
थाचपरामर्शतृतीयक्षणेएकदैवानुमितिपरामर्शयोः साक्षात्कारस्तत्रोऽनुमितिःपरामर्शकार्येतिसाक्षात्कारइत्यभिप्रायकल्पनान्न
दोषः॥ कल्पांतरानुसरणेबीजमाह अत्रेति ॥ अत्र केचित् ॥ संबंधसाक्षात्कारसंबंधिद्वयसाक्षात्कारयोर्ननावत्संबधसाक्षा
त्कारत्वसंबधिद्वयसाक्षात्कारत्वाभ्यांकार्यकारणभावः ॥ घटभूतलसाक्षात्कारात्कुड्यकुसूलसंयोगसाक्षात्कारापत्तेर्घटभूतलयोर

पिसंबंधित्वात् ॥ नापि तत्संबंधसाक्षात्कारत्वेनकार्यतातत्संबंधप्रतियोग्यनुयोगिसाक्षात्कारत्वेनकारणत्वमिति ॥ यत्रपरस्परासंयु
क्तयोर्गवाश्वव्यक्त्योर्गोत्वाश्वत्वाभ्यांस्मरणंसाक्षात्कारोवाततःपरस्परसंयुक्तगवाश्वव्यक्त्योर्गोत्वाश्वत्वव्यंजकसन्निकर्षविरहाद्द्रव्यत्वे
नैवसाक्षात्कारस्तत्रगवाश्वयोःसंयोगइतिसाक्षात्कारप्रसंगात् ॥ नापि तत्संबंधप्रतियोगितावच्छेदकादिप्रकारतानिरूपिततत्सं
बंधप्रतियोग्यादिनिष्ठविषयताकसाक्षात्कारत्वेनकारणत्वं ॥ अतिप्रसक्तगोत्वादेरिवद्रव्यत्वस्यापितत्संबंधप्रतियोगितावच्छेदक
तायादुरुपह्नवत्वादुक्तदोषावारणात् ॥ किंतु तत्तद्धर्मावच्छिन्नप्रतियोग्यनुयोगिविशेषितसंबंधसाक्षात्कारत्वावच्छिन्नंप्रति
तत्तधर्मप्रकारकतत्तत्प्रतियोग्यनुयोगिसाक्षात्कारत्वेनकारणत्वमित्येववक्तव्यं ॥ एवंच प्रकृतेप्रकृतानुमितिः प्रकृतपरा
मर्शकार्येत्याकारकसाक्षात्कारीयकार्यत्वविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतायाविषयतान्दाश्रयवि
षयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदकविषयताश्रयत्वंदोषसामान्यलक्षणंसुवचं ॥ अनुनितिपराम
र्शोभयविषयतानिरूपितजन्यत्वविषयित्वयोरभेदात् संबंधिद्वयसाक्षात्कारजन्यताद्वयावच्छेदकत्वंजन्यत्वविषयितायाना १२

नुपपन्नं ॥ विषयिताविशेषितपरामर्शादिसाक्षात्कारहेतुत्वेसाक्षात्कारीयविशेषणविशेष्यविषयितानांसर्वासामेवविनिगमनावि
रहेणकारणतावच्छेदकतयापरामर्शीयविषयितानां साक्षात्कारेप्रकारतयाभासमानानांसाक्षात्कारकारणतावच्छेदकविषयता
श्रयत्वमस्तीतिनपरामर्शविरोधिदोषासंग्रहः ॥ नन्वपरामर्शीयविषयितायाइवपरामर्शविषयस्यापिविषयिताविशेषण
तयासाक्षात्कारेभानात्परामर्शविषयोपिसाक्षात्कारजनकतावच्छेदकविषयताश्रयोभवतीतियत्रघटाभाववद्भूतलादिज्ञा
नप्रतिबध्यतावच्छेदकघटादिविषयतासाध्यतावच्छेदकघटकतयापरामर्शविषयस्तत्रह्रदोघटीयविषयितासमानकाली
नवान्हिमान्धूमादित्यादौघटाभाववद्भूतलादेरपिदोषताप्रसंगइतिवाच्यं ॥ परामर्शसाक्षात्कारेपरामर्शविषयाणांपरा
मर्शोपनीतानामेवभानंनतुलौकिकंलौकिकसन्निकर्षविरहात्परामर्शीयव्याप्त्यादिविषयितायास्तुमनःसंयुक्तसमवेतवि
शेषणतासन्निकर्षबलाल्लौकिकमेवभानं तथाच प्रकृतलक्षणेप्रकृतसाक्षात्कारजनकतावच्छेदकलौकिकविषयताश्रयविषयि
त्वावच्छिन्नप्रतिबध्यतेत्यादिरीत्याविवक्षणान्नदोषः ॥ वस्तुतस्तु ॥ साक्षात्कारजनकतावच्छेदकविषयतायांनिरूपितत्व

संबंधावच्छिन्नप्रकारतान्यत्वंदेयंपरामर्शसाक्षात्कारेतद्विषयस्यविषयितांशेनिरूपितत्वसंबंधेनैवविशेषणतयाभाननियमा
न्नपरामर्शविषयनिष्ठदर्शितविषयतायावक्ष्यमाणाविशेषणाक्रांतत्वमितिनघटाभाववद्भूतलादावतिव्याप्तिः॥ प्रकृतानुमितिपरा
मर्शोभयविषयतानिरूपितजन्यत्वविषयताशालिसाक्षात्कारत्वावच्छिन्नजन्यतेत्यत्रजन्यत्वविशेषणमवच्छिन्नत्वंव्यापक
त्वरूपंतादृशजन्यत्वविषयितासामान्यावच्छिन्नत्वरूपंवाग्राह्यं॥ तेनपर्वतोवह्निमान्धूमादित्यत्रजलवत्पर्वतपक्षकवह्नि
साध्यकानुमितिस्तादृशपक्षकवह्निसाध्यकधूमहेतुकपरामर्शकार्येतिसाक्षात्कारजनकसाक्षात्कारविषयजलवत्पर्वतप
क्षकवह्निसाध्यकानुमितिविरोधिज्ञानविषयजलाभाववत्पर्वतेनातिव्याप्तिः॥ साक्षात्कारजनकतावच्छेदकविषयताश्रयवि
षयित्वावच्छिन्नप्रतिबध्यतेत्यत्रविषयताश्रयविषयित्वावच्छिन्नेत्यस्यतादृशविषयतानाश्रयविषयिताशून्यज्ञाननिष्ठेत्यर्थो
विवक्षितस्तेनपर्वतोवह्निमान्धूमादित्यत्रवह्निव्याप्यधूमवत्पर्वतवान्घटइतिपरामर्शीयायापर्वतविषयितातस्याःप्रकृ
तसाक्षात्कारजनकतावच्छेदकविषयताश्रयीभूतायापर्वताभाववान्घटादिरित्यादिज्ञानप्रतिबध्यतावच्छेदकतयापर्वताभाव 

वद्धटेऽतिव्याप्तिरितिदूषणानवकाशः ॥ विशेषणनिष्ठप्रकारतायाविशेषणतावच्छेदकादिनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्न
त्वोपगमान्नासंभवस्तस्यास्तादृशविशेष्यताभेदेतुतादृशजनकतावच्छेदकविषयतानाश्रयविषयताकिंचिदवच्छिन्नाग्राह्या ॥ अ
थसंबंधसाक्षात्कारंप्रतिसंबंधिद्वयसाक्षात्कारस्यहेतुत्वपक्षे एवंरीत्यासामंजस्येपितद्धेतुत्वंविचारासहं ॥ तथाहिसंबंधसाक्षात्कार
स्यसंबंधिद्वयविषयकत्वनियमात् संबंधसाक्षात्कारोत्पत्तौसंबंधिद्वयसाक्षात्कारजनकसामग्र्याअपेक्षितत्वेनैवानतिप्रसं
गात् ॥ संबंधिविषयकसंबंधसाक्षात्कारेअनुमितिपरामर्शरूपसंबंधिनोर्विषयविधयाकारणत्वावश्यकत्वाल्लक्षणसामंजस्यं
तुनाशंकनीयं ॥ तयोर्विषयविधयातादृशसाक्षात्कारकरणत्वेपितादृशकारणत्वंनप्रकृतानुमितित्वप्रकृतपरामर्शत्वाव
च्छिन्नंकिंतुतत्तद्व्यक्तित्वावच्छिन्नमित्यस्यानुमितिग्रंथेदीधितिकृतैवावेदितत्वाल्लक्षणासामंजस्यंदुर्वारमेव ॥ किंच कार्यता
यानियतोत्तरवृत्तित्वव्यंग्यपदार्थांतरत्वपक्षेकार्यतायाःसाक्षात्कारसंभवेपितस्याःनियतोत्तरवृत्तितारूपत्वपक्षेऽतींद्रियक्ष
णादिघटितत्वेनातींद्रियत्वान्नसाक्षात्कारसंभवइतिनैतत्पक्षेलक्षणसामंजस्यमितिचेन्न ॥ प्रकृतानुमितिविशेष्यकप्रकृ

नपरामर्शत्वविशिष्टजन्यत्ववैशिष्ट्यावगाहिज्ञानत्वव्यापककार्यतानिरूपितकारणतावच्छेदकविषयताश्रयीभूतविषयित्वावच्छिन्नप्रति
बध्यतानिरूपितप्रतिबंधकतेत्यादिरीत्यालक्षणपरिष्कारसंभवात् ॥ दर्शितविशिष्टवैशिष्ट्यावगाहिज्ञानेप्रकृतानुमितित्वप्रकारकज्ञा
नस्यविशेष्यतावच्छेदकप्रकारकज्ञानविधयापरामर्शत्वप्रकारकज्ञानस्यचविशेषणतावच्छेदकप्रकारकज्ञानविधयाहेतुत्वाद्भ
वतिपूर्ववदेवलक्षणसमन्वयइतिसर्वमनाकुलं ॥ तस्मादनुमितिपदस्यकार्यतानिरूपकत्वेनानुमितिपरामर्शोभयपरत्वपक्षेब
हुगौरवादेतंपक्षंपरित्यज्यलघुप्रकारांतरंदर्शितंशिरोमणिनेत्यवसारमिति **वदंति** ॥ **दोषताप्रसंगइति** ॥ दोषताव्यव
हारप्रसंगइत्यर्थः ॥ **नन्वनुमितिपदस्यानुमितितत्कारणान्यतरपरत्वंसमूहालंबनानुमितिपरत्वंचायुक्तमनुमितिप्रयोज**
**कीभूताभावप्रतियोगित्वरूपप्रतिबंधकत्वविवक्षयाव्यभिचारादिसंग्रहसंभवादितिचेन्न** ॥ तथासतिव्यभिचारज्ञानाभाव
द्वाराउपाधिज्ञानाभावस्यापिप्रयोजकतयाउपाधावतिव्याप्तेः ॥ कारणतत्कारणमात्रवृत्तिप्रयोजकत्वविशेषेमानाभावात् ॥
**पर्यवसितार्थइति** ॥ **नन्वेवमपिह्रदोवन्हिमान्धूमादित्यादौवह्निव्याप्याभाववद्ध्रदेतिव्याप्तिस्तस्यहेतुमत्वग्रहाविरोधित्वेन** 

स्वरूपासिध्यनात्मकत्वादितिचेन्न ॥ मथुरानाथैस्तस्यासिद्धिग्रंथेव्याप्यत्वासिद्धित्वोक्तेर्लक्ष्यत्वात् ॥ दलद्वयेपक्षतावच्छेदका
वच्छिन्नविशेष्यकत्वनिवेशप्रयोजनमाह ॥ **बाधसत्प्रतिपक्षस्वरूपासिध्याश्रयासिद्धिष्विति** ॥ **अतेजस्वीति** ॥ ते
जःसामान्याविशिष्टइत्यर्थः ॥ तेजस्विपर्वतस्यपक्षत्वेसामानाधिकरण्येनवह्न्यभावस्यानुमित्यविरोधितयानदोषतासंभवः ॥ अवच्छे
कावच्छेदेनचतस्याप्रसिद्धत्वात्तन्नोक्तं ॥ **बाधस्येति** ॥ स्वरूपासिद्धेरूपलक्षणंव्यापकाभाववतिव्याप्याभावावश्यकत्वात् ॥
**कांचनमयइति** ॥ **ननु**अतेजस्विपर्वतपक्षकस्थलएवपक्षासिद्धिसंभवेस्थलांतरानुसरणंव्यर्थमितिचेन्न ॥ तत्रपर्वतत्वसा
मानाधिकरण्येनतेजःसामान्याभावस्यपक्षतावच्छेदकत्वेऽसिध्यसंभवएव ॥ पर्वतत्वावच्छेदेनतस्यतथात्वेतत्संभवेपिवह्न्यभा
वविशिष्टस्यपर्वतत्वव्यापकत्वविशिष्टस्वरूपसंबंधेनतेजःसामान्याभावविशिष्टपक्षस्याप्रसिध्याबाधासंभवः ॥ **यदिच**
तत्रभुद्धस्वरूपसंबंधेनतेजःसामान्याभावविशिष्टस्यवह्न्यभाववत्पक्षादेर्बाधत्वमित्युच्यतेतदास्फुटतराश्रयासिद्धिप्रतिपत्य
र्थंस्थलांतरानुसरणंबोध्यं ॥ **एवमग्रेपिबोध्यमिति** ॥ साध्यतावच्छेदकेहेतुतावच्छेदकेचावच्छेदकत्वंतत्पर्याप्त्यधिकर

त्वरूपंबोध्यमित्यर्थः ॥ तत्रतथाविवक्षणात्पर्वतोमहानसीयवह्निमानित्यादौमहानसीयवह्न्यभाववत्पर्वतरूपबाधस्यसाध्यताव
च्छेदकैकदेशवह्नित्वावच्छिन्नग्रहाविरोधित्वेपिकांचनमयधूमादिहेतुकेकांचनमयत्वाभाववद्धूमरूपसाधनाप्रसिद्धेर्हेतुतावच्छे
दकैकदेशधूमत्वावच्छिन्नप्रकारकग्रहाविरोधित्वेपिनतदसंग्रहः ॥ स्वरूपासिद्धावव्याप्तिरतःपक्षांशइति ॥ यद्यपिप
क्षतावच्छेदकावच्छिन्नविशेष्यकत्वनिवेशाव्यावृत्तिःपूर्वमुक्तैव ॥ तथापितद्विशेषणेनद्रव्यत्वादिनाह्रदावगाह्यनुमितिमादा
यदोषवारणेपितद्विशेषणाक्रांतह्रदोघटवान्धूमवांश्चपर्वतइत्यनुमितिमादायदोषावारणाद्धेतुतावच्छेदकावच्छिन्नप्रक
रतापक्षतावच्छेदकावच्छिन्नविशेष्यतयोर्निरूप्यनिरूपकभावनिवेशअवश्यकस्तन्निवेशाव्यावृत्तिरधुनापक्षांशइत्यने
नोच्यतइतिनपौनरुक्त्यमितिध्येयं ॥ ज्ञानत्वनिवेशेत्वाह आहार्येति ॥ पक्षतावच्छेदकताव्यापकावच्छेदकताकविशे
ष्यताकत्वरूपपक्षतावच्छेदकावच्छिन्नविशेष्यकत्वनिवेशाभिप्रायेणह्रदोवह्न्यभाववानित्याहार्यप्रमास्वीकाराभिप्रायेणवेदं
बोध्यं ॥ स्वरसादिति ॥ समूहालंबनाभिप्रायकत्वेचकारोऽपेक्षितःअतोज्ञायतेविशिष्टवैशिष्ट्यावगाहिपरत्वमितिभावः ॥अ १६

प्रामाणिकत्वादिति ॥ धर्मितावच्छेदकैकदेशाव्यापकत्वावच्छिन्नसंसर्गताभ्युपगमेनीलभूतलंघटाभाववदितिज्ञानोत्तरंपीन
भूतलंघटवदितिज्ञानानुदयप्रसंगइतिबाधकमप्युन्नेयं ॥ लिंगानुपधानमतेतथाविधपरामर्शात्ताद्दशबाधज्ञानदशायांसामानाधि
करण्येनानुमितेरिष्टत्वात्तथाविधसिध्यनुधावनं ॥ तथाविधेत्यस्यसामानाधिकरण्येनेत्यर्थः॥ एतावता आपाद्यव्यतिरेकः सि
द्धः ॥ अनुमित्यापत्तेरिति ॥ पर्वतत्वमात्रव्यापकत्वानवगाहितयाव्यापकत्वभाननिबंधनाधिकविषयकतयाचोक्तानुमितौ
बाधसिध्याप्रतिबंधकत्वादितिभावः॥ यथाश्रुतार्थपरतेति॥ वाच्यार्थपरतेत्यर्थः॥ यद्यपिअनुमितिपदस्यानुमितित्वावच्छिन्नएवशक्ति
र्नतुताद्दशाकारकानुमितित्वावच्छिन्नइतिनतस्ययथाश्रुतार्थपरत्वंसंभवति॥ तथापिधेनुपदादौधानकर्मत्वस्यमहिष्यादावतिप्रसक्ततया
गोत्वंप्रयोगोपाधिरितिवदनुमितिपदस्यताद्दशाकारकत्वावच्छिन्नएवशक्तिः अनुमितित्वंतुप्रयोगोपाधिरितिमताश्रयणान्नदोषः॥
प्रयोगोपाधित्वंचशक्यतानवच्छेदकत्वेसतितज्जन्यबोधविषयत्वं ॥ नन्वेकेत्रेति मूलादेकहेतौव्यभिचारज्ञानेप्यन्यहे
तौव्याप्तिज्ञानादनुमितिर्जायतइतिलभ्यतेतच्चासंगतमेकत्रैवहेतावेकरूपेणव्यभिचारग्रहेप्यन्यरूपेणव्याप्तिग्रहाव्यभि

चारस्यैकत्रैवसंभवादतएकपदस्यैकधर्मावच्छिन्नमर्थः अन्यपदस्यान्यधर्मावच्छिन्नमर्थइत्याशयेनाह ॥ **वाक्रित्वाद्येकधर्मा**
**वच्छिन्नइति** ॥ **ननु** तद्धर्मावच्छिन्ने शाब्द व्यभिचारज्ञानसत्वेपिलौकिकसन्निकर्षजन्यस्यतद्धर्मावच्छिन्नेव्याप्तिपक्ष
धर्मताज्ञानस्यसंभवाद्व्यभिचारः संभवतीतितदकथनेनन्यूनतेत्यतः सानास्तीत्याह ॥ **यत्रयद्धर्मावच्छिन्नेति** ॥ **व्या**
**प्त्यादिज्ञानविशिष्टत्वेपीति** ॥ अंकुरविशेषसाध्यकेबाधज्ञानसत्वात्परामर्शाद्द्वितीयक्षणेनानुमितिः किंतुतृतीयक्ष
णएवेतितत्रानुमितेः कार्यतावच्छेदकानाक्रांततयातत्रत्यव्यभिचारासंग्रहइतितत्संग्रहायक्षणद्वयसाधारणाव्यवहितोत्तरत्व
मेवानिवेश्यं तथाच धूमव्याप्यस्यशाब्दपरामर्शस्थलेऽनुमितेर्व्याप्त्यादिज्ञानविशिष्टत्वनिर्वाहः ॥ व्यभिचारज्ञानोत्तर
क्षणेद्वितीयपरामर्शस्थापनेक्षणद्वयसाधारणाव्यवहितोत्तरत्वनिवेशेपिनानुमितेस्तद्धर्मावच्छिन्नधर्मिकव्याप्तिज्ञानविशि
ष्टत्वमितिसमूहालंबनानु**धावनं** ॥ लौकिकव्याप्तिग्रहानंतरंलौकिकव्यभिचारग्रहासंभवात्प्रथमतः शाब्दपरामर्शानु**धा**
**वनं** ॥ भिन्नेंद्रियजन्यपरामर्शस्याप्युपलक्षणमेतत् ॥ शाब्दपरामर्शानंतरमलौकिकव्यभिचारज्ञानासंभवाल्लौकिकव्य

भिचारग्रहानुधावनं ॥ नच शाब्दपरामर्शद्वितीयक्षणेऽनुमित्यापत्तिरिष्टापत्तौव्यभिचारज्ञानाभावस्यानुमितिहेतुत्वेव्यभिचाराभा
वइति वाच्यं। शाब्दपरामर्शपूर्वक्षणेयत्रासिद्धिस्तत्रद्वितीयक्षणेऽनुमित्यनुदयात्तत्रव्यभिचारस्यदुर्वारत्वात् ॥ प्रागेवनिराकृते
ति ॥ यत्रव्याप्तिज्ञानंनास्तिव्यभिचारज्ञानाभावश्चवर्त्ततेतत्रानुमित्यापत्तिरतोनव्याप्तिज्ञानस्यव्यभिचारज्ञानाभावेनान्यथासि
द्धत्वमिति ॥ तत्प्रकारकत्वघटितेति ॥ ननुतदभाववन्निष्ठविषयतानिरूपिततन्निष्ठविषयताकत्वमेवभ्रमत्वंवाच्यमितिचे
न्न ॥ रक्तदंडवानितिज्ञानस्यदंडाभाववद्रक्तत्वनिष्ठविषयतानिरूपितदंडनिष्ठविषयताकत्वेनभ्रमत्वापत्तेः ॥ नच विशेष्य
ताप्रकारतानिवेशेनिरक्तत्वप्रकारतानिरूपितरक्तनिष्ठविशेष्यतायाःदंडनिष्ठायापुरुषनिष्ठविशेष्यतानिरूपितप्रकारत्वा
भिन्नविशेष्यतातन्निरूपितविशेष्यत्वाभिन्नत्वमतेतादृशज्ञानस्यभ्रमत्वंदुर्वारमेवेति वाच्यं ॥ तन्मतेतदभाववन्निष्ठविशेष्य
तात्वावच्छिन्ननिरूपकतानिरूपितत्वावच्छेदकतन्निष्ठप्रकारतात्वावच्छिन्ननिरूपकताकत्वस्यैवविवक्षणात् ॥ विषयता
त्वेनविषयतात्वेनचनिरूप्यनिरूपकभावासिध्यातन्निवेशासंभवादधिकमन्यत्रद्रष्टव्यं ॥ लाघवादिति ॥ प्रतियोगिता

प्रकारकज्ञानस्यहेतुत्वेप्रतियोगित्वनिष्ठप्रकारतावच्छेदकसंबंधविषयतायाःकारणतावच्छेदकत्वेगौरवंप्रतियोगित्वसं
सर्गकज्ञानस्यकारणत्वेसंसर्गसंसर्गभानस्यविशिष्टबुद्धावनभ्युपगमेनप्रतियोगित्वसंसर्गविषयतायाःकारणतावच्छेद
ककुक्षावप्रवेशेनलाघवंबोध्यं ॥ स्वावच्छिन्नसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकत्वसंबंधेन
साध्यतावच्छेदकवत्वमेवाभावस्यसाध्याभाववदवृत्तित्वरूपव्याप्तिघटकमिति ॥ अत्रेयमनुपपत्तिः
प्रतिभाति ॥ विशारदलक्षणेस्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनसाध्यतावच्छेदकविशेषिताभावनिवेशनिराकरण
प्रसंगेवन्हित्वेननास्तीत्यप्रत्ययाप्रतियोगिविशेष्यतापन्नएवप्रतियोगितावच्छेदकंभासतइतिनियमोगदाधरेणदर्शितः॥
शिरोमणिनातुव्यधिकरणधर्मावच्छिन्नाभावखंडनावसरेप्रतियोगिविशेषणतापन्नस्यैवधर्मस्यप्रतियोगितावच्छेदकत्वं
भासतइतिनियमोदर्शितः ॥ इहतुदर्शितनियमद्वयमुल्लंघ्यस्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनसाध्यतावच्छेदकवत्वमे
वाभावस्यव्याप्तिघटकमित्यभिधानंकथंसंगच्छतां ॥ यत्तुव्याप्त्यादिबुद्धावभावांशेप्रतियोगितासंबंधेनविशेषणीभूयसा १८

ध्यमपिभासतांभासतांचसाध्यविशेषणतापन्नमेवसाध्यतावच्छेदकंस्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनाभावांशेतथापि
साध्यविषयतानानुमितिकारणतावच्छेदकगर्भेनिवेश्यते किंतुस्वावच्छिन्नप्रतियोगिताकत्वसंबंधावच्छिन्नासाध्यताव
च्छेदकविषयतैवावश्यकत्वादित्यभिप्रायः ॥ तथाहि ॥ सामान्यतः प्रतियोगितासंबंधावच्छिन्नसाध्यप्रकारतानिरूपि
ताभावत्वावच्छिन्नविशेष्यतेतिक्रमेणानुमितिकारणतावच्छेदकनिर्वचनेवह्नित्वावच्छिन्नसाध्यकस्थलेद्रव्यत्वमहानसी
यवह्नित्वादिनावह्न्यवगाहिव्याप्तिज्ञानवारणमशक्यं ॥ नच प्रतियोगितासंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रका
रतानिरूपिताभावविषयतेतिक्रमेण निवेश्य तद्वारणंसुकरमिति वाच्यं ॥ एवंसति बाधज्ञानस्यापि धर्मिणि ग्राह्या
भावावगाहिनः सामान्यतः प्रतियोगितासंबंधावच्छिन्नग्राह्यतावच्छेदकावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपि
तधर्मिविषयताशालिज्ञानत्वेनैव प्रतिबंधकत्वकल्पनसंभवेन प्रतियोगितायाः प्रतियोगिविशेषणधर्मावच्छिन्नत्वस्यनि
र्युक्तिकतापातात् ॥ स्पष्टंचेदमभिहितंगदाधरेणैवव्यधिकरणधर्मावच्छिन्नाभावखंडनादौ तस्माद्वह्नित्दभावविरोधप्र

योजकवह्नित्वावच्छिन्नप्रतियोगिताकत्वावगाहित्वं निवेश्यैव बाधज्ञानप्रतिबंधकत्वं व्याप्तिज्ञानादेश्च कारणत्वं वक्तव्यं ॥ तत्रचायं **मतभेदः** ॥ वन्हित्वावच्छिन्नप्रतियोगिताकत्वं वह्नेरेव संबंध इत्येकः पक्षः ॥ वन्हेस्तु केवलप्रतियोगित्वमेव वह्नित्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनाभावविशेषणत्वादभावांतरव्यावृत्तिसंभवान्न प्रतियोगिताया विशेषरूपेण संसर्गतेत्यपरः पक्षः ॥ तत्र वह्नित्वावच्छिन्नत्वविशेषितप्रतियोगितासंसर्गेण वह्नेरेव विशेषणत्वादभावांतरव्यावृत्तिरित्याद्यपक्षे वह्नित्वस्य द्वेधा निवेश्यतया गौरवं ॥ द्वितीयपक्षे वह्नित्वस्यैवावच्छिन्नप्रतियोगिताकत्वसंबंधेन विशेषणतया न वह्नित्वस्य द्वेधा प्रवेश इति लाघवं ॥ तथाच गौरवदूषिताद्यपक्षे मेयत्वाभाववद्वृत्तित्वज्ञानस्य भ्रमत्वासंभवेपि द्वितीयपक्षे तज्ज्ञानस्य मेयत्वांशे भ्रमत्वं निराबाधमेवेति ॥ **तन्नसम्यक्** ॥ वह्नित्वावच्छिन्नप्रतियोगितासंबंधेन वन्हेरेव विशेषणत्वमिति पक्षेपि वह्नित्वावच्छिन्नप्रकारतायाः न वह्निवृत्तित्वेन वह्नित्वावच्छिन्नत्वेन वा निवेशो गौरवाद्व्यर्थत्वाच्च ॥ **परंतु** वह्नित्वावच्छिन्नप्रतियोगितासंबंधावच्छिन्नप्रकारतात्वेनैव निवेशो लाघवादावश्यकत्वाच्च ॥ **तथाच** नैतत्पक्षेपि वह्नित्वस्यानुमितिकारणतावच्छेदकको

टौद्वेधाप्रवेशाइतिसाध्यतावच्छेदकत्वमेवाभावस्यव्याप्तिघटकंलाघवादियुक्तासंगतेर्दुर्वारत्वात्॥ **अथ** साध्यतावच्छेदकावच्छिन्न
प्रतियोगितासंबंधेनसाध्यस्याभावविशेषणतापक्षेऽनुमितिकारणतावच्छेदकधर्मशरीरगुरुत्वाभावेप्यनुमितिकारणज्ञानविषय
विशिष्टपदार्थशरीरगौरवंदुर्वारमेववह्नित्वस्यद्वेधाप्रवेशादितिचेन्न॥ दर्शितद्वितीयपक्षेपिवह्निविशेष्यतापन्नएववह्नित्वस्यभा
नाद्वह्नित्वस्यदर्शितविशिष्टशरीरेद्वेधाप्रवेशस्यावश्यकत्वात्॥ कारणतावच्छेदकगौरवाप्रयोजकस्योक्तविशिष्टपदार्थशरीरगौ
रवस्यदोषत्वासंभवाच्च॥ **एतेन** विशारदलक्षणाद्युक्तनियमभंगएतन्मतेदूषणमेवाहुरित्यनेनध्वनितं॥ **तथाच** साध्यांशस्यका
रणतावच्छेदकशरीरद्वयदर्शितविशिष्टपदार्थशरीरेपिनिवेशाभावाल्लाघवंस्फुटमेवेति **निरस्तं**॥ कारणतावच्छेदकगौरवस्य
प्रागुक्तदिशा. नवकाशाद्दर्शितविशिष्टपदार्थशरीरगौरवस्याकिंचित्करत्वादिति॥ **अत्रेदंसमाधानं**॥ साध्यतावच्छेदका
वच्छिन्नत्वविशिष्टप्रतियोगितायासाध्यीयसंसर्गतादूषणेनैतद्ग्रंथतात्पर्यं॥ **परंतु** प्रतियोगिविशेषिताभावबुद्धौप्रतियोगि
विशेषणतापन्नधर्मोपिधर्मिपारतंत्र्येणस्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनाभावांशेविशेषणीभूयभासतइतिपक्षमवलंब्या

भिधेयत्वंमेयत्वाभाववद्वृत्तीतिज्ञानस्यभ्रमत्वोपपादनएवतात्पर्यं ॥ अस्मिन्पक्षेस्वावच्छिन्नप्रतियोगिताकत्वसंबंधावच्छि
न्नसाध्यतावच्छेदकविषयतैवानुमितिजनकतावच्छेदककोटौनिवेश्यतेआवश्यकत्वान्नतुसाध्यविषयतापिगौरवात्व्यर्थत्वाच्चेति
॥ यद्यपिसाध्यविषयतायाअनुमितिजनकतावच्छेदकशरीरप्रवेशखंडनंनभ्रमत्वोपपादनउपयुज्यते ॥ तथापिशिष्यव्युत्पादना
यैवेहनखंडनमितिबोध्यं ॥ घटत्वादेःप्रसिद्धेनेति ॥ निरूपितत्वंषष्ठ्यर्थःस्वरूपसंबंधावच्छिन्नप्रतियोगिताकघटाभावा
दाविति शेषः ॥ घटत्वादेरित्यत्रनिष्ठत्वंषष्ठ्यर्थस्तथाचस्वरूपसंबंधावच्छिन्नप्रतियोगिताकघटत्वाभावाभावस्यघटत्वरूपतयाघ
टत्वनिष्ठप्रसिद्धघटत्वाभावत्वादेस्तादृशप्रतियोगिताकत्वेनेत्यर्थइतिकेचित् ॥ व्याख्यांतरमाह ॥ प्रथमेति ॥ स्वव्य
धिकरणप्रकारावच्छिन्नेति ॥ ननुस्वव्यधिकरणत्वंयदिस्वानधिकरणवृत्तित्वंतदाह्रदोवह्न्यभाववानितिबुद्धेःप्रमात्वानुपप
त्तिरतःस्वाधिकरणावृत्तित्वमेवतद्वाच्यंह्रदावृत्तित्वस्यवह्न्यभावेऽसत्वान्नोक्तबुद्धेःप्रमात्वानुपपत्तिः ॥ स्वाधिकरणावृत्तित्वमित्य
त्रवृत्तित्वंप्रकारतावच्छेदकसंबंधेनवाच्यमन्यथापर्वतेपिकालिकसंबंधेनवह्न्यभावसत्वात्स्वरूपसंबंधेनवह्न्यभाववानितिबु २०

द्धेर्भ्रमत्वानुपपत्तिस्तथा च जातिर्जातिमतीत्यादिबुद्धेः प्रमात्वापत्तिर्भ्रमत्वानुपपत्तिश्च ॥ स्वंजातिनिष्ठाविषयताप्रकारतावच्छेदकसंबंधः
समवायस्तेनसंबंधेनस्वाधिकरणनिरूपितवृत्तिताप्रसिद्धेरितिचेन्न ॥ स्वावच्छेदकसंबंधावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वा
वच्छिन्नाधेयतानिरूपितस्वावच्छेदकसंबंधावच्छिन्नस्वावच्छेदकावच्छिन्नवत्ताग्रहविरोधितानियामकसंबंधावच्छिन्ननिरवच्छिन्नाधिकरणता
वद्वृत्तित्वस्यावच्छिन्नाभाववद्वृत्तित्वेतदन्यतरस्यनिरूपिततैतदुभयसंबंधेनप्रकारताविशिष्टविषयतानिरूपकत्वस्यविवक्षितत्वात् ॥
विशेषरूपेणसंसर्गताभ्युपगमेतुप्रकारतावच्छेदकसंबंधावच्छिन्नाधेयत्वीयस्वरूपसंबंधेनस्वाधिकरणावृत्तित्वमेवस्वव्यधिकर
णत्वं ॥ यत्तु प्रकारतावच्छेदकसंबंधावच्छिन्नयदधिकरणतासामान्येस्वाधिकरणानुयोगिकत्वाभावस्तत्वमेवतदितितन्न ॥ तथा
सतिसंयोगेनरूपवान् घटइतिज्ञानस्यापिप्रमात्वापत्तिः संयोगेनरूपाधिकरणतायाअप्रसिद्धत्वात् ॥ केचित्तु ॥ प्रकारतावच्छे
दकसंबंधसामान्येस्वाधिकरणानुयोगिकत्वयद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तद्धर्मवत्वंस्ववैय्यधिकरण्यपदार्थः ॥ न
च भूतलंसंयोगसमवायोभयसंबंधेनघटवदितिज्ञानस्यप्रमात्वापत्तिर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकतदाश्रयवृत्तिप्रति

योगिताकाभावानभ्युपगमेनसंसर्गतावच्छेदकोभयत्वावच्छिन्नेउभयाभावासत्वादितिवाच्यं ॥ प्रकारतावच्छेदकसंसर्गता
वच्छेदकसामान्येस्वाधिकरणवृत्त्यनुयोगितानिरूपकतावच्छेदकत्वयद्धर्मावच्छिन्नप्रतियोगितानिरूपकतावच्छेदकत्वोभयाभा
वस्तद्वत्वस्यविवक्षितत्वादित्याहुस्तन्न ॥ संयोगत्वेनसंयोगसमवायोभयसंसर्गकस्यघटप्रकारकभूतलविशेष्यकज्ञानस्यप्र
मात्वापत्तेर्दुर्वारत्वात्संयोगत्वादौताद्दशोभयाभावासत्वात् ॥ ईश्वरीयज्ञानावृत्तिविषयिताशून्यत्वंसर्वांशेप्रमात्वमित्यपिके
चित् ॥ दीधितौयथार्थेतिव्यर्थमिति ॥ अत्रेदंबोध्यं ॥ वह्न्यभाववद्ध्रदादिविषयकत्वस्यप्रतिबंधकताशून्येसंशये
आहार्येचवर्तमानतयानप्रतिबंधकतानतिरिक्तवृत्तित्वमितिसंशयान्यानाहार्यादिज्ञाननिष्ठत्वविशेषणंविषयतायांद्वितीयल
क्षणेवक्ष्यते ॥ इहतुयावद्धर्मभिन्नत्वरूपयाथार्थ्यनिवेशेनैवसंशयाहार्ययोर्व्युदाससंभवान्नसंशयान्यत्वानाहार्यत्वयोर्निवेश
इतियाथार्थ्यविशेषणवैयर्थ्यंकथंसंगच्छते ॥ यत्तुवृक्षःसंयोगीनवेतिसंशयस्याभ्रमत्वान्नयाथार्थ्यनिवेशात्तद्वारणंतदवार
णेचकपिसंयोगिभेदस्यसाध्यतायांकपिसंयोगतदभावकोटिकसंशयांतर्भावेणानतिरिक्तवृत्तित्वव्याहतेःकपिसंयोगवद्वृक्षा २१

द्देर्दोपत्वानुपपत्तिरितितन्न ॥ कोट्यंशेभ्रमत्वासंभवेपिकोटिद्वयविरोधांशेभ्रमत्वसंभवात् ॥ समुच्चयवैलक्षण्यायसंशयेविरोधभानस्यावश्यकत्वात् ॥ यदपिवह्निमान्ह्रदोवह्न्यभाववानित्याद्याहार्यस्ययथार्थत्वविशेषणेनवारणेपिह्रदोवह्निमानितिबाधज्ञानकालीनेच्छाजन्यह्रदोवह्न्यभाववानित्याकारकाहार्यप्रमायानवारणसंभवइतितदपिन ॥ तत्रापिवह्निमान्ह्रदोवह्न्यभाववानित्याकारकस्याहार्यस्याभ्युपगमात्सामग्रीबलेनवह्नेर्वह्न्यभावधर्मितावच्छेदकतयाभानेबाधकाभावात् ॥ अतएवद्वितीयलक्षणेवक्ष्यतेआहार्यसमानाकारकानाहार्यज्ञानाप्रसिद्धेरिति ॥ नचैवमव्याप्यवृत्तित्वाग्रहकालीनस्यकपिसंयोगाभाववान्वृक्षःकपिसंयोगीत्याहार्यस्यनवारणसंभवइतिवाच्यं ॥ संशयस्येवतादृशाहार्यस्यापिकपिसंयोगतदभावयोर्विरोधांशेभ्रमत्वसंभवात् ॥ ह्रदोनिर्वह्निरित्याकारकानाहार्यज्ञानेआहार्यज्ञानेच्छाकार्यतावच्छेदकस्यासत्वोपपत्तयेइच्छाकार्यतावच्छेदककोटौवह्निधर्मितावच्छेदककत्वस्येवाव्याप्यवृत्तित्वग्रहकालीनेवह्निमान्ह्रदोनिर्वह्निरित्याकारकज्ञानेव्यभिचारवारणायविरोधावगाहित्वस्यापिनिवेश्यतयाविरोधिधर्मितावच्छेदककानात्मकस्येवविरोधानवगाहिनोप्याहार्यस्यानभ्युपगमात् ॥ व्याप्यवृत्तित्वा

वगाहित्वेनबाधज्ञान्यस्यप्रतिबंधकतापक्षेप्रतिबंधकानाहार्यज्ञानेव्याप्यवृत्तित्वभासकाव्याप्यवृत्तित्वज्ञानाभावबलादेवाहार्यज्ञा
नेपिविरोधभानसंभवइतियथार्थत्वविशेषणेनाहार्यवारणंनानुपपन्नं ॥ यत्तुयाथार्थ्ययावद्भमभिन्नत्वंतत्रभ्रमत्वस्यानुग
तस्यदुर्वचतयाभेदकूटनिवेशावश्यकत्वेसंशयाहार्यरूपकतिपयभ्रमभेदनिवेशसार्थक्येपितदितरभ्रमान्यत्वविशेषणवैयर्थ्य
मेवप्रथमलक्षणेदोषइतितदसत् ॥ उदासीनपदार्थांशेयोभ्रमस्तदन्यत्वविशेषणस्ययादृशविशिष्टविषयकत्वंप्रकृतानुमिति
प्रतिबंधकतानतिरिक्तवृत्तीतिविवक्षातः प्रागपिनिवेशेप्रयोजनाभावेनतथाविधकतिपयभ्रमान्यत्वविशेषणवैयर्थ्यस्यदर्शित
विवक्षानिबंधनताभावाद्दीधितिस्वरसभंगात् ॥ ईश्वरीयज्ञानावृत्तिविषयितारूपस्यावयवग्रंथेगदाधरोक्तरूपस्यवाऽनुगतभ्रमत्वस्यवक्तुंश
क्यत्वाच्चेतिदिक् ॥ मिश्रव्याख्यामुपन्यस्यतिकेचित्विति ॥ तच्चज्ञायमानेति ॥ इतरमतेतादृशबाधज्ञानप्रकारकयथार्थज्ञानविषयत्व
मादायलक्षणसमन्वयेपिसद्धेतावतिव्याप्त्यापत्तेस्तन्मताश्रयणमेवोचितमितिभावः ॥ यथार्थपदवैयर्थ्यमाशंकते ॥ यद्यपीति ॥
समाधत्तेतथापीति ॥ वक्ष्यमाणसंबंधावच्छिन्नेति ॥ एकज्ञानविषयत्वसंबंधावच्छिन्नेत्यर्थः ॥ अन्वयश्चास्यप्रकारतेत्य २२

नेन ॥ तथाव्यवहारः स्यादिति ॥ तादृशव्यवहारस्यप्रामाण्यापत्तेरित्यर्थः ॥ तथासतीति ॥ व्यभिचारादेः साक्षादनुमिति
प्रतिबंधकत्वं स्वीकृत्यदुषधात्वर्थघटकानुमितौतद्धेतुकत्वाप्रवेशोइत्यर्थः ॥ तल्लाभानुरोधेनेति ॥ अयंभावस्तद्धेतुकत्वाप्र
वेशेरासभलिंगकानुमितेरप्यनुमितिसामान्यांतर्गततयाधूमाभाववद्वृत्तिवह्न्यादिरूपव्यभिचारादेस्तादृशानुमितिसामान्यप्र
तिबंधकत्वाभावादसंभवः स्यादितिप्रकृतहेतुप्रकारकज्ञानजन्यत्वरूपप्रकृतहेतुकत्वादेर्दुषिधात्वर्थघटकानुमितौनिवेशआव
श्यकस्तद्घटकहेतौहेतुतावच्छेदकवैशिष्ट्यप्रवेशोप्यावश्यकोऽन्यथाद्रव्यादिलिंगकानुमितेरपिसामान्यांतर्गततयाऽसंभवा
नुद्धारात्तन्निवेशेचहेतुतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानजन्यत्वलाभान्नासंभवइति ॥ ननुपर्वतेधूमसाधनेवह्नित्वे
नायंदुष्टइत्यादौदुषधातोर्यदिवह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबंधकोऽर्थस्तदापर्वतइत्यत्रसप्तम्यर्थोविशेष्यत्वंतत्रप्र
कृत्यर्थस्यपर्वतादेर्निरूपितत्वसंबंधेनान्वयः धर्मिपारतंत्र्येणावच्छिन्नत्वसंबंधेनपर्वतत्वादेश्चान्वयइतिपर्वतत्वावच्छिन्न
विशेष्यतालाभस्तस्यानिरूपकतासंबंधेनाभेदेनधूमपदार्थधूमप्रकारत्वावच्छिन्नान्वितसाधनपदार्थानुमितावन्वयः ॥ धूम

प्रकारकत्वविशिष्टएवतादृशाविशेष्यतायाअन्वयाद्विशिष्टवैशिष्ट्यबुद्धौधर्मितावच्छेदकावच्छिन्नत्वस्यविधेयेभाननियमेनधूम
प्रकारकत्वावच्छिन्नतादृशाविशेष्यताकत्वलाभस्तादृशाविशेष्यताकत्वान्वितानुमितेःसप्तम्यर्थेऽभेदेऽन्वयस्तस्यदुपधात्वर्थघटकानुमि
तौस्वरूपसंबंधेनान्वयःविधेयांशेऽधिकावगाहिबोधस्यनव्यसंमतत्वात्॥ वह्नित्वेनेत्यत्रतृतीयार्थवैशिष्ट्यस्येदंपदार्थेधर्मिण्यन्वयः
॥दुष्टइत्यत्रक्तप्रत्ययार्थःसंबंधी॥ तथाचधूमत्वावच्छिन्नप्रकारकत्वावच्छिन्नपर्वतत्वावच्छिन्नविशेष्यकत्वविशिष्टानुमित्यभि
न्नानुमितिप्रतिबंधकताश्रयसंबंधीवह्नित्वविशिष्टइतिबोधःफलितः॥ सचनसंभवतिसप्तम्याअभेदार्थकत्वाभावात्॥ तथा
त्वेपिदुपधात्वर्थैकदेशेतदन्वयोव्युत्पत्तिविरुद्धः॥ पदार्थैकदेशेऽभेदान्वयेऋद्धस्यराजमातंगइतिप्रयोगापत्तेरभेदसंसर्गका
न्वयबोधस्यव्युत्पत्त्यसिद्धत्वस्वीकारेपिधात्वर्थेऽनुमित्यंतर्भावोव्यर्थस्तेनविनापितादृशार्थलाभात्॥ विधेयांशेऽधिकावगाहि
बोधस्यसर्वानुमतत्वाभावेनसप्तम्यर्थानन्वयप्रसंगाच्चेत्यतआह॥अथवेति॥अनन्वयप्रसंगादिति॥इदंचनवीन
मताभिप्रायेण॥ प्राचांमतेचधात्वर्थेऽनुमित्यंतर्भावोव्यर्थइत्येवदूषणं॥ वह्निनाधूमसाधनइति॥ नन्वत्रापितृतीयार्थो 

वैशिष्ट्यमेवतस्यरासभेबाधान्नापत्तिरितिचेन्न ॥ तथासतिवन्हिनाधूमसाधनेवन्हिर्दुष्टइतिव्यवहाराप्रामाण्यापत्तेः ॥ वह्नौवह्निवैशिष्ट्य
बाधात् ॥ अभेदकालिकादिरूपवैशिष्ट्यमादायतदुपपत्तौवह्निनाधूमसाधनेद्रव्यंदुष्टंरासभोदुष्टइतिव्यवहारापत्तेः ॥ प्रथमांतार्थेतृतीया
र्थाभेदान्वयेविलक्षणाकांक्षायानियामकत्वंस्वीकृत्यतादृशाकांक्षायाः प्रथमांतपदार्थतावच्छेदकावच्छेदेनैवतृतीयार्थाभेदान्वयबोधक
त्वांगीकारेउक्तदोषाभावादाह ॥ **अथवेति** ॥ पर्वतेवन्हिनाधूमसाधनेवह्निर्दुष्टइतिव्यवहारविषयत्वावच्छिन्नेपक्षेतादृशव्यवहार
विषयत्वावच्छिन्नेतरभेदस्यपर्वतत्वावच्छिन्नपक्षकधूमत्वावच्छिन्नसाध्यकवह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबंधकप्रकारकय
थार्थज्ञानविषयत्वहेतुनासाधनेहेतौयथार्थत्वानुपादानेसद्धेतौभ्रमात्मकज्ञानमादायव्यभिचारइतितद्वारणायतदुपादानमि
तिभावः ॥ **अग्रेपीति** ॥ द्वितीयतृतीयलक्षणयोरपीत्यर्थः ॥ **यद्रूपावच्छिन्नविषयतासामान्यमिति** ॥ इदंचज्ञान
भेदेनविषयताभेदमतेनतेननपाषाणमयत्वविशिष्टपर्वतमादायपर्वतोवह्निमान्धूमादित्यादौदुष्टताप्रसंगइति**ध्येयं** ॥ ॥
**इतिपर्वतेइत्युपनामकरघुनाथकृतगादाधरीसामान्यनिरुक्तिटिप्पण्यांन्यायरत्नाभिधायांप्रथमलक्षणं**

समाप्तं ॥ ॥ यद्विषयकत्वेन लिंगज्ञानस्यानुमितिविरोधित्वमिति मूले ज्ञानस्येत्यत्र षष्ठ्यर्थो वृत्तित्वं तस्य यद्विष
यकत्वेऽन्वयः ॥ ननु यद्विषयकत्वेनेति वाक्ये स्वरसतः षष्ठ्यंतज्ञानपदार्थस्य ज्ञाननिष्ठत्वस्य विरोधित्वेऽन्वयः प्रतीयते ॥ अपेक्षित
श्च तत्रैव ॥ अन्यथा प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतायाः कामिनीप्रत्यक्षविषयकेच्छायां सत्त्वेन कामि
नीप्रत्यक्षविषयकत्वस्य तदवच्छेदकत्वाद्ध्रदो वह्निमान्धूमादित्यादौ कामिनीप्रत्यक्षेऽतिव्याप्तेः ॥ ज्ञानवृत्तित्वस्य विरोधित्वे
ऽन्वये च ज्ञानवृत्तित्वविशिष्टविरोधितायाः कामिनीप्रत्यक्षेच्छायामसत्त्वेनातिव्याप्तिविरहादिति चेन्न ॥ एकदेशेऽतिव्याप्ति
वारणायानतिरिक्तवृत्तित्वरूपस्यैवावच्छेदकत्वस्य विवक्षणीयत्वेन दोषविषयितायाः संस्कारे सत्त्वेन तत्र च प्रतिबंधकताया
असत्त्वेनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य कस्यामपि दोषविषयितायामसत्त्वेनासंभवापत्तेस्तद्वारणाय ज्ञानवृत्तित्वविशि
ष्टत्वस्य विषयितायामवश्यं विवक्षणीयत्वेन तत्रैव षष्ठ्यंतज्ञानपदार्थान्वयो युक्तः ॥ एवं सति पूर्वोक्तातिप्रसंगोऽपि नास्ति ॥ अन
तिरिक्तवृत्तित्वरूपस्यैवावच्छेदकत्वस्योक्तयुक्त्या विवक्षणीयतया कामिनीप्रत्यक्षविषयितायाः कामिनीमनुभवामीत्याकारकानु 

व्यवसायेसत्वेनतत्रचप्रतिबंधकत्वस्यासत्वेनकामिनीप्रत्यक्षत्वावच्छिन्नविषयितायाअनतिरिक्तवृत्तित्वरूपावच्छेदकत्ववि
रहात् ॥ ननुतथापिस्वरसभंगोदुर्वारइतिचेन्नउद्देश्यवाचकपदस्यपूर्वनिपातनियमेनयद्विषयकत्वेनेतिवाक्येउद्देश्यवाचकस्य
विरोधित्वपदस्यपरत्रसत्वेनानाकांक्षावारणायतत्पदस्यपूर्वत्रयोजनायाआवश्यकत्वाज्ज्ञानस्येत्यस्यापियद्विषयकत्वेनेतिपदा
त्प्राक्योजनायाःकर्तुंशक्यत्वात् ॥ तथाचानुमितिविरोधित्वंलिंगज्ञानस्ययद्विषयकत्वेनतत्वमिति योजनायांस्वारस्यभं
गाभावात्॥ लिंगपदस्याखंडाभावघटकतयायथाकथंचित्सार्थक्येप्यव्याप्त्यतिव्याप्त्यवारकतयासार्थक्यासंभवेनतदविवक्षेत्यभि
प्रायेणगादाधर्यामनतिप्रयोजनकतयेति ॥ नन्वाहार्यसंशयाद्यात्मकज्ञानमादायासंभववारणायज्ञानेऽनाहार्यत्वसं
शयान्यत्वादिकंनिवेशनीयमितिगौरवमतोलिंगाज्ज्ञानमितिपंचमीतत्पुरुषाश्रयणेनलिंगजन्यंज्ञानमनुमित्यात्मकंल
क्ष्यते ॥ एवंचानुमितिवृत्तित्वविशिष्टयद्विषयितेत्यादिरीत्याविवक्षणीयंसर्वत्रदोषविषयकानुमितिमादायैवलक्षणसंग
तिः ॥ आहार्यसंशयाद्यात्मकानुमितेरस्वीकारेणनाहार्यादिज्ञानमादायदोषइतिलिंगपदसार्थक्यसंभवेतद्वैयर्थ्यकथन

मसंगतमितिचेदत्र प्राञ्चः ॥ एवंसति यादृशस्थलेदोषविषयकानुमितिः कस्यापिनजातातत्राव्याप्तिः ॥ एवं आहार्यादि
ज्ञानमादाय दोषवारणायविषयितायामनुमितिवृत्तित्वं निवेशनीयमुतशाब्दबोधवृत्तित्वंनिवेशनीयमित्यत्रविनिगमनावि
रहाल्लक्षणद्वयसंभवेनोभयस्यापिदोषपदप्रवृत्तिनिमित्तत्वापत्तिरतउभयमप्युपेक्ष्यानाहार्यत्वादिविशिष्टज्ञानवृत्तित्वमेवविव
क्षणीयमित्यभिप्रायेणलिंगपदवैय्यर्थ्यकथनमितिवदंति ॥ तत्तुच्छं ॥ तत्पुरुषाश्रयणेपिलिंगप्रत्यक्षसाधारणस्य लिंगज्ञा
नपदस्यानुमितितात्पर्यकत्वस्वीकारेतस्यजन्यप्रत्यक्षान्यज्ञानपरत्वमपिसंभवति ॥ तथाचजन्यप्रत्यक्षान्यज्ञानवृत्तित्व
विशिष्टयद्विषयितेत्यादिरीत्याविवक्षणीयंएवंचप्रत्यक्षान्यज्ञानेआहार्यत्वसंशयत्वादेरसत्वान्नाहार्यादिज्ञानमादायासंभवः॥
इदानींयत्रदोषानुमितिरप्रसिद्धातत्राव्याप्तिः ज्ञानेऽनुमितित्वंनिवेशनीयमुतशाब्दत्वंनिवेशनीयमित्यत्रविनिगमनाविरहेण
प्रवृत्तिनिमित्तद्वयापत्तिरित्यादिदूषणासत्वं ॥ यत्रानुमित्यप्रसिद्धस्तत्रापिशाब्दज्ञानमादायलक्षणगमनात् ॥ नन्वयत्रा
नुमितिः शाब्दंचेत्युभयमप्यप्रसिद्धंतत्राव्याप्तिरितिवाच्यं ॥ यत्रदोषत्वव्यवहारस्तत्रैवलक्षणसत्वापेक्षणेनयत्रचव्यव

हारस्तत्र नियमेन शाब्दात्मकज्ञानसत्वेन तमादायलक्षणसंगमनात् ॥ अथवा जन्यप्रत्यक्षान्यज्ञानत्वस्येश्वरज्ञानसाधारण्येन
ईश्वरज्ञानमादायैवलक्षणसमन्वयः संभवति ॥ नचेश्वरज्ञानस्य प्रतिबंधकत्वे मानाभावेन तत्र जन्यप्रत्यक्षान्यज्ञानत्वविशिष्ट
विषयितासत्वेनासंभव इति वाच्यं ॥ बाधकाभावस्यैव प्रमाणत्वात् ॥ नन्वाव्यापकविषयिताशून्यत्वस्य निवेशनीयत्वात्तस्य
चेश्वरज्ञानेऽसत्वेनोक्तस्थलेऽव्याप्तिर्दुर्वारैवेति वाच्यं ॥ जन्यज्ञानवृत्तित्वविशिष्टाव्यापकविषयिताशून्यत्वस्यैव निवेशनी
यत्वात् ॥ नचोक्तपक्षेप्यप्रामाण्यज्ञानानास्कंदितत्वस्य निवेशनीयतयासाम्यमिति वाच्यं ॥ तथापि संशयान्यत्वाद्यनिवेशे
नलाघवानपायादिति चेन्न ॥ स्वावच्छेदकाभावप्रतियोग्यनुपहितत्वसंबंधेन प्रतिबंधकताविशिष्टत्वमेव ह्यनाहार्याप्रामा
ण्यज्ञानानास्कंदितसंशयान्यत्वादिविशिष्टत्वं ॥ प्रतियोग्यनुपहितत्वं चैकक्षणावच्छिन्नैकात्मवृत्तित्वसंबंधेन तत्संबंधावच्छि
न्नप्रतियोगिताकाभाववत्वमेवानुपहितत्वं ॥ उक्तानुगमेनानाहार्यत्वादीनां निवेशएतन्मतएव लाघवेन लिंगपदवैयर्थ्यात् ॥
नच मन्मते प्रत्यक्षान्यत्वरूपं लघुविशेषणं भवन्मते च तादृशसंबंधेन प्रतिबंधकताविशिष्टत्वरूपसंसर्गांशे गुरुभूतमिति

वाच्यं ॥ त्वन्मतेप्यप्रामाण्यज्ञानास्कंदितप्रत्यक्षान्यज्ञानमादायासंभववारणायाप्रामाण्यज्ञानाभावविशिष्टत्वंनिवेशनी
यंतत्रचाप्रामाण्यस्याननुगतत्वेनोक्तानुगमस्यावश्यकतयाविपरीतमेवप्रत्यक्षान्यत्वनिवेशनप्रयुक्तगौरवमितिसूक्ष्मद
र्शिभिर्विचारणीयं ॥ अत्रेदंबोध्यंप्रयोजनांतरेणलिंगपदसार्थक्यसंभवेनतद्वैय्यर्थ्यकथनमसंगतं ॥ किंतत्प्रयोजनमि
तिचेच्छृणु ॥ लिंगस्यज्ञानंलिंगज्ञानमितिषष्ठीतत्पुरुषाश्रयणेनलिंगविषयकज्ञानंलब्धंतद्वृत्तित्ववैशिष्ट्यस्यदोषवि
षयितायामन्वयेदोषविषकत्वमपिज्ञानेतुल्यवित्तिवेद्यतयालभ्यते ॥ एवंचैकज्ञानविषयत्वसंबंधेनदोषवत्त्वरूपंदुष्ट
लक्षणंलभ्यतइतिमूलेदुष्टनिरूपणंप्रतिज्ञायतल्लक्षणाकथनप्रयुक्तन्यूनतापरिहरणेनलिंगपदस्यसार्थक्यं ॥ नचदुष्टलक्ष
णबोधकतयातत्सार्थक्येपितस्यलक्षणेनिवेशेउपयोगाभावेनाविवक्षणमितिवाच्यं ॥ लक्षणनिवेशप्रयोजनाभावेपिदुष्टल
क्षणबोधनायलिंगपदमित्यनुक्त्वातस्यवैय्यर्थ्यकथनमग्रेचदुष्टलक्षणाकथनप्रयुक्तमूलीयन्यूनत्वशंकानिरासायतस्यस्फुट
त्वादुपेक्षणमितिव्याख्यानमत्यंतासामंजस्यविलसितं ॥ नन्वेवंलिंगपदसार्थक्यकल्पनेप्रथमलक्षणएवतदुपादानंयुक्तं २६

तस्यापिदुष्टलक्षणत्वादितिचेन्न ॥ प्रथमतृतीयलक्षणापेक्षयाद्वितीयलक्षणएवग्रंथकृन्निर्भरात् ॥ यद्विषयकत्वेनेतिमूल
स्थयत्पदस्यसर्वनामतयातस्यबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नेशक्तत्वाद्दोषतावच्छेदकवह्न्यभावादिविशि
ष्टह्रदादिरर्थः ॥ तत्रचवह्न्यभावादेर्ह्रदांशउपलक्षणत्वविवक्षायांगुणाद्यन्यत्वोपलक्षितसत्तयाद्रव्यादेर्गुणादितइवद्रव्यत
ह्रदत्वादिनावह्न्यभाववद्ध्रदोद्यवगाहिज्ञानीयविषयितायावह्न्यभावोपलक्षितेनह्रदात्मकेनयत्पदार्थेननिरूपितत्वसंबं
धेनविशेषणीभवताव्याप्तिर्नसंभवतिह्रदेवह्न्यभावस्यविषयितायांचह्रदस्यनिरूपितत्वसंबंधेनप्रकारीभूयभास
मानस्याबाधादितिमूलस्थयत्पदार्थतावच्छेदकवह्न्यभावादेर्नोपलक्षणत्वंकिंतुविशेषणत्वमेवेतिज्ञापनायैवयादृशा
विशिष्टविषयकत्वेनेतिदीधितिकृतांव्याख्यानं ॥ एवंचगुणाद्यन्यत्वविशिष्टसत्तयाद्रव्यादेर्गुणादितइववह्न्यभावादिवि
शिष्टेनह्रदेनद्रव्यत्वह्रदत्वादिप्रकारकज्ञानीयविषयितायाव्याप्तिःस्फुटैव ॥ यतोवह्न्यभाववद्ध्रदविषयितेत्यत्रह्रदांशे
वह्न्यभावादेरुपलक्षणत्वविवक्षायांनिरूपितत्वमेवविषयितांशेवह्न्यभाववद्ध्रदसंसर्गः ॥ वह्न्यभावादिश्चनस्याच्छिन्नप्र

तियोगिताकत्वविशिष्टनिरूपितत्वसंबंधेनविषयितायांप्रकारः ।। किंतुस्वरूपसंबंधेनह्रदांश एव ।। दर्शितस्थलेह्रदांशेवह्न्य
भावादेर्विशेषणत्वविवक्षायांतुवह्न्यभावाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्टनिरूपितत्वत्वेननिरूपितत्वस्यवह्न्यभाववद्ध्रदसं
सर्गता ।। अथवा वह्न्यभावादेरेघस्त्वावच्छिन्नप्रतियोगिताकत्वविशिष्टनिरूपितत्वसंबंधेनविषयितांशे धर्मिपारतंत्र्येणप्र
कारत्वं धर्मिणस्तु शुद्धनिरूपितत्वसंबंधेनैवविषयितांशे प्रकारत्वमितिमतभेदः ।। तत्रविशिष्टप्रतियोगिकत्वेननिरूपित
त्वस्यसंसर्गतापक्षेयादृशविशिष्टप्रतियोगिकत्वविशिष्टनिरूपितत्वसंबंधेनयादृशविशिष्टविशेषितविषयिताप्रकृता
नुमितिप्रतिबंधकतानतिरिक्तवृत्तिस्तादृशत्वंदोषत्वमितिनिष्कृष्टार्थेयथाश्रुतदीधितिसंगतावपिविशिष्टवैशिष्ट्यबु
द्धौविशेषणतावच्छेदकस्यधर्मिपारतंत्र्येणपरंपरासंबंधेनविशेषणीभूयव्यावर्तकत्वमितिद्वितीयपक्षेशुद्धनिरूपितत्व
संबंधेनविशेषणीभूयवह्न्यभाववद्ध्रदस्यद्रव्यत्वादिनावह्न्यभाववद्ध्रदावगाहिज्ञानीयविषयिताव्यावर्तकत्वासंभवात्ता
दृशविषयितायाअपिलक्षणघटकत्वंस्यात्तस्यांचानुमितिप्रतिबंधकतानतिरिक्तवृत्तित्वासंभव इतिविशेषणतावच्छेद २७

कवह्न्यभावादेरपिस्वावच्छिन्नप्रतियोगिताकत्वविशिष्टनिरूपितत्वसंबंधेनधर्मिपारतंत्र्येणविषयितांशेविशेषणत्वमितिमूला
भिप्रायंस्फुटयितुंयद्रूपावच्छिन्नविषयिताकत्वेनेत्यर्थोगदाधरैःकृतः॥ यद्विषयकत्वेनेत्यत्रयत्पदार्थतावच्छेदकस्यवह्न्यभावा
देरुपलक्षणत्वंविहायविशेषणत्वविवक्षायाःप्रयोजनंदर्शयति॥ यद्विषयकत्वेनेत्यत्रतृतीयार्थइति॥ केचित्तुयादृ
शविशिष्टविषयकत्वेनेतिदीधितिवाक्याद्विशिष्टस्याधेयतयाविषयितायामन्वयेविशेषणस्यधर्मिपारतंत्र्येणावच्छिन्नत्वसंबंधेनान्व
येचयद्रूपावच्छिन्नयन्निष्ठविषयताकत्वंलभ्यतेतत्रचलक्षणेयन्निष्ठत्वांशनिवेशोव्यर्थइत्यतस्तदंशपरित्यागेनविवक्षिता
र्थमाहयद्रूपावच्छिन्नविषयताकत्वेनेति॥ ननुतर्हियन्निष्ठत्वस्यैवसाक्षाल्लाभेतन्निवेशएवोचितोयद्रूपावच्छिन्नत्व
स्यैवपरित्यागोस्त्वतस्तन्निवेशस्यप्रयोजनंदर्शयतियद्विषयकत्वेनेत्यत्रतृतीयार्थइति॥ तथाचयन्निष्ठत्वांशःप्र
योजनाभावान्ननिवेश्यइतिभावइत्याहुः॥ अथैवमपिप्रमेयत्वाभाववत्त्वादिनावह्न्यभावावगाहिप्रमेयवानभाववान्वा
ह्रदइतिज्ञानीयविषयितायाव्यावृत्तिर्नसंभवतितादृशविषयितायाअपिवह्न्यभाववत्त्वाद्युपलक्षितवह्न्यभावाद्यवच्छिन्न

निरूपकताकत्वानपायात्॥ विशेषणतावच्छेदकस्यवह्न्यभावत्वादेर्विशेषणत्वविवक्षयायादृशविशिष्टविषयकत्वेनेत्य
स्ययद्रूपविशिष्टावच्छिन्ननिरूपकताकविषयित्वेनेत्यर्थस्वीकारेनिर्विशेषणकपदार्थघटितदोषासंग्रहइतिचेन्न॥
यादृशविशिष्टेनविशेषिताविषयिताऽनुमितिप्रतिबंधकतानतिरिक्तवृत्तिस्तादृशविशिष्टत्वंदोषत्वंतत्रविशिष्टविशेषि
तत्वस्यविशेषणविशेषणतावच्छेदकविशेषितत्वगर्भस्यैवोपादेयत्वात्॥ तथाचवह्न्यभावविशिष्टह्रदविषयितेत्यत्र
विषयितांशेकेवलनिरूपितत्वसंबंधेनवह्न्यभाववद्ध्रदस्यसमवायसंबंधावच्छिन्नस्वनिष्ठावच्छेदकताकनिरूपकता
कत्वसंबंधेनवह्न्यभावधर्मितावच्छेदकतापन्नस्यह्रदत्वस्यस्वरूपसंबंधावच्छिन्नस्वनिष्ठावच्छेदकताकनिरूपकताक
त्वसंबंधेनह्रदत्वावच्छिन्नविशेषणतापन्नवह्न्यभावस्यस्वरूपसंबंधावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपकावच्छेदकता
कनिरूपकताकत्वसंबंधेनवह्निविशेष्यतावच्छेदकतापन्नस्याभावत्वस्यप्रतियोगितासंबंधावच्छिन्नस्वनिष्ठावच्छेदक
ताघटितपरंपरासंबंधेनाभावत्वावच्छिन्नविशेषणतापन्नस्यवह्नेः समवायसंबंधावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपि २८

तत्प्रतियोगितासंबंधावच्छिन्नावच्छेदकताघटितपरंपरासंबंधेन वन्हित्वस्य विशेषणत्वं पर्यवसितं ॥ विशिष्टवैशिष्ट्यबोधे सर्वत्रैव द
शाभाननियमस्य विशिष्टवैशिष्ट्यस्य विशेषणादिवैशिष्ट्यघटितत्वांगीकारकर्तृसंमतत्वात् ॥ ईदृशीचवन्ह्यभाववद्ध्रदरूपविशिष्टविशेषित
विषयिता ह्रदो वन्ह्यभाववानित्याकारकज्ञानीयैव न तु ह्रद इति अभाववान् वन्ह्यभाववानिति वा यज्ज्ञानं तदीया नाप्येकत्र द्वयमिति
रीत्या वन्ह्यभावह्रदत्वोभयप्रकारकं वन्ह्यभावं धर्मितावच्छेदकीकृत्य ह्रदत्वप्रकारकं वा यज्ज्ञानं तदीया॥ दर्शित विशिष्टवैशिष्ट्यशरीरे वि
शेषणधर्मितावच्छेदकभावापन्नयोरेव वन्ह्यभावह्रदत्वयोर्घटकत्वान्न तु स्वतंत्रयोः ॥ कथमन्यथा एकत्र द्वयमिति रीत्या वन्ह्यभाव
ह्रदत्वोभयावगाहिज्ञानादिविषयितायां वन्ह्यभाववद्ध्रदरूपविशिष्टवैशिष्ट्यबुद्धेरप्रमात्वं निर्वहेत् ॥ ननु विशेषणधर्मितावच्छेद
कभावापन्नयोरेव तयोर्घटकत्वमित्यस्य कोऽर्थः ॥ न विशेषणधर्मितावच्छेदकभावो विशिष्टवैशिष्ट्यशरीरे ऽतर्भवतीति शक्यते
वक्तुं ॥ विशेषणधर्मितावच्छेदकभावस्य विशिष्टवैशिष्ट्यावगाहिज्ञानीयविषयताविशेषरूपतया तज्ज्ञानविषयान्तर्भावासं
भवात् ॥ परंतु वन्ह्यभाववद्ध्रदविषयितेत्याकारकविशिष्टवैशिष्ट्यज्ञाने विषयितांशे या धर्मिपारतंत्र्येण वन्ह्यभावह्रदत्वयोः

प्रकारता साविशेषणधर्मितावच्छेदकभावापन्नयोरेवतयोस्तादृशप्रकारतायाविशेषणधर्मितावच्छेदकभावावच्छिन्नत्वस्यैकत्र
द्वयमित्यादिज्ञानादितोवैलक्षण्यनिर्वाहान्यथानुपपत्त्यास्वीकारात्॥ नच दर्शितविशिष्टवैशिष्ट्यज्ञानाविषयस्यविशेषणधर्मि
तावच्छेदकभावस्यविषयतारूपप्रकारतायांविषयतानात्मकमवच्छेदकत्वंनसंभवतिप्रकारांशेविशेषणीभूयभासमानस्यैवप्रका
रतावच्छेदकत्वानुभवादिति वाच्यं ॥ अन्यथानुपपत्तेः सर्वतोबलीयस्त्वाज्ज्ञानांतरवैलक्षण्यानुपपत्त्याऽविषयस्यापिविशेषण
धर्मितावच्छेदकभावस्यप्रकारतावच्छेदकत्वोपगमादत एव रक्तदंडवान्पुरुषइतिज्ञानीयरक्तत्वप्रकारतानिरूपितविशेष्यतायाः
पुरुषनिष्ठविशेष्यतानिरूपितप्रकारतायाश्चावच्छेद्यावच्छेदकभावस्तादृशज्ञानस्यरक्तोदंडः दंडवान्पुरुषइतिसमुहालंबनवैलक्षण्या
यस्वीकृतोग्रंथकृद्भिरितिचेदिहापिप्रकारांशेविशेषणीभूयाभासमानस्यापिविशेषणधर्मितावच्छेदकभावस्यवह्न्यभावत्व
रूपप्रकारनिष्ठायांविषयितासंबंधितायामवच्छेदकत्वमस्तुपूर्वोपदर्शिताप्रमात्वानुपपत्तेर्जागरूकत्वात्॥ अनयैव चसर
ण्याघटपटौनस्तइतिप्रतीतिसिद्धप्रतियोगितायांघटत्वस्यप्रतियोगिविशेषणतापन्नस्यैवावच्छेदकत्वंघटत्वेनघटपटौनस्तइति

प्रतीतिसिद्धप्रातियोगितायां तु स्वातंत्र्येणापीति भेदइतिव्यधिकरणधर्मावच्छिन्नाभावग्रंथीयगदाधराणामुक्तिः संगमनीया ।। प्रकार
निष्ठसंबंधितावैचित्र्यंहि प्रकारतावैचित्र्यमेव नियामकमिति प्रकारतायायेनरूपेणयेनसंबंधेनावच्छेदः संबंधितायाअपिताभ्यामव
च्छेदइतिस्थितेक्वचित्प्रकारतायास्तटस्थेनविशेषणधर्मितावच्छेदकभावेनावच्छेदेतादृशप्रकारतानियम्यसंबंधितायाअपितटस्थे
नविशेषणधर्मितावच्छेदकभावेनावच्छेदोयुक्तएव ।। किंच विशेषणधर्मितावच्छेदकभावस्यसंबंधितावच्छेदकत्वमुपगम्यैवसंबं
धितावैचित्र्यमुपपादनीयमित्यत्रनाग्रहः ।। किंतु पूर्वोक्तप्रमात्वान्यथानुपपत्याकेनापिप्रकारेणसंबंधितावैचित्र्यमुपपाद्यमित्य
त्रैव ।। एवंच संबंधितावैचित्र्यं विशेषणधर्मितावच्छेदकभावावच्छिन्नमन्यादृशंवास्तूभयथापिवह्न्यभाववद्ध्रदरूपविशिष्टवैशिष्ट्य
शरीरेतस्यघटकत्वादेकत्रद्वयमितिरीत्यावह्न्यभावह्रदत्वोभयप्रकारकज्ञानीयविषयिताव्याप्तिर्निष्प्रत्यूहैव ।। एतेनाथात्रयद्रू
पपदेनकिंधर्तव्यं नतावद्वह्न्यभावह्रदत्वोभयादिकं ।। एकत्रद्वयमितिरीत्यावह्न्यभावह्रदत्वोभयप्रकारकज्ञानस्यवह्न्यभावविशि
ष्टेह्रदत्वावगाहिज्ञानस्यचतदुभयावच्छिन्नविषयताकतयातस्यचप्रकृतानुमित्यप्रतिबंधकतयाबाधाद्यसंग्रहप्रसंगात् ।।

नापि सामानाधिकरण्यसंबंधेन ह्रदत्वविशिष्टवह्न्यभावादिकं ह्रदत्वविशिष्टवह्न्यभावाद्यवगाहने उद्देश्यतावच्छेदकीभूतधर्मस्य परतंत्र
ह्रदत्वादेः सामानाधिकरण्यसंबंधेन विधेयीभूतवह्न्यभावादौ विशेषणतायाः प्रामाणिकत्वे प्युक्तसंबंधेन ह्रदत्वादिविशिष्टवह्न्यभाववानिति
निर्धर्मितावच्छेदककज्ञानस्य तादृशरूपावच्छिन्नविषयताकस्य प्रकृतानुमित्यप्रतिबंधकतया उक्तदोषस्य दुर्वारत्वात्॥ नापि वह्न्यभावध
र्मितावच्छेदकतापन्नह्रदत्वं तादृशह्रदत्वस्य शुद्धह्रदत्वानतिरिक्ततया ह्रद इति ज्ञानाव्यावृत्तेः॥ नच यद्रूपावच्छिन्नप्रकारतानिरू
पितधर्मितावच्छेदकत्वावच्छिन्नयद्रूपनिष्ठनिरूपकताकविषयिता अनुमितिप्रतिबंधकतावच्छेदिका तद्रूपावच्छिन्नवत्तद्रूपावच्छि
न्नो दोष इति विवक्षणान्न दोष इति वाच्यं॥ घटः पृथिवीभिन्नो मेयत्वादित्यादौ स्वरूपतः पृथिवीत्वविशिष्टघटादावव्याप्तिप्रसंगा
त्॥ यन्निष्ठप्रकारतानिरूपितधर्मितावच्छेदकत्वावच्छिन्नयद्रूपनिष्ठनिरूपकताकविषयिकताऽनुमितिविरोधितावच्छेदिके
त्युक्तौ दृष्टिमान्न हेतुरिति ज्ञानस्यापि तादृशविषयिताशालितयाऽनुमित्यविरोधितया च व्यभिचारेऽव्याप्तेः॥ एवं प्रथमयद्रूपपदे
न वह्न्यभावत्वोभयपरिग्रहे ह्रदोऽभाववत्त्वविशिष्टवह्नीयवानिति ज्ञानव्यावृत्तिर्दुर्वारा॥ किंच नीलत्वधर्मितावच्छेदकतापन्नेप ३०

र्वतत्वविशिष्टेवह्न्यभावसाधनेवह्निमन्नीलपर्वतादिरूपबाधाव्याप्तिः ॥ तत्रद्वितीययद्रूपपदेननीलत्वपर्वतत्वोभयपरिग्रहेपिपर्व
तत्वधर्मितावच्छेदकतापन्ननीलत्वविशिष्टेवह्न्यवगाहिज्ञानाव्यावृत्तेः ॥ नीलत्वधर्मितावच्छेदकतापन्नपर्वतत्वपरिग्रहेपिविशि
ष्टशुद्धयोरैक्येनोक्तदोषोदुर्वारः ॥ केवलपर्वतत्वविशिष्टेवह्न्यवगाहिज्ञानाव्यावृत्तेश्च ॥ यद्रूपनिष्ठप्रकारतानिरूपितधर्मितावच्छे
दकत्वावच्छिन्नाताद‍ृशधर्मितावच्छेदकतावच्छिन्नयद्रूपनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकत्वावच्छिन्नाचयायद्रूपनिष्ठनि
रूपकताताद‍ृशनिरूपकताकविषयिताप्रकृतानुमितिविरोधितावच्छेदिकेत्यादिरीत्याविवक्षणेपिपर्वतोवह्न्यभाववानित्यादि
स्थलीयवह्निमत्पर्वतादिरूपबाधासंग्रहप्रसंगस्तत्रधर्मितावच्छेदकद्वयाभावात् ॥ नचतत्राभेदेनपर्वतवान्पर्वतोवह्निमा
नितिज्ञानमादायलक्षणसमन्वयः पर्वतत्वधर्मितावच्छेदकतापन्नपर्वतत्वादेरेववह्निधर्मितावच्छेदकत्वादितिवाच्यं ॥ ताद‍ृ
शज्ञानस्यवह्निमत्पर्वतत्वावच्छिन्नविषयकत्वाव्यापकपर्वतत्वधर्मितावच्छेदकतापन्नपर्वतत्वावच्छिन्नविषयिताशून्यत्वा
भावात् ॥ जातिधर्मितावच्छेदकतापन्नजात्यवच्छिन्नविषयितायाःजातिमद्द्रव्यत्वावच्छिन्नविषयकत्वाव्यापकत्वोपपादन

स्यजातिमान्जातिमानितिज्ञानवारणानुरोधेनावश्यकत्वात् ॥ एवंधर्मितावच्छेदकाभिन्नद्वौदूषणमुन्नेयं ॥ यत्तुपक्षसाध्यादि
भेदेनलक्षणभेदाद्यथापक्षतावच्छेदकाभिन्नद्धिस्तत्समसंख्याकधर्मितावच्छेदकंनिवेश्यलक्षणंपरिष्करणीयमितितदसत् ॥ ह्रदो
वन्हिमान्जलवदन्यशैवालवद्ध्रदादित्यादौएकधर्मितावच्छेदकनिवेशेजलवच्छैवालवद्ध्रदरूपसाधनाप्रसिद्धावुक्तदिशाऽव्याप्तिः
धर्मितावच्छेदकद्वयोपादानेवन्ह्यभाववद्ध्रदरूपबाधासंग्रहः ॥ एवंयद्रूपावच्छिन्नप्रकारतेत्यत्रापियद्रूपपदेनकिंधर्तव्यमिति
विकल्प्यदूषणमुन्नेयं ॥ अत्रकेचित्प्रकृतानुमितौयद्धर्मावच्छिन्नेयद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वंनिविष्टंतद्धर्मावच्छि
न्नाभावनिष्ठप्रकारतातद्धर्मावच्छिन्नाभावव्याप्यत्वावच्छिन्नप्रकारताएतदन्यतरनिरूपिततद्धर्मावच्छिन्नविशेष्यताभिन्ना
यायातादृशान्यतरप्रकारतानिरूपितविशेष्यतातत्तन्निरूपकत्वाभावकूटवत्वमपिज्ञानेविशेषणंतेनपूर्वोक्ताप्रतिबंध
कज्ञाननिरासः ॥ तादृशप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यतानिरूपकत्वस्यज्ञानविशेषणत्वेह्रदत्वविशिष्टेऽभा
वत्वमात्रप्रकारेणवन्ह्यभावमेकत्रद्वयमितिरीत्याह्रदत्ववन्ह्यभावोभयंचावगाहमानस्यसमूहालंबनस्यवारणमशक्यमतो ३१

भेदद्वयगर्भता॥ नचनिरुक्तज्ञानवारणायतद्धर्मावच्छिन्नाभावत्वावच्छिन्नप्रकारतैवनिवेशनीयेति वाच्यं ॥ घटोद्रव्यभिन्नोमे
यत्वादित्यादौस्वरूपतोद्रव्यत्वघटितदोषज्ञानासंग्रहात्॥ नचतद्धर्मावच्छिन्नाभावादिनिष्ठप्रकारतानिरूपिततद्धर्मानवच्छिन्नवि
शेष्यतानिरूपकत्वमेवलाघवान्निवेशनीयमितिवाच्यं॥ धर्मितावच्छेदकीयप्रकारताधर्मितावच्छेदकतयोरभेदमतेएकत्रद्वयमिति
ह्रदत्ववह्न्यभाववविशिष्टह्रदत्वावगाहिनः स्वभिन्नेत्याद्यव्यापकविषयिताशून्यज्ञानस्यावारणात् यथोक्तविशेषणेतुभिन्नांतेनतन्म
तेतादृशप्रकारतानिरूपकतावच्छेदकीभूतंयत्तद्धर्मावच्छिन्नविशेष्यतात्वंतदवच्छिन्ननिरूपकताकान्यत्वविवक्षणादुक्तज्ञानव्यावृत्तिः॥
भेदानुयोगिविशेष्यतायांनिरूपितत्वांतानुपादानेह्रदोवह्न्यभाववानितिज्ञानासंग्रहः॥ धर्मितावच्छेदकतायाःप्रकारतान्यत्वमते
तज्ज्ञानीयह्रदत्वनिष्ठप्रकारतानिरूपितविशेष्यतायास्तादृशप्रकारतानिरूपितविशेष्यताभिन्नायास्तत्रसत्वात्॥ भेदानुयो
गिविशेष्यतायांतादृशप्रकारतानिरूपितविशेष्यतानवच्छेदकत्वमपिदेयंतेनह्रदोजात्यभाववानित्यादौह्रदोजातिमानिति
ज्ञानेउक्तविशेषणाक्रांतह्रदत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वसत्वेपिनतदसंग्रहः॥ नचैवंभेदानुयोगिवि

शेष्यतायामुक्तनिरूपितत्वांतोपादानप्रयोजनासंभवः धर्मितावच्छेदकप्रकारतानिरूपितविशेष्यतायास्तादृशप्रकारतानिरूपितविशेष्य
तावच्छेदकत्वेनैवन्हदोषत्व्यभाववानितिज्ञानसंग्रहादितिशंक्यं ॥ तदसंभवेपिसंयोगः संयोगाभाववानित्यादौ निरुक्तविशेष्यत्वानिरू
पकत्वस्यत्वतंत्रसंयोगइतिज्ञानेऽसत्वेनयद्रूपावच्छिन्नविषयितात्वमित्याद्यव्यापकविषयिताशून्यंसंयोगः संयोगवानितिज्ञानमादा
यसंयोगत्वावच्छिन्नेऽतिव्याप्तिवारणायैवभेदानुयोगिविशेष्यतायांनिरूपितांतोपादानात् ॥ तथासतिसंयोगत्वावच्छिन्नविषयक
त्वस्यतादृशविशेष्यताशून्यसंयोगइत्यप्रतिबंधकज्ञानसाधारण्येनतदवच्छिन्नेऽतिप्रसंगानवकाशात् ॥ यद्विचसंयोगःसंयोगवा
नितिज्ञानेसंयोगत्वावच्छिन्नविषयकत्वाव्यापिकायासमवायावच्छिन्नविषयतानिरूपितसंयोगत्वावच्छिन्नविषयतानिरू
पितसंयोगत्वावच्छिन्नविषयतायाः समवायावच्छिन्नविषयताभिन्नायाः सत्वेननवक्ष्यमाणस्वभिन्नयद्रूपावच्छिन्नेत्याद्यव्यापक
विषयिताशून्यत्वमितिविभाव्यतेतदापिविषयत्वाभावोविषयत्वाभाववानित्यादौस्वतंत्रविषयत्वाभावइतिज्ञानेनिरुक्तविशेष्यत्वा
निरूपकत्वस्यासत्वेनस्वभिन्नेत्याद्यव्यापकविषयिताशून्यंविषयत्वाभावोविषयत्ववानितिज्ञानमादायविषयत्वाभावत्वावच्छिन्ने ३२

तिव्याप्तिवारणायभेदानुयोगिविशेष्यतायांनिरूपितांतोपादानमावश्यकंतत्रप्रकारतायांप्रकृतानुमितौयद्धर्मावच्छिन्नेयेनसंबं
धेनयद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वंनिविष्टं.तेनसंबंधेनतद्धर्मावच्छिन्नवत्ताग्रहविरोधितानियामकसंबंधावच्छिन्नत्वादिविशेष
णात्स्वतंत्रविषयत्वाभावइतिज्ञानीयविशेष्यतायांतादृशविषयत्वनिष्ठप्रकारतानिरूपितत्वसत्वेनतद्विशेषणोपादानेपिन
तत्रातिव्याप्तिवारणमितिशंकानवकाशः॥ भेदानुयोगिविशेष्यतायांमुख्यत्वमपिदेयं **तेन** वह्न्यभाववत्समानकालीनह्र
दोवन्हिमानित्यादौविशिष्टपक्षोवह्न्यभाववानितिदोषज्ञानेतादृशविशेष्यताभिन्नवह्न्यभावनिष्ठप्रकारतानिरूपितकाल
विशेषणतापन्नवह्न्यभाववन्निष्ठविशेष्यतासत्वेपिनतदसंग्रहः॥ **अत एव** वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदविषय
कज्ञानेतादृशविशेष्यताभिन्नवह्न्यभावनिष्ठप्रकारतानिरूपितवृत्तित्वविशेषणतापन्नजलादिमन्निष्ठविशेष्यतासत्वेपि
तस्याःमुख्यत्वाभावेननविशिष्टद्वयाघटितत्वनिवेशवैयर्थ्यं॥ **नचैवं**निवेशोऽप्येकत्रद्वयमितिरीत्यावह्न्यभाववज्जलादि
मद्वृत्तिजलह्रदत्वोभयावगाहिज्ञानस्यापिसंग्रहात्तत्रचानुमितिप्रतिबंधकत्वविरहेणविशिष्टद्वयाघटितत्ववैयर्थ्यंदुर्वा

रमेवेतिवाच्यं ॥ ह्रदोवन्हिमान्जलाभाववद्ध्रदादित्यादौपक्षतावच्छेदकावच्छेदेनसाध्यसिद्धेरुद्देश्यत्वेउक्तज्ञानविषयविशिष्टेऽतिव्या
प्तिवारणायतदावश्यकत्वात् ॥ ह्रदत्वसामानाधिकरण्येनजलाभावस्यहेतुतावच्छेदकघटकत्वान्नविशिष्टांतराघटितत्वेनतद्वारणं।
तद्धर्मावच्छिन्नाभावतद्व्याप्योभयनिवेशनंचबाधसत्प्रतिपक्षयोःसंग्रहाय ॥ घटोनद्रव्यमित्यादौघटत्वविशिष्टेघटत्वेनद्रव्यत्वावगा
हिज्ञानवारणंतुयद्रूपावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकंयद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपक
ताकत्वविशिष्टयद्रूपावच्छिन्नविषयितात्वंतद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपकताकत्वविशिष्टतद्रूपावच्छिन्नविषयि
ताशून्यत्वरूपाव्यापकविषयिताशून्यत्वनिवेशेनसुकरंतद्धर्मावच्छिन्नाभावप्रकारतास्थानेतद्धर्मावच्छिन्नाभावत्वावच्छिन्नप्रका
रतानिवेशेनतद्वारणंतुनशक्यंउभयत्रतथाविवक्षणेउक्तज्ञानाव्यावृत्तेः एकत्रद्वयमितिरीत्याघटत्वद्रव्यत्वोभयावगाहिज्ञाना
व्यावृत्तेश्च ॥ प्रथमतएवतथाविवक्षणेघटोद्रव्यमितिप्रतिबंधकज्ञानासंग्रहः घटोद्रव्यभेदाभाववानितिज्ञानंचनस्वरूपतोद्रव्य
त्वविशिष्टघटत्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यमितिध्येयं ॥ नन्वेवमप्यसाधारण्याव्याप्तिर्दुर्वाराएकत्रद्वयमि

तिरीत्याहेतुतावच्छेदकसाध्यव्यापकीभूताभावप्रतियोगित्वेनदुभयावगाहिज्ञानस्योक्तविशेषणेनावारणादितिचेन्न ॥ प्रकृतानु
मितौयद्धर्मावच्छिन्नांशेयद्धर्मावच्छिन्नावगाहित्वंनिविष्टंतद्धर्मावच्छिन्नाभावादिनिष्ठप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यता
भिन्नायाहेतुतावच्छेदकानवच्छिन्नहेतुनिष्ठमुख्यविशेष्यतातन्निरूपितसाध्यव्यापकीभूताभावप्रतियोगित्वप्रकारत्वानिरूपकत्व
स्यापिज्ञानविशेषणत्वात् ॥ वन्हिव्यापकीभूताभावप्रतियोगिसमानकालीनह्रदोवन्हिमानित्यादौवह्न्यभावविशिष्टतादृशवि
शिष्टपक्षविषयकबाधज्ञानसंग्रहायवन्हिव्यापकीभूताभावप्रतियोगीवन्हिमानित्यादौवह्न्यभावविशिष्टतादृशविशिष्टपक्ष
रूपबाधज्ञानसंग्रहायचहेतुतावच्छेदकानवच्छिन्नविशेष्यतायांमुख्यत्वभिन्नांतयोर्निवेशः ॥ धर्मितावच्छेदकत्वप्रकारत्वयो
र्भेदेतुतादृशविशेष्यतानवच्छेदकत्वमपिहेतुतावच्छेदकानवच्छिन्नविशेष्यतायांदेयं ॥ नन्वेवमपिह्रदोवन्हिमान्धूमादित्या
दौह्रदवृत्तिवह्न्यभावेव्याप्तिः ॥ एकत्रद्वयमितिरीत्याह्रदवह्न्यभावतोभयावगाहिज्ञानस्योक्तविशेषणेनावारणादितिचेन्न ॥ प्र
कृतानुमितौयद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वंनिविष्टंआधेयतासंबंधावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नाभाववत्वावच्छि

न्नविशेष्यतान्यायान्तद्धर्मावच्छिन्नाभावत्वादिप्रकारतानिरूपिता आधेयतासंबंधावच्छिन्नप्रकारतानिरूपिताचमुख्यविशे
ष्यतातदनिरूपकत्वस्यापिज्ञानविशेषणत्वात् ।। वह्न्यभावोवन्हिमानित्यादौवह्न्यभावोवह्न्यभाववानितिज्ञानीयवह्न्यभावावच्छि
न्नविशेष्यतायाआधेयतासंबंधावच्छिन्नप्रकारतानिरूपितत्वेनतज्ज्ञानस्यह्रदवह्न्यभावत्वोभयवत्समानकालीनजलंवन्हि
मदित्यादिस्थलेवह्न्यभावविशिष्टनिरुक्तपक्षरूपबाधज्ञानस्यचसंग्रहाय द्वितीयविशेष्यतायामाधेयतासंबंधावच्छिन्नप्रकार
तानिरूपितत्वमुख्यत्वयोर्निवेशः।। गगनवानित्यादावद्वृत्तिगगनसंग्रहायप्रकृतानुमितौयद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वंनिधि
ष्टंअवृत्तित्वनिष्ठप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यतान्यायाअवृत्तित्वनिष्ठप्रकारतानिरूपितविशेष्यतातदनिरूपकत्वमपि
ज्ञानेविशेषणंदेयं ।। पक्षनिष्ठभेदप्रतियोगिसाध्यवदादेरपिसंग्रहउक्तरीत्यावसेयः।। यत्तुह्रदोवन्हिमान्धूमादित्यादौप्राचीनमत
सिद्धह्रदावृत्तिवन्हिरूपबाधेउक्तरीत्याऽव्याप्तिवारणायप्रकृतानुमितौयद्धर्मावच्छिन्नेयद्धर्मावच्छिन्नवैशिष्ट्यावगाहितानि-
ष्ठातद्धर्मवदवृत्तित्वनिष्ठप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यतान्यायायातद्धर्मवदवृत्तित्वनिष्ठप्रकारतानिरूपितविशे ३४

ष्यतातत्तद्निरूपकत्वमपिज्ञानेविशेषणंदेयमितितदसत् ॥ ह्रदोवन्हिमानितिज्ञानंप्रतिवन्हित्वावच्छेदेनह्रदावृत्तित्वनिश्चयस्यै
वप्रतिबंधकतयावन्हित्वव्यापकविशेषणतासंबंधेनह्रदावृत्तित्वविशिष्टस्यैवदोषतायावक्तव्यत्वेनएकत्रद्वयमितिरीत्यातदु
भयावगाहिज्ञानस्यतादृशसंबंधानवगाहितयातत्संग्रहाप्रसक्तेः तद्धर्मविशिष्टेइतरवैशिष्ट्यावगाहिबुद्धेरेवतादृशसंबंधा
वगाहित्वात् यदिचावच्छेदकावच्छेदेनविशेषणावगाहिज्ञानेधर्मितावच्छेदकव्यापकतायाःसंसर्गविशेषणतयाभानंनोपेय
तेकिंतुतद्धर्माश्रययावद्व्यक्तिभानमात्रंतदास्तुतद्विशेषणप्रवेशइत्याहुस्तदसत् ॥ एवमपिह्रदोवन्हिमानित्यादावभा
वत्वेनवन्ह्यभावावगाह्यभाववान्ह्रदइतिज्ञानाव्यावृत्तेः कथंचित्तद्व्यावृत्तावपिघटःप्रमेयभिन्नोऽभिधेयत्वादित्यादौप्रमेय-
त्वविशिष्टघटादावव्याप्तिःप्रमेयभेदस्याप्रसिध्याप्रमेयत्वस्यतदवच्छिन्नाभावरूपत्वासंभवेनैकत्रद्वयमितिरीत्याप्रमेयत्व
घटत्वोभयविषयकसमूहालंबनस्योक्तविशेषणेनावारणात् ॥ नचयद्धर्मावच्छिन्नविशेष्यतानिरूपितानुयोगितासंबं-

टिप्पणं ॥ वन्हित्वविशिष्टवन्हिविशिष्टंयदभावत्वविशिष्टंह्रदत्वंचेत्युभयस्ययद्रूपशब्दार्थत्वोक्त्यातज्ज्ञानवारकाव्यापकावगाहिताशून्यत्वनिवे

शेनका

धावच्छिन्नयद्धर्मविशिष्टावच्छिन्नप्रकारतानिरूपितभेदत्वावच्छिन्नप्रकारताशालित्वंप्रकृतानुमितिवृत्तितद्धर्मावच्छिन्न
प्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यतान्यतद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वमपिज्ञानेविशेषणं
देयं तथाचनोक्ताव्याप्तिः॥ एवंघटःप्रमेयत्वाभाववानित्यादिस्थलीयबाधाव्याप्तिवारणाययद्धर्मविशिष्टावच्छिन्नप्र-
कारतानिरूपितभेदत्वावच्छिन्नप्रकारतास्थलेयद्धर्मावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतांनिवेश्योक्तविशे
षणांतरमपिदेयमितिवाच्यं॥ तथापिशैवालवद्ध्रदोवन्हिमानित्यादौन्हदत्वविशिष्टेएकत्रद्वयमितिरीत्याशैवालवत्त्वभा
वोभयावगाह्यप्रतिबंधकज्ञानावारणात्॥ नचयद्धर्मपर्याप्तावच्छेदकताकविशेष्यतानिरूपितयद्धर्मावच्छिन्नप्रकारता
शालित्वंप्रकृतानुमितौवर्ततेतद्धर्मावच्छिन्नाभावादिनिष्ठप्रकारतानिरूपिततद्धर्मपर्याप्तावच्छेदकताकविशेष्यताभिन्न
त्वंविवक्षणीयमतोनोक्तदोषइतिवाच्यं॥ कांचनमयोह्रदोवन्हिमान्धूमादौह्रदत्वावच्छेदेनयत्वभाववत्वरूपबाधाव्या
प्तेःप्रसंगात्॥ तत्रबाधबुद्धेर्विशिष्टह्रदत्वावच्छिन्नविशेष्यकत्वाभावात्॥ नचप्रकृतानुमितौयद्यद्धर्मावच्छिन्नांशेयद्यद्

र्मावच्छिन्नवैशिष्ट्यावगाहितानिविष्टातत्तद्धर्मावच्छिन्नाभावादिनिष्ठप्रकारतानिरूपिततत्तद्धर्मावच्छिन्नविशेष्यतान्यतत्तद्धर्मावच्छि
न्नाभावादिनिष्ठप्रकारतानिरूपितातत्तद्धर्मनिष्ठप्रकारतानिरूपिताचयायाविशेष्यताप्रत्येकंतत्तन्निरूपकत्वाभावकूटवत्त्वंनिवेशनी
यं ॥ एवंचोक्तज्ञानस्योक्तप्रकारतानिरूपितशैवालावच्छिन्नविशेष्यतान्योन्याभावादिप्रकारतानिरूपितायाशैवालनिष्ठप्रकारता
निरूपितविशेष्यतातन्निरूपकत्वान्नतदादायाव्याप्तिः ॥ नवाकांचनमयह्रदोवह्निमानित्यादौशुद्धह्रदत्वावच्छेदेनवह्न्यभाव
वद्ध्रदरूपबाधाव्याप्तिस्तज्ज्ञानस्यकांचनमयत्वावच्छिन्नोक्तविशेष्यतान्यकांचनमयत्वनिष्ठप्रकारतानिरूपितविशेष्यताशू
न्यत्वादितिवाच्यं ॥ एवमपियत्रकालिकसंबंधेनजलत्वंसमवायेनचजलंपक्षतावच्छेदकंतत्रजलत्ववान्जलवान्वह्निमानि
त्यादिस्थलेसंबंधव्यत्ययेनतदुभयधर्मावच्छिन्नविषयकनिश्चयस्याप्रतिबंधकस्योक्तविशेषणेनावारणात्तत्रत्यबाधाव्या
प्तिर्दुर्वारा ॥ नचयद्यद्धर्मावच्छिन्नांशेयद्यद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वंनिविष्टमित्यादिनायेनयेनसंबंधेनयद्यद्धर्मविशिष्टेय
द्यद्धर्मवैशिष्ट्यावगाहित्वंनिविष्टंतत्तद्धर्मावच्छिन्नाभावादिनिष्ठप्रकारतानिरूपिततत्तत्संबंधावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदक

ताकविशेष्यतान्येत्यादिकं विवक्षितमितिनैषदोषइति वाच्यं ॥ एवमपिकालिकेनसमवायेनचकांचनमयत्वपक्षतावच्छेदककवन्हिसाध्य
कस्थलीयबाधज्ञानासंग्रहवारणायकांचनमयन्हदोवन्हिमानित्यादिस्थलीयदोषज्ञानसंग्राहकेयेनयेनसंबधेनयद्यद्धर्मावच्छिन्नां
शेयद्यद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टमित्याद्युक्तविशेषणेतत्संबंधावच्छिन्नतद्रूपनिष्ठप्रकारतेति विवक्षणावश्यकत्वेनजलत्व-
वानूजलवानूवन्हिमानित्यादौकालिकसंबंधेनजलवज्जलंवन्ह्यभाववदित्यादिनिश्चयस्ययद्रूपपदेनोपादेयवन्ह्यभाववज्जलवज्ज
लत्वावच्छिन्नविषयताकस्योक्तविशेषणाक्रांतस्यानुमित्यप्रतिबंधकतयाऽव्याप्तेरवारणात् ॥ यत्संबंधावच्छिन्नयद्रूपनिष्ठाव
च्छेदकताकविषयतानिरूपितविषयतात्वंयद्रूपावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्यादिरीत्या
ऽव्यापकविषयिताशून्यत्वनिर्वचनेनसंबंधव्यत्ययेनपूर्वोक्तज्ञानवारणेत्वसंभवापत्तिः ॥ संबंधांतरेणवन्ह्यभाववद्धदत्वाव
च्छिन्नविषयताकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यस्वरूपावच्छिन्नवन्ह्यभावत्वावच्छिन्नविषयतानिरू
पितविषयतात्वसाधारण्यात् ॥ यद्रूपावच्छिन्नविषयकत्वसमानाधिकरणेत्यादौयत्संबंधावच्छिन्नयद्रूपनिष्ठावच्छेदकताक

विषयतानिरूपितविषयित्वरूपयद्रूपावच्छिन्नविषयकत्वविवक्षणेपियत्संबंधपदेनसमवायपरिग्रहे यद्रूपपदेनह्रदत्ववह्न्यभावोभयपरिग्रहेचतत्संबंधावच्छिन्नतदुभयनिष्ठावच्छेदकताकविषयताशालिज्ञानेस्वरूपसंबंधावच्छिन्नवह्न्यभावनिष्ठावच्छेदकताकविषयतानिरूपितविषयिताशून्यत्वसत्वेनप्रसिद्धबाधज्ञानेतादृशविषयित्वाभावासत्वेनाव्याप्तेर्दुर्वारत्वात् ॥ एवंयत्संबंधपदेनस्वरूपसंबंधपरिग्रहे दूषणमुन्नेयं ॥ परेतु एकत्रद्वयमितिरीत्याधर्मितावच्छेदकव्यत्ययेनसंबंधव्यत्ययेनचज्ञानान्यादायनिरुक्तसकलदोषवारणाययद्रूपावच्छिन्नविषयतानिरूपितविषयितायांप्रकृतानुमितिप्रतिबंधकतानिरूपितस्वरूपसंबंध रूपावच्छेदकत्वमेवविशेषणं देयं ॥ नन्वेवमव्यापकविषयिताशून्यत्वनिवेशानर्थक्यंवह्न्यभाववज्जातिमत्वावच्छिन्नविषयितायाःप्रकृतानुमितिप्रतिबंधकतानवच्छेदकत्वादेवजातिमान्वह्न्यभाववानित्यादिज्ञानमादायदोषानवकाशादिति वाच्यं ॥ कपालंद्रव्यसामान्याभाववदित्यादौजातिमदवच्छेदेनद्रव्यवत्तानिश्चयविशिष्टस्यकपालंजातिमदितिनिश्चयस्यानुमितिविरोधितयातदवच्छेदकजातिमद्विशिष्टकपालत्वावच्छिन्नविषयितामादायदोषवारणायैवाव्यापकविषयिताशून्यत्वावश्यकत्वात् ॥ अतएवनैकदेशातिव्याप्ति

रेवंचानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशनंपाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिवारकतयैवसार्थकं॥ नचैवंसतियद्रूपावच्छिन्नस्ययस्ययस्यतादृशविशिष्टघटकतेत्यादिविशेषणत्यागेबीजाभावप्रसंगः ह्रदोजात्यभाववानित्यादौजातिमज्जात्यवच्छिन्नविषयतायाः प्रकृतानुमितिप्रतिबंधकतावच्छेदकत्वाभावादेवजातिमान्जातिमानितिज्ञानव्यावृत्तेरितिवाच्यं ॥ बीजांतराभावेपिवक्ष्यमाणविशेषणापेक्षयागौरवस्यैवतथात्वसंभवादितिवदंतितदपिमंदं ॥ व्यभिचारघटितपदार्थांतरेऽतिव्याप्तिस्तद्विषयकत्वस्यापिप्रतिबंधकतानतिरिक्तवृत्तित्वादित्यग्रिमग्रंथविरोधात् ॥ व्यभिचारविशिष्टप्रमेयत्वविषयितायांस्वरूपसंबंधरूपप्रतिबंधकतावच्छेदकत्वविरहात् ॥ नच प्रमेयत्वंधूमवद्वन्हेरित्यादावाधेयतयाधूमाभाववद्वृत्तिवन्हिमान्धूमाभाववानितिनिश्चयविशिष्टस्याधेयतयाधूमाभाववद्वृत्तिवन्हिमत्प्रमेयत्वमितिज्ञानस्यापिप्रमेयत्वधर्मिकधूमानुमितिविरोधितयातादृशस्थलेधूमाभाववद्वृत्तिवन्हिरूपव्यभिचारविशिष्टप्रमेयत्वविषयितायाअप्यनुमितिप्रतिबंधकतावच्छेदकतयानाग्रिमग्रंथविरोधइतिवाच्यं ॥ तथापिविशिष्टदोषघटकतदेकदेशविषयितायांस्वरूपसंबंध

रूपावच्छेदकत्वसत्वेपिविशिष्टविषयितासामान्यस्यतादृशावच्छेदकत्वविवक्षयाऽतिप्रसंगवारणसंभवात्त
देवकथंनानिवेशितमितिग्रंथविरोधोदुष्परिहरः ॥ यद्रूपावच्छिन्नविषयतानिरूपितविषयितायांस्वरूपसंबंधरूपावच्छेद
कत्वविवक्षणेतादृशविषयितासामान्येस्वरूपसंबंधरूपावच्छेदकत्वावश्यकत्वादित्यादिपूर्वपक्षसमाधानतत्खंडनकोलाहलोनिरव
काशएव ॥ यद्यप्येवंसतिजातित्वादिनाह्रदत्वावगाहिज्ञानस्याप्युक्तरीत्यावह्न्यभाववद्ध्रदरूपविशिष्टविशेषितविषयिताक
त्वविरहेणैवासंग्रहादथेत्यादिनातादृशज्ञानस्यविशिष्टह्रदविषयकस्यानुमित्यप्रतिबंधकतयाऽसंभवमाशंक्यज्ञानेऽव्यापकविष
यिताशून्यत्वनिवेशपरग्रंथोऽसंगतएवेतिशंकासंभवति ॥ तथापितादृशग्रंथःप्रमादेनकेनचिल्लिखितइतिकल्पनान्नदोषःस्पष्टं
चैतत्प्रकृतपक्षकादौ ॥ अतएवशुद्धह्रदत्वादिनावह्न्यभावविशिष्टह्रदादिविषयकज्ञानेवह्न्यभावविशिष्टह्रदत्वा
वच्छिन्नविलक्षणविषयतानिरूपकत्वस्यासत्वेनेतिग्रंथःसंगच्छतेवैलक्षण्यस्यनिरुक्तरूपस्यैवविवक्षितत्वादितिदि
क् ॥ यत्संबंधावच्छिन्नेति ॥ अथधूमत्ववान्पर्वतोवह्निमान्धूमादित्यादौस्वरूपसंबंधावच्छिन्नधूमत्वाभावनिष्ठप्रकारताक

त्वेनधूमत्वाभाववान्पर्वतइतिज्ञानस्यानुमितिप्रतिबंधकतयास्वरूपसंबंधेनधूमत्वाभाववत्वस्यधूमेऽसत्वेननोक्तरूपस्यदुष्टता
व्यवहारनियामकत्वंसंभवति ॥ नन्चधूमत्ववान्पर्वतइतिज्ञानंप्रतिधूमत्वेसमवायावच्छिन्नपर्वतनिरूपिताधेयत्वाभाववत्ताज्ञा
नस्यप्रतिबंधकतयास्वरूपसंबंधेनतादृशाधेयत्वाभावमादायैवदर्शितस्थलेधूमेदुष्टत्वव्यवहारउपपादनीयइति वाच्यं ॥ ए
वमपिरूपत्ववान्पर्वतोवन्हिमान्रूपादित्यादावगतेः ॥ रूपेस्वरूपसंबंधेनरूपत्वाभाववत्वस्यपर्वतनिरूपितसमवायावच्छि
न्नाधेयत्वाभावस्यचासत्वादितिचेन्न ॥ योयत्रहेत्वाभासस्तद्व्याप्यःपक्षवृत्तिरितिज्ञानस्याप्यनुमितिप्रतिबंधकतयारूपत्वा
भावाद्व्याप्यःपर्वतादिवृत्तिरितिज्ञानविषयपर्वतादिवृत्तित्वमादायैवदुष्टत्वव्यवहारस्योपपादनीयत्वात् ॥ यद्यप्येवंवन्ह्य
भावव्याप्यःपर्वतवृत्तिरितिपक्षविशेषणकभ्रममादायाप्यतिव्याप्तिःसंभवति ॥ तथापितादृशबाधभ्रममादायांतिव्याप्तिर्न
संभवतीत्यणुरपिविशेषइतिन्यायेनविशेषसंभवायपक्षविशेष्यकेत्युक्तिरितिज्ञेयं ॥ पर्वतमहानसान्यतरत्वादिरू
पेति ॥ यत्पर्वतेवन्हिरस्तितत्पर्वतमहानसान्यतरत्वादिरूपेत्यर्थस्तेनसकलपर्वतेषुवन्ह्यसत्वेपिनक्षतिः ॥ नन्चपर्वतत्वमात्रस्य

पक्षतावच्छेदकत्वेप्रकृतहेतोरदुष्टत्वनिर्वाहायपक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धेरुद्देश्यतावाच्या एवंचानुमितिविरोधिनोबा
धनिश्चयस्यपक्षतावच्छेदकव्यापकाधिकरणतानिरूपिताधेयतासंबंधावगाहित्वनियमात्तेनसंबंधेनपर्वतस्यतत्पर्वतमहानसान्यतरत्वा
दौसत्वंदुर्घटमितिवाच्यं ॥ यत्पर्वतस्यहेतुशरीरेनिवेशस्तस्यैवविशिष्यपक्षत्वानुसरणात् ॥ सद्धेताविति ॥ अत्रसत्पदमिष्टापत्ति
शंकाव्युदासाय ॥ असद्धेतौप्रत्येकंसाध्याभावादौदोषव्यवहारविरहेपिहेतौदुष्टत्वव्यवहारस्येष्टत्वात् ॥ भ्रमपदंनिश्चयसामान्य
परमिति ॥ यद्यपिसाध्याभाववत्पक्षकदुष्टहेतावप्यनुमितिप्रतिबंधकोयःसाध्याभावत्वेनगगनाभाववत्ताभ्रमस्तद्विषयगगनाभाव
वत्वमादायदुष्टत्वव्यवहारोपपत्तौभ्रमपदस्यनिश्चयसामान्यपरत्वाभावेपिनक्षतिस्तथापिसर्वत्रदुष्टहेतौसाध्याभाववत्तानिश्च
यस्यनियमेनभ्रमत्वमित्यत्रप्रमाणाभावादसंगतिवारणायोक्तविवक्षाआवश्यकी ॥ यदिचपक्षविशेष्यकभ्रमविषयसाध्याभा
वादाविति पाठस्तदायथाश्रुतमेवसाधु ॥ आदिपदेनैवप्रमाविषयसाध्याभावसंग्रहसंभवात् ॥ नचतर्हितादृशज्ञानविषयइ
त्येववक्तुमुचितमितिभ्रमपदंव्यर्थमितिवाच्यं ॥ यत्पदस्ययादृशविशिष्टपरत्वेपिसद्धेतौबाधादिनिश्चयविषयीभूतविशिष्टमादा

यातिव्याप्त्यनिरासइतिशंकानिरासार्थंभ्रमत्वेनतदुपादानात् ॥ तथाच विशिष्टविषयकज्ञानस्यभ्रमत्वकथनेनविशिष्टाप्रसिद्धिज्ञा
पनाच्छंकानिरासः ॥ अयमेवातिप्रसंगोदुर्वारइति ॥ ननुस्वरूपसंबंधरूपावच्छेदकत्वनिवेशकल्पेप्रमेयत्वविशिष्टव्यभिचारवि
षयितायाअपिव्यभिचारविषयितात्वेनतादृशावच्छेदकत्वत्वेनतद्विशिष्टेवह्न्यभावोवह्निमानित्यादौवह्न्यभाववद्वह्न्यभाववद्वह्न्यभावे
चातिव्याप्तिवारकतयाविशिष्टांतराघटितत्वविशेषणस्यावश्यकतयानानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशकल्पेतादृशविशेषण
निरसनीयातिप्रसंगव्यवच्छेदकत्वमेवकारस्यसंभवतीतिचेन्न ॥ एवकारस्यदुर्वारपदोत्तरंयोजनीयत्वात्तथाचायमतिप्रसंगोदु
र्वारएवेत्यर्थइतिनदोषः ॥ तादृशातिप्रसंगवारणइति ॥ यद्यपिसाक्षात्प्रतिबंधकविशेषणंप्रतिबंधकतावच्छेदकंतद्वि
शेषणंतुप्रतिबंधकतावच्छेदकतावच्छेदकमितिमतेनिश्चयत्वानाहार्यत्ववह्न्यभावादिविषयकत्वघटितसमुदायस्यापिप्रतिबं
धकतावच्छेदकतापर्याप्त्यधिकरणतयानैतावताऽतिप्रसंगोवारयितुंशक्यतेऽसंभवश्चदुर्घटः ॥ विशिष्टविषयिताघटितस
मुदायस्यापितथात्वात् ॥ तथाप्यवच्छेदककोटिप्रविष्टंसर्वमपिविशेषणविशेष्यभावापन्नंप्रतिबंधकतावच्छेदकमितिम

तमाश्रित्य यद्रूपावच्छिन्नविषयकत्वसंज्ञायान्यत्वानाहार्यत्वा प्रामाण्यज्ञानानास्कंदितत्वघटितस्तोमत्वंप्रतिबंधकता वच्छेदकताप र्याप्त्यवच्छेदकमितिविवक्षयानवह्न्यभावादावतिप्रसंगः ॥ नवा संभवासंभवः ॥ वह्नित्वावच्छिन्नवह्निनिष्ठविषयतानिरूपिताभा वत्वावच्छिन्नाभावनिष्ठविषयतानिरूपितह्रदत्वावच्छिन्नह्रदनिष्ठविषयता निरूपितविषयितारूपवह्न्यभावविशिष्टह्रदादिरूप दोषविषयकत्वस्य प्रतिबंधकतावच्छेदककोट्यप्रविष्टनिष्ठत्वघटिततयातद्घटितनिरुक्तस्तोमत्वस्यप्रतिबंधकतावच्छेदकतापर्या प्त्यनवच्छेदकत्वात् ॥ तदेवोपपादयति वह्न्यभावत्वादिना घटादीति ॥ विषयत्वविशेषणतयावह्न्यादिनिष्ठत्वस्यावच्छेदक कोटावप्रवेशेहेतुस्तत्साधारण्येनेति ॥ अनाहार्याप्रामाण्यज्ञानानास्कंदितनिश्चयपरमिति ॥ अत्रचानाहार्यत्वमव्य वहितोत्तरक्षणावच्छिन्नसामानाधिकरण्यसंबंधेनेच्छावदन्यत्वं ॥ यादृशदोषविषयकनिश्चयसामान्यंस्वसमानाधिकरणेच्छाव्यवहितो त्तरवृत्तितादृशदोषस्यप्रामाणिकत्वेजन्यतासंबंधेनेच्छावदन्यत्वमेवतत् ॥ आहार्यज्ञानेइच्छायाहेतुत्वोपगमान्नतस्यतथात्वंसिद्धिका लीनानुमिताविच्छायानहेतुत्वंकिंतुसिद्धिप्रतिबंधकतायामुत्तेजकत्वमेव ॥ अप्रामाण्यज्ञानानास्कंदितत्वंच विषयत्वसामाना

धिकरण्यकालिकैतन्त्रितयसंबंधेनज्ञानविशिष्टान्यत्वं ॥ **नन्वैवं**सतिसर्वज्ञानंगुणभिन्नंमेयत्वादित्यादौगुणत्ववत्सर्वज्ञानत्वाव
च्छिन्नात्मकबाधादावव्याप्तिस्तत्रबाधादिज्ञानमात्रस्योक्तत्रितयसंबंधेनस्वात्मकज्ञानविशिष्टत्वात् ॥ संबंधकोटौस्वभिन्नत्वस्यापि
निवेशेप्रामाण्यग्रहात्मकाप्रामाण्यज्ञानास्कंदितदोषज्ञानाव्यावृत्तेरिति**वाच्यं** ॥ सर्वज्ञानत्वेनस्वभिन्नज्ञानमात्रावगाहितादृशबा
धनिश्चयमादायैवलक्षणसमन्वयसंभवात् ॥ अव्यापकविषयिताशून्यत्वविशेषणेनाप्रामाण्यग्रहात्मकनिरुक्तबाधग्रहव्यार
णसंभवात्स्वभिन्नत्वस्यसंबंधकोटौनिवेशेपिक्षतिविरहाच्च ॥ **केचित्तु**अप्रामाण्यंभ्रमत्वप्रमात्वाभावरूपमीश्वरज्ञानवृत्तिभिन्न
त्वेनानुगमय्यविषयत्वसामानाधिकरण्योभयसंबंधेनतादृशानुगताप्रामाण्यप्रकारकज्ञानविशिष्टान्यत्वमेवाप्रामाण्यज्ञानाना
स्कंदितत्वं ॥ **नन्वैवं**सर्वजन्यज्ञानमीश्वरज्ञानवृत्तीत्यादौसर्वत्वदीश्वरज्ञानवृत्तिभिन्नमितिधीविषयबाधादावव्याप्तिस्तादृशबा
धज्ञानस्योक्तोभयसंबंधेनस्वात्मकतादृशज्ञानविशिष्टत्वादितिवाच्यं ॥ सर्वजन्यज्ञानत्वेनस्वाविषयकबाधधीमादायैवलक्ष
णसमन्वयसंभवादितिवदंति ॥ **निश्चयत्वंच**प्रकारितांतरावच्छिन्नप्रकारिताशून्यत्वं ॥ सत्प्रतिपक्षग्रंथेसंशयीयप्रतियोगित ४०

द्भावप्रकारितयोरवच्छेद्यावच्छेदकभावस्वीकारात् ॥ नचैवमपि कोटिद्वयविशेष्यकसंशयव्यावृत्तिरशक्येति शंक्यं ॥ कोटि
द्वयप्रकारितयोरिवकोटिद्वय विशेष्यितयोरपितुल्यतयाऽवच्छेद्यावच्छेदकभावस्वीकाराद्विशेष्यितावच्छिन्नविशेष्यिताशून्य
त्वस्यापिनिवेशात् ॥ पक्षताग्रंथोक्तत्रितयसंबंधेनविषयिताविशिष्टविषयिताशून्यत्वंवानिश्चयत्वं ॥ तेनह्रदेवह्निर्नास्तिह्र
दोवह्निमानितिसंशयस्यसामान्याभावव्यवस्थापनादावुक्तत्वेपिनक्षतिः॥ वस्तुतस्तत्कोटितारव्यविलक्षणविषयिताशून्य
त्वमेवनिश्चयत्वं ॥ कोटितायांवैलक्षण्यंचाखंडोपाधिरूपमेव ॥ नव्यास्तुस्वावच्छेदकाभावप्रतियोग्यनुपहितत्वमेवाप्रामा
ण्यज्ञानाभावादिविशिष्टत्वं ॥ स्वंअनुमितिप्रतिबंधकता ॥ उपहितत्वंचैकक्षणावच्छिन्नैकालवृत्तित्वसंबंधेनतादृशसंबंधा
वच्छिन्नप्रतियोगिताकतादृशप्रतियोग्यभाववत्वमेवानुपहितत्वं ॥ नचैवंस्वरूपसंबंधरूपावच्छेदकत्वनिवेशेवक्ष्यमाणला
घवासंगतिरनाहार्यत्वस्यनिरुक्तरूपेणनिवेशेउभयमतेसाम्यादितिवाच्यं ॥ स्वरूपसंबंधरूपावच्छेदकत्वनिवेशेइच्छा
जन्यान्यत्वरूपमेवानाहार्यत्वंनिवेशयतेनतूक्तगुरुसंबंधघटितमित्यभिप्रायेणशंकासंगतेः ॥ नतुतच्छून्यावृत्तित्वमि

ति॥अस्मिन्पक्षेअभाववद्वृत्तित्वमभावश्चतृतीयार्थः॥ तत्रप्रथमेऽभावेऽनुयोगितासंबंधेनप्रतिबंधकत्वान्वयः॥ द्वितीयेतदभाववद्वृत्तित्वस्यान्वयस्तस्यप्रकृत्यर्थेऽन्वयः॥ प्रत्ययार्थप्राधान्यप्रथमांतार्थमुख्यविशेष्यकत्वयोरनुभवसिद्धत्वेतूक्तरीत्यालब्धेप्रतिबंधकत्वाभून्यावृत्तित्वरूपतृतीयार्थेप्रकृत्यर्थस्याधेयतयाऽन्वयः॥ प्रकृत्यर्थान्विततृतीयार्थस्यनिरूपकतासंबंधेनप्रतिबंधकतायांतस्यद्वेधान्वयस्यव्युत्पत्तिसिद्धत्वात्॥ स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तितापक्षेसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमभावश्चतृतीयार्थस्तत्रसामानाधिकरण्येप्रकृत्यर्थस्यनिरूपितत्वसंबंधेनान्वयःप्रकृत्यर्थान्वितसामानाधिकरण्यघटितोक्तप्रतियोगितावच्छेदकत्वस्यानुयोगितयाभावेतादृशाभावस्याश्रयतयाप्रतिबंधकतायामन्वयः॥ नचैवमनतिरिक्तवृत्तितायास्तृतीयार्थत्वाभावादसंगतिरितिवाच्यं॥ अवच्छेदकताया अनतिरिक्तवृत्तितारूपत्वकथनेऽवच्छेद्यतायाव्यापकत्वरूपत्वलाभेनतस्याएवतृतीयार्थत्वेतात्पर्यात्सामानाधिकरण्यांशस्यतृतीयाबोध्यत्वकल्पनेगौरवात्॥ यदिचानतिरिक्तवृत्तित्वस्यतृतीयार्थत्वेआग्रहस्तदासामानाधिकरण्यस्यापितृतीयार्थतांस्वीकृत्यतत्रव्यापकत्वान्वितप्रतिबंधकतायानिरूपितत्वसंबंधेनसामा

नाधिकरण्यस्यचाश्रयतासंबंधेनप्रकृत्यर्थेऽन्वयंस्वीकृत्यतदुपपादनीयमन्यदुक्तदिशावधेयं ॥ दुर्घटत्वादिति विशेष्यवृत्तेर्विशिष्टानु
योगिकाभावानभ्युपगमादिति भावः ॥ यद्रूपावच्छिन्नाधिकरणतायां प्रतिबंधकताशून्यावृत्तित्वविवक्षणेऽधिकरणतायाअधिकरणभे
देनभेदमते ह्रदोवह्न्यभाववानितिज्ञाननिष्ठवह्न्यभावविषयकत्वाधिकरणतामादायैकदेशेवह्न्यभावादावतिव्याप्तिः ॥ अधिकरणता
सामान्यइत्युक्तौगौरवमिति बोध्यं ॥ ननुज्ञानपदसमभिव्याहारादेवतादृशार्थलाभान्नज्ञानस्येत्यस्यवैयर्थ्यमतोदोषांतरमा
ह ॥ ह्रदत्वावच्छिन्नेति ॥ ननुयद्रूपावच्छिन्नविषयितात्वे प्रतिबंधकताशून्यतादृशनिश्चयवृत्तितानवच्छेदकत्वंविवक्षणी
यमतोनोक्तातिप्रसंगइति चेन्न ॥ विषयितात्वस्यतादृशवृत्तितावच्छेदकत्वेविशिष्टविषयितात्वेतदनवच्छेदकत्वस्यदुर्घटत्वेना
संभवः ॥ विषयितात्वविशिष्टावच्छेद्यतायांतथाविवक्षणेह्रदोवह्न्यभाववानितिज्ञानीयह्रदादिविषयितानिष्ठावच्छेद्यतायास्तथा
त्वेनातिप्रसंगोदुर्वारः ॥ तादृशावच्छेद्यतासामान्येत्युक्तौच गौरवं ॥ अविरोधितयेति ॥ निरवच्छिन्नह्रदत्वनिष्ठावच्छेदकता
कविशेष्यताकवह्न्यादिमत्ताज्ञानंप्रतिनिरवच्छिन्नह्रदत्वनिष्ठावच्छेदकताकविशेष्यताकवह्न्याद्यभाववत्तानिश्चयस्यैवप्रतिबंधक

त्वादितिभावः ॥ ननुनिरवच्छिन्नपक्षतावच्छेदककस्थलीयदोषलक्षणएवपक्षतावच्छेदकांशेऽन्याप्रकारकत्वंज्ञानविशेषणंदेयमत
आह ॥ विशेषितेति ॥ असंग्रहेणेनेति ॥ ह्रदोवह्निमान्ह्रदत्वादित्यादिस्थलीयवह्न्यभाववद्वृत्तिह्रदत्वादिरूपदोषासंग्रहेणेत्य
र्थः ॥ तद्घटकाप्रसिद्ध्येति ॥ व्यासज्यवृत्तिधर्मप्रकारकबोधेतदाश्रययावद्धर्मिभाननियमात्त्वाविषयकप्रतीतिवृत्तितादृशबा
धादिविषयिताकपदार्थाप्रसिद्धिरितिभावः ॥ अतएवप्रमेयंगगनवदितिस्थलपरित्यागः ॥ तत्रप्रमेयत्वेनयत्किंचित्प्रमेयावगा
हिबाधनिश्चयस्यघटाद्यविषयकत्वसंभवाद्घटकाप्रसिद्धेरभावात् ॥ यद्यपिह्रदोवह्निमान्धूमादित्यादौयत्किंचिद्ध्रदा
वगाहिनोबाधनिश्चयस्यतदन्यतत्तद्ध्रदाविषयकस्यसंभवात्तत्तद्ध्रदादीनामप्यघटकतयातद्विषयकदोषज्ञानाप्रसिध्याऽव्या
प्तिःसंभवति ॥ तथापिवह्न्यभाववद्ध्रदत्वादिनावह्न्यभावमात्रावगाहिभ्रमसत्त्वेतमादायैवलक्षणसमन्वयःसंभवति ॥ यद्वात्वा
विषयकप्रतीतिवृत्तियद्रूपावच्छिन्नयद्रूपव्यापकविषयतानिरूपितविषयिताकत्वरूपाघटकत्वनिवेशेनतत्तद्ध्रदादीनामघटक
त्वमित्यभिप्रायेणसानोक्ता ॥ एतेनव्यासज्यवृत्तीत्यादिपूर्वोक्तनियमानभ्युपगमेसर्वत्वेनयत्किंचित्पदार्थावगाहिबाधनिश्चय ४२

स्य घटाद्यविषयकत्वसंभवान्नोक्तस्थले ऽ घटकाप्रसिद्धिरिति शंकानवकाशः ॥ तादृशप्रतीतिसंभवेपि सर्वत्वव्यापकविषयताकत्व
स्य तादृशप्रतीतिवृत्तित्वाभावेनाघटकाप्रसिद्धेः सत्वात् ॥ न चैवमपि तत्तद्वह्नीनां निरुक्ताघटकत्वसत्वात्तत्तद्विषयकस्य बाधनिश्च
यस्याप्रसिध्या ह्रदो वन्हिमानित्यादौ बाधाव्याप्तेर्दुर्वारतेति वाच्यं ॥ स्वपर्याप्त्यवच्छेदकधर्मविशिष्टाधिकरणं यत्स्व निरूपितप्र
कारतानिरूपितविशेष्यतासमानाधिकरणं तन्निष्ठाभावप्रतियोगित्वस्वनिरूपितत्वैतदुभयसंबंधेनावच्छेदकताविशिष्टविष
यत्वानिरूपकत्वस्य स्वाविषयकप्रतीतौ निवेशनीयत्वाद्वह्न्यंतरविषयकप्रतीतौ तादृश्याः वन्हित्वनिष्ठावच्छेदकताविशिष्टव
ह्न्यंतरनिष्ठविषयतायाः सत्वेन स्वपदेन तत्तद्वन्हेरुपादानायोगेन तत्तद्वन्हेरघटकत्वासंभवात् ॥ भूतलं घटाभाववदित्यादौ
घटत्वावच्छिन्नप्रकारतायास्तादृशविशेष्यतासमानाधिकरणपटनिष्ठाभावप्रतियोगित्वस्वनिरूपितत्वोभयसंबंधेन घट
त्वनिष्ठावच्छेदकताविशिष्टतया तादृशप्रकारत्वानिरूपकदोषविषयकप्रतीतिरप्रसिध्या ऽ घटकाप्रसिध्या घटवद्भूतलादिरू
पबाधाव्याप्तिरतः प्रथमसंबंधे ऽ धिकरणांतं ॥ घटवद्भूतलमिति प्रतीतेस्तादृशभूतलावृत्तिघटनिष्ठाभावप्रतियोगित्वसंबं

धेनघटत्वनिष्ठावच्छेदकताविशिष्टघटत्वावच्छिन्नप्रकारत्वानिरूपकत्वाभावेनतद्दोषतादवस्थ्यमतः समानाधिकरणांतं ॥ यद्यद्रू
पावच्छिन्नस्ययस्ययस्यतादृशविशिष्टघटकतेति ॥ यद्यन्निष्ठतादृशविशिष्टघटकतावच्छेदकंयद्यद्रूपंतत्तदवच्छिन्न
तत्तन्निष्ठविषयताभिन्नकिंचिदवच्छिन्नविषयताशून्यत्वंज्ञानेविशेषणंपर्यवसितं ॥ वह्न्यभाववद्ध्रदरूपविशिष्टशरीरेह्रदत्वस्य
स्वरूपतएवघटकत्वाद्घटकतावच्छेदकावच्छिन्नविषयताभिन्नह्रदत्वनिष्ठनिरवच्छिन्नविषयताशून्यत्वस्यतादृशविशिष्टरू
पबाधज्ञानेऽसत्वात्तादृशबाधेऽव्याप्तिरतः किंचिदवच्छिन्नेति ॥ नच विषयतायांतत्तन्निष्ठत्वंव्यर्थमितिशंक्यं ॥ तद
नुपादानेजातिवन्हित्वकालीनह्रदोवन्हिमान्धूमादित्यादौजातिमान्वह्न्यभाववानितिज्ञानवारणासंभवात् ॥ तदुपादानेतु
जातित्वावच्छिन्नवन्हित्वस्यतादृशविशिष्टघटकत्वेपिजातित्वावच्छिन्नवन्हित्वनिष्ठविषयताभिन्नह्रदत्वनिष्ठजातित्वावच्छि
न्नविषयताशून्यत्वस्यतादृशज्ञानेऽसत्वात्तद्वारणसंभवात् ॥ यद्यपिस्वनिष्ठयद्रूपावच्छिन्नविषयतानिरूपितविषयिता
शून्यप्रतीत्यप्रवृत्तितादृशविशिष्टविषयितासामान्यकत्वंयद्रूपावच्छिन्नंयन्निष्ठंतादृशविशिष्टघटकत्वमितिविवक्षणेह्रदोवन्हि ४३

मानित्यादौवह्नित्वावच्छिन्नतत्तद्वह्निनिष्ठविषयतानिरूपितविषयिताशून्यवह्न्यंतरावगाहिबाधनिश्चयसंभवाद्वह्नित्वावच्छिन्नतत्तद्वह्नेर्नबा
धघटकतेतिवह्नित्वावच्छिन्नतत्तद्वह्निनिष्ठविषयतायास्तत्तद्रूपावच्छिन्नविषयताभिन्नतयातच्छून्यत्वस्यबाधनिश्चयेऽभावाद्बाधेऽव्या
प्तिस्तथापितादृशाविशिष्टावच्छिन्नभेदीयप्रतियोगितायांयद्रूपावच्छिन्नयन्निष्ठावच्छेदकतानिरूपकत्वंतेनरूपेणतस्यतादृशावि
शिष्टघटकत्वमितिविवक्षितमवच्छेदककोटिप्रविष्टानामप्यवच्छेदकत्वस्वीकारात् ॥ नहिह्रदोवह्निमानित्यादौवह्नित्वेनकस्या
पिवह्नेरीदृशघटकत्वंनास्तीतिशक्यतेवक्तुं ॥ यद्वास्वनिष्ठयद्रूपावच्छिन्नेत्यादिरूपमेवघटकत्वंवह्नित्वेनतत्तद्वह्नेर्घटकता
निर्वाहायघटकताघटकज्ञानेपूर्वोक्तावच्छेदकताविशिष्टविषयत्वानिरूपकत्वंदेयमितिविभावनीयं ॥ तज्ज्ञानव्यावृ-
त्तिरिति जातिमान्वह्न्यभाववानितिज्ञानव्यावृत्तिरित्यर्थः ॥ अथैवमपिह्रदोजात्यभाववानित्यादौजातित्वादिनाह्रदत्वावगा
हिजातिमाञ्जातिमानितिज्ञानस्यकथंव्यावृत्तिः ॥ जातित्वावच्छिन्नविषयितायाजातिमत्वावच्छिन्नविषयितायाश्चजातिमद्वद्रूपवि
शिष्टविषयकत्वाव्यापकत्वाभावात् ॥ जातिमज्जातिमत्वावच्छिन्नविषयितायां अव्यापकत्वोक्तिरपिनसाधीयसी ॥ जाति

मज्जातिमत्त्वमित्यनेनातिरिक्तालाभात्तादृशज्ञानीयविषयितायांतदवच्छिन्नत्वाक्षतेः ॥ नह्येकस्यद्विरूपादानमात्रेणव
स्तुभिद्यते ॥ नन्वजातिधर्मितावच्छेदकतापन्नजात्यवच्छिन्ननिरूपकताकविषयिताह्रदोजातिमानितिज्ञानेनवर्तते वर्ततेच
जातिमान्जातिमानितिज्ञानइतितद्व्यावृत्तिरितिवाच्यं ॥ यद्रूपावच्छिन्नविषयितात्वमित्यत्रयद्रूपपदेनजातित्वमात्रपरिग्र
हेतद्व्यावर्तनात् ॥ जातित्वविशिष्टधर्मितावच्छेदकतापन्नजातिपरिग्रहेआपन्नांतस्याव्यावर्तकतयातज्ज्ञानाव्यावृत्तेश्च ॥
नचयद्रूपावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकत्वावच्छिन्नयद्रूपनिष्ठनिरूपकताकविषयितात्वंफलतोयद्रूपावच्छि
न्नप्रकारतानिरूपितयद्रूपावच्छिन्नावच्छेदकताकविशेष्यतानिरूपितविषयितात्वंतादृशाभावप्रतियोगितावच्छेदकमिति
विवक्षितंजातिमान्जातिमानितिज्ञानेजातित्वावच्छिन्नप्रकारतानिरूपितजातित्वावच्छिन्नावच्छेदकताकविशेष्यतानिरू
पितविषयितासत्त्वेनजातिमान्ह्रदइतिज्ञानेचतादृशविषयित्वासत्त्वेनोक्तज्ञानव्यावृत्तिरितिवाच्यं ॥ तथापिघटःपृथिवी
भिन्नोमेयत्वादित्यादौजातिमत्तांपृथिवीत्वप्रतिबंधकज्ञानाव्यावृत्तेः ॥ जातिविशिष्टेस्वरूपतएवपृथिवीत्वभानात् ॥ नचयन्नि ४४

ष्ठप्रकारतानिरूपितेत्यादिक्रमेण निवेशान्नदोषइति वाच्यं ॥ जात्यवच्छेदेनह्रदभेदसाधनेजातिमान्जातिमानितिज्ञानवारणाययद्रूपाव
च्छिन्नेत्यस्यावश्यकत्वात् ॥ अत्रकेचित् ॥ जातिमान्ह्रदइतिज्ञानेजातिमज्जातिमद्विषयकत्वंनास्तीतिप्रतीतेः प्रमात्वनिर्वाहायजा
तिमद्ध्रदविषयकत्वंनास्तीतिप्रतीतेरप्रमात्वनिर्वाहायचतत्प्रतीतिविषयाभावयोर्भेदोवाच्यः ॥ अभावभेदश्चनप्रतियोगितावच्छेदक
भेदादत्रनिर्वहतिविषयितानिष्ठप्रतियोगितायांनिरूपितत्वसंबंधेनावच्छेदकस्यजातिमत्तउभयत्राविशिष्टत्वात् ॥ किंतुप्रतियोगि
तावच्छेदकतापर्याप्त्यवच्छेदकभेदादेव ॥ एवंचतादृशविशिष्टविषयकत्वसमानाधिकरणाभावीयविषयितात्वावच्छिन्नप्रति
योगितायांनिरूपितत्वसंबंधावच्छिन्नावच्छेदकतापर्याप्त्यवच्छेदकोयोयोधर्मस्तत्तदवच्छिन्नपर्याप्तिकोक्तसंबंधावच्छिन्ना
वच्छेदकताकविषयितात्वावच्छिन्नप्रतियोगिताकाभाववत्वंविवक्षितं ॥ तथाच ह्रदोजात्यभाववानित्यादौजातिमद्ध्रदरूप
विशिष्टविषयकत्वसमानाधिकरणोयोजातिमज्जामद्विषयकत्वंनास्तीतिप्रतीतिसिद्धाभावस्तदभावीयप्रतियोगितानिरूपितनि
रूपितत्वसंबंधावच्छिन्नावच्छेदकतापर्याप्त्यवच्छेदकोयोजातिमान्जातिमानित्याकारकज्ञानव्यक्तिनिरूपितविषयतात्वरूपोधर्म

स्तदवच्छिन्नोक्तसंबंधावच्छिन्नावच्छेदकताकोयःजातिमान्ह्रदइतिज्ञानव्यक्तिनिरूपितविषयतात्वावच्छिन्ननिरूपितत्व
संबंधावच्छिन्नावच्छेदकताकप्रतियोगिताकःजातिमद्ध्रदविषयकत्वंनास्तीतिप्रतीतिसिद्धाभावविलक्षणाभावस्तद्वत्वस्य
जातिमान्जातिमानितिज्ञानेऽसत्वात्तद्व्यावृत्तिरितिवदंति ॥ तदपरेनक्षमंते ॥ जातिमद्ध्रदरूपविशिष्टविषयकत्वाधि
करणेजातिमान्प्रमेयवानितिज्ञानेवर्ततेयोजातिमद्ध्रदविषयकत्वंनास्तीतिप्रतीतिसिद्धाभावस्तदीयप्रतियोगितानिरू
पितनिरूपितत्वसंबंधावच्छिन्नावच्छेदकतापर्याप्त्यवच्छेदकोयोजातिमान्ह्रदइतिज्ञानव्यक्तिनिरूपितविषयतात्वरूपो
धर्मस्तदवच्छिन्ननिरूपितत्वसंबंधावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यजातिमान्ह्रदइतिज्ञानेऽसत्वाज्जातिम
द्ध्रदादेरसंग्रहतादवस्थ्यात् ॥ वस्तुतस्तुयद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नावच्छेदकताकविशेष्यतानि
रूपितविषयितात्वंयादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकंतद्रूपावच्छिन्नप्रकारतानिरूपि
ततद्रूपावच्छिन्नावच्छेदकताकविशेष्यतानिरूपितविषयितात्वावच्छिन्नाभाववत्वमप्युक्तवाक्येनविवक्षणीयं ॥ तथाच ४५

जातिमान्ह्रद इतिज्ञानेजातित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितजातित्वावच्छिन्नावच्छेदकताकविशेष्यतानि
रूपितविषयितात्वाऽवच्छिन्नाभावसत्वाज्जातिमान्जातिमानितिज्ञानेचासत्वान्नासंग्राह्यसंग्रहः संग्राह्यासंग्रहोवा ॥ घटः पृथि
वीभिन्नइत्यादौजातिमतीपृथिवीतिज्ञानव्युदासश्चयद्रूपावच्छिन्नविषयितात्वमित्यादियथाश्रुतविशेषणेनैव ॥ एवंह्रदोव
न्हिमान्धूमादित्यादावभावोवन्हिमानित्यादौचाभावत्वेनह्रदत्वाभावत्वावगाह्यभाववान्वह्न्यभाववानितिज्ञानस्यजातिमान्जाति
मानितिज्ञानवारकविशेषणेनैवव्यावृत्तिस्तज्ज्ञाननिष्ठायावह्न्यभावत्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नावच्छेद
कताकविशेष्यतानिरूपितविषयितायाः वह्न्यभावविशिष्टह्रदवह्न्यभावविशिष्टाभावरूपदोषविषयकत्वाव्यापकत्वात् ॥ ए
तेन ॥ ननुयद्रूपावच्छिन्नविषयितात्वमित्यादिरूपाव्यापकविषयिताशून्यत्वनिवेशोऽभावत्वेनह्रदत्वावगाह्यभाववा
न्वह्न्यभाववानितिज्ञानाव्यावृत्तिः ॥ नचविशेष्यदलेयद्रूपनिष्ठावच्छेदकतायांस्वव्यधिकरणधर्मानवच्छिन्नत्वंदेयमिति
नदोषइतिवाच्यं ॥ तावतापिप्रकारतावच्छेदककोटिनिविष्टवन्हित्वस्यवन्हित्वादिनायज्ज्ञानंतद्वारणाद्वह्न्यभावह्रदत्वो

भयंयद्रूपशब्दार्थस्तन्निष्ठावच्छेदकताचनतद्वृत्तिधर्मावच्छिन्नेति ॥ किंचोक्तज्ञानमादायदोषवारणायावच्छेदकतायांस्वव्यधिक
रणधर्मानवच्छिन्नत्वविशेषणावश्यकत्वेज्ञानेस्वव्यधिकरणधर्मावच्छिन्नविशेष्यत्वानिरूपकत्वरूपयाथार्थ्यविशेषणस्यप्रथमलक्ष
णेप्युक्तभ्रमव्यावर्तकतयावच्छेदकतायामुक्तविशेषणमनिवेश्यैवसार्थक्यसंभवादवतरणविरोधः ॥ नचयद्रूपपर्याप्तावच्छेदक
ताकविषयितात्वमितिरीत्यानिवेशनीयमभावत्वपर्याप्तावच्छेदकताकविषयिताया अव्यापकत्वात्तज्ज्ञानव्यावृत्तिरितिवाच्यं ॥
तथापिवह्न्यभावत्वेनह्रदत्वावगाहि[नः]वह्न्यभाववान्वह्न्यभाववानितिज्ञानस्यावारणादितिपूर्वपक्षानवकाशः ॥ अथैवमपि
वह्नित्वावच्छेदेनसमवायसंबंधावच्छिन्नप्रतियोगि[नः]ताकवह्न्यभावसाधने[स्य]वह्निमद्वह्निबोधस्तद्विषयकत्वाव्यापिकानवह्नित्व
वह्न्यवच्छिन्नविषयितेतिवह्नित्वेनवह्नित्वावगाहि[नः]वह्निमत्वान्वह्निरितिज्ञानव्यावृत्तिर्यथाश्रुतविशेषणेनदुर्घटा ॥ नापिजातिमान्
जातिमानितिज्ञानवारकविशेषणेन ॥ वह्नित्ववह्न्यवच्छिन्नप्रकारतानिरूपितकिंचिद्रूपावच्छिन्नावच्छेदकताकविशेष्यतानिरूपि
तविषयितायादोषविषयकत्वाव्यापकत्वेपितच्छून्यत्वस्यतादृशज्ञानेऽक्षतत्वात् ॥ मैवंयद्रूपावच्छिन्नयन्निष्ठविषयतानिरूपितय ४६

द्रूपावच्छिन्नविषयितात्वं तादृशाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नतन्निष्ठविषयतानिरूपिततद्रूपावच्छिन्नविषयिताशून्य
त्वं यद्रूपावच्छिन्नविषयितात्वमित्यादिनाविवक्षितं वन्हित्वावच्छिन्नवन्हित्वनिष्ठविषयतानिरूपितवन्हित्वावच्छिन्नविषयिता
यावन्हिमद्ह्रन्हिरूपबाधविषयित्वाव्यापिकायावन्हित्वेनवन्हित्वावगाहिज्ञानेसत्वात्तज्ज्ञानव्यावृत्तिः ॥ यद्वास्वभिन्नयद्रूपाव
च्छिन्नविषयतानिरूपितविषयतानिरूपितयद्रूपावच्छिन्नविषयितात्वं तादृशाभावप्रतियोगितावच्छेदकं तादृशविषयिता
शून्यत्वं यद्रूपावच्छिन्नविषयितात्वमित्यनेनविवक्षणीयं ॥ वन्हित्वेनवन्हित्वावगाहिज्ञानेवन्हित्वावच्छिन्नवन्हित्वनिष्ठ
विषयतानिरूपितसंसर्गविषयतानिरूपितवन्हित्वावच्छिन्नवन्हिविषयितायाः वन्हिमद्ह्रन्हिरूपबाधविषयकत्वाव्यापि
कायाः सत्वात्तद्व्यावृत्तिः ॥ इत्थंच जातित्वावच्छिन्नविषयतानिरूपितविषयतानिरूपितजातित्वावच्छिन्नविषयितात्वस्य जातिविशिष्टह्र
दविषयित्वव्यापकतानवच्छेदकतया तादृशविषयिताशून्यत्वस्य जातिमान्जातिमानितिज्ञानेऽसत्वेनैव तज्ज्ञानव्यावृ
त्तेस्तद्वारकविशेषणं पृथगनुपादेयं ॥ अभावत्वेनह्रदत्वावगाहिन्यभाववान्वन्ह्यभाववानितिज्ञानेवन्ह्यभावत्वेनह्रदत्वाव

गाहिनिवह्न्यभाववान्वह्न्यभाववानितिज्ञानेचवह्न्यभावत्वावच्छिन्नविषयतानिरूपितह्रदविषयतानिरूपिताभावत्ववह्न्यभाव
त्वावच्छिन्नायाःह्रदत्वनिष्ठविषयितायावह्न्यभावत्वावच्छिन्नप्रकारताभिन्नायावह्न्यभावविशिष्टह्रदरूपदोषविषयकत्वाव्यापि
कायाःसत्वेनतज्ज्ञानयोर्व्युदासः॥ स्वभिन्नत्वोपादानाच्चवह्न्यभावत्वावच्छिन्नविषयतानिरूपितह्रदविषयतानिरूपितप्रका
रतात्मकवह्न्यभावत्वावच्छिन्नविषयताव्यक्तेर्वह्न्यभाववान्ह्रदइतिज्ञानेसत्वेपिनतादृशविषयतायाअव्यापकत्वहानिः॥ य
द्यपिस्वपदेनयद्रूपावच्छिन्नविषयतासामान्यग्रहणेतद्ध्रदस्यवह्न्यभावत्वावच्छिन्नविषयतायामसत्वेननाभाववान्वह्न्यभा
ववानितिज्ञानव्यावृत्तिस्तादृशयत्किंचिद्विषयताग्रहणेवह्न्यभाववानितिज्ञानेपितादृशविषयितासत्वेननोक्तविषयि
तायाअव्यापकत्वं॥ तथापिस्वनिरूपितविषयतानिरूपितत्वस्वनिष्ठोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदवत्वो
भयसंबंधेनयद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितविषयितात्वमित्यादिरीत्याविवक्षणीय
मित्यदोषः॥ अभावोवन्हिमानित्यादौवह्न्यभाववदभावोबाधस्तद्विषयकत्वाव्यापकविषयिताशून्यमभावत्वेनाभावत्वावगा

ह्न्यभाववान्वह्न्यभाववानितिज्ञानंनचार्यते ॥ नहितत्रवह्न्यभावत्वावच्छिन्नविषयतानिरूपितविषयतानिरूपिताभावत्वावच्छिन्नविषयिताऽव्यापिकाप्रतिबंधकज्ञानेपिसंसर्गतामादायतस्याः सत्वादतः संसर्गकोटौस्वाभिन्नत्वमात्रमनिवेश्योभयावृत्तित्वरूपतद्व्यक्तित्वावच्छिन्नभेदवत्वनिवेशस्तथासत्यभावत्वावच्छिन्नविशेष्यतानिष्ठतद्व्यक्तित्वावच्छिन्नभिन्नवह्न्यभावविषयितायास्तादृशदोषविषयकत्वव्यापकत्वेप्यभावत्वावच्छिन्नप्रकारतावृत्तितद्व्यक्तित्वावच्छिन्नभिन्नवह्न्यभावविषयितायाअव्यापकत्वात्तज्ज्ञानव्यावृत्तिः ॥ वस्तुतस्तुद्वित्वादिनावह्न्यभावत्वावच्छिन्नविषयताभिन्नायास्तादृशविषयतानिरूपितहृदविषयतानिरूपितप्रकारतात्मकवह्न्यभावत्वावच्छिन्नविषयताव्यक्तेर्वह्न्यभाववान्हृदइतिज्ञानेपिसत्वेननतादृशविषयतायाअव्यापकत्वमितिदर्शिताप्रतिबंधकज्ञानवारणासंभवात्संसर्गकोटौस्वभिन्नत्वमात्रमनिवेश्योभयावृत्तित्वरूपतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्वनिवेशः ॥ एतेननिरुक्तोभयसंबंधेनाभावत्वावच्छिन्नप्रकारतारूपयद्रूपावच्छिन्नविषयताविशिष्टवह्न्यभावत्वावच्छिन्नविषयतायादोषज्ञानेसत्वादप्रतिबंधकतादृशज्ञानव्यावृत्तेर्नोक्तस्थानिष्ठोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदवत्वनिवेशनयोजनसंभवइतिनि

रत्नं ॥ न चैवं ह्रदो वन्हिमान्नवेति संशयस्य वह्न्यभावविशिष्टह्रदविषयकत्वव्यापकतानवच्छेदकं यद्वन्हित्वावच्छिन्नविषयतानिरू
पितह्रदत्वावच्छिन्नविषयतानिरूपितसमवायावच्छिन्नविषयतानिरूपितविषयितात्वं तदवच्छिन्नशून्यत्वविरहेण वारणान्नि
श्चयत्वं व्यर्थमिति वाच्यं ॥ घटो जलमित्यत्र जलभिन्नघटादिरूपबाधसंग्रहाय तदावश्यकत्वात् ॥ अन्यथा घटो जलं नवेत्यादि
संशयस्य जलत्वजलभेदोभयकोटिकस्य जलत्वप्रकारतायानिरवच्छिन्नत्वेन यद्रूपावच्छिन्नविषयतात्वेन गृहीतुमशक्यत
यानिरुक्ताव्यापकविषयिताशून्यत्वेन तद्विशेषणेनाव्यावर्तनात् ॥ यदि च घटो जलं नवेति संशये जलभिन्नघटात्मकदोषवि
षयकत्वाव्यापिकाया समवायावच्छिन्नविषयतानिरूपितधर्मिविशेष्यतानिरूपितसमवायावच्छिन्नविषयतानिरूपित
विषयितायाः सत्वेन नोक्तनिश्चयत्वनिवेशनप्रयोजनसंभव इति विभाव्यते तदाप्यभावो भेदो वा जलमित्यादावभावो भेदो वा
जलं नवेति संशयवारणाय निश्चयत्वनिवेशः आवश्यकः नहि तत्र समवायावच्छिन्नविषयतानिरूपितविषयतानिरूपितस्वरू
पावच्छिन्नविषयतानिरूपितविषयिताया अव्यापकत्वं दोषज्ञाने पि तस्याः सत्वादिति दिक् ॥ **अथैवमपि** ह्रदो वन्हिमानित्यादौ

यद्रूपशब्देनतत्तद्वह्निमुपादायतत्तदवच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतानिरूपितायाद्वितीययद्रूपपदेनसमवायमुपा
दायसमवायावच्छिन्नविषयतातन्निरूपितविषयितात्वस्यवह्न्यंतरविषयकबाधविषयकज्ञाननिष्ठाभावप्रतियोगितावच्छेदकतयात
दवच्छिन्नशून्यत्वस्यबाधज्ञानेऽसत्वाद्बाधादावव्याप्तिः॥ एवंवह्नित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरू
पितविषयितात्वस्यप्रमेयत्वेनवह्न्यभावावगाहियद्वह्न्यभावविशिष्टह्रदविषयकत्वाधिकरणज्ञानंतन्निष्ठाभावप्रतियोगितावच्छेदक
तयाताद्दशविषयितात्वावच्छिन्नाभावस्यबाधज्ञानेऽसत्वादव्याप्तिश्चेतिचेन्न॥ यद्रूपावच्छिन्नविषयताविशिष्टविषयतानि
रूपितत्वावच्छिन्नविषयतानिष्ठनिरूपकताकयद्रूपावच्छिन्नविषयताविशिष्टविषयतानिरूपितविषयितात्वंताद्दशावि
शिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकंताद्दशविषयितात्वावच्छिन्नशून्यत्वस्यविवक्षितत्वात्॥ विशिष्ट
त्वंस्वावच्छिन्नप्रतिबंधकतावच्छेदकत्वरूपेग्राह्ये अवच्छिन्नत्वावच्छेदकंत्वेतुसाक्षाद्ग्राह्ये॥ अत्रचनिरूपितत्वावच्छिन्ननिरू
पकतायानिवेशान्नस्वात्मकविषयतामादायाभाववान्वह्न्यभाववानितिज्ञानीयविषयितायाअव्यापकत्वहानिः॥ द्वितीयविष

यतायां तृतीयविषयतायांचनिरुक्तसंबंधेनयद्रूपावच्छिन्नविषयताविशिष्टत्वनिवेशेनप्रथमेनचरमेणवायद्रूपपदेनतत्तद्वन्हिमु
पादायतत्तद्वन्ह्यवच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयतानिरूपितसमवायावच्छिन्नविषयितायासमवायावच्छिन्नविषय
तानिरूपितह्रदत्वावच्छिन्नविषयतानिरूपिततत्तद्वन्ह्यवच्छिन्नविषयितायाअव्यापकत्वेपिनबाधज्ञानासंग्रहस्ताद्दशविषयि
तायाबाधज्ञानेपिसत्वात् ॥ द्वितीययद्रूपनिवेशान्नाभावोवन्हिमानित्यादौवन्ह्यभावत्वावच्छिन्नविषयतानिरूपिताभावत्वा
वच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतायादोषज्ञानेपिःसत्वेननाभाववान्वन्ह्यभाववानितिज्ञानमादायाव्याप्तिः
॥ नन्वेवमपिस्वरूपेस्वरूपाभावसाधनेस्वरूपसंबंधेनस्वरूपवान्स्वरूपसंबधोदोषस्तत्रस्वरूपत्वेनस्वरूपत्वावगाहिस्वरूपवत्व
रूपवानितिज्ञानमादायाव्याप्तिःस्वरूपसंबंधेनस्वरूपवत्स्वरूपमितिप्रतिबंधकज्ञानेसंसर्गतामादायस्वरूपत्वावच्छिन्नविषयता
निरूपितस्वरूपत्वावच्छिन्नविषयतानिरूपितस्वरूपत्वावच्छिन्नविषयतासत्वादितिचेन्न ॥ स्वरूपस्वरूपत्वोभयावच्छि
न्नविषयतानिरूपितस्वरूपत्वावच्छिन्नविषयतानिरूपितस्वरूपस्वरूपत्वोभयावच्छिन्नविषयितायाएवाव्यापिकायास्त

त्त्वसत्वेनतादृशज्ञानव्युदासात्॥ यादृशविशिष्टविषयकत्वसमानाधिकरणेत्यत्र यादृशविशिष्टविषयकत्वंच यादृशांश
तद्विशिष्टंच यादृशविशिष्टंवन्हित्वविशिष्टवन्हिविशिष्टंयदभावत्वविशिष्टंतद्विशिष्टंयद्ध्रदत्वादिविशिष्टंन्हृदादितद्विषयकत्वंतद्घट
कविशेषणविशेष्यभावापन्नसकलपदार्थविषयकत्वंवन्हित्वनिष्ठविषयतानिरूपितवन्हिनिष्ठविषयतानिरूपिताया:भावत्व
निष्ठविषयतानिरूपिताभावनिष्ठविषयतातन्निरूपिताया न्हृदत्वनिष्ठविषयतानिरूपिता न्हृदनिष्ठविषयतातन्निरूपितविष
यित्वपर्यवसितंग्राह्यमतः संसर्गतामादायवन्हित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितविषयिता
त्वस्यवन्हित्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितन्हृदत्वावच्छिन्नविषयितात्वस्यवानिरुक्तयद्रूपाव
च्छिन्नविषयताविशिष्टेत्यादिरूपस्यप्रमेयत्वेनवह्न्यभावावगाहिप्रमेयवान्न्हृदइतिज्ञानंतन्निष्ठाभावप्रतियोगितावच्छेदक
त्वेपिनक्षतिस्तादृशज्ञानस्यनिरुक्तयादृशविशिष्टविषयकत्वानधिकरणत्वात्॥ एतेनप्रमेयत्वादिना वह्न्यभावावगाहि
ज्ञानव्यावर्तनाययादृशविशिष्टविषयकत्वसमानाधिकरणेत्यत्र यादृशविशिष्टविषयकत्वंज्ञानवैशिष्ट्यावच्छिन्नत्वासाधा

रण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्प्रकृतानुमितिप्रतिबंधकतावच्छेदकत्वविशिष्टंग्राह्यंप्रतिबंधकतायामुभयाभावनिवेशान्नासाधारण्येऽव्याप्तिर्नवाप्रकृतानुमितिप्रतिबंधकतावच्छेदकत्वमात्रनिवेशेप्रमेयवान्वह्न्यभाववान्प्रमेयवांश्चह्रदइतिज्ञाननिष्ठप्रतिबंधकतायांप्रमेयवान्वह्न्यभाववानितिज्ञानीयविषयितायाअवच्छेदकत्वेनतज्ज्ञानाव्यावृत्त्योक्तदोषतादवस्थ्यं ॥ एवंचस्वरूपसंबंधरूपावच्छेदकत्वकल्पेनसामान्यपदवैयर्थ्यशंकानिरुक्तप्रतिबंधकतावच्छेदकवह्न्यभावत्वाद्यवच्छिन्नैकदेशाविषयकत्वाधिकरणेदोषविषयकत्वाभावासत्वाद्दोषज्ञानस्याव्यापकविषयिताशून्यत्वाक्षतेस्तदीयवह्न्यभावत्वावच्छिन्नविषयकत्वेस्वरूपसंबंधरूपावच्छेदकत्वसत्वेनवह्न्यभावत्वावच्छिन्नेऽतिप्रसंगवारणायतदावश्यकत्वादितिपरास्तं ॥ यादृशविशिष्टविषयकत्वेनिरुक्तविशेषणेपिह्रदोवह्निमानित्यादौवह्निमद्वृत्तित्वरूपवह्न्यभावव्याप्यत्वेनवह्न्यभावावगाहिनिवह्निमद्वृत्तिमान्ह्रदइतिज्ञानेनिरुक्तविशेषणाक्रांतयादृशविशिष्टविषयकत्वाधिकरणेवह्नित्वावच्छिन्नविषयताघटितधर्मावच्छिन्नाभावसत्वेनप्रतिबंधकबाधज्ञानसंग्रहायनिरुक्तरीतेरेवशरणीकरणीयत्वात्तत्रचैकोक्तिभंगोनदोषायगत्यंतरविरहादिति सुधियोविदांकुर्वंत्वताग्र

हेणेतिदिक् ॥ केचित्तु अथैवमितिग्रंथोनगदाधरकृतः किंतुकेनचित्स्वबुध्यालिखितः ॥ जातिमान्वह्न्यभाववानितिज्ञानीयविषयिता
यानिर्विशेषणकह्रदत्वादिघटितविशिष्टविषयसंबंधत्वाभावेनविशिष्टविषयितासंबंधेनयादृशविशिष्टविशेषितनिश्चयत्वव्यापिका
प्रकृतानुमितिप्रतिबंधकतेतिविवक्षयासर्वसामंजस्यात् ॥ यथाच्चजातित्वावगाहिज्ञानीयविषयितायाननिर्विशेषणह्रदत्वादिघटि
तविशिष्टसंबंधत्वंतथाव्यक्तंदीधितौपरामर्शग्रंथे इत्याहुः ॥ विशिष्टविषयितासामान्यस्य तादृशावच्छेदकत्व
विवक्षयेति ॥ अथस्वरूपसंबंधरूपावच्छेदकत्वनिवेशेसामान्यपदंव्यर्थंवह्न्यभावत्वावच्छिन्नवह्न्यभावरूपैकदेशविष
यकत्वाव्यापकवह्न्यभावविशिष्टह्रदरूपदोषविषयकत्वशून्यवह्न्यभावइतिज्ञानवृत्तित्वविशिष्टवह्न्यभावत्वावच्छिन्नविषयिता
यास्तादृशावच्छेदकत्वविरहेणैवतादृशैकदेशेऽतिव्याप्तिविरहात् ॥ नचैतत्कल्पेऽव्यापकविषयिताशून्यत्वंनदेयमितिशं
क्यं ॥ ह्रदत्वाऽवच्छेदेनवन्हिसाधनेह्रदत्वसामानाधिकरण्येनवह्न्यभाववद्ध्रदादिरूपबाधाव्याप्तेः ॥ जातित्वादिनाह्रदत्वाव
गाहियज्जातिसामानाधिकरण्येनजातिमान्वह्न्यभाववानितिज्ञानंतदीयविषयितायाःयद्रूपावच्छिन्नविषयितासामान्यांतर्गतायास्ता

दृशावच्छेदकत्वविरहात् ॥ नचसंयोगःसंयोगाभाववानित्यादौसंयोगःसंयोगवानितिभ्रमविषयेसंयोगेऽतिव्याप्तिःसंयोग
त्वावच्छिन्नविषयित्वाव्यापिकायाःविषयितायाःप्रतिबंधकज्ञानेऽसत्वादितिवाच्यं ॥ संयोगावच्छिन्नविषयितायाअव्यापिकायाः
प्रतिबंधकज्ञानेसत्वात् ॥ नचतत्रैवसंयोगावच्छिन्नेतिव्याप्तिरतःसामान्यपदमितिशंक्यं ॥ पर्वतोवह्न्यभाववानित्यादौवह्नित्वे
नवह्नित्वावगाहिनःवह्निमत्वान्पर्वतइत्यप्रतिबंधकज्ञानस्यवारणाययद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयिता
त्वमितिरीत्याऽव्यापकविषयिताशून्यत्वस्यपरिष्करणीयतयासंयोगःसंयोगवानितिज्ञानेतादृशसंयोगत्वावच्छिन्नविषयता
निरूपितसंयोगत्वावच्छिन्नविषयितायाःसत्वेनसंयोगत्वाद्यवच्छिन्नेऽतिव्याप्तिविरहात् ॥ नचगोत्वाभावोगोत्वाभाववानि
त्यादौगोत्वाभावोगोत्ववानितिभ्रमविषयेगोत्वाभावेऽतिव्याप्तिस्तत्रप्रतिबंधकज्ञाननिष्ठायाःगोत्वत्वावच्छिन्नविषयतानि
रूपितगोत्वाभावत्वावच्छिन्नविषयितायाःगोत्वाभावविषयकज्ञानेपिसत्वेनतद्विषयकत्वाव्यापकत्वाभावादितिवाच्यं ॥
पर्वतोवह्न्यभाववानित्यादौवह्नित्वेनपर्वतत्वावगाहिनःवह्निमान्वह्निमानित्यप्रतिबंधकज्ञानस्यवारणाययत्संबंधावच्छिन्नयद्रूपाव ५१

च्छिन्नविषयतानिरूपितविषयितात्वमितिरीत्याऽव्यापकविषयिताशून्यत्वंनिवेशनीयंतथाचसमवायसंबंधावच्छिन्नवह्नित्वा
वच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयितायाअव्यापिकायाअभावस्यतादृशज्ञानेऽसत्वात्तद्व्यावृत्तिः॥ प्रकृतेचसमवाय
संबंधावच्छिन्नगोत्वत्वावच्छिन्नविषयतानिरूपितगोत्वाभावत्वावच्छिन्नविषयितायाःगोत्वाभावविषयकत्वाव्यापकतयातच्छून्य
त्वस्यप्रतिबंधकतादृशभ्रमेऽसत्वेनगोत्वाभावेऽतिव्याप्तिविरहात्॥ नचैवमपिवह्न्यभावोवह्न्यभाववानित्यादौवह्न्यभावोवह्न्यभावा
भाववानितिभ्रमविषयवह्न्यभावाभावविशिष्टेऽतिव्याप्तिःस्वरूपसंबंधावच्छिन्नवह्न्यभावाभावत्वावच्छिन्नविषयतानिरूपितवह्न्य
भावत्वावच्छिन्नविषयितायावह्न्यभावाभावविशिष्टविषयकत्वाव्यापकत्वविरहात्स्वरूपसंबंधावच्छिन्नवह्न्यभावत्वावच्छिन्नविष
यतानिरूपितवह्न्यभावाभावत्वावच्छिन्नविषयितायाअव्यापकत्वेपिसंबंधानवच्छिन्नवह्न्यभावनिष्ठविशेष्यताकप्रतिबंधकज्ञाने
तच्छून्यत्वसत्वादितिवाच्यं॥ अभावोवह्निमानित्यादावभावत्वेनाभावतायगाहियद्भाववान्वह्न्यभाववानित्यप्रतिबंधकज्ञानंतद्व्या
वृत्तयेस्वभिन्नत्वस्वनिरूपितसंसर्गतान्यविषयतानिरूपितत्वोभयसंबंधेनयद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतानिरू

पितविषयितात्वमित्यादिरीत्याऽव्यापकविषयिताशून्यत्वस्य वक्तव्यत्वेन निरुक्तोभयसंबंधेन वह्न्यभावत्वावच्छिन्नविषयताविशिष्टवह्न्यभा
वत्वावच्छिन्नविषयतानिरूपितविषयितायाः वह्न्यभावाभावविशिष्टविषयकताव्यापकत्वेन तच्छून्यत्वस्य वह्न्यभावो वह्न्यभावाभा
ववानिति प्रतिबंधकज्ञानेऽसत्वेन वह्न्यभावाभावविशिष्टेऽतिव्याप्तिविरहात् ॥ मैवं विषयत्वाभावो विषयत्वभेदो वा विषयत्वाभि
न्न इत्यादौ विषयत्वाभावो विषयत्वभेदो वा विषयता इति प्रतिबंधकज्ञानविषयविषयत्वाभावादिरूपैकदेशातिव्याप्तिवारणाय
सामान्यपदोपादानमावश्यकं तादृश प्रतिबंधकज्ञानस्य स्वाभिन्नेत्याद्यव्यापकविषयिताशून्यत्वं प्रागुक्तमेव ह्रदः पृथिवीभिन्न इ
त्यादौ ह्रदः पृथिवीति भ्रमविषये पृथिवीरूपैकदेशेऽतिव्याप्तिस्तत्र प्रतिबंधकज्ञाने पृथिवीत्वस्य स्वरूपत एव भानान्निरुक्तोभ
यसंबंधेन यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितविषयितात्वमिति रीत्याऽव्यापकविषयिताशू
न्यत्वाक्षतेः सामान्यपदोपादानमिति तु न सत् ह्रदः पृथिवीति प्रतिबंधकभ्रमस्य पृथिवीरूपैकदेशाविषयकत्वाव्यापकसमवाया
वच्छिन्नविषयतानिरूपितधर्मिविषयतानिरूपितसमवायावच्छिन्नविषयतानिरूपितविषयितावत्वेन स्वाभिन्नेत्याद्यव्यापक ५२

विषयिताशून्यत्वाभावात् ॥ **विशिष्टविषयिताव्यापकत्वनिवेशनमेवोचितमिति** ॥ **यद्यप्यवच्छेदकतायांविशिष्टविष**
यितात्वव्यापकत्वंविशिष्टविषयितानिष्ठभेदप्रतियोगितानवच्छेदकत्वंप्रतिबंधकतायांविशिष्टविषयिताव्यापकत्वंतद्व्निष्ठभेदप्र
तियोगितानवच्छेदकत्वं ॥ एवंचस्वरूपसंबंधरूपावच्छेदकत्वपक्षेऽवच्छेदकत्वनिवेशस्थानीयाधिकरणनिवेशस्यप्रतिबंधक
तायांव्यापकत्वनिवेशकल्पेसत्वादितरांशस्यतुल्यत्वेनपक्षद्वयेपिशरीरसाम्येव्यापकत्वनिवेशनमेवोचितमित्यसंगतं ॥ **तथा**
पिस्वरूपसंबंधरूपावच्छेदकत्वनिवेशकल्पेपर्वतोवन्हिमानित्यादावप्रामाण्यविशिष्टवन्ह्यभाववानितिज्ञानेऽतिप्रसंगः स्वधर्मि
काप्रामाण्यज्ञानाभावविशिष्टवन्ह्यभाववानितिज्ञानस्यैवप्रतिबंधकतयाऽवच्छेदककोटिप्रविष्टानामवच्छेदकत्वेऽप्रामाण्यवत्ता
दृशाज्ञानविषयत्वस्यापिप्रतिबंधकतावच्छेदककोटिप्रविष्टत्वेनतदवच्छेदकत्वादतोऽवच्छेदकतायांसाक्षात्त्वस्यस्वरूपसंबंधाव
च्छिन्नत्वस्यवाविवक्षणीयतयास्वरूपसंबंधरूपावच्छेदकत्वपक्षेशरीरगौरवादितिभावः ॥ **तथासतिनिश्चयत्वाद्य**
**निवेशादिति** ॥ **यद्यप्येतल्लक्षणस्यसर्वमतसाधारण्येनवक्तव्यतयाज्ञानभेदेनविषयिताभेदमते** अप्रामाण्यज्ञानास्कंदितज्ञा

नीयविषयितायाः प्रतिबंधकतानवच्छेदकतयायद्रूपावच्छिन्नविषयितात्वस्य तत्साधारण्यान्मतविशेषेऽसंभवः॥ **एवं** संशयेकोटि
तारव्यविषयितास्वीकर्तृमते अवच्छेद्यावच्छेदकभावापन्नकोटिद्वयविषयितास्वीकर्तृमतेवासंशयीयविषयितायानिश्चयीयविष
यिताभिन्नतयासंशयीयविषयितासाधारणयद्रूपावच्छिन्नविषयितात्वव्यापकत्वस्यप्रतिबंधकतावच्छेदकत्वेऽसत्वेनमतविशेषेऽ
संभववारणायन्वस्वरूपसंबंधरूपावच्छेदकत्वनिवेशपक्षेप्य प्रामाण्यज्ञानाभावविशिष्टत्वसंशयान्यत्वयोर्निवेशावश्यकतया तद
निवेशप्रयुक्तलाघवोपपादनमसंगतमेव॥ **तथापि** मतविशेषाभिप्रायकतयैवलाघवोपपादनमन्यथापुनर्लाघवानवकाशे
पिप्रथमोपस्थितत्वात्स्वरूपसंबंधरूपावच्छेदकत्वमेवकुतोननिवेशितमिति **नन्वित्यादिना** ऽ**शंक्यं मैवमित्यादिना** तन्नि
वेशनिराकरणमित्येवाभिप्रायः कल्पनीयइति **नदोषः**॥ **ननु** संशयेकोटिद्वयप्रकारकज्ञानप्रयोजकसामग्रीद्वयसंवलनप्रयो
ज्येकोटिद्वयप्रकारतानिरूपितविशेष्यताद्वयस्वीकर्तृमते संशयीयवह्न्यभाववद्ध्रदविशेष्यितायावह्न्यभाववद्ध्रदादिनिश्चयसा
धारण्येनैक्येपि स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकाहार्यवह्न्यभाववद्ध्रदादिविषयकज्ञानीयविषयिताभेदोऽनाहार्यतज्ज्ञा ५३

नीयविषयितायामावश्यकएवाहार्यतद्विषयितायाः बाधज्ञानेच्छादिघटितसामग्रीप्रयोज्याया वह्न्यादिनिष्ठप्रकारतानिरूपितत्वाद्बाधज्ञानाभावादिघटितसामग्रीप्रयोज्यायाअनाहार्यतज्ज्ञानीयविषयितायास्तदनिरूपितत्वान्निरुक्तसामग्रीद्वयसंवलनस्यचासंभवादाहार्यज्ञानीयविषयितायाअनाहार्यज्ञानसाधारण्यासंभवेनैक्यायोगादित्याशयेनशंकतेनन्वेति ॥ सामान्यतआहार्यज्ञानसमानाकारकानाहार्यज्ञानाप्रसिध्यभिधानंनसंभवतिन्हृदोवन्हिमानितिबाधज्ञानानंतरमिच्छाजन्यहृदोवह्न्यभाववानित्याहार्यज्ञानस्यकैश्चिदभ्युपगमादतस्ताद्दशेति ॥ वन्हिमान्हृदोवह्न्यभाववानित्याकारकेत्यर्थः ॥ पूर्वंहृदोवन्हिमानितिबाधज्ञानरूपस्यहृदांशेवह्न्यभावधर्मितावच्छेदकतयावन्हिभासककारणस्यसत्वेनिरुक्तरूपमेवाहार्यज्ञानंजायतइत्यभिप्रायः ॥ ननुमतद्वयेव्यापकविषयिताशून्यत्वनिवेशावश्यकतयानिरुक्ताहार्यज्ञानेवन्हित्वावच्छिन्नविषयतानिरूपितहृदत्वावच्छिन्नविषयतानिरूपितसमवायावच्छिन्नविषयतानिरूपितविषयितायाः वह्न्यभावविशिष्टहृदरूपदोषविषयकत्वाव्यापिकायाः सत्वेननिरुक्तस्वभिन्नेत्याद्यव्यापकविषयिताशून्यत्वविशेषणेनैवाहार्यज्ञानव्यावृत्तेरनाहार्यत्वविशेषणंव्यर्थ

मितिच्चेन्न ॥ विषयत्वाभावोविषयत्वभेदोवाविषयतेत्यादौतादात्म्येनसाध्येविषयताविषयत्वाभावोविषयत्वभेदोवाविषयताभिन्नइ
त्याहार्यज्ञानस्यस्वभिन्नेत्याद्यव्यापकविषयिताशून्यस्यवारणायानाहार्यत्वविशेषणस्यावश्यकत्वात् ह्रदोजलमित्यादौतादात्म्येनसाध्येज
लंह्रदोजलभिन्नइत्याहार्यज्ञानेजलत्वस्यस्वरूपतएवभानात्तस्यचयद्रूपावच्छिन्नविषयताविशिष्टेत्यादिनिरुक्ताव्यापकविषयिताशून्य
त्वेनतद्व्यावर्तनायानाहार्यत्वविशेषणमितितुनसत् जलंह्रदोजलभिन्नइत्याहार्यज्ञानस्यजलभिन्नह्रदरूपदोषविषयकत्वाव्यापिकाया
समवायावच्छिन्नविषयतानिरूपितधर्मिविषयतानिरूपितसमवायावच्छिन्नविषयतानिरूपितविषयितात्वेनस्वभिन्नेत्याद्य
व्यापकविषयिताशून्यत्वाभावात् ॥ अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेऽव्यापकविषयिताशून्यत्वनिवेशोपिसंशयान्य
त्वप्रयोजनंप्रागभिहितमेव ॥ तावतापिसंशयान्यत्वाप्रामाण्यज्ञानानास्कंदितत्वयोरनिवेशेनलाघवादिति ॥
ननुस्वरूपसंबंधरूपावच्छेदकत्वनिवेशमतेपिज्ञानेअप्रामाण्यज्ञानानास्कंदितत्वनिवेशआवश्यकोऽन्यथावह्निमद्विशेष्यक
त्वावच्छिन्नवह्न्यभावप्रकारकत्ववद्वह्न्यभाववद्ह्रदज्ञानासमानकालीनह्रदोवह्न्यभाववानित्याकारकस्यस्वांशेऽप्रामाण्यविषय ५४

कबाधज्ञानस्ययाविषयितातस्याअप्रामाण्यज्ञानानास्कंदितह्रदोवह्न्यभाववानितिबाधज्ञानरूपप्रतिबंधकावृत्तित्वेनप्रतिबंधकता
नवच्छेदकत्वाद्ध्रदोवन्हिमानित्यादौबाधाद्यसंग्रहइतिचेन्नैवं ॥एतन्मतेऽप्रामाण्यानवगाहित्वेनैवज्ञानंविशेषणीयंनतुविषयत्वे
कक्षणावच्छिन्नैकात्मवृत्तित्वरूपसामानाधिकरण्योभयसंबंधावच्छिन्नप्रतियोगिताकाप्रामाण्यज्ञानाभाववत्वेनेतिलाघवानपा
यात् ॥ यादृशस्थलेबाधज्ञानादेःस्वभिन्नेनैवाप्रामाण्यग्रहेणास्कंदननियमस्तत्राप्रामाण्यानवगाहित्वस्याप्येतत्पक्षेऽनिवेशाचे
त्यवधेयं ॥ विशिष्टज्ञानस्यप्रतिबंधकतासंपत्तयेजलावच्छेदेनेति ॥ क्लृप्तदोषांतर्भावंनिरस्यतिसत्प्रतिपक्षानात्मकस्ये
ति ॥ तादृशविशिष्टज्ञानस्यजलत्वाद्यवच्छिन्नेजलव्यापकवह्न्यभावसामानाधिकरण्यानवगाहितयावह्न्यभावत्वावच्छिन्नविधे
यताकानुमितिजनकत्वाभावेनतादृशविशिष्टविषयितायास्तादृशानुमितिजनकतानवच्छेदकतयाप्रकृतपक्षतावच्छेदकाव
च्छिन्नेप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदिकासतीविशि
ष्टपक्षसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतानवच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितज

नकतावच्छेदिकायादृशविशिष्टनिरूपितविषयितातादृशत्वरूपसत्प्रतिपक्षत्वस्य विशिष्टेतस्मिन्नसत्वादिति भावः ॥ अवश्यं
निवेशनीयतयेति ॥ अथैवमपिजलावच्छेदेनवह्न्यभाववत्ताघटितवह्न्यभाववज्जलवत्कालीनोह्रदोवह्निमान्धूमादित्यादौज
लवद्वह्न्यभाववज्जलवत्कालीनह्रदत्वावच्छिन्नेऽतिव्याप्तिस्तादृशपक्षेजलवत्तानिश्चयस्यनियमतोजलावच्छेदेनवह्न्यभाववत्ता
निश्चयकालीनतयाविशिष्टपक्षेसाध्यानुमितिंप्रतिविशिष्टपक्षेजलवत्तानिश्चयत्वेनप्रतिबंधकतायामव्यभिचारेणज्ञानविशिष्ट
त्वस्यतादृशप्रतिबंधकतावच्छेदककोटावनिवेशात् ॥ एवमनतिरिक्तवृत्तित्वनिवेशकल्पेविशिष्टद्वयाघटितत्वघटकप्रति
बंधकतायामसंभववारणायज्ञानवैशिष्ट्यावच्छिन्नत्वनिवेशस्यावश्यकतयादर्शितप्रतिबंधकतायाज्ञानवैशिष्ट्यावच्छि
न्नत्वाभावेनविशिष्टद्वयाघटितत्वस्याक्षततयादर्शितस्थलेदर्शितविशिष्टेऽतिप्रसंगोदुर्वारः ॥ अत्रकेचित् ॥ यत्रज
लसामानाधिकरण्येनवह्न्यभावस्यपक्षतावच्छेदकघटकतातत्रवह्न्यभाववज्जलवत्कालीनह्रदविशेष्यकजलवत्तानिश्चयस्य
जलावच्छेदेनवह्न्यभाववत्तानिश्चयकालीनत्वानियमात्तत्रजलावच्छेदेनवह्न्यभाववत्तानिश्चयविशिष्टस्यैवविशिष्टपक्षे ५५

जलादिमत्तानिश्चयस्यविरोधितायाअवश्यंवाच्यतयातथैवयत्रजलावच्छेदेनवह्न्यभावस्यपक्षतावच्छेदकघटकतातत्रापिविशि
ष्टपक्षेजलादिमत्तानिश्चयस्यकार्यानुत्पादकत्वनिर्वाहेऽतिरिक्तप्रतिबंधकत्वकल्पनेप्रयोजनाभावान्नोक्तातिप्रसंगः ॥ नचतत्सा
मानाधिकरण्येनविशिष्टबुद्धौतत्सामानाधिकरण्येनबाधनिश्चयस्येवतत्सामानाधिकरण्येनावच्छेदकधर्मदर्शनस्याप्यविरोधि
तयातदवच्छेदेनैवावच्छेदकधर्मदर्शनंविरोधीतिवाच्यंतच्चसंसर्गांशेधर्मितावच्छेदकव्यापकत्वावगाहितथाचजलसामानाधि
करण्येनवह्न्यभाववत्ताघटितवह्न्यभाववज्जलवत्कालीनहृदत्वव्यापकतातोजलावच्छेदेनवह्न्यभाववत्ताघटिततादृशहृदत्वव्या
पकतायाभेदान्नक्लृप्तप्रतिबंधकत्वेननिर्वाहइतिज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकतांतरमावश्यकमितिवाच्यं ॥ तत्सामाना
धिकरण्येनविशिष्टबुद्धौतत्समानाधिकरण्येनावच्छेदकधर्मवत्तानिश्चयस्यापिप्रतिबंधकतायामथुरानाथैस्तर्कग्रंथेउक्तत्वा
त् ॥ तत्सामानाधिकरण्येनविशिष्टबुद्धौतदवच्छेदेनैवावच्छेदकधर्मदर्शनस्यविरोधित्वेपिप्रकृतेनप्रतिबंधकताभेदः ॥ यतः

प्रतिबंधकतावच्छेदकोटौधर्मितावच्छेदकव्यापकतायाव्यापकतात्वेनैवनिवेशान्नतुधर्मितावच्छेदकव्यापकतात्वेन ॥ एकधर्मावच्छिन्न
विशेष्यकज्ञानेचनधर्मांतरव्यापकतासंसर्गतावच्छेदिकेतिनतद्धर्मव्यापकतात्वेननिवेशावश्यकतेत्याहुस्तदसत् ॥ एवमपिज
लव्यापकवह्न्यभावकालीनह्रदोवह्निमानित्यादावुक्तदिशाजलवद्विशिष्टपक्षनिश्चयस्यज्ञानविशिष्टज्ञानत्वेनविरोधिताकल्प
नेमानाभावेनतादृशजलवद्विशिष्टपक्षेऽतिव्याप्तेर्दुर्वारत्वात् ॥ परेतु स्वनिरूपितविशेष्यतावच्छेदकतावच्छेदकावच्छिन्नप्रकार
ताकत्वसामानाधिकरण्योभय संबंधेनवह्न्यभाववत्तानिश्चयविशिष्टतत्तद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैवतत्तद्धर्मा
वच्छिन्नविशेष्यकवह्न्यादिविशिष्टबुद्धिविरोधितोपेयते ॥ अन्यथाजलवत्वाद्यनेकधर्मभेदेनावच्छेदकधर्मदर्शनानामनंतप्र
तिबंधकतापत्तेस्तथाचोक्तधर्मावच्छिन्नेजलवत्तानिश्चयस्यापिक्लृप्तप्रतिबंधकतयैवकार्यानुत्पादप्रयोजकत्वसंभवान्नतस्य

टिप्पणं अधिकरणनिष्ठावच्छेदकतानिरूपितेत्याद्यभावनिष्ठावच्छेदकतानिरूपकसंयोगनिष्ठसांसर्गिकविषयतानिरूपितजलत्वावच्छिन्नप्रकारताशालिनि
श्चयत्वेनैकंप्रतिबंधकत्वमित्यभिप्रायः * नत्विति ह्रदनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकेत्यादिक्रमेणेत्यर्थः

ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतांतरमुपेयं ॥ जलव्यापकोवह्न्यभाववइतिज्ञानविशिष्टानांजलवान्ह्रदइतिज्ञानानांवह्न्यभावत
वच्छिन्नधर्मिकजलव्यापकताप्रकारकनिश्चयविशिष्टजलतावच्छिन्नप्रकारकनिश्चयत्वेनानुगतेनैवप्रतिबंधकत्वमिति
नोक्तदोषावकाशइतिवदंति ॥ वक्ष्यमाणविशिष्टांतराघटितत्वस्येत्यादि ॥ अत्रनिश्चयविशिष्टांतस्यानुपादानेबा
धाद्यसंग्रहइतितदुपादानं ॥ अथैवमपिप्रथमयादृशपदेनबाधाद्येकदेशस्यद्वितीययादृशपदेनचविशिष्टबाधादेरुपा
दानसंभवाद्बाधादेस्तदुभयघटिततयाऽव्याप्तिर्दुर्वारैव ॥ नचस्वावच्छिन्नविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयता
निरूपितविषयिताव्यापिकाप्रकृतानुमितिप्रतिबंधकतातद्रूपावच्छिन्नविषयकनिश्चयविशिष्टस्वावच्छिन्नविषयकनिश्च
यत्वव्यापिकाभवतिस्वावच्छिन्नविषयकत्वविशिष्टतद्रूपावच्छिन्नविषयतानिरूपितविषयिताशून्यत्वविवक्षणान्नदोषः
॥ तादृशप्रतिबंधकतात्वेव्यापकतावच्छेदकत्वंविवक्षणीयमतोवह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदविषयकज्ञानप्रति
बंधकत्वयोर्विशेषणविशेष्यभावभेदेनभिन्नत्वेऽपिनक्षतिरितिवाच्यं ॥ एवमपिस्वपदेनवह्न्यभाववद्ध्रदत्वस्ययद्रूप

पदेनतस्यैवोपादानसंभवाद्वह्न्यभाववद्ध्रदादेरसंग्रहतादवस्थ्यात् ॥ अभावाप्रतियोगिवह्नेःसाध्यत्वेवह्न्यभाववद्ध्रदादा
वव्याप्तेश्च ॥ वह्न्यभावत्वविशिष्टविषयकत्वस्यापिविशिष्टसाध्यवत्ताग्रहप्रतिबंधकताव्याप्यत्वात् ॥ नचयादृशाविशि
ष्टाविषयकयादृशाविशिष्टविषयकनिश्चयविशिष्टयादृशाविशिष्टविषयकनिश्चयत्वंप्रकृतानुमितिप्रतिबंधकतानतिरि
क्तवृत्तितादृशाविशिष्टद्वयाघटितत्वंनिवेशनीयंतथासतिप्रथमयादृशाविशिष्टपदेनवह्न्यभावत्ववह्न्यभाववद्ध्रदत्वादिवि
शिष्टपरिग्रहेद्वितीययादृशाविशिष्टपदेनवह्न्यभाववद्ध्रदत्वादिविशिष्टंनोपादातुंशक्यंतद्विषयकनिश्चयस्यवह्न्यभावत्वादि
विशिष्टविषयकत्वनियमात् ॥ यद्वायादृशाविशिष्टविषयकनिश्चयत्वंज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकतानतिरिक्तवृत्ति
तादृशाविशिष्टाघटितत्वंसत्यंतार्थःज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकतालाभायैवनिश्चयविशिष्टांतोपादानमितिनो
क्तदोषइतिवाच्यं ॥ एवमपिह्रदोवन्हिमान्वह्न्यभाववज्जलादिमत्कालीनजलाभावादित्यादौतादृशजलवद्ध्रदरूपासि
द्धावव्याप्तेर्दुर्वारत्वात् ॥ वह्न्यभाववज्जलादिमत्वावच्छिन्नविषयकनिश्चयविशिष्टस्यतादृशजलादिमत्वावच्छिन्नाविषय ५७

कजलवद्धूदत्वावच्छिन्नविषयकनिश्चयत्वस्य प्रकृतानुमितिप्रतिबंधकतानतिरिक्तवृत्तितयातादृशविशिष्टद्वयाघटितत्वस्यता
दृशासिद्धिरूपविशिष्टविषयकनिश्चयत्वस्यज्ञानवैशिष्ट्यावच्छिन्नसाध्यवत्ताज्ञानप्रतिबंधकतानतिरिक्तवृत्तितयातादृशविशि
ष्टाघटितत्वस्यचतादृशासिद्धावसत्वात्॥ नच प्रकृतानुमितित्वव्यापकयद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतान
तिरिक्तवृत्तियादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वंतादृशविशिष्टद्वयाघटितत्वेसति
प्रकृतानुमितित्वव्यापकतद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतानतिरिक्तवृत्तिविषयितानिरूपकत्वस्यप्रकृ
तानुमितित्वव्यापकस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतानतिरिक्तवृत्तिविषयितानिरूपकत्वप्रकृतानुमि
तित्वव्यापकस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतानतिरिक्तवृत्तियादृशविशिष्टविषयकनिश्चयविशिष्टयादृश
विशिष्टविषयकनिश्चयत्वंतादृशविशिष्टद्वयविषयिताशून्यप्रतीतिविषयत्वोभयसंबंधेनयत्किंचिद्धर्मविशिष्टत्वपर्य
वसितस्यविवक्षणान्नदोषः॥ हेतुमत्ताज्ञानत्वरूपयत्किंचिद्धर्मविशिष्टत्वस्योक्तस्वरूपासिद्धौसत्वात्तत्संग्रहइतिवा

च्यं ॥ एवमपिविशिष्टांतराघटितत्वरूपविशेष्यदलवैयर्थ्यापत्तेर्दुर्वारत्वात् ॥ प्रमेयत्वविशिष्टव्यभिचारविषयकनि
श्चयविशिष्टव्यभिचारत्वविशिष्टविषयकनिश्चयत्वस्यानुमितिप्रतिबंधकतानतिरिक्तवृत्तितया तादृशविशिष्टद्वया
घटितत्वाभावादेव प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्त्यनवकाशात् ॥ अत्रकेचित् ॥ यादृशविशिष्टविषयकनिश्चयविशिष्टया
दृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबंधकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्नप्रकृतानुमितिप्रतिबं
धकतानवच्छेदकतादृशविशिष्टविषयिताविशिष्टतादृशविशिष्टविषयिताशून्यप्रतीतिविषयत्वरूपस्यविशिष्टद्व
याघटितत्वस्यविवक्षितत्वात् ॥ निरुक्तासिद्धिज्ञानीयवह्न्यभाववज्जलावच्छिन्नविषयित्वादिकंतुज्ञानवैशिष्ट्यान
वच्छिन्नाश्रयासिद्धिज्ञानप्रतिबंधकतायामवच्छेदकमेवेतितादृशंविषयित्वंजलवान्वह्न्यभाववान्जलवांश्च ह्रद इतिज्ञा
नीयविषयित्वमेवतच्छून्यत्वंचविशिष्टाश्रयासिद्धिज्ञानेऽक्षतमितिनासिध्यादावव्याप्तिः ॥ प्रमेयत्वविशिष्टव्यभिचा
रविषयकत्वव्यभिचारविषयकत्वयोर्ज्ञानवैशिष्ट्यानवच्छिन्नव्यभिचारज्ञाननिष्ठप्रतिबंधकतानवच्छेदकत्वविरहेण

तादृशविशिष्टद्व्यविषयिताशून्यप्रतीतिविषयत्वस्यप्रमेयत्वविशिष्टव्यभिचारेसत्वात्तत्रातिव्याप्तिवारणायविशिष्टांतराघ
टितत्वघटकविशेष्यदलसार्थकता ॥ ननु ह्रदोवन्हिमान्धूमादित्यादौ वह्न्यभाववद्ध्रदत्वविशिष्टविषयकनिश्चयविशिष्टवह्न्य
भाववद्ध्रदत्वविशिष्टविषयकनिश्चयत्वमपिप्रकृतानुमितिप्रतिबंधकतानतिरिक्तवृत्तिभवतिज्ञानवैशिष्ट्यानवच्छिन्न
प्रकृतानुमितिप्रतिबंधकतानवच्छेदकतादृशविशिष्टद्व्यविषयित्वाप्रसिध्याबाधाद्यसंग्रहः ॥ यत्किंचिद्विशिष्टद्व्या
घटितत्वमादाय वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नेऽतिप्रसंगवारणाय यद्यद्रूपावच्छिन्नविषयकनिश्च
यविशिष्टयद्यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबंधकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्नप्रति
बंधकतानवच्छेदकतत्तद्रूपावच्छिन्नविषयिताविशिष्टतत्तद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयत्वस्यावश्यंवक्त
व्यत्वात् ॥ मैवं यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमित्यत्रापिज्ञानवैशिष्ट्यानवच्छि
न्नप्रकृतानुमितिप्रतिबंधकतानवच्छेदकयादृशविशिष्टविषयकत्वस्यनिवेशनीयत्वात् ॥ वह्न्यभाववद्ध्रदत्वावच्छिन्नवि

षयकत्वयोरतादृशत्वाद्यादृशविशिष्टपदेनवह्न्यभावविशिष्टह्रदोपादानायोगात् ॥ नचतर्ह्यादावेवतद्विशेषणमुपादेयं
परत्रतन्निवेशेप्रयोजनाभावइतिशंक्यं ॥ परत्रतदनिवेशेवह्न्यभाववज्जलादिमद्वृत्तिजलाभाववद्ध्रदपक्षकवह्निसाध्य
कस्थलेतादृशजलवद्ध्रदरूपासिद्धावव्याप्तिर्ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतानवच्छेदकज्ञानद्वयीयवह्न्यभाववज्जला
वच्छिन्नविषयकत्वाश्रयनिश्चयविशिष्टतादृशजलवद्ध्रदत्वावच्छिन्नविषयकत्वविशिष्टनिश्चयत्वमनुमितिप्रतिबंधक
तानतिरिक्तवृत्तितद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यप्रतीतिविषयत्वस्यतस्यामभावात् ॥
यद्यपिज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकताशून्यवृत्तियादृशविशिष्टविषयिताकनिश्चयत्वंप्रकृतानुमितिप्रतिबंधक
तानतिरिक्तवृत्तितादृशविशिष्टविषयिताशून्यप्रतीतिविषयत्वमेवलाघवान्निवेशयितुमुचितंतथाप्युत्पत्तिकाली
नघटोगंधवान्पृथिवीत्वादित्यादौतादृशविशिष्टाप्रसिद्धिः ॥ प्रतियोगिवैयधिकरण्यघटितगंधाभावनिरूपितव्याप्तिवि
शिष्टपृथिवीत्वादिविशिष्टघटादेः प्रसिद्धत्वेपितज्ज्ञानस्यप्रकृतानुमित्यप्रतिबंधकत्वात्प्रतियोगिवैयधिकरण्याघटितगंधा ५९

भावानिरूपितव्याप्तेः पृथिवीत्वादावभावादतो विशिष्टद्वयाघटितत्वनिवेशः ॥ ननु निरुक्तविशिष्टद्वयाघटितत्वनिवेशेप्युत्पत्तिकाली
नघटो गंधवान्पृथिवीत्वादित्यादावुक्तविशिष्टद्वयविषयित्वाप्रसिद्धिर्दुर्वारैव ॥ उक्तरीत्या गंधभाववत्पृथिवीत्वविशिष्टपृथिवी
त्वविशिष्टघटादिरूपविशिष्टद्वयविषयितयोरसत्वादिति चेन्नैवं ॥ यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषय
ताकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयताकनिश्चयत्वप्रकृतानुमितिप्रतिबंधकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्न
प्रकृतानुमितिप्रतिबंधकतानवच्छेदकतद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविष
यिताशून्यप्रतीतिविषयत्वमिति रीत्या विशिष्टद्वयाघटितत्वनिवेशात् ॥ पृथिवीत्वव्यापको गंधाभावः पृथिवीत्ववान्घट इत्या
दिज्ञानीयपृथिवीत्वव्यापकत्वत्वावच्छिन्नविषयतानिरूपितगंधाभावत्वावच्छिन्नविषयित्वपृथिवीत्वविशिष्टघटत्वावच्छि
न्नविषयित्वयोस्तादृशतयातच्छून्यप्रतीतिविषयत्वस्य दर्शितस्थलीयबाधे सत्त्वाल्लक्षणसमन्वयसंभवादिति दिक् ॥ अथ
यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयिताशालिनिश्चयत्वमनुमितिप्रतिबंधकतानिरूपितस्वरूपसं

बंधरूपावच्छेदकत्ववत्तादृशविशिष्टद्वयाघटितत्वमेवनिवेश्यं ॥ नचैवंजलंवन्हिमज्जलादित्यादौवन्हिव्यापकीभूताभावप्रति
योगिजलरूपासाधारण्येऽव्याप्तिः ॥ तस्यप्रतियोगितावान्वह्न्यभाववानितिनिश्चयविशिष्टस्यजलंप्रतियोगितावदितिनिश्चयस्य
प्रकृतानुमितिविरोधितयावन्हित्वावच्छिन्नविषयताकोयःप्रतियोगितावान्वह्न्यभाववानितिनिश्चयस्तद्विशिष्टप्रतियोगिताव
ज्जलत्वावच्छिन्नविषयिताकनिश्चयत्वस्यतत्रावच्छेदकतयावन्हित्वविशिष्टप्रतियोगितावज्जलत्वादिविशिष्टरूपविशिष्टद्व
यघटितत्वादितिवाच्यं ॥ जातित्वादिनाजलत्वह्रदत्वावगाहीयःजातिमद्वान्वह्न्यभाववान्जातिमांश्चह्रदइतिनिश्चयस्तत्सा
धारणस्यतादृशविशिष्टनिश्चयत्वस्यप्रतिबंधकतानतिरिक्तवृत्तित्वविरहेणतादृशविशिष्टद्वयाप्रसिद्धिवारणायनिश्चय
द्वयेअव्यापकविषयिताशून्यत्वस्यावश्यकतयावन्हित्वावच्छिन्नविषयकत्वाव्यापिकायाप्रतियोगितावद्वह्न्यभावावच्छिन्नवि
षयितातच्छून्यप्रतियोगितावज्जलत्वावच्छिन्नविषयताकनिश्चयत्वस्यतादृशावच्छेदकत्वविरहेणदर्शितविशिष्टद्वयस्य
निरुक्तविशिष्टद्वयानात्मकत्वेनासाधारण्याव्याप्तिविरहात् ॥ यत्तुरूपत्ववद्गंधत्ववत्संयोगपक्षकेगंधत्वाभावव्याप्यसंयोग ६०

वत्प्रमेयसाध्यकेरूपत्वाभावव्याप्यजातित्ववद्गुणत्वहेतुकेगंधत्वाभावव्याप्यसंयोगवत्प्रमेयव्यापकीभूताभावप्रतियोगिरूपत्वाभाव
व्याप्यजातित्ववद्गुणत्वरूपासाधारण्येऽव्याप्तिस्तत्रगंधत्वाभावव्याप्यः संयोगः संयोगवान्संयोगइतिज्ञानद्वयस्यगंधत्वप्रकारकसं
योगविशेष्यकज्ञानंप्रतिप्रतिबंधकतयागंधत्वाभावव्याप्यसंयोगत्वावच्छिन्नविषयितायाः स्वरूपसंबंधरूपप्रतिबंधकतावच्छेदक
त्वादेवंरूपत्वाभावव्याप्यंजातित्वंजातित्ववान्संयोगइतिज्ञानद्वयस्यरूपत्वप्रकारकबुद्धिंप्रतिप्रतिबंधकतयारूपत्वाभावव्याप्य
जातित्वावच्छिन्नविषयितायाअपिस्वरूपसंबंधरूपावच्छेदकत्वाद्गंधत्वाभावव्याप्यसंयोगत्वावच्छिन्नविषयिताविशिष्टरूप
त्वाभावव्याप्यजातित्वावच्छिन्नविषयितायास्तादृशजातित्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यंयज्जातित्ववान्संयो
गइतिज्ञानविशिष्टंरूपत्वाभावव्याप्यंजातित्वमितिज्ञानंतदीयायास्तादृशजातित्वावच्छिन्नविषयिताविशिष्टतादृशसंयोगत्वाव
च्छिन्नविषयितायावातादृशसंयोगत्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यंयत्संयोगवान्संयोगइतिज्ञानविशिष्टंगंधत्वा
भावव्याप्यः संयोगइतिज्ञानंतदीयायाः प्रकृतानुमितिप्रतिबंधकतानिरूपितस्वरूपसंबंधरूपावच्छेदकत्वेनतादृशसंयोगत्वाव

वच्छिन्नविषयिताविशिष्टतादृशजातित्वावच्छिन्नविषयित्वाभावस्यतादृशजातित्वावच्छिन्नविषयिताविशिष्टतादृशसंयोग
त्वावच्छिन्नविषयित्वाभावस्यचनिरुक्तस्थलीयासाधारण्यज्ञानेऽभावादतोऽनतिरिक्तवृत्तित्वनिवेशस्तथासतिकेवलगंधत्वा
भावव्याप्यःसंयोगःरूपत्वाभावव्याप्यंजातित्वमित्याकारकज्ञानयोरपितादृशविशिष्टविषयिताविशिष्टतादृशविशिष्टविषयि
तासत्वेनतत्रप्रतिबंधकतायाअसत्वेननतादृशविषयित्वमनतिरिक्तवृत्तित्वरूपावच्छेदकत्ववदित्यन्यदेवतादृशविशिष्टद्वय
विषयित्वंतच्छून्यत्वंचासाधारण्यज्ञानेऽस्तीतिलक्षणसमन्वयइति॥ तन्न॥ अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेपिगगन
वज्जलंगगनाभावव्याप्यप्रतियोगित्ववद्वह्निमज्जलादित्यादौगगनाभावव्याप्यप्रतियोगित्ववद्वह्निव्यापकीभूताभावप्रतियोगि
जलरूपासाधारण्येऽव्याप्तिर्दुर्वारातत्रगगनाभावव्याप्यंप्रतियोगित्वंप्रतियोगित्ववज्जलमितिज्ञानद्वयस्यप्रतिबंधकत्वेनगग
नाभावव्याप्यप्रतियोगित्वत्वावच्छिन्नविषयताकनिश्चयविशिष्टप्रतियोगित्ववज्जलत्वावच्छिन्नविषयताकनिश्चयत्वंप्रकृता
नुमितिप्रतिबंधकतानतिरिक्तवृत्तिभवतितद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यत्वस्यासाधारण्यज्ञानेऽस ६१

त्वादतोऽसाधारण्यविषयताबहिर्भूतत्वंविशिष्टद्वयविषयतायामवश्यंनिवेशनीयंतेनैवदर्शितासाधारण्याव्याप्तिवारणसंभवात् ॥
ह्रदोवह्निमान्वह्निमज्जलवत्कालीनजलाभावादित्यादौवह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिवारणायतादृशविशि
ष्टद्वयविषयतायांज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतानवच्छेदकत्वमनिवेश्याश्रयासिद्धिघटकदलद्वयविषयताभेदएवनिवेश्य
स्तथाचनोक्तासाधारण्येऽव्याप्तिरित्यसाधारण्यविषयताबहिर्भूतत्वनिवेशप्रयोजनाभावइति नाशंकनीयंदर्शितस्थलेदर्शि
तविशिष्टस्यवह्न्यभाववज्जलवदात्मकविशिष्टांतराघटितत्वविरहेणैववारणात् ॥ एतेनजलवत्समानकालीनपर्वतोजलवत्स
मानकालीनपर्वतकालीनवह्निमान्जलादित्यादौजलवत्समानकालीनपर्वतकालीनवह्निव्यापकीभूताभावप्रतियोगिजलरूपा
साधारण्येऽव्याप्तिस्तत्रतादृशपक्षेजलवत्तानिश्चयविशिष्टासाधारण्यज्ञानस्यानुमितिप्रतिबंधकतयाजलत्वावच्छिन्नप्रका
रतायास्तादृशपक्षरूपैकविशिष्टविषयकत्वाव्यापकत्वाभावेनतादृशविषयताभृन्योयःजलवान्तादृशपक्षइतिनिश्चयस्तद्वि
शिष्टासाधारण्यरूपापरविशिष्टविषयकनिश्चयत्वस्यस्वरूपसंबंधरूपावच्छेदकत्वेनतादृशपक्षरूपतादृशासाधारण्यरूपवि

शिष्टद्वयघटितत्वादतोऽनतिरिक्तवृत्तित्वनिवेशस्तथासतिजलवत्तानिश्चयासमानकालीनेपिनिश्चयेतादृशानिश्चयत्वसत्वा
त्तत्रप्रतिबंधकतायाअभावेननाव्याप्तिरितिनिरस्तं ॥ यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतेत्यादिक्रमेणाव्यापक
विषयिताशून्यत्वनिवेशावश्यकतयाजलत्वावच्छिन्नप्रकारतानिरूपितजलवत्समानकालीनपर्वतत्वावच्छिन्नविषयतायास्ता
दृशापर्वतत्वविशिष्टविषयकत्वाव्यापकत्वेनतच्छून्यासाधारण्यविषयकनिश्चयत्वस्यस्वरूपसंबंधरूपावच्छेदकत्वाभावेनद
र्शितविशिष्टद्वयमादायाव्याप्त्यप्रसक्तेश्च । उक्तरीत्यातादृशविशिष्टद्वयविषयितायामसाधारण्यविषयताबहिर्भूतत्वनिवेशाव
श्यकतयापृथिवीभेदवान्घटत्वादित्यादौपृथिवीभेदव्यापकीभूताभावप्रतियोगिघटत्वरूपासाधारण्याव्याप्तिरतोऽनतिरिक्त
वृत्तित्वनिवेशआवश्यकः ॥ अन्यथेयंपृथिवीघटोयमितिज्ञानयोः स्वरूपतःपृथिवीत्वघटत्वावगाहिनोरपियद्रूपावच्छिन्न
विषयताविशिष्टयद्रूपावच्छिन्नविषयतेत्याद्यव्यापकविषयिताशून्ययोरवच्छेदकधर्मदर्शनविधयाप्रतिबंधकत्वेनपृथि
वीत्वविशिष्टविषयकोयः इयंपृथिवीतिनिश्चयस्तद्विशिष्टोयः घटत्वविशिष्टविषयकः घटोयमितिनिश्चयस्तद्वृत्तिनिश्चयत्व ६२

स्यानुमितिप्रतिबंधकतायांस्वरूपसंबंधरूपावच्छेदकत्वेनपृथिवीत्वविशिष्टघटत्वविशिष्टरूपतादृशविशिष्टद्वयघटितत्वा
दितिचकेषांचिदुक्तिःपरास्ता ॥ इयंपृथिवीघटोयमितिज्ञानयोर्घटत्वविशिष्टविषयकत्वाव्यापिकायासमवायावच्छिन्नविषय
तानिरूपितघटनिष्ठविषयतानिरूपितस्वरूपावच्छिन्नइदंत्वनिष्ठविषयतानिरूपितविषयितायाश्चपृथिवीत्वविशिष्टविष
यकत्वाव्यापिकासमवायावच्छिन्नविषयतानिरूपितपृथिवीनिष्ठविषयतानिरूपितस्वरूपावच्छिन्नइदंत्वनिष्ठविषयतानि
रूपितविषयिताप्रत्येकंतद्विशिष्टतयास्वभिन्नेत्याद्यव्यापकविषयिताशून्यत्वविरहेणघटत्व विशिष्टपृथिवीत्वविशिष्टयो
स्तादृशविशिष्टद्वयानात्मकत्वात् ॥ अत्राहुः ॥ अनुमितिग्रंथे अनुमितिंप्रतियत्रपरामर्शस्यसर्वांशेप्रमात्वनियमस्तत्रसा
ध्य व्याप्यहेतुमत्पक्षवज्ज्ञानत्वेनकारणतायाउक्तत्वात्तुल्ययुक्त्यायादृशविशिष्टस्थलेभ्रमात्मकंज्ञानंनकस्यापिजातंतत्राः
वच्छेदकधर्मदर्शनविधयातादृशज्ञानस्यविशिष्टवज्ज्ञानत्वेनप्रतिबंधकत्वंनतुनिरूप्यनिरूपकभावापन्नविषयिताशालिज्ञा
नत्वेनप्रयोजनविरहात्तथाच्चतादृशविशिष्टज्ञानीयविषयितायांस्वरूपसंबंधरूपावच्छेदकत्वविरहादन्यदेवतादृशंवि

षयिताद्वयंतच्छून्यत्वस्यतादृशविशिष्टज्ञानेसत्वात्तादृशविशिष्टेऽतिव्याप्तिरतोऽनतिरिक्तवृत्तित्वनिवेशनं ॥ तथासति
विशिष्टस्ययत्रावच्छेदकत्वंतत्रापिविशिष्टविषयितायाअनतिरिक्तवृत्तित्वसत्वान्नक्षतिः ॥ नचतुल्ययुक्त्यातादृशविशि
ष्टद्वयंयत्रासिद्धिघटकंतत्रज्ञानवैशिष्ट्यानवच्छिन्नासिद्धिज्ञाननिष्ठप्रतिबंधकतानवच्छेदकतादृशविशिष्टद्वयविषयिताशू
न्यप्रतीतिविषयत्वस्यतादृशासिद्ध्यवभावेनाव्याप्तिरनतिरिक्तवृत्तित्वनिवेशेपिदुर्वारितिवाच्यं ॥ यद्विषयकत्वेनेत्यादिलक्ष
णमनाहार्याप्रामाण्यज्ञानानास्कंदितनिश्चयीयविषयितासंबधावच्छिन्नयद्रूपावच्छिन्नावच्छेदकताकभेदानुयोगिताव
च्छेदकभेदप्रतियोगितावच्छेदिकाप्रकृतानुमितिप्रतिबंधकतातद्रूपावच्छिन्नत्वमितिरीत्याअनतिरिक्तवृत्तित्वकल्पेपरि
ष्करणीयंतत्रयद्रूपावच्छिन्नेत्यत्रयद्रूपेज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकताभावावच्छिन्नानुयोगिताकभेदप्रतियोगि
तावच्छेदकतापर्याप्त्यवच्छेदकान्योयःप्रकृतानुमितिप्रतिबंधकत्वाभावावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेद
कतापर्याप्त्यवच्छेदकोधर्मस्तदन्यत्वंदेयं ॥ तथाचनवह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिस्तादृशह्रदत्वेज्ञान ६३

वैशिष्ट्यानवच्छिन्नप्रकृतानुमितिप्रतिबंधकत्वाभावावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकान्यत्वस्य प्रकृतानुमितिप्रतिबंधकत्वाभावावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वस्य च सत्वेन तदुभयभिन्नत्वाभावात्तस्य यद्रूपपदेनोपादानासंभवात् ॥ इत्थं च तादृशाहृदात्मकस्वरूपासिद्धौ नाव्याप्तिस्तादृशासिद्धिज्ञानस्य विशिष्टज्ञानत्वेनैव प्रतिबंधकतया तादृशासिद्धितावच्छेदकज्ञानत्वे वैशिष्ट्यानवच्छिन्नप्रतिबंधकत्वाभावावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकत्वसत्वादुक्तविशेषणवानन्य एव धर्मस्तदन्यत्वस्यासिद्धितावच्छेदके सत्वात्तस्य यद्रूपपदेन ग्रहणसंभवादिति ध्येयं ॥ अथ प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ने वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदे चातिव्याप्तिवारणाय जातिमान्हृदो वह्न्यभाववानिति ज्ञानमादायासंभववारणाय च स्वानवच्छेदकविषयिताशून्यत्वं ज्ञाने विशेषणं देयं ॥ स्वं प्रकृतानुमितिप्रतिबंधकता ॥ तथा च प्रमेयत्वविशिष्टव्यभिचारविषयकज्ञाने तादृशप्रमेयत्वविषयितायास्तादृशविशिष्टहृदविषयकज्ञाने तादृशवृत्तित्वविषयितायाजातिमान्वह्न्यभाववानित्यादिज्ञाने च तादृशजातित्वावच्छिन्नविषयितायाः सत्वेन निरुक्तज्ञाना

नांतादृशाविषयिताशून्यत्वाभावेनैवदोषवारणेविशिष्टांतराघटितत्वस्यविशिष्टद्वयाघटितत्वस्याव्यापकविषयिताशून्यत्व
स्यचवैयर्थ्यं॥ स्वानवच्छेदकविषयिताशून्यज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकंस्वंतत्वस्यैवलक्षणत्वात्तत्र
चयादृशादोषेलक्षणसमन्वयश्चिकीर्षितस्तादृशादोषज्ञाननिष्ठप्रतिबंधकतायाएवस्वपदेनोपादेयतयाप्रमेयत्वाभाववद्वह्नि
कालीनपर्वतोधूमवान्वन्हेरित्यत्रप्रमेयत्वविषयितायामाश्रयासिद्धिज्ञानप्रतिबंधकतावच्छेदकत्वेपिनप्रमेयत्वविशिष्टव्य
भिचारेऽतिव्याप्तिः॥ नचधर्मितावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतायाःप्रकारतानिरूपितधर्मितावच्छेदकावच्छि
न्नविशेष्यतापेक्षयाभिन्नत्वमतेधर्मितावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यतायाःप्रतिबंधकतानवच्छेदकत्वेनतच्छून्यत्व
स्यकस्मिन्नपिदोषज्ञानेऽभावादसंभवइतिवाच्यं॥ स्वानवच्छेदकेत्यनेनस्वावच्छेदकत्वस्वावच्छेदकविषयत्वावच्छिन्न
त्वान्यतरसंबंधेनस्वविशिष्टान्यत्वस्यैवविवक्षितत्वात्तादृशविशेष्यतयोर्भेदमतेतयोरवच्छेद्यावच्छेदकभावस्वीकारा
न्नदोषइतिचेन्नैवं॥ ह्रदोवन्हिमान्धूमादित्यादौसामानाधिकरण्येनसाध्यतायामवच्छेदकावच्छेदेनबाधाव्याप्तेस्तादृश 

बाधज्ञानप्रतिबंधकतायांह्रदत्वव्यापकत्वविशिष्टस्वरूपसंबंधेनवह्न्यभावप्रकारकत्वस्यैवावच्छेदकतयातदनवच्छेदकताद्दशासं
बंधेनवह्न्यभावविशिष्टह्रदविषयिताशून्यत्वस्यताद्दशबाधज्ञानेऽसत्वात् ॥ यदिचसव्यभिचारेगदाधरैर्वक्ष्यमाणरीत्याह्रदत्वव्या
पकवह्न्यभावस्यैवतत्रदोषत्वमित्युच्यतेतदाप्यनुमितिप्रतिबंधकतानवच्छेदकविषयिताशून्यत्वंनैकदेशज्ञानस्यापितुवह्न्य
भाववद्ध्रदविषयकज्ञानस्यैवतद्धृत्तित्वविशिष्टवह्न्यभावत्वाद्यवच्छिन्नविषयितायाः प्रतिबंधकतानतिरिक्तवृत्तित्वादेकदेश
वह्न्यभावत्वाद्यवच्छिन्नेऽतिव्याप्तिर्दुर्वारा ॥ एवंघटोऽवृत्तिरित्यत्रघटावच्छिन्नरूपबाधेऽव्याप्तिर्घटेवृत्तित्वसामान्याभावबुद्धिंप्रति
घटत्वावच्छिन्नप्रकारताकज्ञानत्वेनैवप्रतिबंधकतयाघटावच्छिन्नविशेष्यतायाःप्रतिबंधकतानवच्छेदकत्वेनघटवानितिप्र
तिबंधकज्ञानस्यतच्छून्यत्वाभावात् ॥ अथवह्न्यभाववज्जलादिमद्धृत्तिजलवद्ध्रदेतिप्रसंगवारणायप्रमेयत्वविशिष्टव्यभिचारेऽ
तिप्रसंगवारणायजातिमान्वह्न्यभाववानित्यादिज्ञानमादायासंभववारणायचस्वाव्यापकप्रतिबंधकताशून्यत्वमेवज्ञाने
विशेषणंदेयं ॥ स्वंप्रकृतानुमितिप्रतिबंधकता ॥ इत्थंचवह्न्यभाववज्जलादिमद्धृत्तिजलवान्ह्रदइतिज्ञानस्यनताद्दशप्रतिबं

धकताशून्यत्वंजलवान्वह्न्यभाववान्जलवांश्चह्रदइतिज्ञानद्वयनिष्ठजलवद्ध्रदविषयकनिश्चयविशिष्टवह्न्यभाववज्जलावच्छि
न्नविषयकनिश्चयत्वावच्छिन्नप्रतिबंधकतायावह्न्यभाववज्जलावच्छिन्नविषयकनिश्चयविशिष्टजलवद्ध्रदविषयकनिश्चयत्वाव
च्छिन्नप्रतिबंधकतायाश्चपरस्परमव्यापकत्वेनतादृशाविशिष्टज्ञानेतादृशप्रतिबंधकताद्वयसत्वात् ॥ धूमाभाववद्वृत्तिर्वन्हिःप्रमे
यइतिज्ञानेचप्रमेयत्वाभाववान्वन्हिरित्यादिज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबंधकतायाः प्रकृतानुमितिप्रतिबंधकत्वाव्या
पिकायाःसत्वान्नतदादायप्रमेयत्वविशिष्टव्यभिचारेऽतिप्रसंगः ॥ जातिमान्वह्न्यभाववानितिज्ञानेतादृश्याःजातिमान्वन्हिमा
नितिज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबंधकतायाःसत्वान्नतादृशज्ञानस्यतच्छून्यत्वं ॥ नचस्वपदस्यतत्तद्व्यक्तिपरत्वेना
ननुगमाद्बाधादिज्ञानप्रतिबंधकतानांपरस्परमव्यापकत्वेनदोषज्ञानेतच्छून्यत्वाभावात्तेषामसंग्रहइतिवाच्यं ॥ समाना
धिकरणभेदप्रतियोगितावच्छेदकत्वसंबंधावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतिबंधकत्वनिष्ठप्रतियोगिताकात्यंताभाववत्व
संबंधेनप्रकृतानुमितिप्रतिबंधकताविशिष्टत्वस्यस्वाव्यापकप्रतिबंधकताशून्यत्वसंबंधेनप्रकृतानुमितिबंधकताविशिष्टत्वस्य ६५

वास्वाव्यापकप्रतिबंधकताशून्यत्वमित्यनेनविवक्षितत्वान्नदोषः वह्न्यभाववद्ध्रदविषयकत्वाद्यवच्छिन्नप्रतिबंधकत्वविशिष्टत्वस्यै
वनिरुक्तसंबंधेनबाधादिज्ञानेसत्वादितिचेन्नैवं ॥ धूमव्यभिचारिवन्हिर्धूमवान्वन्हेरित्यादौयत्रप्रमेयत्वविशिष्टधूमव्यभिचारि
वन्हिविषयकज्ञानस्यपूर्वपरतोवानियमेनप्रमेयत्ववान्धूमाभाववानितिज्ञानंसंभवतितत्रप्रमेयत्वविशिष्टधूमव्यभिचारिवान्हि
विषयकज्ञानस्यज्ञानवैशिष्ट्यावच्छिन्नसाध्यवत्ताज्ञानप्रतिबंधकत्वाव्यापकप्रतिबंधकताशून्यत्वेनतद्विषयप्रमेयत्वविशि
ष्टव्यभिचारेःतिव्याप्तिवारणायविशिष्टांतराघटितत्वविशेषणावश्यकतावारणायस्वाव्यापकप्रतिबंधकताशून्यत्वविशे
षणेस्वपदेनज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतायाएवोपादेयतयाह्रदोवह्निमान्धूमादित्यादौयत्रवह्न्यभाववान्धूमाभाववानि
तिज्ञानस्यपूर्वपरतोवावह्न्यभावविशिष्टह्रदादिविषयकज्ञानंसंभवतिनान्यदा ॥ अन्यदातुवन्हित्वेनगुंजापुंजावगाह्यभा
वत्वेनघटावगाहिवह्न्यभाववान्ह्रदइतिभ्रमात्मकमेवतत्रज्ञानवैशिष्ट्यानवच्छिन्नायावह्न्यभावविशिष्टह्रदादिरूपबाध
विषयकज्ञानीयाभ्रमप्रमासाधारणप्रतिबंधकतातद्व्यापिकायाह्रदधर्मिकधूमप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यताति

रूपितावह्न्यभावावच्छेदेनधूमाभावप्रकारकनिश्चयविशिष्टह्रदधर्मिकवह्न्यभावप्रकारकनिश्चयत्वावच्छिन्नाप्रतिबंध
कतातस्यास्तादृशविशिष्टज्ञानेसत्वात्तादृशभ्रमात्मकज्ञानेतादृशप्रतिबंधकताशून्यत्वसत्वेपितद्वृत्तित्वविशिष्टबाधविष
यकत्वाप्रसिध्याबाधेऽव्याप्तिः॥ यद्दिचधूमव्यभिचारीवन्हिर्धूमवान्वन्हेरित्यादौपक्षेसाध्यव्याप्यवत्ताज्ञानस्याहार्यत्वनि
यमेनप्रकृतानुमित्यप्रसिध्यैवनतत्रप्रमेयत्वविशिष्टव्यभिचारेतिव्याप्तिरित्यक्तविशेषणेस्वपदेनानुमितिप्रतिबंधकता
मात्रस्यैवोपादेयतयोक्तस्थलेज्ञानवैशिष्ट्यावच्छिन्नहेतुमत्ताग्रहप्रतिबंधकत्वाव्यापकप्रतिबंधकताशून्यत्वस्योक्तप्रमात्मकबाधज्ञा
नेसत्वान्नतत्राव्याप्तिरित्युच्यतेतदापियत्रवह्न्यभाववान्धूमाभाववान्वह्न्यभाववांश्चह्रदइतिसमूहालंबनमेववह्न्यभाववद्ध्र
दांशेप्रमात्मकंअन्यदातुभ्रमात्मकंदोषज्ञानंतत्रोक्तरीत्याऽव्याप्तेरपरिहारात् एवंभ्रमप्रमात्मकंदोषज्ञानंदोषैकदेशेनियमेनप्रमेय
त्वाद्यवगाह्येवतत्रतदनवगाहिभ्रमात्मकमेवजातंतत्रस्वपदेनप्रतिबंधकतामात्रोपादानेप्युक्तरीत्याऽव्याप्तिरपरिहार्यैव॥नच
व्यापकत्वशरीरानिविष्टस्वाधिकरणंभ्रमभिन्नत्वेनविशेषणीयंतथाचतादृशज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकतायानबाध ६६

ज्ञानप्रतिबंधकत्वाव्यापकत्वमपितु घटादिज्ञाननिष्ठप्रतिबंधकताया एवतच्छून्यतादृशविशिष्टज्ञानमादायैवबाधेल
क्षणसमन्वयइतिवाच्यं ॥ एवमपिप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षविषयकज्ञाननिष्ठप्रति
बंधकतयोः परस्परमव्यापकत्वेन तादृशज्ञानस्यतच्छून्यत्वाभावात्सत्प्रतिपक्षाव्याप्तिर्दुर्वारा ॥ यदित्वव्यापकताघटितस
त्प्रतिपक्षस्यलक्ष्यत्वेसिद्धांतेविशिष्टद्वयाघटितत्वघटकतादृशविशिष्टद्वयविषयितायाःसत्प्रतिपक्षघटकदलद्वयविषयिता
भिन्नत्वनिवेशइवस्वाव्यापकप्रतिबंधकतायांसत्प्रतिपक्षघटकानियानिप्रतिहेतुव्यापकसाध्याभावप्रतिहेतुमत्पक्षप्रतिहे
तुनिष्ठसाध्याभावसामानाधिकरण्यानितत्तद्विषयकत्वावच्छिन्नत्वनिवेशान्नतदसंग्रहः ॥ वह्न्यभाववज्जलादिमद्वृत्तिजलव
द्ध्रदविषयकज्ञानेतादृश्याजलादौवह्न्यभाववज्जलादिमद्वृत्तित्वाभावप्रकारकज्ञानीयप्रतिबंधकतायाः सत्वान्नतादृशविशि
ष्टेऽतिव्याप्तिरित्युच्यतेतदाप्यभावोवान्हिमानित्यादौसंयोगसंबंधेनवन्हेःसाध्यतायांसंयोगसंबंधावच्छिन्नप्रतियोगिता
कत्वसंबंधेनवन्हिमद्वह्न्यभावावच्छिन्नेऽतिव्याप्तिस्तत्रसंयोगसंबंधावच्छिन्नप्रतियोगिताकत्वसंबंधेनवन्हिमान्वह्न्यभाव

वान्ताद्दशासंबंधेनवन्हिमांश्चाभाववइत्यवच्छेदकधर्मदर्शनस्याभावत्वावच्छिन्नेताद्दशासंबंधेनवन्हिप्रकारकत्वनियतेनताद्द
शासंबंधेनवह्न्यवच्छेदेनवह्न्यभावप्रकारत्वेनैवलाघवेनप्रतिबंधकत्वाद्वन्हिमद्वह्न्यभावावच्छिन्नविषयकज्ञानस्यताद्दशाप्र
तिबंधकताशून्यत्वात् ॥ यदिचज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतानवच्छेदकताद्दशाविशिष्टद्वयविषयिताशून्यत्वघ
टितविशिष्टद्वयाघटितत्वस्यतत्रसत्वात्सिद्धांतेपितत्रातिव्याप्तिर्दुर्वाराविशिष्टद्वयाघटितत्वघटकज्ञानवैशिष्ट्यानवच्छिन्नप्र
तिबंधकतायांतत्प्रतिबंधकताभेदांनेवेश्यतदतिव्याप्तिवारणेस्वाव्यापकप्रतिबंधकतायामपितद्भेदंनिवेश्यतद्वारणंसुकरमि
त्युच्यतेतदाप्येतत्कल्पेन्हदोजात्यभाववानित्यादौजातिमान्जातिमानितिज्ञानवारणमशक्यंजातिमान्जात्यभाववा
नितिज्ञानस्याहार्यतयातज्ज्ञानेस्वाव्यापकप्रतिबंधकत्वासत्वात् ॥ नचजातिमान्जातिमान्वन्हिमानित्याकारकप्रत्यक्षसा
मग्रीविधयायाप्रतिबंधकतासैवाव्यापिकातत्रास्तीतिशंक्यं ॥जातिमान्जातिमान्वह्न्यभाववानितिबाधग्रहकालीनताद्द
शासामग्र्याअप्रतिबंधकत्वेनतच्छून्यत्वस्यतत्रसत्वेनतदवारणात् ॥ एवंजातिमान्ह्रदइतिज्ञानकालीनजातिमान्वह्न्यभाव ६७

वानितिज्ञाननिष्ठप्रतिबंधकत्वाव्यापकत्वस्यजातिमान्वन्हिमानितिज्ञाननिरूपितप्रतिबंधकतायामसत्वेन ह्रदोवन्हिमानित्यादौज
तिमान्वह्न्यभाववानितिज्ञानवारणमशक्यमित्यव्यापकविषयिताशून्यत्वनिवेशआवश्यकः ॥ एवंधूमवान्वन्हेरित्यादौवृत्तित्व
विशिष्टधूमाभाववद्वृत्तिवन्हावतिव्याप्तिस्तत्रवन्हिरवृत्तिरितिज्ञाननिरूपितप्रतिबंधकतायाःव्यभिचारज्ञानप्रतिबंधकत्वाव्याप
कत्वाभावेनतादृशीघटादिज्ञानप्रतिबंधकतैवतच्छून्यत्वस्यतादृशविशिष्टवन्हिज्ञानेऽक्षतत्वादतोविशिष्टांतराघटितत्वनिवे
शोप्यावश्यकः ॥ एवंन्हदोवन्हिमान्वह्न्यभाववज्जलादिमद्वृत्तिमेयत्वविशिष्टजलाभावादित्यादौवह्न्यभाववज्जलादिमद्वृत्तिज
लवद्ध्रदविषयकज्ञानेस्वरूपासिद्धिज्ञाननिष्ठप्रतिबंधकत्वाव्यापकप्रतिबंधकतायाअसत्वात्तद्विषयेवह्न्यभाववज्जलादिमद्वृ
त्तिजलवद्ध्रदेतिव्याप्तिवारणायविशिष्टद्वयाघटितत्वनिवेशोप्यावश्यकइतिकिमेतावताप्रयासेन ॥ अत्रेदंबोध्यं ॥ स्वाव्या
पकप्रतिबंधकताशून्यत्वसंबंधेनयत्प्रतिबंधकताविशिष्टनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयिताव्यापिकाप्रकृतानु
मितिनिरूपिततत्प्रतिबंधकतातादृशत्वमितिपरिष्कारेविशिष्टद्वयाघटितत्ववैयर्थ्यंदुर्वारमेवजातिमान्जातिमानितिज्ञानमा

दायह्रदोजात्यभाववान्नित्यादावव्याप्तिवारणायाव्यापकविषयिताशून्यत्वं निवेशनीयं विशिष्टांतराघटितत्व निवेशप्रयोजन
मभिहितमेव ॥ इदंपुनरत्रतत्वंस्वाव्यापकत्वशरीरेउक्तरीत्याप्रमात्वनिवेशावश्यकतयाप्रमात्वघटितप्रथमलक्षणंपरित्य
ज्यतदघटितद्वितीयलक्षणप्रणेतुर्लक्षणेप्रमात्वनिवेशोनास्तीत्याशयमवगत्यैव विशिष्टद्वयाघटितत्वादीनांनिवेशोगदाधरा
णामन्यथास्वावच्छिन्नाविषयकप्रमाऽवृत्तिप्रतिबंधकत्वंयादृशविशिष्टविषयकत्वव्यापकंतादृशांत्वंदोषत्वमित्युक्तावपिविशि
ष्टांतराघटितत्वविशिष्टद्वयाघटितत्वादीनांवैयर्थ्यस्यस्फुटत्वेनकिमेतावताप्रयासेनेतिदिक् ॥ पाषाणमयत्वविशिष्ट
पर्वतादावतिव्याप्तेरिति ॥ अत्रनवीनाःयद्रूपावच्छिन्नविषयितासामान्यमनुमितिप्रतिबंधकतावच्छेदकंतत्वमेवहेत्वा
भासत्वंपाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तिवारणायज्ञानवैशिष्ट्यानवच्छिन्नत्वमेवानुमितिप्रतिबंधकतायांनिवेशनी
यंप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षसंग्रहाययोयत्रहेत्वाभासस्तव्याप्योपिसएव
तत्रदोषइतिशिरोमण्युक्तरीत्याअसिध्यात्मकहेत्वभावव्याप्यधर्मवत्पक्षादेश्चसंग्रहायचप्रकृतानुमितिप्रतिबंधकतेत्यनेनज्ञानवैशि ६८

ष्ट्यानवच्छिन्नप्रकृतानुमितिप्रतिबंधकत्वप्रकृतपरामर्शप्रतिबध्यानुमितिजनकत्वान्यतरस्यैवविवक्षणाज्ज्ञानवैशिष्ट्यानवच्छि
न्नेत्यनेनज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकज्ञानीयप्रतिबंधकताव्यक्तिभिन्नत्वोभयाभाववत्वस्य विवक्षणीयतयानासा
धारण्यासंग्रहः ॥ प्रतिबंधकतायां सत्प्रतिपक्षविषयकत्वानवच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वज्ञानवैशिष्ट्यावच्छिन्न
त्वैतत्त्रितयाभावंनिवेश्यसत्प्रतिपक्षासाधारण्ययोःसंग्रहस्तेनसम्यक् ॥ ह्रदोवन्हिमान्जलादित्यादौहेतुमत्पक्षातिव्याप्तिरसाधार
ण्यविषयकनिश्चयविशिष्टहेतुमत्ताज्ञानप्रतिबंधकतायामुक्ताभाववत्वांहेतुमत्पक्षविषयितासामान्यस्यावच्छेदकत्वात् ॥ नचा
साधारण्यविषयकत्वानवच्छिन्नत्वमित्यत्रासाधारण्यविषयकत्वनिष्ठसाक्षादवच्छेदकतानिरूपकत्वंस्वसमानाधिकरणभेदप्रतियोगितावच्छे
दकत्वस्ववृत्तित्वोभयसंबंधेनासाधारण्यविषयिताविशिष्टावच्छेदकतानिरूपकत्वपर्यवसितग्राह्यं॥ प्रतिबंधकतावच्छेदकत्वमपिसाक्षात्स्वव्या
प्यत्वस्वावच्छेदकत्वोभयसंबंधेनप्रतिबंधकताविशिष्टत्वरूपंग्राह्यमितिनहेतुमत्पक्षातिव्याप्तिः यद्दिचविषयितायांव्याप्यत्वसंबंधे
नप्रतिबंधकताविशिष्टत्वनिवेशेसामान्यपदंव्यर्थंनचदोषज्ञानीयदोषैकदेशविषयितायाप्रतिबंधकताशून्यावृत्तितयादोषैकदेशा

तिव्याप्तिवारणायतदावश्यकमितिशंक्यंविशेष्यवृत्तेर्विशिष्टानुयोगिकाभावानभ्युपगमेनवह्न्यभाववद्ध्रदादिविषयितायांप्रति
बंधकताशून्यावृत्तित्वविरहेणबाधाद्यसंग्रहापत्त्यास्वव्यापकतत्वरूपस्यव्याप्यत्वस्यैवसंबंधतायावक्तव्यत्वात् नचतत्परित्याज्य
मवेतिवाच्यंतथासत्यनतिरिक्तवृत्तित्वरूपावच्छेदकत्वएवपर्यवसानमितिविभाव्यतेतदास्वाश्रयत्वस्वावच्छिन्नभेदसामानाधिक
रण्योभयसंबंधेनोक्ताभाववत्प्रतिबंधकतावच्छेदकताविशिष्टत्वमेवसाक्षात्प्रतिबंधकतावच्छेदकत्वमित्यनेनविवक्षणीयं
यत्प्रतिबंधकतावच्छेदिकाहेतुमत्पक्षविषयितासानिरुक्तासाधारण्यविषयकत्वानवच्छिन्नैवेतिनोक्ताभाववतीयाप्रतिबंध
कतोक्ताभाववतीतस्यांनहेतुमत्पक्षविषयितासामान्यंनिरुक्तावच्छेदकत्ववदितिवाच्यं ॥ तावतापिहेत्वभावपक्षताव
च्छेदकाभावव्याप्यवत्पक्षादेरसिध्यात्मकस्यासंग्रहतादवस्थ्यात् ॥ तत्तद्विषयकत्वानवच्छिन्नत्वमपिप्रतियोगिकोटौनिवेश्य
चतुष्टयाभाववत्त्वंपंचाभाववत्त्वादिकंप्रतिबंधकतायांनिवेश्यतत्संग्रहेबहुतरगौरवमितिवदंति ॥ केचित्तुविशिष्टद्वयाघ
टितत्वमनिवेश्यैवशिरोमण्यभिप्रायंवर्णयंतितथाहिविशिष्टांतरविषयित्वाव्यापकस्वविषयिताव्यापकप्रकृतानुमितिप्रति

बंधकताकविशिष्टापर्याप्तासती विशिष्टांतरविषयिताव्यापकस्वविषयिताव्यापकप्रकृतपरामर्शप्रतिबध्यानुमितिजनकताकविशिष्टाप
र्याप्ताया विषयतातत्पर्याप्त्यनधिकरणत्वमेववविशिष्टांतराघटितत्वविशेष्यदलयोर्निष्कृष्टार्थः॥ इतोपिलाघवान्वेषणेविशिष्टांतरविष
यिताव्यापकस्वविषयिताव्यापकप्रकृतानुमितिप्रतिबंधकत्वप्रकृतपरामर्शप्रतिबध्यानुमितिजनकत्वान्यतरकत्वमेवपर्यवसितदोष
लक्षणंवक्तव्यमितिनकोपिदोषः॥ वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदात्मकविशिष्टविषयिताव्यापकज्ञानवैशिष्ट्यावच्छिन्नप्रति
बंधकतायावह्न्यभाववज्जलवत्कालीनजलवदात्मकंजलवद्ध्रदकालीनवह्न्यभाववज्जलवदात्मकंवायद्विशिष्टांतरंतद्व्यापकतया
नतादृशविशिष्टेऽतिव्याप्तिः॥ पाषाणमयोनवह्निमानितिज्ञानकालीनपर्वतःपाषाणमयइतिज्ञाननिष्ठज्ञानवैशिष्ट्यावच्छिन्न
प्रतिबंधकतायांविशिष्टांतरविषयिताव्यापकत्वेपिपाषाणमयत्वविशिष्टपर्वतविषयिताव्यापकत्वाभावेननपाषाणमयत्वविशि
ष्टपर्वतेऽतिव्याप्तिः॥ सत्प्रतिपक्षज्ञानीयप्रतिबंधकतायांप्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षरूपविशिष्टांतर
विषयिताव्यापकत्वासंभवेपिज्ञानवैशिष्ट्यानवच्छिन्नसाध्याभावानुमितिजनकतामादायैवलक्षणसमन्वयसौकर्यं॥ इतोपि

स्वरूपसंबंधरूपावच्छेदकत्वपक्षीयानिष्कृष्टार्थौलघीयान्तथाहिविशिष्टांतरविषयितात्वाव्यापकस्वविषयितात्वव्यापकावच्छेदकताक
प्रकृतानुमितिनिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकत्वप्रकृतपरामर्शप्रतिबध्यानुमितिजनकत्वान्यतरकत्वंदोषत्वं ॥ अत्र
चविशिष्टांतरविषयितायांस्वविषयितायांचानाहार्यज्ञानीयत्वनिवेशावश्यकत्वेप्यप्रामाण्यज्ञानानास्कंदितनिश्चयीयत्वानिवेशा
ल्लाघवंबोध्यं ॥ इत्थंचबाधघटितसत्प्रतिपक्षोऽपिसंगृह्यतेतज्ज्ञानस्यबाधज्ञानप्रतिबंधकतातः पृथक्प्रतिबंधकत्वेमानाभावे
नविशिष्टांतरविषयित्वाव्यापकस्वविषयिताव्यापकप्रतिबंधकताकत्वेमानाभावेपिविशिष्टांतरविषयित्वाव्यापकस्वविषयिता
व्यापकप्रकृतपरामर्शप्रतिबध्यसाध्याभावानुमितिजनकताकत्वानपायात् ॥ नहिव्याप्त्याद्यनवगाहिबाधज्ञानसाधारणबाध
ज्ञानत्वेनैवानुमितिजनकत्वमनुमन्यतेसत्प्रतिपक्षघटितसत्प्रतिपक्षस्यनलक्ष्यः ॥ संगृह्यतेच पक्षवृत्तित्वघटितमप्यसा
धारण्यंतस्यसाध्याभावोन्नायकत्वात् ॥ व्युदस्तश्चसाध्याभावाननुन्नायकत्वेनप्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुम
त्पक्षोऽपिसत्प्रतिपक्षसंग्राहकसत्प्रतिपक्षघटकदलद्वयविषयिताभिन्नत्वविशेषणाक्रांतविशिष्टांतरद्वयविषयिताशून्यप्रतीति ७०

विषयत्वसत्वेनगदाधरमतेतद्वारणात् ॥ यत्तुसत्प्रतिपक्षघटकदलद्वयभिन्नंयत्प्रतिहेतुव्यापकसाध्याभावकालीनत्वं प्रतिहेतु
मत्पक्षश्चेत्युभयंतद्घटितत्वादेवनतत्रातिव्याप्तिः ॥ नचकालीनत्वसंबंधेनप्रतिहेतुव्यापकसाध्याभावविशेषितप्रतिहेतुमत्पक्षए
वातिव्याप्तिः प्रतिहेतुव्यापकसाध्याभावप्रतिहेतुमत्पक्षयोर्दर्शितविशिष्टघटयोः सत्प्रतिपक्षीयदलद्वयभिन्नत्वासंभवादितिवा
च्यं ॥ कालीनत्वसंबंधेनप्रतिहेतुव्यापकसाध्याभावविशेषितप्रतिहेतुः प्रतिहेतुमत्पक्षश्चेतिद्वयस्यदर्शितविशिष्टघटकस्यसत्प्र
तिपक्षीयदलद्वयभिन्नत्वसंभवादितितदसत् ॥ सत्प्रतिपक्षघटकदलद्वयशब्देनविशिष्यप्रतिहेतुव्यापकसाध्याभावप्रतिहेतुम
त्पक्षोभयमेवोपादेयमितरथाजलादिव्यापकवह्न्यभावकालीनजलवद्ध्रदादेर्यत्रप्रतिहेत्वादिघटकतयासत्प्रतिपक्षघटकत्वंत
त्रतादृशविशिष्टद्वयस्यसत्प्रतिपक्षघटकद्वयाभिन्नतयातादृशविशिष्टेऽतिव्याप्त्यापत्तेरेवंच प्रतिहेतुव्यापकसाध्याभावसामा
नाधिकरण्यंप्रतिहेतुमत्पक्षश्चेतिदलद्वयस्यप्रतिहेतुव्यापकसाध्याभावप्रतिहेतुमत्पक्षोभयात्मकसत्प्रतिपक्षघटकदलद्वयभि
न्नतयातादृशदलद्वयघटितसत्प्रतिपक्षएवाव्याप्तिवारणंदुःशकंनचतादृशविशिष्टद्वयविषयिताद्वयेप्रतिहेतुव्यापकसाध्याभाव

प्रतिहेतुमत्पक्षरूपदलद्वयविषयिताभेदइव प्रतिहेतुव्यापकसाध्याभावसामाधिकरण्यरूपतद्घटकदलविषयिताभेदं निवेश्य तद्वा
रणं स्कराकमितिशक्यं वक्तुं तथासति सत्प्रतिपक्षघटकतादृशविशिष्टद्वयविषयिताभिन्ननिरुक्तविशिष्टद्वयविषयिताशून्यप्रतीति
विषयत्वस्य विशिष्टद्वयाघटितत्वार्थत्वादिति ग्रंथविरोधः स्यादतो यादृशविशिष्टविषयकनिश्चयविशिष्टेत्यादेर्यादृशविशिष्टविष
यितासामान्यावच्छिन्नज्ञाननिष्ठावच्छेदकताकप्रतिबंधकता यादृशविशिष्टविषयितासामान्यावच्छिन्ना तादृशविशिष्टद्वयेत्येवा
र्थः विषयितासामान्यनिवेशास्फोरणायैवन्चानतिरिक्तवृत्तित्वपर्यंताभिधानमिति वक्तव्यं ॥ एवंच प्रतिहेतुव्यापकसाध्याभावकालीन
प्रतिहेतुमत्पक्षादेरपि सत्प्रतिपक्षस्येव दर्शितविशिष्टद्वयाघटितत्वं निष्प्रत्यूहमेवेति वदंति ॥ अत्र मतद्वयेपि स्वरूपसंबंधरूपावच्छे
दकत्वनिवेशो घटोऽवृत्तिरित्यादौ घटावच्छिन्नेबाधे उक्तरीत्याऽव्याप्तिः यद्रूपनिष्ठविषयतावच्छेदकतासामान्ये प्रकृतानुमितिप्रतिबंध
कतानिरूपितस्वरूपसंबंधरूपावच्छेदकत्वविवक्षयोक्ताव्याप्तिवारणसंभव इति तु न शक्यं ह्रदो वन्हिमानित्यादौ ह्रदत्वादिनिष्ठधर्मि
तावच्छेदकतान्यप्रकारतायाअपि तादृशावच्छेदकतासामान्यांतर्गततया तस्याश्च प्रकृतानुमितिप्रतिबंधकतानिरूपितस्वरूप ७१

संबंधरूपावच्छेदकत्वविरहेणबाधाद्यसंग्रहप्रसंगात् यद्रूपपदग्राह्यवह्न्यभावादिरूपप्रकारनिष्ठविषयतासंग्रहायप्रकारतान्ययद्रूपनि
ष्ठविषयतावच्छेदकतासामान्यमित्यादिविवक्षणासंभवादतोऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशएवग्रंथकृन्निर्भरइतिध्येयं ।।
सत्प्रतिपक्षघटकदलद्वयविषयिताभिन्नेति ।। अत्रनिरुक्ततादृशविशिष्टद्वयविषयितयोःप्रत्येकंसत्प्रतिपक्षघटकदलद्व
यविषयितानिष्ठद्वित्वावच्छिन्नभेदनिवेशेसत्प्रतिपक्षघटकदलद्वयविषयितयोःप्रत्येकंतादृशविषयितानिष्ठद्वित्वावच्छिन्नभेद
सत्वात्सत्प्रतिपक्षासंग्रहः ।। यदिचतादृशविषयितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदद्वयंनिवेश्यतेतदाजलव
द्ध्रदस्यसत्प्रतिपक्षघटकतयातद्विषयितायांतादृशभेदद्वयासत्वेनतादृशविषयिताकविशिष्टद्वयाघटितत्वस्यवह्न्यभाववज्ज
लवद्वृत्तिजलवद्ध्रदेसत्वात्तत्रातिव्याप्तिरतस्तादृशविशिष्टविषयितानिष्ठद्वित्वावच्छिन्नेसत्प्रतिपक्षघटकदलद्वयविषयिता
निष्ठद्वित्वावच्छिन्नभेदोनिवेश्यस्तथाचसत्प्रतिपक्षघटकदलद्वयविषयितानिष्ठद्वित्वावच्छिन्नानुयोगिताकभेदप्रतियोगि
तावच्छेदकस्वनिष्ठद्वित्वकायातादृशविशिष्टद्वयविषयितातच्छून्यप्रतीतिविषयत्वंपर्यवसितं ।। ननुपर्वतोधूमवान्वह्नेरित्यत्र

सत्प्रतिपक्षाप्रसिध्यात‍स्थलीयदोषेऽव्याप्तिः ॥ नन्चतत्रत्यदोषलक्षणेविशिष्टद्वयाघटितत्वमनुपादेयमितिवाच्यं ॥ वन्हिर्धूम
व्याप्यइतिज्ञानंप्रत्ययोगोलकीयतेजोधूमाभाववद्वृत्तितादृशतेजस्त्ववान्वन्हिरितिज्ञानद्वयस्यप्रतिबंधकतयाधूमाभाववद्वृत्य
योगोलकीयतेजोवृत्तितादृशतेजस्त्ववद्वन्हित्वावच्छिन्नेऽतिव्याप्तिवारणायतदावश्यकत्वादत आह ॥ यत्रेति ॥ एकोक्तिनि
र्वाहायाह ॥ भ्रमात्मकज्ञानीयविषयितासाधारणरूपेणेति ॥ प्रतिहेतुव्यापकत्वनिष्ठविषयतानिरूपितसाध्या
भावत्वावच्छिन्नविषयितात्वेनेत्यर्थः ॥ आदिनाप्रतिहेतुमत्पक्षविषयितापरिग्रहस्तथाच प्रतिहेतुनिष्ठप्रकारतानिरूपित
पक्षविषयितात्वेनप्रतिहेतुमत्पक्षविषयितायानिवेशइत्यपिलभ्यते ॥ हेतुतावच्छेदकाघटितस्येति ॥ तद्घटितस्य
तत्वेतुहेतुः साध्याभावाभाववदवृत्तिर्हेतुमांश्चपक्षइतिज्ञानद्वयसाधारणज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकतयैवतज्ज्ञानस्य
कार्यानुत्पादप्रयोजकत्वनिर्वाहाज्ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतांतरेमानाभावात्तदसंग्रहोदुर्वारइतिध्येयं ॥ अथ
साध्याभावाभाववदवृत्तिमत्पक्षस्यसत्प्रतिपक्षत्वेनिर्भरोनयुक्तःगगनवान्प्रमेयत्वादित्यादौसाध्याभावाभावस्यगगनरूपत्वस्वीका ७२

रेपितदधिकरणाप्रसिद्धेस्तादृशहेतौसत्प्रतिपक्षितइतिव्यवहारानुपपत्तेरितिचेन्न ॥ तत्रपक्षवृत्तित्वाभाववद्गगनस्यापिबाधतयातद्व्याप्यतादृशाभावाभाववदवृत्तिमद्गगनस्यैवसत्प्रतिपक्षतासंभवेनतमादायैवतादृशव्यवहारोपपादनसंभवात् ॥ नहियोयोबाधस्तत्तद्व्याप्यःसत्प्रतिपक्षइतिनियमोस्त्युत्पत्तिकालीनघटेगंधसाधनेबाधव्याप्यस्यसत्प्रतिपक्षस्याभावात् ॥ साध्योभावाभाववदवृत्तिमत्पक्षस्येत्यत्रसाध्याभावपदंसाध्यवत्ताज्ञानप्रतिबंधकतावच्छेदकविषयताश्रयपरंपक्षपदंबाधज्ञानविशेष्यपरमितिनासंगतिरितिध्येयं ॥ पक्षवृत्तित्वाघटितस्येति ॥ गोपक्षकेऽश्वत्वहेतुनागोत्वसाधनेपक्षवृत्तित्वघटितस्यतस्यासंभवादितिभावः ॥ संपादनीयत्वादिति ॥ यादृशविशिष्टविषयकनिश्चयत्वव्यापकःप्रकृतानुमित्यप्रतिबंधकत्वपक्षधर्मताज्ञानसमानकालीनत्वोभयाभाववत्तादृशत्वंदोषत्वमितिविवक्षयेत्यादिः ॥ व्यभिचारादिघटितपदार्थांतरेति ॥ व्यभिचारविशिष्टमेयत्वादावित्यर्थः ॥ अत्रघटितेतितस्यालक्ष्यताबीजमाविष्कर्तुं ॥ तस्यदोषतोपगमेव्यभिचारविशिष्टवस्तुमात्रस्यैवलक्ष्यतापत्तेः ॥ पदार्थांतरपदंप्रमेयत्वविशिष्टव्यभिचारादेरिदानींव्यभिचारपदार्थत्वेनालक्ष्यता

यानानिर्णयःपश्चात्तुनिर्णयइतिलाभायेतिकेचित् ॥ अनुमितिप्रतिबंधकतायांयद्रूपावच्छिन्नविषयकत्वमवच्छेदकमिति ॥ अत्राप्यवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपंबोध्यमन्यथावह्न्यभावत्वावच्छिन्नविषयकत्वस्यस्वरूपसंबंधरूपावच्छेदकत्वेनवह्न्यभावस्यापिविशिष्टांतरत्वापत्त्यानदघटितत्वस्यवह्न्यभाववद्ध्रदादावसत्वेनबाधाद्यसंग्रहापत्तेः ॥ यद्रूपावच्छिन्नविषयकत्वंप्रकृतानुमितिप्रतिबंधकतानतिरिक्तवृत्तित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नंयत्तद्रूपावच्छिन्नंतदघटितत्वमितियथाश्रुतार्थेव्यभिचारत्वावच्छिन्नस्यतादृशप्रमेयत्वावच्छिन्नत्वादसंभवइत्यनुमितिप्रतिबंधकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयोरैक्यंविवक्षयति ॥ एवंचेति ॥ अथयद्रूपावच्छिन्नविषयितासामान्यमनुमितिप्रतिबंधकतावच्छेदकंतादृशंयत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमितिविवक्षयावह्न्यभावाद्येकदेशस्यविशिष्टांतरत्वाप्रसक्त्याबाधादिसंग्रहसंभवइतिकिमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितविशिष्टांतराघटितत्वनिवेशनेन एवंच वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादेस्तादृशजलवद्ध्रदादिरूपविशिष्टांतरघटितत्वादे

नि ‖ वयारणे विशिष्टद्वयाघटितत्वं नवेशनीयमिति चेन्न ॥ अभाववान्वह्न्यभाववानभाववांश्च ह्रद इति ज्ञानद्वयनिष्ठप्रतिबंधकतानिरूपित
स्वरूपसंबंधरूपावच्छेदकत्वाश्रयाभाववद्ध्रदघटितत्वाद्वह्न्यभाववद्ध्रदस्यासंग्रहवारणाय प्रतिबंधकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्व
निवेशावश्यकत्वेन तादृशप्रतिबंधकतानिरूपितस्वरूपसंबंधरूपावच्छेदकत्वस्य जलवद्ध्रदविषयितायामसत्वात्तस्य विशिष्टांतर
त्वाप्रसक्त्यानिरुक्तविशिष्टेतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वमावश्यकं ॥ न चैवमपि स्वरूपसंबंधरूपावच्छेदकत्वघ
टितविशिष्टांतराघटितत्वनिवेशनमेव लाघवादुचितमिति वाच्यं ॥ घटोऽस्तीत्यत्र पूर्वोक्तयुक्त्या घटावच्छिन्नविषयितायां स्व
रूपसंबंधरूपावच्छेदकत्वाभावेन तस्य विशिष्टांतरत्वाभावेन प्रमेयत्वविशिष्टघटावच्छिन्नेऽतिव्याप्तिवारणायानतिरिक्तवृत्तित्वरू
पावच्छेदकत्वघटितविशिष्टांतरघटितत्वनिवेश आवश्यकः ॥ बाधत्वादय इति ॥ एकमात्रदोषस्थले विशेषणविशेष्यभाव
व्यत्यासेन विशिष्टांतरस्मादाद्यैवलक्षण्यं संगमनीयं ॥ दुर्घटत्वादिति ॥ ननु प्रमेयत्वविशिष्टव्यभिचाराविषयिणीव्यभिचारत्वा
दिना घटावगाहिप्रतीतिः संभवतीति चेन्न ॥ तुल्ययुक्त्याबाधाविषयिण्या बाधत्वादिना घटावगाहिप्रतीतेः संभवादसंभवः स्या

दतः स्वाश्रयाविषयकप्रतीतौप्रमात्वंनिवेशनीयंतथाचायंदोषइतिध्येयं ॥ प्रमेयंगगनवदिति ॥ अत्रेदंबोध्यंवह्न्यभाव
वद्वृत्तित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंयत्तादृशंधूमवद्वृत्तिवह्न्यभावत्वंतदाश्रयाविषयकत्वस्यबाधज्ञानेऽसत्वाद्धूमा
भाववद्वृत्तिवन्हित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंयत्तादृशंधूमाभाववद्वृत्तित्वव्याप्यवन्हित्वंतदाश्रयाविषयकत्व
स्यव्यभिचारज्ञानेऽसत्वाच्चासंभवएवसंभवतीत्यव्याप्तिकथनमसंगतं ॥ यत्तुतदाश्रयमुख्यविशेष्यताशून्यत्वनिवेशेवह्न्य
भाववद्वृत्तादौलक्षणसमन्वयसंभवादव्याप्तिकथनमितितदसत् ॥ तथासतिव्यभिचारविशिष्टमेयत्वादावतिव्याप्तेरवार
णात् ॥ अत्रकेचित् ॥ गगनवान्तादात्म्येनघटादित्यादौव्यभिचारिणिगगनाभाववत्तादात्म्यविशिष्टघटादौलक्षणस
मन्वयस्तादृशतादात्म्यस्यकेवलान्वयितयातदभाववद्वृत्तित्वाभावरूपव्याप्त्यप्रसिद्धेस्तादृशव्याप्तिविशिष्टघटत्वस्यतादृशस्या
प्रसिद्धेः ॥ व्यापकसामानाधिकरण्यरूपव्याप्तिप्रसिध्याघटव्यापकतत्तादात्म्यवद्वृत्ताभिन्नत्वस्यतादृशत्वेपिविशिष्टद्वयाघटि
तत्वाक्रांतस्यलक्षणसमन्वयायतादृशस्यविवक्षणेतस्यतादृशत्वाभावादित्याहुस्तदसत् ॥ एवमपिहेतुसमानाधिकरणस ७४

ध्याभावत्वादेस्तादृशत्वसंभवात्तन्नाव्याप्तेर्दुर्धरत्वात् ॥ वस्तुतस्तु तादृशरूपाश्रयाविषयकप्रतीत्यप्रसिद्धिनिबंधनाव्याप्ति
रत्र विवक्षिताऽयद्यपि ह्रदादिवृत्तिवह्न्यभाववृत्तित्वोपलक्षितप्रमेयत्वास्यापि तादृशरूपत्वात्तदाश्रयाविषयकप्रतीत्यप्रसिद्धिनि
बंधनासंभवशंकासंभवति तथापि तादृशरूपशरीरे स्वरूपसंबंधरूपावच्छेदकत्वस्य विषयितायां विवक्षणे न तन्निबंधनासंभ
व इति ज्ञेयं ॥ अर्थेत्यादि ॥ अत्र धूमव्यभिचारिवह्नेः पक्षत्वे बाधघटकधूमव्यभिचारिवह्नित्वावच्छिन्नमादाय तथा सतीत्यादि
नावक्ष्यमाणाव्याप्तिर्न संभवतीति तदर्थं तादृशवह्निमत्त्वावच्छिन्नस्य पक्षत्वानुसरणं ॥ यद्रूपावच्छिन्नविषयकत्वमित्या
दि ॥ अत्र यद्रूपं स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन विवक्षणीयमन्यथाव्यभिचारित्वादेरपि यद्रूपपदेन धर्तुं
शक्यत्वादसंभवप्रसंगात् ॥ प्रमेयत्वविशिष्टव्यभिचारादेरप्यभिधेयत्वविशिष्टव्यभिचाराद्यघटितत्वेनातिव्याप्तिवारणाय
यद्यद्रूपावच्छिन्नविषयकत्वमिति विवक्षाया आवश्यकत्वात् ॥ प्रतिबंधकताविशेषणमवच्छिन्नत्वं व्यापकत्वरूपं ग्राह्यं तेन
वह्न्यभाववद्ध्रदसमानकालीनजलवान् धूमाभाववानिति निश्चयविशिष्टस्य तादृशजलवान्ह्रद इति निश्चयस्यापि धूमव

त्वावगाह्यनुमितिविरोधितयातदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकस्यवह्न्यभाववद्ध्रदत्वावच्छिन्नाविषयकप्रतीति
विषयतावच्छेदकस्याप्रसिद्धत्वेपिनह्रदोवन्हिमान्धूमादित्यादिस्थलीयबाधाद्यसंग्रहः ।। स्वावच्छिन्नविषयितासामान्यावच्छिन्नत्वनि
वेशेनतत्रैवजलवद्ध्रदेऽतिव्याप्तिः ।। नचजलवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबंधकतासामान्यानतिरिक्तावृत्तिविषयिता
निरूपकतावच्छेदकस्यजलवद्ध्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याप्रसिध्यानातिव्याप्तिरितिवाच्यं ।। अव
च्छेदकधर्मदर्शनविधयाप्रतिबंधकतयोरपिजलवान्ह्रदोह्रदेजलमितिनिश्चययोर्जलत्वावच्छिन्नविषयतानिरूपितह्रदत्वा
वच्छिन्नविषयताघटितैकरूपेणैवप्रतिबंधकतयाजलवद्ध्रदविषयितासामान्यावच्छिन्नप्रतिबंधकतानतिरिक्तवृत्तिवि
षयितानिरूपकतावच्छेदकस्यवह्न्यभाववज्जलादिमद्वृत्तित्वविशिष्टह्रदवृत्तिजलत्वादेरेवतादृशधर्मस्यप्रसिद्धतयोक्तातिव्याप्तिर्दुर्वारत्वात् ।। विषयिताविशेषणमवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपंग्राह्यंतेनह्रदोवन्हिमानित्यादौबाधज्ञानीयाभाव
वद्ध्रदत्वावच्छिन्नविषयितायास्तादृशप्रतिबंधकतावच्छेदकत्वात्तन्निरूपकाभाववद्ध्रदघटितत्वेपिनवह्न्यभाववद्ध्रदादेरसंग्र 

हः ॥ नचयद्रूपावच्छिन्नविषयितासामान्यंतादृशावच्छेदकत्ववदितिरीत्याविवक्षणान्नैषदोषइतिशंक्यं ॥ एवमपिघटोऽवृत्तिरित्यादौ
घटावच्छिन्नविषयितायांतादृशावच्छेदकत्वविरहेणघटादेर्यद्रूपपदेनधर्तुमशक्यतयाप्रमेयत्वविशिष्टघटावच्छिन्नेतिव्याप्तिवारणा
यतदावश्यकत्वं ॥ नचतत्रतादृशरूपाप्रसिद्धिः शंक्या ॥ घटोऽवृत्तिरितिज्ञानंप्रतिघटवान्घटोऽवृत्तित्ववानितिज्ञानयोर्वृत्तित्वनिष्ठ
विषयतानिरूपितघटनिष्ठविषयताघटितैकरूपेणैवप्रतिबंधकत्वोपगमेनवृत्तिघटत्वस्यैवतादृशरूपस्यप्रसिद्धेः ॥ व्यभिचारघ
टितबाधाव्याप्तिवारणायप्रतिबंधकतासामान्येति ॥ तदेतदुपपादयतिव्यभिचारस्येत्यादिना ॥ अथास्मिन्कल्पेवह्न्य
भाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिरुक्तरीत्याविशिष्टद्वयाघटितत्वनिवेशेनतद्वारणेपुनर्व्यभिचारघटितबाधाव्या
प्तिर्बाधविषयकनिश्चयाविशिष्टव्यभिचारविषयकनिश्चयत्वस्यानुमितिप्रतिबंधकतानतिरिक्तवृत्तित्वात्तदुभयाघटितत्वस्य

टिप्पणं घटवानितिज्ञानेघटनिष्ठाधेयतानिरूपिताधारतायाः संसर्गतयाघटवानितिज्ञानस्याधेयत्वनिष्ठविषयतानिरूपितघटनिष्ठविषयताशालित्वंबो
ध्यं

तत्राभावादिति चेन्नैवं ॥ व्यभिचारघटितबाधघटकव्यभिचारबाधविषयित्वयोर्ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकतानवच्छेदकत्वविरहेणतद्घटितविशिष्टद्वयाघटितत्वस्यतत्राबाधात् ॥ यद्वा स्वावच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबंधकतासामान्यं स्वावच्छिन्नाविषयकयादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वव्यापकंतादृशविशिष्टद्वयाघटिततानवच्छेदकत्वस्यस्वपदार्थेविवक्षितत्वान्नतत्राव्याप्तिः ॥ भवतिचवह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकत्वव्यापकंवन्हिमत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतासामान्यमुक्तजलवद्ध्रदाविषयकवह्न्यभाववज्जलादिमत्वावच्छिन्नविषयकनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविषयकनिश्चयत्वव्यापकंतदुभयघटितनानवच्छेदकंचनतादृशजलादिमद्वृत्तिजलवद्ध्रदत्वमितिनतादृशजलवद्ध्रदत्वावच्छिन्नेऽतिव्याप्तिः ॥ व्यभिचारघटितबाधसंग्रहायस्वावच्छिन्नाविषयकेति निश्चयविशेषणं ॥ उक्तबाधसंग्रहायैवसामान्यपदं ॥ प्रमेयत्वविशिष्टव्यभिचारत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वाव

टिप्पणं अस्यप्रमेयत्वव्यभिचारत्वोभयघटिततावच्छेदकत्वादित्यनेनसंबंधः

च्छिन्नाविषयकस्यप्रमेयत्वविषयकत्वविशिष्टनिश्चयविशिष्टस्यव्यभिचारत्वविशिष्टविषयकस्यप्रमेयत्वंव्यभिचारश्चेतिनिश्च
यसामान्यस्यतदवच्छिन्नविषयकत्वव्यापकप्रकृतानुमितिप्रतिबंधकतासामान्यत्वेनप्रमेयत्वव्यभिचारत्वोभयघटिततावच्छे
दकत्वान्नतदवच्छिन्नेतिप्रसंगोपि॥ इदंच ह्रदोवह्न्यभाववान्ह्रदेवह्न्यभावइतिज्ञानयोः प्रथमेस्वरूपसंबधावच्छिन्नाधेयतानिरूपि
ताधारत्वंसंसर्गतयाभासतेद्वितीयेस्वरूपसंबंधावच्छिन्नाधारता निरूपिताधेयत्वंसंसर्गतयाभासतेतथाचद्वयोरपिज्ञानयोर्ह्रद
त्वावच्छिन्नविषयतानिरूपिताधारत्वविषयतानिरूपितनिरूपितत्वविषयतानिरूपिताधेयत्वविषयतानिरूपितवह्न्यभाव
त्वावच्छिन्नविषयताशालिनिश्चयत्वेनैकरूपेणप्रतिबंधकत्वमित्यभिमानेनतादृशाभिमानमेव निराकरोति व्यभिचार
त्वादिरूपेत्यादिना॥ तद्बीजंतुह्रदोवह्न्यभाववान्ह्रदेवह्न्यभावइतिज्ञानप्रतिबंधकतयोः प्रत्येकंवह्न्यभावाभाववद्विशेष्यक
त्वावच्छिन्नवह्न्यभावप्रकारकत्वरूपाप्रामाण्यग्रहस्यस्वरूपसंबंधावच्छिन्नाधेयतासंबंधेनह्रदाभाववद्विशेष्यकत्वावच्छिन्नंयत्ता
दृशासंबंधेनह्रदप्रकारकत्वंतदात्मकाप्रामाण्यग्रहस्यचोत्तेजकत्वानुरोधेनतादृशज्ञानयोर्नैकरूपेणप्रतिबंधकत्वंसंभवतीति॥

एवं निश्चयत्वाननुगमादपीति ॥ असंभवादिति प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुप्रत्यक्षविषयकत्वावच्छिन्न
प्रतिबंधकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकतादृशपक्षाविषयकप्रतीतिविषयतावच्छेदकस्यतादृशसाध्याभाव
कालीनप्रतिहेतुमत्पक्षतावच्छेदकस्य संभवेपि तादृशसत्प्रतिपक्षस्यालक्ष्यत्वात् प्रतिहेतुमत्पक्षप्रतिहेतुव्यापकसाध्याभावरू
पविशिष्टद्वयघटितत्वाच्चनतत्रापिलक्षणंसमन्वयइतिभावः ॥ असंभवंपरिहर्तुमाशंकते नन्चेति ॥ अत्रापिप्रतिबंधक
ताविशेषणमवच्छिन्नत्वंव्यापकत्वरूपंग्राह्यंनस्वरूपसंबंधविशेषस्तथासति ह्रदो वन्हिमान्धूमादित्यादौप्रमेयत्वविशिष्टो
योवह्न्यभावस्तद्ह्रदत्वावच्छिन्नादावतिव्याप्त्यापत्तेस्तादृशह्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यांतर्गतताया
प्रमेयत्वविशिष्टवह्न्यभाववान्धूमाभाववानितिनिश्चयविशिष्टप्रमेयत्वविशिष्टवह्न्यभाववद्ह्रदविषयकनिश्चयनिष्ठधूमवत्ता
ज्ञानप्रतिबंधकतानदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकाप्रसि

टिप्पणं  अलक्ष्यपितथाचनातिव्याप्तिः किंत्वसंभवएवेतिहृदयं

व्यास्वपदेन प्रमेयत्वविशिष्टो यो वह्न्यभावस्तद्वद्ध्रदत्वस्य धर्तुमशक्यत्वात्प्रमेयत्वविशिष्टं यद्वह्न्यभाववद्ध्रदत्वं तस्यैव स्वपदेन
ग्राह्यत्वात् ॥ द्रव्यान्यत्वव्यभिचारिघटो द्रव्यभिन्नो घटादित्यादौ स्वरूपतो द्रव्यत्वविशिष्टद्रव्यान्यत्वव्यभिचारिद्रव्यघटादाव
व्याप्तिवारणाय सामान्यपदं ॥ अत्र यथाश्रुतेपि वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नेनातिव्याप्तिस्तदवच्छिन्नविषयक
त्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेद
कस्य वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वादेः प्रसिद्धत्वात्स्वपदेन तादृशह्रदत्वादेर्धर्तुमशक्यत्वात् ॥ प्रतिहेतुव्यापकसा
ध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्त्वेतत्कल्पेऽलक्ष्य एव ॥ प्रतिबंधकतासामान्यावच्छेदकत्वमप्यनतिरिक्तवृत्तित्व
मेव ग्राह्यमन्यथा वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वव्यापकप्रतिबंधकतानिरूपितस्वरूपसंबंधरूपावच्छेदकत्ववत्त
वच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकह्रदत्वादिकत्वस्य वह्न्यभाववद्ध्रदत्वादेः सत्वाद्वाधाद्यसंग्रहप्रसंगात् ॥ यद्रूपा
वच्छिन्नविषयितासामान्यं तादृशावच्छेदकत्ववत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्किंचित्तादृशरूपकं यत्त्वे

मितिरीत्याविवक्षणेनासंभववारणेऽपिघटेऽवृत्तिरित्यादौप्रमेयत्वविशिष्टघटावच्छिन्नेतिव्याप्तिरतस्तदेवनिवेशनीयं ॥अ
त्रकल्पेउदासीनेऽतिव्याप्तिवारणायविशेष्यदलंदेयं ॥ **स्वावच्छिन्नेति** ॥अत्रपाषाणमयत्वविशिष्टेऽतिव्याप्तिवारणायोभ
यत्राप्यवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपंनिवेशनीयं ॥ **नचैकत्र**तन्निवेशेनैवदर्शितातिव्याप्तिवारणसंभवादुभयत्रत
न्निवेशनंनिष्फलमिति**शंक्यं** ॥ स्वावच्छिन्नविषयितायांतन्निवेशोव्यभिचारघटितबाधेऽव्याप्तिस्तत्रस्वावच्छिन्नविषयिता
व्यापकप्रतिबंधकतासामान्यावच्छेदकव्यभिचारविषयितायांस्वावच्छिन्ननिरूपितत्वाभावसत्वाद्दोषैकदेशविषयितायां
तादृश्यांदोषनिरूपितत्वाभावसत्वादसंभवोवा ॥ यत्किंचिद्विषयितायांतन्निवेशेहृदोवह्निमान्धूमादित्यादौस्वावच्छिन्नविषय
कत्वावच्छिन्नप्रतिबंधकतासामान्यानतिरिक्तवृत्तिविषयितायाअप्रसिद्धिःवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाज्ञानवै
शिष्ट्यावच्छिन्नप्रतिबंधकताशून्यवृत्तित्वादुभयत्रतन्निवेशआवश्यकः ॥ प्रमेयत्वविशिष्टव्यभिचारविषयित्वमादायातिव्या
प्तिवारणाययद्यद्रूपावच्छिन्नविषयित्वंतादृशप्रतिबंधकतावच्छेदकंतत्तद्रूपावच्छिन्नविषयितान्यतमत्वसामानाधिकरण्ये

नानिरूपितत्वाभावोनिवेशनीयः ॥ एतल्लाभायैवयात्किंचिदिति ॥ व्यभिचारघटितबाधविषयित्वावच्छिन्नप्रतिबंधकतावच्छेदक
व्यभिचारविषयितायांतादृशबाधनिरूपितत्वाभावसत्वात्तत्राव्याप्तिरतः प्रतिबंधकतासामान्येति ॥ अथदोषवद्देशत्वाव
च्छिन्नविषयितायांतादृशविषयितान्यतमांतर्गतायांदोषनिरूपितत्वाभावसत्वादसंभवइतिचेदत्रब्रूमः ॥ यद्यद्रूपावच्छिन्नवि
षयितायांस्वरूपसंबंधरूपानतिरिक्तवृत्तित्वरूपयोर्द्वयोरेवावच्छेदकत्वयोर्विवक्षणीयतयादोषविशिष्टदेशादिविषयिता
यांस्वरूपसंबंधरूपावच्छेदकत्वविरहेणैवनासंभवः ॥ नन्वैवंव्यभिचारघटितबाधेस्वावच्छिन्नविषयिताव्यापकप्रतिबंध
कतासामान्यनिरूपिततादृशावच्छेदकत्वद्वयवद्विषयित्वाप्रसिद्धिरितिवाच्यं ॥ स्वावच्छिन्नविषयकत्वावच्छिन्नेत्यत्रा
पिस्वावच्छिन्नविषयितानिष्ठतादृशोभयरूपावच्छेदकत्वस्यविवक्षणादेवंसतिधूमव्यभिचारिवन्हिर्धूमवान्वन्हेरित्या
दौव्यभिचारविषयितायांतादृश्यांव्यभिचारघटितबाधानिरूपितत्वसत्वाद्व्यभिचारघटितबाधसंग्रहायसामान्यप
दं ॥ नन्वैवंसतिघटोऽवृत्तिरित्यादौघटावच्छिन्नबाधेऽव्याप्तिस्तत्रघटावच्छिन्नविषयितायांपूर्वोक्तयुक्त्यास्वरूपसंबंध

रूपप्रतिबंधकतावच्छेदकत्वविरहेण स्वपदेन घटादेरुपादानायोगादिति वाच्यं ॥ स्वावच्छिन्नविषयतानिरूपितप्रकारतानिष्ठो



भयरूपावच्छेदकताकत्वस्यैव स्वावच्छिन्नविषयकत्वावच्छिन्नेत्यनेन विवक्षणात् ॥ अग्रेपि यद्यद्रूपावच्छिन्नविषयतानिरूपित
प्रकारतानिरुक्तोभयरूपावच्छेदकत्ववती तत्तद्रूपावच्छिन्नविषयितान्यतमत्वसामानाधिकरण्येन निरूपितत्वाभावो विवक्षणी
यः निरुक्तस्थले घटवानिति ज्ञानीयघटावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नप्रकारतायां तादृशावच्छेदकत्वद्वयसत्वे
न घटावच्छिन्नरूपबाधेऽव्याप्तिविरहात् ॥ **नच** दोषवद्देशतावच्छेदकावच्छिन्नविषयतानिरूपितदोषप्रकारताया अपि
तादृशोभयरूपावच्छेदकत्ववत्वेन तादृशदेशतावच्छेदकावच्छिन्नविषयतायास्तादृशविषयितान्यतमत्वप्रसत्त्या तस्यां दोष
निरूपितत्वाभावमादायासंभव इति वाच्यं ॥ यद्यद्रूपावच्छिन्नविषयतानिरूपितप्रकारतात्वावच्छिन्नप्रकारतानिष्ठोक्तोभय
रूपावच्छेदकताकत्वस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतायां निवेशेन देशादिनिष्ठविषयतानिरूपितदोषविषय
ताया विशेष्यतात्वेनैवावच्छेदकत्वादनुपपत्त्यभावात् ॥ नच विशिष्टदोषविषयितायां तद्घटकतावच्छेदकवह्नित्वाद्यवच्छिन्ननि

रूपितत्वाभावमादायासंभववारणाय यद्यद्रूपावच्छिन्नानिरूपितेत्यनेन यद्रूपघटितधर्मावच्छिन्नानिरूपितत्वस्य यद्यद्रूपावच्छिन्नाविषय
कप्रतीतिवृत्तित्वस्य वा विवक्षणावश्यकत्वेन दोषवद्देशादिविषयितायां नादृशादोषतावच्छेदकावच्छिन्ननिरूपितत्वाभावासत्त्वेनैवासं
भवाप्रसक्तौ दोषवद्देशविषयिताव्यावर्तकनिरुक्तोभयरूपावच्छेदकत्वविशेषणस्यानुपयोग इति वाच्यं ॥ उदासीनघटत्वपटत्वाद्य
वच्छिन्नानिरूपितत्वस्य तादृशविषयितान्यतमत्वसामानाधिकरण्येन सत्त्वात्तत्तदवच्छिन्नविषयकत्वाभावकूटस्य प्रतीतिविशेषणत
पेक्षया यद्यद्रूपावच्छिन्नानिरूपितमित्यत्र स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छे
दकत्वेन यद्रूपस्य विशेषणीयतया वह्नित्वाद्यवच्छिन्नानिरूपितत्वमादायासंभवानवकाशः ॥ एवं सति दोषवद्देशविषयिता
यां तादृश्यां दोषनिरूपितत्वाभावमादायासंभववारणाय निरुक्तोभयरूपावच्छेदकत्वविवक्षा आवश्यकी ॥ नन्वेवं बाधवि
शिष्टव्यभिचारे ऽतिव्याप्तिकथनासंगतिर्बाधविशिष्टव्यभिचारविषयकत्वनिष्ठनिरुक्तोभयरूपावच्छेदकताकप्रतिबंधकत्वा
प्रसिद्धेः ॥ यद्यप्यनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमात्रनिवेशेऽपि बाधविशिष्टव्यभिचारविषयकत्वव्यापकप्रतिबंधकता.

नातिरिक्तवृत्तावेकसंबंधेनबाधविशिष्टव्यभिचारनिरूपितविषयितायामपरसंबंधेनबाधविशिष्टव्यभिचारनिरूपित
त्वाभावसत्वाद्बाधविशिष्टव्यभिचारत्वावच्छिन्नेनसर्वत्रातिव्याप्तिःसंभवतितथापिकालिकसंबंधावच्छिन्नप्रतियोगिताका
योगोलकाभाववद्वन्हिहेतुकेधूमेसाध्येकालिकसंबंधेनधूमाभाववदयोगोलकविशिष्टधूमाभाववद्वृत्तिवन्हिरूपेबाधविशिष्ट
व्यभिचारेऽतिव्याप्तिःकालिकसंबंधेनतादृशबाधविशिष्टव्यभिचारविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यांतर्गतहेत्व
सिद्धिप्रतिबंधकतानतिरिक्तवृत्तित्वस्यकालिकसंबंधातिरिक्तसंबंधेनबाधविशिष्टव्यभिचारविषयितायामसत्वादितिवाच्यं
॥उभयरूपावच्छेदकत्वनिवेशेवन्हिर्धूमवान्वन्हेरित्यत्रधूमाभावविशिष्टधूमाभाववद्वृत्तित्वविशिष्टवन्हित्वावच्छिन्नएवातिव्याप्ति
स्तादृशवन्हिविषयितायाधूमाभावत्वावच्छिन्नविषयतानिरूपितवन्हित्वावच्छिन्नविषयितात्वेनसाध्यवत्ताबुद्धिप्रतिबंधकता
निरूपितोभयरूपावच्छेदकत्वस्यधूमाभाववद्वृत्तित्वनिष्ठविषयतानिरूपितवन्हित्वावच्छिन्नविषयितात्वेनचव्याप्तिबुद्धिप्रति
बंधकतानिरूपितोभयरूपावच्छेदकत्वस्यचसत्वात्॥ विषयित्वद्वयेस्वरूपसंबंधरूपानतिरिक्तवृत्तित्वरूपयोर्द्वयोरेवावच्छेदक

त्वयोरेवोक्तयुक्त्यानिवेशावश्यकत्वेनविषयिताद्वयेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वमात्रनिवेशाभिमानमूलकयोः ॥ अथबाधविशिष्टव्यभिचारविषयकत्वव्यापकप्रतिबंधकतानतिरिक्तवृत्तिव्यभिचारविशिष्टबाधनिरूपितविषयितायांबाधविशिष्टव्यभिचारनिरूपितत्वाभावसत्वान्नबाधविशिष्टव्यभिचारेऽतिव्याप्तिः ॥ नन्वेवंह्रदोवह्न्यभाववान्ह्रदेवह्न्यभावइतिज्ञानयोरेकरूपेणप्रतिबंधकतयावह्न्यभाववद्ध्रदत्वावच्छिन्नासंग्रहस्तदवच्छिन्नविषयकत्वव्यापकप्रतिबंधकतानतिरिक्तवृत्तिह्रदवृत्तिवह्न्यभावविषयितायांवह्न्यभाववद्ध्रदत्वावच्छिन्नानिरूपितत्वसत्वादितियत्किंचिद्विषयित्वेस्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वविशेषणमावश्यकमेवंचव्यभिचारविशिष्टबाधविषयितायाःबाधविशिष्टव्यभिचारविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वाभावेनबाधविशिष्टव्यभिचारत्वावच्छिन्नेऽतिव्याप्तिसंगतिरितिवाच्यं ॥ उत्तेजकीभूताप्रामाण्यानानुगमेनतादृशज्ञानयोरेकरूपेणप्रतिबंधकत्वायोगात्प्रथमनचेत्यादिकल्पेऽसंभवमभिधास्यतोग्रंथकर्तुस्तादृशज्ञानयोरेकरूपेणप्रतिबंधकत्वस्याननुमतत्वाच्च ॥ नचमहानसीयवन्हेःसाध्य

टिप्पणं  अस्यचाग्रेतनेनपूर्वपक्षसमाधानयोरित्यनेनान्वयोबोध्यः

त्वेमहानसीयवह्न्यभाववद्धदोवह्न्यभाववद्धदश्चबाधस्तत्रमहानसीयवन्हिमत्ताबुद्धिंप्रतिमहानसीयवह्न्यभाववत्ताज्ञानवह्न्यभावव
त्ताज्ञानसाधारणंमहानसीयत्वनिष्ठावच्छेदकताभिन्नंवन्हित्वनिष्ठावच्छेदकताभिन्नंचयदवच्छेदकत्वंतदनिरूपकप्रतियोगिताकाभाव
वत्ताज्ञानत्वेनैकप्रतिबंधकत्वंसंभवतिताद्दशाभावाभाववद्विशेष्यकत्वावच्छिन्नताद्दशाभावप्रकारकत्वप्रकारकग्रहत्वेनानुगतेन
ताद्दशाज्ञानप्रतिबंधकतायामप्रामाण्यग्रहस्योत्तेजकत्वसंभवात्तथाचमहानसीयवह्न्यभाववद्धदत्वावच्छिन्नविषयिताव्यापक
प्रतिबंधकतानातिरिक्तवृत्तिवह्न्यभाववद्धदविषयितायांमहानसीयवह्न्यभाववद्धदत्वावच्छिन्नानिरूपितत्वसत्वान्महानसीयवह्न्य
भाववद्धदरूपबाधाव्याप्तिवारणायथत्किंचिद्विषयित्वेस्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वंविशेषणमावश्य
कमितिबाधविशिष्टव्यभिचारेतिव्याप्तिसंगतिरितिवाच्यं ॥ वन्हिमत्ताबुद्धिंप्रतिवह्न्यभाववत्ताज्ञानत्वेनप्रतिबंधकतायाः क्रमत्वेनत
त्साधारणैकप्रतिबंधकतायांमानाभावात्॥ नचमहानसीयवन्हिमत्ताबुद्धिंप्रतिमहानसीयवन्हिघटोभयाभाववत्ताज्ञानस्यप्रतिबंधकतावारणायम
हानसीयत्वनिष्ठावच्छेदकताभिन्नेत्यादिदर्शितरूपेणप्रतिबंधकतायाआवश्यकत्वेनताद्दशप्रतिबंधकतायावह्न्यभाववत्ताज्ञानसाधारण्यंकेन ८१

र्यतइतिवाच्य ॥ महानसीयत्ववन्हित्वोभयपर्याप्तावच्छेदकताकप्रतियोगिताघटितरूपेणवन्हित्वविषयतामहानसीयत्वत्वावच्छि
न्नविषयतोभयपर्याप्तनिरूपकताकप्रतियोगितावच्छेदकत्वीयसांसर्गिकविषयताघटितरूपेणवामहानसीयवन्ह्यभाववत्ताज्ञा
नस्यप्रतिबंधकतयातादृशरूपस्यवन्ह्यभाववत्ताज्ञानसाधारण्याभावात् ॥ **नच** दोषज्ञानीयदोषैकदेशविषयितायांदोषनिरू
पितत्वाभावसत्वादसंभववारणाययद्रूपावच्छिन्नविषयिताव्यापकंतादृशप्रतिबंधतासामान्यंतद्रूपावच्छिन्नविषयितायामेवय
द्रूपावच्छिन्ननिरूपितत्वाभावोनिवेशनीय**स्तथाच**जातित्वादिनाह्रदत्वावगाहियत्ज्ञानंतत्साधारणयद्रूपपदग्राह्यवन्ह्यभावव
द्ध्रदत्वावच्छिन्नविषयितांप्रतितादृशप्रतिबंधकतासामान्यस्यव्यापकत्वाभावेनतद्रूपाप्रसिद्धिवारणाययद्रूपावच्छिन्नविषयित्वे
स्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वविशेषणमावश्यकमितिबाधविशिष्टव्यभिचारेऽतिव्याप्तिसंगतिरि
ति**वाच्यं** ॥ तादृशतद्रूपप्रसिध्यर्थंयद्रूपावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वस्यैवयद्रूपावच्छिन्नविषयि
तायांनिवेशनीयत्वादप्रसिद्धिवारकातिव्याप्तिसंपादकविशेषणदानस्यानुचितत्वात् ॥ दोषतावच्छेदकावच्छिन्नविषयकत्वा

व्यापकविषयिताशून्यत्वानिवेशेवह्न्यभाववज्जातिमत्कालीनत्वविशिष्टवह्न्यभाववद्ध्रदेऽतिव्याप्तिश्चवह्न्यभाववज्जातिमत्कालीन
त्वविशिष्टवह्न्यभाववद्ध्रदत्वरूपदोषतावच्छेदकत्वाभिमतस्यावच्छिन्नविषयकत्वाव्यापकत्वंनवह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयि
तायाइतितादृशविषयिताशून्यंयज्जातिमान्वह्न्यभाववानितिज्ञानंतत्साधारणवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वव्यापकताया
स्तादृशप्रतिबंधकतासामान्येऽसत्वाद्वह्न्यभाववद्ध्रदत्वस्ययद्रूपपदेनधर्तुमशक्यत्वात्तद्रूपावच्छिन्नविषयित्वंनतादृशविषयिता
न्यतमांतर्गतंकिंतुवह्न्यभाववज्जातिमत्कालीनवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वंतच्चतादृशान्हदत्वाच्छिन्ननिरूपितमेवेति ॥ न
न्वबाधाभावविशिष्टबुद्धित्वावच्छिन्ननिरूपितप्रतिबंधकतापिप्रतिबंधकतासामान्यांतर्गतातस्यांचव्यभिचारविशिष्टबाधत्वा
वच्छिन्नविषयितानवच्छेदकेतिबाधविशिष्टेऽतिव्याप्तिसंगतिरिति**वाच्यं** ॥ व्यभिचारविषयितायाःप्रमेयत्वाभावबुद्धित्वा
वच्छिन्ननिरूपितप्रतिबंधकतानवच्छेदकतयाप्रमेयत्वविशिष्टव्यभिचारादावतिप्रसंगवारणायप्रकृतानुमितिप्रतिबंधकतासा
मान्यस्यैवनिवेशत्वात् ॥ **नच**द्रव्यत्वंवन्हिमद्द्रव्यत्वाभाववच्छैवालादित्यादिस्थलीयेवह्न्यभाववद्द्रव्यत्वरूपबाधविशिष्टवह्न्यभावव ८२

द्वृत्तिशैवालरूपव्यभिचार एवातिव्याप्तिस्तत्रव्यभिचारविशिष्टबाधविषयितायांतादृशप्रतिबंधकतासामान्यांतर्गतासिद्धिज्ञानप्रति
बंधकतानवच्छेदकत्वादितिवाच्यं ॥ तत्रापिद्रव्यत्ववद्वह्न्यभाववद्वृत्तिशैवालविशिष्टवह्न्यभाववद्रव्यत्वविषयितायास्तादृशतयातत्र
स्वावच्छिन्नानिरूपितत्वसत्वात् ॥ नचवह्न्यभाववज्जलाभाववद्वन्हिव्यभिचारिजलंवन्हिमज्जलादित्यादिस्थलीयवह्न्यभाववज्जलरू
पबाधविशिष्टवन्हिव्यभिचारिजलरूपेबाधविशिष्टव्यभिचारेऽतिव्याप्तिस्तत्रव्यभिचारविशिष्टबाधविषयितायास्तादृशप्रतिबंधक
तासामान्यांतर्गतविशिष्टपक्षग्रहत्वावच्छिन्ननिरूपितवन्हिव्यभिचारिजलत्वावच्छिन्नधर्मिकवह्न्यभाववज्जलत्वावच्छिन्नप्रकारक
निश्चयत्वावच्छिन्नप्रतिबंधकतायामनवच्छेदकत्वाज्जलत्वसामानाधिकरण्येनैववन्हितदभावयोर्निवेशान्नदर्शितस्थलीयानुमितेराहा
र्यत्वशंका ॥ यद्यपि तादृशबाधविशिष्टव्यभिचारस्यविशिष्टपक्षग्रहविरोधिज्ञानविषयतयालक्ष्यत्वमेवेतिशंकासंभवतितथा
पिजलत्वव्यापकताविशिष्टस्वरूपसंबंधेनवह्न्यभावविशिष्टजलरूपबाधविशिष्टव्यभिचारस्यशुद्धस्वरूपसंबंधेनवह्न्यभावविशिष्ट
जलविशिष्टव्यभिचारात्मकाश्रयासिद्धिरूपविशिष्टांतरघटिततयाऽलक्ष्यत्वमेवेतिवाच्यं ॥ शुद्धस्वरूपसंबंधेनवह्न्यभाववज्जल

घटितवह्न्यभाववज्जलविशिष्टंयद्वह्निव्यभिचारिजलंतद्विशिष्टंयज्जलत्वव्यापकताविशिष्टस्वरूपसंबंधेनवह्न्यभाववज्जलरूपंबा
धस्वरूपंतदीयविषयित्वमपितादृशप्रतिबंधकतासामान्यावच्छेदकंतादृशबाधविशिष्टव्यभिचारानिरूपितंचेतितत्राप्यतिव्याप्त्यभा
वात्॥ स्वरूपसंबंधेनवह्न्यभाववज्जलाभाववत्ताबुद्धिंप्रतिस्वरूपसंबंधेनवह्न्यभाववैशिष्ट्यघटितवह्न्यभाववज्जलवत्ताबुद्धेः प्रतिबंधक
तायांस्वरूपस्यजलत्वव्यापकताविशिष्टस्वरूपस्यचशुद्धरूपसाधारणस्वरूपत्वेनैवनिवेशात्प्रतिबंधकतैक्यादितिचेदत्रकेचित्॥
प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्यसत्प्रतिपक्षतामताभिप्रायकंबाधविशिष्टव्यभिचारेऽतिव्याप्तिकथ
नंतादृशसत्प्रतिपक्षविषयकत्वावच्छिन्नप्रतिबंधकतासामान्यावच्छेदकंयत्प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षनि
रूपितविषयित्वंतत्रसत्प्रतिपक्षनिरूपितत्वाभावसत्वात्तादृशसत्प्रतिपक्षाव्याप्तिवारणाययत्किंचिद्विषयित्वेस्वावच्छिन्नविष
यकत्वाव्यापकविषयिताशून्यज्ञानीयत्वस्यस्वावच्छिन्ननिरूपितत्वस्यवाविशेषणस्यावश्यकतयाव्यभिचारविशिष्टबाधविष
यितायांतादृशविशेषणविरहेणबाधविशिष्टव्यभिचारविषयितायाएवतादृशतयातस्यांचबाधविशिष्टव्यभिचारनिरूपितत्वा ८३

भावासत्वेनबाधविशिष्टव्यभिचारेऽतिव्याप्तेर्दुर्धरत्वादितिपूर्वपक्षसमाधानयोरनवकाशः॥ सत्प्रतिपक्षविषयित्वाव्यापकविष
यितावत्वसत्प्रतिपक्षविषयकत्वावच्छिन्नप्रतिबंधकतावच्छेदकेविषयितावत्वोभयाभाववज्ज्ञानवृत्तितादृशयत्किंचिद्विषयित्वंयादृशयादृशध
र्मावच्छिन्नानिरूपितमितिपरिष्कारेनिरुक्तविशेषणस्ययत्किंचिद्विषयितायामदानेपिदर्शितसत्प्रतिपक्षसंग्रहस्यव्यभिचारविशिष्टबा
धविषयितामादायबाधविशिष्टव्यभिचारासंग्रहस्यचसंभवाच्चास्मदुक्तंविषयिताद्वयेनिरुक्तोभयरूपावच्छेदकत्वविवक्षणमेवग्रं
थकृदभिप्रेतमितिसुधियोविदांकुर्वंतु॥ लाघवादाहाथवेति ॥अत्रापिपाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तिवारणाय
विषयिताद्वयेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वंनिवेशनीयंतादृशदोषवद्देशादिविषयितामादायासंभववारणायव्यभिचारघटि
तबाधेऽव्याप्तिवारणायचस्वरूपसंबंधरूपावच्छेदकत्वमपिनिवेशनीयंयद्धर्मावच्छिन्नविषयकत्वावच्छिन्नमित्यस्ययद्रूपावच्छि
न्नविषयतानिरूपितप्रकारकत्वावच्छिन्नत्वंतादृशप्रकारकत्वयद्धर्मावच्छिन्नविषयकत्वान्यतरावच्छिन्नत्वंवार्थः॥ यद्धर्मावच्छि
न्ननिरूपितत्वव्याप्यमित्यस्ययद्धर्मावच्छिन्नविषयतानिरूपितप्रकारितात्वव्याप्यंतादृशप्रकारितात्वयद्धर्मावच्छिन्ननिरूपित

त्वान्यतरव्याप्यमितिवार्थस्तेननघटोऽवृत्तिरित्यादौघटावच्छिन्नरूपबाधेऽव्याप्तिःशेषंपूर्ववद्बोध्यं ॥ विषयिताद्वयेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यकल्पद्वयेपिनिवेशात्पाषाणमयत्वादिविशिष्टपर्वतादावतिव्याप्तिविरहाद्विशेष्यदलंव्यर्थमित्याशयेनाहसमुदितलक्षणार्थइति ॥ विशेषगुणवद्भिन्नइति ॥ संख्यान्यत्वंपरिमाणान्यत्वंवाविशेषइतिकेचित् ॥ घटत्वावच्छेदेनगुणवत्वमेवेति ॥ धर्मितावच्छेदकैकदेशाव्यापकतावगाहनस्यधर्मितावच्छेदकावच्छेदेनविशिष्टबुद्धावनभ्युपगमेनविशेषगुणवद्भिन्नत्वघटत्वोभयावच्छेदेनगुणवद्भेदावगाहिज्ञानस्यगुणवद्भेदांशेतत्संसर्गांशेवाघटत्वमात्रव्यापकतावगाहित्वाभावेनतदप्रतिबध्यज्ञानविषयस्यघटत्वसामानाधिकरण्येनगुणवत्वस्यनिरुक्तस्थलेबाधत्वंनसंभवतीतिभावः ॥ घटत्वसामानाधिकरण्येनघटत्वावच्छेदेनवेति ॥ घटत्वावच्छेदेनविशेषगुणवद्भेदस्यपक्षतावच्छेदकघटकत्वेतत्सामानाधिकरण्येनविशेषगुणवत्वमाश्रयासिद्धिर्घटत्वसामानाधिकरण्येनतस्यपक्षतावच्छेदकघटकत्वेतदवच्छेदेनविशेषगुणवत्वमाश्रयासिद्धिरितिभावः ॥ नप्रवेशइति ॥ विशेषगुणत्वत्वपर्याप्तावच्छेदकताकानुयोगिताकघटत्वसमानाधिकरणाभावप्रतियोगि

तावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदवद्विशेषगुणत्ववद्विशेषगुणवद्घटरूपाश्रयासिद्धेर्गुणत्वत्वपर्याप्तावच्छेदकताकानुयोगिताकघटत्व
समानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदवद्गुणत्ववद्गुणवद्घटरूपबाधस्याप्रवेशादित्यर्थः ॥ **विशेषगुणा
भाववान्द्वितीयादिक्षणावच्छिन्नो घटो गुणसामान्याभाववानिति ॥ आवश्यकत्वादिति** ॥ घटत्वसामानाधिकरण्ये
नविशेषगुणवद्द्वितीयक्षणावच्छिन्नघटरूपाश्रयासिद्धौ घटत्वसामानाधिकरण्येन गुणवद्द्वितीयक्षणावच्छिन्नघटरूपबाधे च घट
त्वव्यापकतया विशेषरूपावच्छिन्नायाः सामान्यरूपावच्छिन्नाया वा अघटकत्वादिति भावः ॥ **अत्रेदं बोध्यं** ॥ विरुद्धयोरपि ग्राह्यतद
भावयोर्धर्मितावच्छेदकसामानाधिकरण्यं भिन्नाधिकरणांतर्भावेण संभावितमिति धर्मितावच्छेदकसामानाधिकरण्येन ग्राह्यबुद्धिं प्रति
धर्मितावच्छेदकसामानाधिकरण्येन ग्राह्याभावावगाहिज्ञानस्य न प्रतिबंधकत्वं विषयविरोधानावेतज्ज्ञानाभावे वा प्रतिबध्यप्रतिबंधकभावानुप
गमादत एव प्राचीनाः समानविशेष्यकत्वं ज्ञानस्य प्रतिबंधकतायां तंत्र**मित्यूचुः ॥ नव्यतार्किकाश्च** प्रतिबध्यप्रतिबंधकान्यतरस्य धर्मिता
वच्छेदकव्यापकत्वावगाहित्वं प्रतिबध्यप्रतिबंधकभावे तंत्र**मित्करीचक्रुः** ॥ एवं च ग्राह्यतदभावयोर्द्वितीयक्षणादिरूपाननुगतैककाला

वच्छेदेन भिन्नाधिकरणांतर्भावेण धर्मितावच्छेदकसामानाधिकरण्यं संभावितोपपत्तिकमेवेति ग्राह्यगुणसामान्याभावादौ द्वितीया दिक्षणावच्छेदेन घटत्वासामानाधिकरण्यावगाहिबुद्धिं प्रति ग्राह्याभावे गुणत्वावच्छिन्ने द्वितीयादिक्षणावच्छेदेन घटत्वसामानाधिकरण्यावगाहिज्ञानं न प्रतिबंधकमत एव द्वितीयक्षणावच्छिन्नो नीलघटो गुणसामान्याभाववानिति बुद्धिं प्रति द्वितीयक्षणावच्छिन्नपीतघटो गुणवानिति ज्ञानं न प्रतिबंधकमित्युपपद्यते तस्माद्द्वितीयक्षणादेः स्वरूपसंबंधरूपं घटत्वादेस्तद्व्यापकत्वरूपं ग्राह्याभावावच्छेदकत्वमवगाहमानस्यैव द्वितीयक्षणावच्छिन्नघटो गुणवानिति ज्ञानस्य प्रतिबंधकत्वं ॥ नच ग्राह्ये तत्कालावच्छिन्नत्वबुद्धिं प्रति ग्राह्याभावे तत्कालावच्छिन्नत्वावगाहिज्ञानत्वेन प्रतिबंधकत्वात् द्वितीयक्षणावच्छिन्नगुणादेरेवबाधादिरिति वाच्यं ॥ विषयविरोधस्योक्तरीत्याऽभावेन तादृशज्ञानस्य प्रतिबंधकताया निर्बीजत्वात् ॥ एतेन विशेषगुणवद्भिन्नो द्वितीयक्षणावच्छिन्नघटो गुणसामान्यवद्भिन्न इति पाठकल्पनमप्यपास्तं ॥ वस्तुतस्तु घटो गुणसामान्याभाववान्विशेषगुणाभावादित्यादावचच्छेदकावच्छेदेन साध्यहेत्वभावे घटत्वसामानाधिकरण्येन विशेषगुणवद्भेदरूपभागासिद्धेः सामानाधिकर

ण्येन गुणवद्धट रूपबाधघटितत्वमावश्यकमिति ॥ ननु प्रतिबंधकताघटितलक्षणस्य दीधितिकारेणैव त्याज्यतयेयमव्याप्तिर
पितत्यागबीजमध्ये प्रवेश्येत्यत आहवस्तुतस्त्विति ॥ एतेनेत्यादि ॥ अत्रोभयत्रापि विषयितानिष्ठस्वरूपसंबंधरूपावच्छे
दकत्वविवक्षणे पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिस्तद्वारणाय प्रथमतोऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशोऽसाधार
ण्येऽव्याप्तिः पक्षधर्मताज्ञानासमानकालीनत्वासाधारण्यविषयकत्वोभयाभाववज्ज्ञानवृत्तित्वविशिष्टासाधारण्यविषयिताव्या
पकप्रतिबंधकतावच्छेदकविषयिताकहेतुमत्पक्षरूपविशिष्टनिरूपितविषयितात्वव्यापकत्वस्यासाधारण्यानिरूप्यतायामसत्वा
त् ॥ पूर्वमनिवेश्य परत्रैवानतिरिक्तवृत्तित्वनिवेशोऽसाधारण्यविषयितानिष्ठस्वरूपसंबंधरूपावच्छेदकताकप्रतिबंधकताऽन
तिरिक्तवृत्तिनिरुक्तोभयाभाववज्ज्ञानवृत्त्यसाधारण्यविषयित्वमेवेति नासाधारण्येऽव्याप्तिर्नवा पाषाणमयत्वविशिष्टपर्वतेऽति
व्याप्तिः परंतु जलवद्ध्रदेऽतिव्याप्तिस्तद्विषयित्वनिष्ठस्वरूपसंबंधरूपावच्छेदकताकप्रतिबंधकताऽनतिरिक्तवृत्तिविषयिताकवह्न्य
भाववज्जलादिमद्वृत्तिजलवद्ध्रदरूपविशिष्टविषयितात्वव्यापकत्वस्य जलवद्ध्रदत्वावच्छिन्ननिरूपितत्वे सत्वादत उभयत्रापि विष

यितानिष्ठमवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं निवेश्यं ॥ प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वव्यापकप्रतिबंधकतानति
रिक्तवृत्तिविषयिताकप्रमेयत्वविशिष्टव्यभिचाररूपविशिष्टनिरूपितविषयितात्वव्यापकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्न
निरूप्यत्वे सत्वात्प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नेऽतिव्याप्तिवारणाय तादृशप्रतिबंधकत्वं यद्यद्रूपावच्छिन्नविषयित्वव्यापकं तत्तद्रू
पावच्छिन्नविषयितान्यतमत्वव्यापकं स्वावच्छिन्ननिरूप्यत्वमिति वक्तव्यं ॥ ननु स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबंधकतानति
रिक्तवृत्तिविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्वमेव वक्तव्यं न तु तादृशविषयिताकविशिष्टनिरूपितेति तथा च तादृश
विषयितात्वस्य केवलव्यभिचारविषयितायामपि सत्वान्न प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरिति चेन्न ॥ अनतिरिक्तवृत्तित्वस्य
स्वव्यापकतत्कत्वरूपतया स्वपदस्य तत्तद्व्यक्तिपरतया ह्रदो वह्न्यभाववानिति ज्ञानीयनिरूप्यनिरूपकभावापन्नवह्न्यभावादिविष
यितासाधारणतत्कत्वविशिष्टविषयितात्वव्यापकत्वस्य स्वावच्छिन्ननिरूप्यत्वेऽसंभवादसंभववारणाय यद्यद्रूपावच्छिन्नेत्यादिविव
क्षणस्यावश्यकत्वादेतादृशविवक्षातात्पर्यकमेव तादृशविषयिताकविशिष्टनिरूपितेति ध्येयं ॥ न चैवं दोषवद्धेशविषयितासाधा

रणतादृशविषयितान्यतमत्वव्यापकत्वस्यदोषनिरूप्यत्वेऽभावादसंभवइति**वाच्यं** ॥ स्वावच्छिन्नविषयकज्ञानवृत्तित्वेउक्तविषयितान्यतमत्व
व्यापकत्वविवक्षणात् ॥ **स्वावच्छिन्नानिरूपितेति** ॥ अत्रस्वावच्छिन्नानिरूपितविषयित्वनिष्ठस्वरूपसंबंधरूपावच्छेदकत्वानिरू
पकप्रतिबंधकतानिरूपितस्वरूपसंबंधरूपावच्छेदकत्वनिवेशेऽसाधारण्येऽव्याप्तिस्तज्ज्ञानीयप्रतिबंधकतायास्तदनिरूपितहेतुमत्पक्षनि
रूपितविषयित्वनिष्ठस्वरूपसंबंधरूपावच्छेदकत्वनिरूपकत्वात्तादृशविषयित्वाव्यापकत्वमेवतादृशविषयित्वानवच्छिन्नत्वंवक्तव्यंतथा
चहेतुमत्पक्षविषयितायाःकेवलहेतुमत्पक्षज्ञानेपिसत्वात्तदव्यापकत्वंतज्ज्ञानीयप्रतिबंधकतायामव्याहतमितिनाव्याप्तिस्तथापिपा
षाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिरतःप्रतिबंधकतावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपमेवनिवेशनीयं ॥ प्रमेयत्वविशिष्टव्यभिचा
रत्वावच्छिन्नानिरूपितघटत्वावच्छिन्नविषयित्वानवच्छिन्नप्रतिबंधकतावच्छेदकविषयितानिरूपकतावच्छेदकप्रमेयत्वविशिष्ट
व्यभिचारत्वमादायतदवच्छिन्नेऽतिव्याप्तिवारणायस्वावच्छिन्नाविषयकप्रतीतिवृत्तियद्रूपावच्छिन्नविषयित्वंतत्तद्रूपावच्छिन्नवि
षयित्वानवच्छिन्नत्वमेवनिवेशनीयं ॥ व्यभिचारघटितबाधाव्याप्तिंवारयतांमतमाह ॥ **अत्रकेचिदिति** ॥ **साजात्यंचहे**

**त्वाभासविभाजकरूपेणेति** तथाच स्वसमानाधिकरणहेत्वाभासविभाजकरूपसमानाधिकरणंयत्त्वावच्छिन्नाविषयकप्रती
तिविषयतावच्छेदकंतादृशंरूपंतदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंयत्त्वंतदवच्छिन्नत्वंस्वजातीयविशिष्टांतराघटितत्वंफ
लितं ॥ वह्न्यभाववद्ध्रदत्वरूपस्वसमानाधिकरणहेत्वाभासविभाजकबाधत्वसमानाधिकरणत्वावच्छिन्नाविषयकप्रतीतिविषयताव
च्छेदकह्रदत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्यवह्न्यभाववद्ध्रदत्वरूपस्वपदार्थेऽसत्वात्तादृशप्रतीतिविषयतावच्छेद
कतादृशत्वनिवेशात्तादृशत्वंचयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्येविरोधिविषयताप्रयुक्तोभयाभावस्त
त्वंतादृशंचरूपंनह्रदत्वादिकंकिंतुह्रदवृत्तिवह्न्यभावत्वादिकमेवेतिनदोषः ॥ **तच्चरूपंबाधत्वव्यभिचारत्वादीति** ॥ **आदिना**
सत्प्रतिपक्षत्वासाधारणत्वानुपसंहारित्वविरोधत्वाश्रयासिद्धित्वसाधनासिद्धित्वव्याप्यत्वासिद्धित्वस्वरूपासिद्धित्वसाध्यासिद्धित्वपरि
ग्रहः ॥ **तत्रबाधत्वं** यादृशविषयतात्वंपक्षेपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंसत्साध्येसाध्यतावच्छेदकवैशि
ष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंतादृशविषयतात्वावच्छिन्नतादृशविषयतानिष्ठप्रयोजकताकःप्रकृतपक्षतावच्छेदकावच्छि

न्नेप्रकृतसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वाभावोयद्रूपावच्छिन्नविषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपवत्त्वं ॥ अत्रविषयतानिष्ठप्रयोजकतायांयादृशविषयतात्वंपक्षेपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंतादृशविषयतात्वावच्छिन्नत्वनिवेशान्नाश्रयासिद्धौ बाधत्वलक्षणातिव्याप्तिः ॥ नवागुणवद्भिन्नोघटोविशेषगुणवद्भिन्नइत्यादौगुणवद्घटरूपाश्रयासिद्ध्यास्वसजातीययाघटितेविशेषगुणवद्घटरूपबाधादौसामान्यलक्षणाव्याप्तिः ॥ विषयतायांतादृशाभावाप्रयोजकत्वमात्रनिवेशे उक्तस्थलेबाधविषयतायाआश्रयासिद्धिविषयत्वाभिन्नतयाआश्रयासिद्धिविषयतायास्तादृशाभावप्रयोजकत्वेबाधविषयताया अपितादृशाभावप्रयोजकत्वसंभवतीत्यव्याप्तिरतःप्रयोजकतानवच्छेदकतादृशविषयतात्वावच्छिन्नत्वस्यविषयतानिष्ठप्रयोजकतायांनिवेशस्तथासतिपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंयद्घटत्वावच्छिन्नविशेष्यतानिरूपितविशेष

टिप्पणं  विशेषगुणवद्घटविषयतायाः पक्षेपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंपद्गुणवद्घटविषयतात्वंतद्वत्यागुणवद्घटरूपस्वरूपासिद्धिविषयतात्वेनेत्यादि

त्वविशिष्टगुणत्वावच्छिन्नप्रकारतात्वंतदवच्छिन्नत्वस्यपक्षसाध्यवैशिष्ट्यावगाहित्वाभावप्रयोजकतायांसत्वान्नदोषः ॥ निरूपितत्व
विशिष्टवृत्तित्वपक्षकेनिरूपितत्वाभाववशिष्टवृत्तित्वाभावसाध्यकेवृत्तित्ववन्निरूपितत्वविशिष्टवृत्तित्वरूपबाधेस्वसजातीयनिरूपि
तत्वविशिष्टवृत्तित्वरूपसाध्यासिद्धिघटितेसामान्यलक्षणाव्याप्तिःनचनिरूपितत्वविशिष्टवृत्तित्वरूपसाध्याप्रसिद्धिविषयतायावृत्तित्वरूपपक्षेनिरू
पितत्वरूपपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वात्कथमव्याप्तिरितिवाच्यं ॥ वृत्तित्वत्वसामानाधिकरण्येननिरू
पितत्वस्यपक्षतावच्छेदकत्वाद्वृत्तित्वत्वावच्छेदेननिरूपितत्वाभावस्यसाध्यतावच्छेदकघटकत्वात्सामानाधिकरण्येननिरूपित
त्वविशिष्टवृत्तित्वविषयतायाअतथात्वेनतादृशासिद्धौसामान्यलक्षणाव्याप्तिरतस्तादृशप्रयोजकतानवच्छेदकयादृशविषय
तात्वेसाध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वनिवेशः ॥ विषयतायांतादृशावगाहित्वाभावाप्रयोजक
त्वमात्रनिवेशेउक्तबाधासिद्धिविषयतयोरैक्यात्पूर्वोक्तरीत्यातादृशबाधेऽव्याप्तिरतःप्रयोजकतानवच्छेदकरूपावच्छिन्नत्वपर्यंतनि
वेशः ॥ अभावेतादृशविषयतात्वानवच्छिन्नविषयतानिष्ठप्रयोजकताकत्वनिवेशान्ननिर्वन्हिःपर्वतोवन्हिमानित्यादावेकदेशेउ

दासीनेतद्घटिताश्रयासिद्धौ चातिव्याप्तिः सामान्यलक्षणाव्याप्तिर्वा ॥ **यद्यपि** निरुक्तबाधत्वस्य यद्रूपपदग्राह्यवह्न्यभाववद्ध्रदत्वरूपतया तस्य च ह्रदवृत्तिवह्न्यभावे ऽसत्वाद्वह्न्यभाववद्ध्रदत्वरूपं यत्त्वं तत्समानाधिकरणं यद्धेत्वाभासविभाजकनिरुक्तबाधत्वसमानाधिकरणं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतादृशरूपाप्रसिद्धि**स्तथापि** तादृशाभावो यद्यद्रूपावच्छिन्नविषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तत्तद्रूपावच्छिन्नान्यतमत्वरूपबाधत्वेन साजात्यं दोषसामान्यलक्षणे विवक्षणीयं ॥ **एवं रीत्यैव व्यभिचारत्वादिनापीति न दोषः** ॥ उक्तबाधत्वस्य सत्प्रतिपक्षसाधारण्येपि सत्प्रतिपक्षघटितबाधस्यालक्ष्यत्वादेव न तत्रैतादृशसामान्यलक्षणस्याव्याप्तिः ॥ प्रकृतसामान्यलक्षणघटकं सत्प्रतिपक्षत्वं तु निरुक्तबाधत्वरूपमेव ॥ **नच्चैवं** बाधघटितसत्प्रतिपक्षे सामान्यलक्षणाव्याप्तिस्तस्य स्वसजातीयबाधरूपविशिष्टांतरघटितत्वादिति **वाच्यं** ॥ बाधघटितसत्प्रतिपक्षस्थले बाधस्यैव दोषत्वांगीकारात्तद्घटितसत्प्रतिपक्षस्यालक्ष्यत्वात् ॥ **व्यभिचारत्वं च** यादृशविषयतात्वं हेतौ हेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकनानवच्छेदकं सत्तु साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकं तादृशविषयतात्वावच्छिन्नविषयतानिष्ठप्रयोजकताकः प्रकृ

तद्धेतुतावच्छेदकावच्छिन्नेप्रकृतसाध्यात्यंताभाववदवृत्तित्वप्रकृतसाध्यवदन्यावृत्तित्वादिरूपंयच्चसाध्यतावच्छेदकेहेतुसमानाधिकरणाभावप्रतियोगिता
नवच्छेदकत्वादिरूपमव्यभिचारितत्वंतत्तदवगाहित्वकूटाभावीयद्रूपावच्छिन्नविषयताकनिश्चयोव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपावच्छिन्नत्वं॥अत्र
वृत्तित्वविशिष्टवन्हिहेतुकधूमसाध्यकस्थलेवृत्तित्वविशिष्टवन्हिरूपहेत्वसिद्धावतिव्याप्तिस्तद्विषयतायाअपिस्वप्रयुक्तहेतुतावच्छेदकवैशि
ष्ट्यावगाहित्वाभावप्रयोज्योक्ताभावप्रयोजकत्वादतस्तद्वारणायविषयतानिष्ठप्रयोजकतायांहेतुतावच्छेदकवैशिष्ट्यावगा
हिभावप्रयोजकतानवच्छेदकतादृशविषयतात्वावच्छिन्नत्वनिवेशः॥ नचैतल्लक्षणस्यव्यवहाराप्रयोजकत्वेनातिव्याप्तिर्न
क्षतिकरीतिवाच्यं॥तथासतिव्यभिचारत्वेनस्वसजीयवृत्तित्वविशिष्टवन्हिरूपहेत्वसिद्धिरूपविशिष्टांतरघटिततयासामा
न्यलक्षणस्यतादृशव्यभिचारेऽव्याप्तिरतस्तद्वारणायोक्तविशेषणसार्थक्यात्॥ एवंनिरूपितत्वाभावविशिष्टवृत्तित्वसाध्य
कप्रमेयत्वहेतुकस्थलेनिरूपितत्वविशिष्टवृत्तित्वरूपसाध्यासिद्धावतिव्याप्त्यातादृशसाध्यासिद्धिघटितप्रमेयत्वनिष्ठवृत्ति
त्वाभाववन्निरूपितवृत्तित्वरूपव्यभिचारेसामान्यलक्षणाव्याप्तिरतस्तद्वारणाययादृशविषयतात्वेसाध्येसाध्यतावच्छेदकवै ८९

शिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वनिवेशः ॥ धूमव्यभिचारिवन्हिधूर्मवान्वह्नेरित्याद्याहार्यव्यभिचारस्थलेऽउदासीने ए
कदेशेऽचातिव्याप्तिरतो विषयताप्रयुक्तत्वनिवेशः ॥ अत्र साध्याभावाव्यापकहेत्वभावस्यापिव्यभिचारत्वे तत्राव्याप्तिवारणायव्यतिरे
व्याप्त्यवगाहित्वमपिकूटमध्येनिवेशनीयंइत्थंञ्चव्यतिरेकव्याप्त्यवगाहित्वाभावंप्रतितद्विषयतायाःप्रयोजकतयातदवगाहित्वघटिततादृशकूटा
भावस्यतज्ज्ञानोत्तरानुमितित्वव्यापकत्वाच्च न तत्राव्याप्तिः ॥ नचव्यतिरेकव्याप्तिनिवेशेवह्न्यादिसाध्यकाभावाप्रतियोगित्वविशि
ष्टवाच्यत्वादिहेतुकस्थलेवह्न्यभाववद्वृत्त्यभावाप्रतियोगित्वविशिष्टवाच्यत्वरूपव्यभिचारेऽभावाप्रतियोगित्वविशिष्टवाच्यत्वरूपा
नुपसंहारित्वघटितत्वात्सामान्यलक्षणासत्वंस्यादितिवाच्यं ॥ विषयतानिष्ठप्रयोजकतावच्छेदकरूपेहेतुसाध्यान्यतरस्मिन्नत्वं
ताभावप्रतियोगित्वावगाहित्वाभावप्रयोजकतानवच्छेदकत्वस्यापि निवेशेन तादृशाव्याप्तिवारणात् ॥ असाधारणत्वंच
यादृशविषयतात्वंपक्षेपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंसत्साध्येसाध्यतावच्छेदकवैशिष्ट्यावगा
टिप्पणं यादृशविषयतात्वेइत्यर्थः

हित्वाभावप्रयोजकतानवच्छेदकंतादृशविषयतात्वावच्छिन्नविषयतानिष्ठप्रयोजकताकः पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदका
वच्छिन्नवैशिष्ट्यावगाहित्वाभावः पक्षधर्मताज्ञानसमानकालीनयद्रूपावच्छिन्नविषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्त
द्रूपावच्छिन्नत्वं ॥ अत्राप्रतियोगित्वविशिष्टजलपक्षकवन्हिसाध्यकजलहेतुके सिद्धिघटितासाधारण्यसंग्रहाय यादृशविषयतात्वे पक्षेप
क्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वनिवेशः ॥ एवमवृत्तिवन्हिव्यापकीभूताभावप्रतियोगित्वकालीनवन्हिमा
न्जलादित्यादौ वृत्तिवन्हिव्यापकीभूताभावप्रतियोगित्वरूपसाध्यासिद्धिघटितजलवृत्तिवन्हिव्यापकीभूताभावप्रतियोगित्वरूपासाधा
रण्ये सामान्यलक्षणाव्याप्तिवारणाय साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वनिवेशः ॥ एतादृशासा
धारण्यस्य बाधसाधारण्येपि बाधघटितासाधारण्यस्थले बाधस्यैव दोषत्वोपगमेन तद्घटितासाधारण्यस्यालक्ष्यत्वान्नक्षतिः ॥ यादृ
शविषयतात्वं हेतौ हेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकं सत्साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभाव

टिप्पणं अस्य प्रतियोगित्वमित्यनेन संबंधः

प्रयोजकतानवच्छेदकंतादृशविषयतात्वावच्छिन्नविषयतानिष्ठप्रयोजकताकः प्रकृतसाध्यप्रकृतहेत्वन्यतरनिष्ठविशेष्यतानिरूपित
भावप्रतियोगित्वविषयताकत्वाभावोयद्रूपावच्छिन्नविषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपावच्छिन्नत्वमनुपसं
हारित्वं ॥ सर्ववाच्यंकांचनमयत्वाभाववत्प्रमेयत्ववत्कांचनमयमेयत्वादित्यादावभावाप्रतियोगित्वविशिष्टंयत्कांचनमयत्वाभावव
त्प्रमेयत्वंतद्रूपानुपसंहारिणिस्वसजातीयकांचनमयत्वाभाववत्प्रमेयत्वरूपहेत्वसिद्धिघटितेसामान्यलक्षणाव्याप्तिरतोयादृशविष
यतात्वेहेतौहेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वनिवेशः ॥ एवंसर्वपक्षकेकांचनमयप्रमेयत्वसाध्यक
कांचनमयत्वाभाववत्प्रमेयत्वहेतुकेऽभावाप्रतियोगित्वविशिष्टकांचनमयत्वाभाववत्प्रमेयत्वरूपानुपसंहारित्वेकांचनमयत्वा
भाववत्प्रमेयत्वरूपसाध्यासिद्धिघटितेसामान्यलक्षणाव्याप्तिरतस्तत्रसाध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानव
च्छेदकत्वनिवेशः ॥ विरोधत्वंतुयादृशविषयतात्वंहेतौहेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकं ‒ सत्साध्ये
साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंतादृशविषयतात्वावच्छिन्नविषयतानिष्ठप्रयोजकताकःहेतुतावच्छे

दकावच्छिन्ने साध्यसामानाधिकरण्यावगाहित्वाभावो यद्रूपावच्छिन्नविषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपा
वच्छिन्नत्वं ॥ वह्निसाध्यककांचनमयत्वाभाववज्जलकालीनकांचनमयजलहेतुके वह्न्यसमानाधिकरणकांचनमयत्वाभाववज्जलरू
पविरोधे कांचनमयत्वाभाववज्जलरूपस्वसजातीयविशिष्टांतरघटिते कांचनमयत्वाभाववद्वह्निकालीनकांचनमयवह्निसाध्यके
जलहेतुके कांचनमयत्वाभाववद्वह्न्यसमानाधिकरणजलरूपविरोधे स्वसजातीयकांचनमयत्वाभाववद्वह्निरूपसाध्यासिद्धिघटिते
च सामान्यलक्षणाव्याप्तिवारणाय यादृशविषयतात्वे हेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्व साध्यता
वच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वयोर्निवेशः ॥ स्वरूपासिद्धित्वं तु यादृशविषयतात्वं हेतौ हेतुतावच्छे
दकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकं सत्पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकं तादृशविषयता
त्वावच्छिन्नविषयतानिष्ठप्रयोजकताकः प्रकृतपक्षतावच्छेदकावच्छिन्ने हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वाभावो यद्रूपावच्छिन्न
विषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपावच्छिन्नत्वं ॥ यादृशविषयतात्वे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभाव

प्रयोजकतानवच्छेदकत्वविशेषणप्रयोजनंबाधलक्षणोक्तमेवात्रापिज्ञेयं ॥ निरूपितत्वविशिष्टवृत्तित्वपक्षकेनिरूपितत्वाभावविशि
ष्टवृत्तित्वाभावहेतुकेवृत्तित्ववन्निरूपितत्वविशिष्टवृत्तित्वरूपस्वरूपासिद्धौस्वसजातीयनिरूपितत्वविशिष्टवृत्तित्वरूपहेत्वसिद्धिघटिता
यांसामान्यलक्षणाव्याप्तिवारणायतत्रहेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकत्वनिवेशः ॥ विषयताप्रयुक्तःप
क्षेपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावोहेतुमत्पक्षविषयकज्ञानासमानकालीनत्वपक्षतावच्छेदकव्यापकाभावप्रतियोगित्ववि
शिष्टहेतुविषयकत्वोभयाभाववज्ज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताकनिश्चयोत्तरानुमितित्वव्यापकस्तद्रूपावच्छिन्न
त्वं**आश्रयासिद्धित्वं** ॥ आहार्यस्थलीयाश्रयासिद्धौस्वसजातीयैकदेशघटितायांसामान्यलक्षणाव्याप्तिवारणायविषयताप्र
युक्तत्वमभावेविशेषणं ॥ सांप्रदायिकैःकांचनमयह्रदोवन्हिमान्जलादित्यादौकांचनमयत्वव्यापकीभूताभावप्रतियोगिजल
स्याश्रयासिद्धित्वस्वीकारात्तत्रचहेतुमत्पक्षज्ञानसमानकालीनतज्ज्ञानस्यैवप्रतिबंधकत्वादसमानकालीनज्ञानोत्तरानुमितौ
लक्षणघटकोक्ताभावस्यासत्वादव्याप्तिरतोज्ञानेनिरुक्तोभयाभावनिवेशनं॥ विषयताप्रयुक्तःप्रकृतसाध्येप्रकृतसाध्यतावच्छेदकवै

शिष्ट्यावगाहित्वाभावः पक्षधर्मताज्ञानासमानकालीनत्वसाध्यतावच्छेदकव्यापकीभूताभावप्रतियोगिहेतुविषयकत्वोभयाभाव
वज्ज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपावच्छिन्नत्वं साध्यासिद्धित्वं
विषयताप्रयुक्तत्वव्यावृत्तिः **पूर्ववत्** ॥ जलं कांचनमयजलवज्जलादित्यादौ कांचनमयत्वव्यापकीभूताभावप्रतियोगिजलरूपसा
ध्यासिद्धावव्याप्तिवारणाय ज्ञाने उभयाभावनिवेशनं ॥ विषयताप्रयुक्तो हेतौ हेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावः पक्षधर्मता
ज्ञानासमानकालीनत्वहेतुतावच्छेदकव्यापकीभूताभावप्रतियोगिहेतुविषयकत्वोभयाभाववन्निश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्न
विषयताकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तद्रूपावच्छिन्नत्वं **हेत्वसिद्धित्वं** ॥ जलं वह्निमत्कांचनमयजलादित्यादौ कां
चनमयत्वव्यापकीभूताभावप्रतियोगिजलरूपहेत्वसिद्धावव्याप्तिवारणायोभयाभावो निश्चये निविष्टः ॥ **अथैवं** साजात्यघटक
बाधत्वादिनिर्वचनेपि विशेषगुणवद्भिन्नो घटो सामान्यवद्भिन्न इत्यादौ विशेषगुणवद्घटरूपासिद्धावव्याप्तिर्दुर्वारा गुणवद्घटत्वादिरूपा
वच्छिन्नान्यतमत्वरूपनिरुक्तबाधत्वस्य स्वपदग्राह्यविशेषगुणवद्घटत्वसमानाधिकरणतात्वसमानाधिकरणहेत्वाभासविभाज

कबाधत्वसमानाधिकरणंयत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंतादृशंरूपंगुणवद्धटत्वादितदवच्छिन्नाविषयकप्रती
तिविषयतावच्छेदकत्वस्यस्वपदग्राह्यविशेषगुणवद्धटत्वेऽसत्वादितिचेन्न ॥ स्वावच्छिन्नविषयतावृत्तिहेत्वाभासविभाजकरूप
वत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयतासामान्यंतद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छे
दकंयत्स्वंतदवच्छिन्नत्वमितिरीत्यास्वसजातीयविशिष्टांतराघटितत्वस्यपरिष्करणीयत्वात् ॥ विषयतावृत्तिहेत्वाभासविभाजक
बाधत्वादिकंचनिरुक्ततत्तद्रूपावच्छिन्नविषयतान्यतमत्वादिरूपमेव ॥ तथाच गुणवद्धटत्वरूपयद्रूपावच्छिन्नविषयतायांवि
शेषगुणवद्धटत्वरूपस्यावच्छिन्नविषयतावृत्तितादृशविषयतान्यतमत्वरूपस्यहेत्वाभासविभाजकाश्रयासिद्धित्वस्याभावा
न्नाव्याप्तिः ॥ विरोधिविषयताप्रयुक्तत्वदलवैय्यर्थ्यमिति ॥ अथस्वसजातीयविशिष्टांतराघटितत्वनिवेशेसर्वस्यैव
विशेष्यदलस्यवैय्यर्थ्यसंभवेविरोधिविषयताप्रयुक्तत्वदलमात्रवैय्यर्थ्यकथनमसंगतं ॥ नच ह्रदोवह्निमान्धूमादित्यादौव
ह्न्यभावेऽतिव्याप्तिर्वह्न्यभावत्वावच्छिन्नायाह्रदेवह्न्यभावइतिज्ञानीयविषयतातस्यांहेत्वाभासविभाजकह्रदवृत्तिवह्न्यभावत्वावच्छि

न्नविषयतात्वरूपबाधत्वसत्वेनस्वपदेनवह्न्यभावत्वमुपादायतदवच्छिन्नविषयतावृत्तिहेत्वाभासविभाजकनिरुक्तबाधत्वव
द्यत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंह्रदनिष्ठात्यंताभावप्रतियोगिवन्हित्वावच्छिन्नविषयतासामान्यंतादृशवन्हित्वा
वच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंयत्त्वंवह्न्यभावत्वंतदवच्छिन्नत्वस्यतस्मिन्सत्वादतोविशेष्यदलमावश्यकं॥तथाचवह्न्य
भावत्वावच्छिन्नविषयकोयोवह्न्यभावइतिनिश्चयस्तदुत्तरंजायमानायांह्रदोवन्हिमान्वन्हिव्याप्यधूमवांश्चेत्यनुमितावुभयाभावासत्वा
न्नातिव्याप्तिरितिवाच्यं॥स्वावच्छिन्नविषयतासामान्यवृत्तित्वस्यहेत्वाभासविभाजकरूपेविवक्षणेनैववह्न्यभावेऽतिव्याप्तिवारण
संभवात्॥यदिचस्वावच्छिन्नविषयतायांयावत्वाननुसंधानेनविरोधिविषयताप्रयुक्तत्वमात्रवैयर्थ्यकथनसंगतिरित्युच्य
तेतदातुल्ययुक्त्यावन्हिमान्ह्रदोनिर्वह्निरित्यादौह्रदेवह्न्यभावइतिज्ञानीयवह्न्यभावत्वावच्छिन्नविषयतायांहेत्वाभासविभाजका
सिद्धित्वसत्वाद्वह्न्यभावत्वावच्छिन्नेऽतिव्याप्तिवारणायविरोधिविषयताप्रयुक्तत्वनिवेशनसार्थक्यसंभवेतद्वैयर्थ्यकथनासंग
तिरितिचेन्न॥ह्रदोऽभावानिरूपितप्रतियोगित्ववद्वह्निमान्धूमादित्यादौबाधसाध्यासिध्यनात्मकेऽभावनिरूपितप्रतियोगि

त्वविशिष्टेऽतिव्याप्तिस्तत्रह्रदवृत्त्यभावप्रतियोगीवन्हिरितिबाधज्ञानीयनिरूप्यनिरूपकभावापन्नाभावनिरूपितत्व विशिष्टप्रतियो
गित्वावच्छिन्नविषयतायांबाधत्वसत्वेनबाधत्वावच्छिन्नाघटितत्वस्यचाभावनिरूपितत्व विशिष्टप्रतियोगित्वावच्छिन्नेअक्षतत्वात्त द
तिप्रसंगवारणायस्वपदग्राह्यरूपेयद्रूपावच्छिन्नविषयितासामान्यमुक्तोभयाभावाधिकरणताप्रयोजकंतद्रूपावच्छिन्नानिरूपितत्वय
द्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्येउक्तोभयाभावस्तद्रूपावच्छिन्ननिरूपितत्वोभयाभाववत्वावच्छिन्नविषयिता
सामान्यकत्वंविशेषणमावश्यकं॥ तथाचाभावनिरूपितत्वविशिष्टप्रतियोगित्वावच्छिन्नविषयितासामान्यस्यप्रतिबंधकतानवच्छे
दकत्वेनोक्तोभयाभावाधिकरणताप्रयोजकतयातादृशरूपावच्छिन्नानिरूपितत्वस्याभावनिरूपितप्रतियोगित्वस्यासिद्धिघटितत्वेन
यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरमनुमितिसामान्येउभयाभावस्तद्रूपावच्छिन्ननिरूपितत्वस्यचस्वपदग्राह्याभावनिरू
पितप्रतियोगित्वावच्छिन्नविषयितासामान्येसत्वेनोभयाभावासत्वेनतादृशप्रतियोगित्वस्यस्वपदेनगृहीतुमशक्यत्वान्नतदवच्छिन्ने
ऽतिव्याप्तिः॥ तथाचह्रदोवन्हिमान्धूमादित्यादौवह्न्यभावत्वावच्छिन्नविषयितासामान्येयद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्त

रानुमितिसामान्येउभयाभावस्तद्रूपावच्छिन्ननिरूपितत्वाभावप्रयुक्तोभयाभावसत्वेनवह्न्यभाववत्वादेः स्वपदेनोपादानसंभवेनतदव
च्छिन्नेपूर्वोक्तरीत्याऽतिव्याप्तिवारणायविशेष्यदलसार्थक्यं ॥ निर्वह्निः पर्वतोवह्निमानित्यादौघटत्ववह्नित्वाद्यवच्छिन्नविषयितासामा
न्येउभयस्यैवपूर्वोक्तरीत्यासत्वेनतदभावासत्वादेवस्वपदेनघटत्ववह्नित्वाद्युपादानायोगेनतदवच्छिन्नेऽतिव्याप्तिविरहाद्विरोधिविष
यिताप्रयुक्तत्ववैयर्थ्यशंकायाः स्फसंगतिः ॥ नन्वेवमपिनिर्वह्निः पर्वतोवह्निमानित्यादौवृत्तिवह्निरूपैकदेशेऽतिव्याप्तिः पर्वतवृत्ति
र्वह्निरितिज्ञानीयवृत्तिवह्नित्वावच्छिन्नविषयितायांहेत्वाभासविभाजकासिद्धित्वसत्वेनसमानाकारकज्ञानीयविषयितयोरैक्ये
नवृत्तित्ववान्पर्वतवृत्तित्ववान्वृत्तित्ववांश्चवह्निरितिज्ञानीयवृत्तिवह्नित्वावच्छिन्नविषयितासामान्येउभयाभावाधिकरणताप्र
योजकत्वसत्वेनतदवच्छिन्नानिरूपितत्वाभावप्रयुक्तोभयाभावसत्वेनवृत्तिवह्नित्वस्यस्वपदेनोपादानसंभवात्तद्वारणायैव
विरोधिविषयिताप्रयुक्तत्वदलसार्थक्यंसंभवत्येवेतितद्वैयर्थ्यशंकाऽनुचितैवेतिवाच्यं ॥ वृत्तिवह्नित्वावच्छिन्नेऽतिव्याप्तिवा
रणायस्वावच्छिन्नविषयितासामान्येउक्तोभयाभावमनिवेश्यस्वावच्छिन्नविषयिताधिकरणतासामान्यएवोभयाभावोनिवेश ९४

नीयस्तथाचज्ञानभेदेनविषयिताधिकरणतायाभेदावश्यकत्वेनासमानकालीनज्ञाननिष्ठविषयिताधिकरणतायामुभयाभावाधिकरण
ताप्रयोजकत्वासत्वेनवृत्तिवह्नित्वावच्छिन्नविषयिताधिकरणतासामान्येउभयाभावासत्वेनवृत्तिवह्नित्वस्यस्वपदेनोपादानायोगेनतदवच्छि
न्नेऽतिव्याप्तिविरहात्॥ **नचाधिकरणतायामुभयाभावनिवेशेऽसाधारण्यासंग्रहः** पक्षधर्मताज्ञानासमानकालीनासाधारण्यज्ञाननिष्ठ
विषयिताधिकरणतायामुभयाभावाधिकरणताप्रयोजकत्वासत्वेनतद्विषयिताधिकरणतासामान्येनिरुक्तोभयोःसत्वेनस्वपदेनासा
धारण्यतावच्छेदकग्रहणायोगादिति**वाच्यं**॥ निरुक्तोभयाभाववत्तादृशाधिकरणतासामान्येपक्षधर्मताज्ञानासमानकालीनत्वासाधा
रण्यविषयकत्वोभयाभाववज्ज्ञानवृत्तित्वविशेषणदानेनतत्संग्रहसंभवात्॥ **केचित्तु** स्ववृत्तिहेत्वाभासविभाजकस्यस्वान्यस्मिन्नस
त्वंतस्यप्रतिव्यक्तिभिन्नत्वादित्यसंभवएवस्यादतोयद्रूपावच्छिन्नविषयिताप्रयुक्तोभयाभावप्रयोजकाभावाधिकरणतायांज्ञानवै
शिष्ट्याप्रयोज्यत्वेसतिस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वंतद्
र्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकतद्धर्मत्वमितिस्वसजातीयविशिष्टांतराघटितत्वंपरिष्करणीयं॥ **तथाच** वह्न्यभावव

ह्रदत्वावच्छिन्नविषयिताप्रयोज्यं यद्वह्न्यभाववद्ध्रद-ह्रदवृत्तिवह्न्यभावसत्प्रतिपक्षादिविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठप
क्षेसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणत्वंतद्ध्रदवृत्तिवह्न्यभावसत्प्रतिपक्षविषयिताप्रयोज्यमपीतिसत्प्रतिपक्ष-ह्रदवृत्तिवह्न्यभा
वाद्यघटितत्वस्यवह्न्यभाववद्ध्रदेसत्वाल्लक्षणसमन्वयः॥ अभाववान्वह्न्यभाववानितिनिश्चयकालीननिश्चयीयाभाववद्ध्रदत्वावच्छिन्न
विषयताप्रयुक्तत्वमादायदोषवारणायज्ञानवैशिष्ट्याप्रयोज्यत्वविशेषणं॥ तच्चज्ञानवैशिष्ट्यनिष्ठप्रयोजकताकत्वासाधारण्यविष
यितानिष्ठप्रयोजकताकत्वाभावोभयाभाववत्वंतेननासाधारण्यासंग्रहः॥ एकदेशीयनिरूप्यनिरूपकभावापन्नविषयितामादाया
संभववारणायतादृशविषयितात्वव्यापकरूपावच्छिन्नत्वस्यनिवेशः॥ इत्थंच ह्रदोवन्हिमान्धूमादित्यादावेकदेशावह्न्यभावत्वाव
च्छिन्नेऽतिव्याप्तिवारणायविशेष्यदलसार्थक्यंपरंतुविरोधिविषयिताप्रयुक्तत्वदलंव्यर्थमितितदभिधानंसंगतमित्याहुस्तद
सत्॥ उक्तरीत्याऽनुगतबाधत्वादिघटितसाजात्यनिवेशसंभवेनासंभवाभावात्तदर्थंयद्रूपावच्छिन्नविषयिताप्रयुक्तेत्यादिनि
ष्कर्षानावश्यकत्वात्॥ तथानिष्कर्षेपिवह्न्यभावत्वाद्यवच्छिन्नातिव्याप्तिवारणस्ययद्रूपावच्छिन्नविषयिताधिकरणतासामान्यप्रयु ९५

क्तत्वनिवेशेनैवसंभवेनविशेष्यदलवैय्यर्थ्यस्यदुर्वारत्वात् ॥ अधिकरणतापर्यंतनिवेशान्न्हदोवन्हिमान्जलादित्यादौहेतुमत्पक्षेऽतिव्याप्तिरि
ति विवेचनीयंस्फधीभिः ॥ स्वसजातीयविशिष्टांतरघटितंयत्स्वमिति ॥ स्वावच्छिन्नविषयतावृत्तिहेत्वाभासविभाजक
रूपवत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयितासामान्यंतद्रूपावच्छिन्नघटितंयत्स्वमित्यर्थस्तेनविशे
षगुणवद्भिन्नोघटोगुणसामान्यवद्भिन्नइत्यादावाश्रयासिद्धौनाव्याप्तिः ॥ साध्यसाधनग्रहाविरोधीति ॥ प्रतिबंधकताघटित
लक्षणाभिप्रायेणेदं ॥ यादृश विषयतात्वंहेतौहेतुतावच्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंसत्साध्येसाध्यताव
च्छेदकवैशिष्ट्यावगाहित्वाभावप्रयोजकतानवच्छेदकंतादृशविषयतात्वावच्छिन्नविषयतानिष्ठप्रयोजकताकेत्यादिपूर्वनिरुक्तवि
शिष्टांतराघटितत्वाघटितव्यभिचारत्वस्यापिव्यभिचारनिष्ठंमेयत्वमितिज्ञानीयव्यभिचारविषयतानिष्ठप्रयोजकतामादाय
व्यभिचारविशिष्टमेयत्वसाधारण्यंबोध्यं ॥ बाधविशिष्टव्यभिचारादाविति ॥ अयोगोलकंधूमवद्वन्हेरित्यादौधूमाभा
ववदयोगोलकवृत्तिधूमाभाववद्वृत्तिवन्हित्वावच्छिन्नइत्यर्थः ॥ अतिव्याप्तेरिति ॥ अत्रेदंचिंत्यं ॥ स्ववृत्तीनिस्वविषयता

वृत्तीनिवार्याचेतिहेत्वाभासविभाजकरूपाणितावद्रूपविशिष्टंयद्विशिष्टांतरंविशिष्टांतरविषयतासामान्यंवातद्घटितंयत्त्वंतदघटितत्व
मितिपरिष्कारएवेयमतिव्याप्तिःसंभवति॥ यदिचस्ववृत्तीनिस्वविषयतावृत्तीनिवार्याचेतिहेत्वाभासविभाजकरूपाणिप्रत्येकंतद्रूप
विशिष्टंयद्विशिष्टांतरंविशिष्टांतरविषयत्वंवातद्घटितत्वेसतितद्रूपविशिष्टंयद्विशिष्टांतरंविशिष्टांतरविषयत्वंवातद्घटितंयत्त्वं
तदघटितत्वमितिरीत्यापरिष्क्रियतेतदानेयमतिव्याप्तिः॥ बाधविशिष्टव्यभिचारेस्ववृत्तिबाधत्वविशिष्टविशिष्टांतरबाधघटित
त्वेसतिस्ववृत्तिव्यभिचारत्वविशिष्टविशिष्टांतरव्यभिचारघटितत्वसत्वात्तस्यचस्वपदेनधर्तुंशक्यत्वेनतदघटितत्वस्यबा
धविशिष्टव्यभिचारेऽसत्वात्॥ व्यभिचारघटितबाधेस्ववृत्तिव्यभिचारत्वविशिष्टविशिष्टांतरव्यभिचारघटितत्वसत्वेपिस्ववृ
त्तिबाधत्वविशिष्टविशिष्टांतरघटितत्वासत्वेनतस्यस्वपदेनोपादानायोगात्तत्रलक्षणसमन्वयः॥ नचैवमपिस्ववृत्तिव्यभिचा
रत्वविशिष्टविशिष्टांतरव्यभिचारघटितंयत्त्वंधूमव्यभिचारिवन्हिमत्वादिविशिष्टंतदघटितत्वस्यव्यभिचारघटितबाधेऽस
त्वाद्धूमव्यभिचारिवन्हिमान्धूमवान्वन्हेरित्यादौधूमाभाववद्धूमव्यभिचारिवन्हिमत्वावच्छिन्नरूपव्यभिचारघटितबाधाव्याप्ति

दुर्वारैवेतिवाच्यं ॥ तदघटितत्वमित्यनेनतदपर्याप्तिकविषयताकत्वस्यतद्विषयकत्वाव्यापकविषयताकप्रतीतिविषयत्वस्यवाविवक्षितत्वा
त् ॥ यत्तु प्रमेयत्वविशिष्टव्यभिचारवृत्तियावद्धेत्वाभासविभाजकरूपाप्रसिध्यातस्यस्वपदेनग्रहणायोगात्प्रमेयत्वविशिष्टबाधविशिष्टव्य
भिचारादिकमेवतादृशंस्वंतदघटितत्वस्यप्रमेयत्वविशिष्टव्यभिचारेसत्वात्तत्रातिव्याप्तिवारणायस्ववृत्तिहेत्वाभासविभाजकोपाधित्वव्या
पकतावच्छेदकस्ववृत्तितात्वकविशिष्टांतरघटितंयत्स्वमितिस्ववृत्तियावद्धेत्वाभासविभाजकरूपेणस्वसजातीयविशिष्टांतरघटितंयत्स्व
मित्यनेनविवक्षणीयमेवंच बाधत्वव्यभिचारत्वसाधारणबाधविशिष्टव्यभिचारवृत्तिहेत्वाभासविभाजकोपाधित्वव्यापकतावच्छेद
कत्वस्यस्वपदग्राह्यप्रत्येकंबाधव्यभिचारवृत्तितात्वेऽसत्वाद्बाधविशिष्टव्यभिचारादिकंनतादृशंस्वंकिंतुप्रमेयत्वविशिष्टबाधविशि
ष्टव्यभिचारादिकमेवतदघटितत्वस्यतत्राक्षतत्वात्तत्रातिव्याप्तिर्दुर्वारैवेति ॥ तदसत् ॥ प्रमेयत्वविशिष्टव्यभिचारवारणायानति
रिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वसंबंधेनस्वविषयिताव्यापकप्रतिबंधकतावत्त्वरूपंयत्स्ववृत्तिहेत्वाभासविभाजकोपाधि
त्वंतद्व्यापकतावच्छेदकस्वघटकविशिष्टांतरवृत्तितात्वकत्वरूपतादृशविशिष्टांतरघटितत्वस्यस्वपदार्थेविवक्षणेनैवबाधविशिष्टव्यभिचा

रवारणसंभवात् ॥ स्वघटकविशिष्टांतरमित्यनेनस्वविषयिताव्यापकविषयितानिरूपकतावच्छेदकस्वाविषयकप्रतीतिविषयताव
च्छेकावच्छिन्नंस्वाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नंवाविवक्षणीयंतेनस्वाविषयकप्रतीत्यवृत्तिस्वविषयिताकत्वस्यस्वघटक
तारूपत्वेस्वपदस्यतत्तव्यक्तिपरतयाप्रत्येकंबाधव्यभिचारवृत्तितात्वस्यतादृशोपाधित्वव्यापकतावच्छेदकत्वाभावाद्बाधविशिष्टव्य
भिचारेऽतिव्याप्तिर्दुर्वारैवेतिशंकानवकाशः ॥ दोषादिपदस्येति ॥ दुष्टव्यवहारेनैतद्विशेषणप्रयोजनंसंभवतीति ध्येयं ॥
।निरुक्तविशेषणावच्छिन्नेति ॥ विशिष्टांतराघटितत्वविशेषणविशेषितेत्यर्थः ॥ इदंचफलतःस्वपदार्थेद्रष्टव्यं ॥ व्युत्पन्नत
येति ॥ व्यभिचारविशिष्टमेयत्वादौदोषत्वव्यवहाराभावानुरोधेनेत्यादिः ॥ अन्वयितावच्छेदकेति ॥ दोषपदार्थान्वयिताव
च्छेदकेत्यर्थः ॥ व्यर्थविशेषणमिति ॥ दीधित्युक्तप्रयोजनासंगतिरित्यर्थः ॥ ह्रदोवह्निमान्धूमादित्यादौह्रदनिष्ठवह्न्यभावह्रद
निष्ठाभावप्रतियोगित्वादेर्धूमेसत्वात्तावत्पर्यंताविवक्षणेपिधूमेदुष्टत्वव्यवहारसंभवादाश्रयासिध्यादीति ॥ संबंधत्वेनसंबंधस्य
विशिष्टबुध्यनियामकत्वाद्येनकेनापीति ॥ दोषस्यदुष्टपदप्रतिपाद्यतावच्छेदकत्वलाभायव्याचष्टे ॥ तदवच्छिन्नइति ॥ एतल्ला

भाय प्रकृतहेतुरित्यक्तमिति ॥ तथाचैकज्ञानविषयताविशिष्टहेतुतावच्छेदकवत्वसंबंधेनदोषवत्वमेवतादृशव्यवहारनियामक
मिति भावः ॥ **ह्रदत्वावच्छिन्नपक्षकत्वस्येति** ॥ ह्रदत्वावच्छिन्नह्रदनिष्ठोद्देश्यताकत्वस्येत्यर्थः ॥ सप्तम्यर्थउद्देश्यत्वंतत्रप्रकृत्यर्थस्य
ह्रदस्याधेयतासंबंधेनान्वयेतद्विशेषणतापन्नंह्रदत्वमपिस्वावच्छिन्नत्वसंबंधेनधर्मिपारतंत्र्येणान्वेतीतिनादृशार्थलाभः ॥ **वन्हित्वाव
च्छिन्नसाध्यकत्वस्येति** ॥ वन्हित्वावच्छिन्नवन्हिनिष्ठविधेयताकत्वस्येत्यर्थः ॥ षष्ठ्यर्थविधेयतायांप्रकृत्यर्थस्यवन्हेराधेयता
संबंधेनान्वयेतद्विशेषणतापन्नवन्हित्वस्यस्वावच्छिन्नत्वसंबंधेनधर्मिपारतंत्र्येणान्वयेतादृशार्थलाभः ॥ अत्रचतादृशोद्देश्यताक
त्वतादृशविधेयताकत्वयोरेकत्रद्वयमितिरीत्याऽनुमितावन्वयेह्रदोघटवान्भूतलंवन्हिमदित्यनुमितिसाधारणतादृशानुमितित्व
व्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदकत्वावच्छिन्नविषयिताकधर्मावच्छिन्नत्वस्यवह्न्यभाववद्ध्रदादावसत्वात्तदादायह्रदे
वन्हिसाधनेधूमोदुष्टइतिव्यवहारानुपपत्तिरतस्तादृशोद्देश्यताकत्वविशिष्टतादृशविधेयताकत्वान्वयएवोपगंतव्यस्तथाचसति
विशिष्टान्वयस्थलेविधेयेउद्देश्यतावच्छेदकावच्छिन्नत्वान्वयस्योत्सर्गसिद्धतयातादृशोद्देश्यताकत्वावच्छिन्नतादृशविधेयताकत्ववि

शिष्टानुमितिलाभेनतादृशानुमितित्वस्यदर्शितसमूहालंबनानुमितिसाधारण्याभावान्नोक्तव्यवहारानुपपत्तिरिति **ध्येयं** ॥ **नन्वेव**
**मपि** पर्वतेवन्हिसाधनेधूमोनदुष्टइतिव्यवहारानुपपत्तिस्तादृशपक्षसाध्यहेतुकत्वान्वितानुमितिप्रतिबंधकज्ञानविषयत्वरूपदुषधा
त्वर्थाप्रसिध्यानिरुक्तसंबंधेनतदभावप्रत्यायनासंभवादिति **चेन्न** ॥ तत्रप्रतिबंधकत्वमात्रंदुषधात्वर्थःउक्तरीत्याऽन्वयलभ्यतादृश
पक्षसाध्यकानुमित्यन्वितस्यतस्यानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयकज्ञानविषयप्रकृतहेतुताव
च्छेदकवत्वरूपव्यधिकरणसंबंधेनाभावएवहेतौनञांप्रतीयतेक्तप्रत्ययस्यतुतात्पर्यग्राहकत्वमेव ॥ प्रतियोग्यभावान्वयावि
तिव्युत्पत्तावाग्रहेऽधआकाशंनपश्यतीतिव्यवहारइवतादृशव्यवहारस्याप्रामाण्यमेवोपगंतव्यं ॥ **व्याचष्टेपीति** ॥ लक्षण
मप्यन्यथैवव्याचष्टइतियोजना ॥ **ननु** किमर्थमन्यथाव्याख्यानमत **आह** ॥ **अन्यथेति** ॥ **अतिप्रसंगादिति** ॥ साध्याभाववद्वृ
त्तित्वविशिष्टसाधनादाविर्**त्यादि** ॥ ज्ञानत्वेप्रतिबंधकतानतिरिक्तवृत्तित्वरूपप्रतिबंधकतावच्छेदकत्वलाभा**याह** ॥ **ज्ञानत्वावच्छि**
**न्नमिति** ॥ **साधनीयत्वं** ॥ साधनवत्वंसाधनमितियावत् ॥ आधेयतायाद्वृत्तिनियामकतयातत्संबंधावच्छिन्नाधेयताविरहादितिभा

वः ॥ **अव्याप्तिरिति** ॥ पर्वतोवह्न्यभाववानित्यादौ पर्वतत्वावच्छिन्ननिष्ठवन्हित्वावच्छिन्नवत्वरूपबाधादाववच्छेदकतापर्याप्तिघटितलक्षणस
त्वान्नासंभवः ॥ पर्वतत्वावच्छिन्नविशेष्यकवन्हित्वावच्छिन्नप्रकारकनिश्चयत्वे पर्वतोवह्न्यभाववानित्यनुमितिप्रतिबंधकतावच्छेदकतापर्याप्तेः
॥ **पूर्वोक्तयुक्त्येति** ॥ सामान्यतोऽनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबंधकतानिवेशे संमूहालंबनानुमितिमादायातिप्रसंगोऽनुमि
तित्वव्यापकप्रतिबध्यतेत्यादिरीत्यानिवेशे ताद्दशप्रतिबध्यतायादोषज्ञानीयाया अप्रसिद्धिरितिरीत्येत्यर्थः ॥ **वस्त्वंतरमिति** ॥ ह्रदा
दिरूपमित्यर्थः ॥ **ह्रदेति** ॥ पूर्वदलेतदनिवेशे ह्रदवृत्तिवह्न्यभावे उत्तरदलेतदनिवेशे ह्रदवृत्तिधूमाभावे **इतिविवेकः** ॥ **ननुकिंचिद्रूपावच्छि**
**न्नसाध्यहेतुकानुमितित्वव्यापकत्वनिवेशे दोषोक्तावपि प्रकृतसाध्यहेत्वोरनिवेशे दोषानुक्तेर्न्यूनतेत्यत आह** ॥ **इदमुपलक्षणमि**
**ति** ॥ **वन्हिशून्येति** ॥ **देशांतरंप्रभामंडलादि** ॥ **व्यावर्तकविशेषणेति** ॥ वन्हिमद्वृत्तित्वविशिष्टत्वपर्वतादिवृत्तित्वादिरूपेत्यर्थः ॥ **उ**
**त्तरकालीनार्थकतयेति** ॥ उत्तरपदस्योत्तरकालपरत्वे जन्यमात्रस्यकालोपाधित्वाभावेऽनुमितौतदभेदोनसंभवतीत्युत्तरपदस्य
ताद्दशकालवृत्त्यर्थकत्वादरः द्वितीयेति ॥ अभेदेनधात्वर्थान्वितस्वार्थबोधकपदानां द्वितीयांतत्वमित्येतदर्थक **क्रियाविशेषणानां**

**कर्मत्वमित्यनुशासनसिद्धेत्यादिः** ॥ **अग्निमेति** ॥ अनाहार्यमानसज्ञानेवेत्यादिकल्पेत्यर्थः ॥ **सार्थकमिति** ॥ ज्ञातिरू
पज्ञाधात्वर्थक्रियाविशेषणत्वसंपादानायज्ञानपदमुक्तमन्यथामानसपदेनमानसत्वव्याप्यजात्यवच्छिन्नलाभेतत्पदंव्यर्थस्यात्तथा
च द्वितीयायाः साधुत्वार्थमेवज्ञानपदमितिध्येयं ॥ मतांतरमुपन्यस्यति ॥ **उत्तरपदमिति** ॥ **अव्यवहितोत्तरार्थकमिति**
॥ अव्यहितोत्तरकालार्थकमित्यर्थः ॥ **कालाध्वनोरत्यंतसंयोग इत्यनेनेति** ॥ अत्यंतसंयोगविवक्षायांकालवाचकादध्ववा
चकाच्चशब्दाद्द्वितीयेत्येतदर्थकेनेत्यादिः ॥ **अधिकरणे** ॥ अधिकरणत्ववाचिका आधेयत्ववाचिका वेत्यर्थः ॥ अत्राधिकरणत्वमात्रेनद्विती
यात्यंतपदवैयर्थ्यापत्तेः किंतु समभिव्याहृतपदार्थतावच्छेदकव्यापकताविशिष्टाधिकरणत्वेतादृशाधिकरणत्वलाभश्चमासमधीतेचैत्र
इत्यादौद्वितीयार्थाधिकरणत्वेप्रकृत्यर्थस्यमासस्याधेयतावदभावप्रतियोगितावच्छेदकत्वसंबंधेनस्वावच्छिन्नस्ययोभेदस्तदाश्रयधर्म
वत्तासंबंधेनान्वयादेव ॥ तादृशधर्मश्चैत्रकर्तृकाध्ययनाधारतात्वमेवंच प्रकृतेतदुत्तरमिति द्वितीयार्थाधारत्वे उत्तरपदार्थस्योत्तरका
लस्ययद्विषयकनिश्चयोत्तरानुमित्याधारतात्वरूपधर्ममादायतादृशसंबंधेनान्वयः संभवतिपरंतुप्रयोजनाभावेनतद्विवक्षणाभावा ९९

न्मात्यंतसंयोगार्थकद्वितीयासंभवतीत्याशयेनाहव्यापकत्वेति ॥ निर्वन्हिः पर्वतो वन्हिमानित्यादौवस्तुमात्रनिश्चयोत्तरानुमितिनिष्ठाभ
याभावमादायवस्तुमात्रेऽतिव्याप्तिवारणाययद्विषयकनिश्चयनिष्ठविरोधिविषयिताप्रयुक्तत्वमुपात्तंतच्चव्यवहितपूर्वनिश्चयनिष्ठवि
रोधिविषयिताप्रयुक्तत्वमादायातिव्याप्तिंवारयितुंनसमर्थमितिनियमविशेषमवलंब्यैवातिव्याप्तिवारणंकर्तव्यंतथाचसतिविषयि
तायांनिष्ठांतविशेषणंव्यर्थमित्यत्रेष्टापत्तिमाह ॥ अत्रचेतितज्ज्ञानानंतरमिति ॥ तज्ज्ञानाव्यवहितोत्तरमित्यर्थः ॥ प्रयो
जकत्वादिति ॥ प्रयोजकत्वनियमादित्यर्थः ॥ अन्यत्र ॥ निर्वन्हिःपर्वतोवन्हिमानित्याकारकाहार्ये ॥ तादृशोभयाभावस्येच्छा
घटितसामग्र्यभावमात्रप्रयुक्ततयाविषयिताप्रयुक्तत्वमेवनास्तिकुतोविरोधिविषयिताप्रयुक्तत्वमितिशंकते ॥ नचेति ॥ अना
हार्यस्य ॥ इच्छानुत्तरस्येत्यर्थस्तथाचनिर्वन्हिःपर्वतोवन्हिमानित्याकारकज्ञानस्यविरोधिज्ञानप्रयुक्तानुत्पत्तिकत्वेतदसत्वदशाया
मिच्छाया असत्वेपितदुत्पत्त्यापत्तिरतइच्छाया एवतदुत्पत्तिप्रयोजकत्वमुपगम्यतदभावप्रयुक्तानुत्पत्तिकत्वंवाच्यमितीच्छाघटि
तसामग्र्यभावस्यैवनिर्वन्हित्वविशिष्टपर्वतेवन्हित्वविशिष्टवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वमितिभावः ॥ विनिगमना

**विरहेणपूर्वज्ञानीयविरोधिविषयितायाअपिप्रयोजकत्वा दिति ॥ अत्रेदं चिंत्यं ॥** आहार्यज्ञानसामग्र्यभावस्यैवै
कस्योभयाभावाधिकरणतासामान्येप्रयोजकत्वकल्पनेउभयाभावाधिकारणतात्वमेकमेवप्रयोज्यतावच्छेदकं संभवतीतिप्रयोज्यप्र
योजकभावैक्यमधिकरणता विशेषेविरोधिविषयितायाः प्रयोजकत्वकल्पनेत्वधिकरणताविशेषत्वमेवतत्प्रयोज्यतावच्छेदकमिति
तदनालीढविशेषांतरेआहार्यज्ञानसामग्र्यभावस्यप्रयोजकत्वकल्पनेलाघवमेवविनिगमकं संभवति ॥ अन्यथाधिकरणताविशेषे
वस्तुमात्रविषयितायाः विनिगमनाविरहेणप्रयोजकत्वंकोवारये दिति ॥ **वस्तुतस्तु** लक्षणेउभयाभावशब्देनोभयाभावप्रयो
जकीभूताभावस्यैवाग्रेविवक्षणीयतयावान्हिमत्पर्वतादिरूपाश्रयासिद्धिविषयितायाउभयाभावेतदधिकरणत्वेवाप्रयोजकत्वाभा
वेप्युभयाभावप्रयोजकीभूतेपक्षेपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावेप्रयोजकतायांविवादाभावेनलक्षणसमन्वयः सुघटएव ॥
उभयाभावप्रयोजकीभूताभावेत्यत्रप्रयोजकत्वंस्वरूपसंबंधरूपमुभयवद्वृत्तित्वपर्यवसितमुभयाभावव्याप्तिरूपंवाग्राह्यमितितत्वं
॥ **यादृशविशिष्टविषयितासामान्यप्रयुक्तेति** ॥ अत्रयादृशविशिष्टविषयित्वाव्यापकविषयिताशून्यज्ञानीयविषयिता

पर्यंतनिवेशावश्यकत्वेसामान्यपदव्यावृत्तिःपूर्वरीत्यावसेया॥**अव्यधाननिवेशाइति** ॥ अत्राव्यवहितत्वंयदिस्वाधिकरणकालध्वंसाधिक
रणकालध्वंसानधिकरणत्वंतदा॰लौकिकदोषज्ञानात्पूर्वपंचक्षणेर्जायमानायामनुमितावपितत्सत्वाद्दोषविषयकलौकिकनिश्चयमा
दायोत्तरत्वनिवेशव्यावृत्तिकथनेबीजाभावइतिस्ववृत्तिकृत्रिमत्वरूपमेवतदभिप्रेतं॥ उत्तरत्वंस्वाधिकरणक्षणध्वंसाधिकरणत्वंतथाच
स्ववृत्तिकृत्रिमत्वेसतिस्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वमुत्तरकालीनत्वमनुमितौविशेषणंफलितं॥ **लौकिकप्रत्यक्षस्य
चेति** ॥ लौकिकत्वंदोषविशेषजन्यत्वमत्रविवक्षितंतेनह्रदोवन्हिमानितिप्रत्यक्षस्यविशेषणवद्विशेष्यसंन्निकर्षजन्यत्वरूपलौ
किकत्वस्यह्रदेवन्हेरसत्वेनासंभवेपिनक्षतिः॥ आहार्यस्यासार्वत्रिकत्वमभ्युपेत्याह**ाव्याप्तिर्वेति** ॥ वह्न्यभाववान्ह्रदोवन्हि
मानित्याहार्येपक्षतावच्छेदकतादिपर्याप्तिघटितोभयाभावसंभवेपिह्रदोवह्न्यभाववानितिनिश्चयोत्तरमिच्छा॰जन्येकेवलंह्रदो
वन्हिमानित्याहार्येह्रदोधूमवान्धूमव्यभिचारिवन्हिमानित्याहार्येचनतत्संभव**इतिध्येयं** ॥ अत्रावच्छेदकावच्छेदेनसाध्यवत्स्थ
लीयलक्षणंपक्षतावच्छेदकव्यापकत्वविशिष्टसंयोगादिसंबंधावच्छिन्नसाध्यप्रकारकत्वघटितोभयाभावघटितंसामानाधिक

रण्येनसाध्यवत्त्वस्थलीयंकेवलसंयोगादिसंबंधावच्छिन्नसाध्यप्रकारकत्वघटितोभयाभावघटितंभिन्नंभिन्नमेववाच्यं॥उभयसा
धारणमेकंतुनसंभवतितत्रकेवलसंयोगादिसंबंधनिवेशेऽवच्छेदकावच्छेदेन साध्ये सामानाधिकरण्येनबाधादव्याप्तेर्व्यापकत्ववि
शिष्टसंयोगादिसंबंधनिवेशेसामानाधिकरण्येन साध्ये सामानाधिकरण्येनबाधादावतिव्याप्तेरितिबोध्यं॥ तादृशोभयाभाव
प्रयोजकविरोधिविषयितावत्त्वमिति॥ तादृशोभयाभावप्रयोजकतावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टविरोधिविष
यिताधिकरणत्वमित्यर्थस्तेनपर्वतोवह्निमान्धूमादित्यादौपाषाणमयत्वविशिष्टपर्वतेनातिव्याप्तिः॥ साध्यनिष्ठाभावाप्रति
योगित्वादिरूपानुपसंहारित्वेऽव्याप्तिरिति॥ नन्वन्वयव्याप्तिनिवेशेसाध्याभाववदवृत्तित्वरूपव्याप्तेरपिनिवेशात्तत्राभा
वांशेसाध्यभानेसाध्येऽभावप्रतियोगित्वभानस्यतुल्यवित्तिवेद्यत्वसिद्धतयातज्ज्ञानविरोधितयासाध्यनिष्ठात्यंताभावाप्रतियोगित्व
रूपानुपसंहारित्वसंग्रहःसंभवतीतिचेन्न॥ साध्याभाववदवृत्तित्वरूपव्याप्तिशरीरेप्रतियोगितासंबंधेनसाध्यस्यनिवेशादसमा
नप्रकारकज्ञानस्याविरोधितयातादृशानुपसंहारित्वसंग्रहानुपपत्तेः॥ यद्वासाध्यनिष्ठाभावाप्रतियोगित्वमादिर्यस्यतत्त्वतदनुप

संहारित्वंचेति विग्रहेऽतद्गुणसंविज्ञानबहुव्रीहिणाग्रंथकृताव्यवस्थापनीयसाध्याभावाव्यापकत्वविशिष्टहेत्वभावरूपानुपसंहारित्वए
वाव्याप्तिर्विवक्षितेतिनदोषः॥ तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयतेति॥ त
द्रूपावच्छिन्नविषयतानिरूपितायातद्रूपावच्छिन्नाभावत्वाऽवच्छिन्नविषयतातद्रूपावच्छिन्नाभावव्याप्यत्वावच्छिन्नविषयतैतदन्यतर
विषयतेत्यर्थः॥ वह्न्यभाववद्ध्रदकालीनोवह्न्यभावव्याप्यवद्ध्रदकालीनोवापर्वतोवन्हिमानित्यादौसिद्धिविषयवन्हिमत्पर्वतेऽतिव्याप्तिवा
रणायनिरूपितत्वांतं॥ वह्न्यभाववत्पाषाणमयकालीनपर्वतोवन्हिमानित्यादौसिद्धिविषयवारणायतत्रतद्रूपावच्छिन्नेति॥ तद्रूपप
र्याप्तावच्छेदकताकेति तदर्थस्तेनवह्न्यभाववत्पर्वतकालीनपर्वतोवन्हिमानित्यादौसिद्धिविषयेनातिव्याप्तिः॥ तद्रूपावच्छिन्नाभावस्त
द्रूपावच्छिन्नरूपाभावप्रतियोगितावच्छेदकावच्छिन्नस्तेननिर्वन्हिः पर्वतोवन्हिमानित्यादावाश्रयासिध्यात्मकवन्हिमत्पर्वतविषयता
संग्रहः॥ तद्रूपावच्छिन्नाभावनिष्ठविषयतानिवेशेपर्वतोवन्हिमान्द्रव्याभावादित्यादौसिद्धिविषयेतिव्याप्तिरतस्तद्रूपावच्छिन्ना
भावत्वावच्छिन्नविषयतानिवेशः॥ एवंतादृशाभावव्याप्यनिष्ठविषयतानिवेशेशैवालसाध्यकेवन्हिहेतुकेसिद्धिविषयेऽतिव्याप्ति

रतस्तादृशव्याप्यत्वावच्छिन्नविषयतानिवेशः॥ साध्यवद्भेदश्च पृथगेव निवेश्यः॥ पक्षधर्मताज्ञानकालीनज्ञानीयहेतुतावच्छे
दकावच्छिन्नविषयतानिरूपितसाध्याभावव्याप्यत्वावच्छिन्नविषयतापृथगेवनिवेश्यातेननासाधारण्यासंग्रहः॥ **नन्वेवं** वि
रोधिविषयतानिर्वचनेघटः पृथिवीभिन्नइत्यादौस्वरूपतः पृथिवीत्वघटितबाधेऽव्याप्तिस्तद्विषयतायाः पृथिवीभेदत्वावच्छि
न्नाभावत्वावच्छिन्नप्रकारतानिरूपितत्वाभावात्॥ **एवं** घटोऽस्तीत्यादौघटावच्छिन्नरूपबाधेकांचनमयपर्वतोवन्हिमा
न्धूमादित्यादौकांचनमयत्वव्यापकीभूताभावप्रतियोगिधूमरूपाश्रयासिद्धौह्रदनिष्ठाभावप्रतियोगिवन्हिरूपबाधेचाव्या
प्तिः॥ **एवं** पर्वतत्वसामानाधिकरण्येनवन्हेः साध्यत्वेपर्वतत्वसामानाधिकरण्येनवह्न्यभावस्यहेतुत्वेपर्वतत्वसामानाधिकरण्ये
नसिद्धिविषयेवन्हिमत्पर्वतोऽस्तिव्याप्तिस्तद्विषयतायामपिनिरुक्तविरोधिविषयतात्वसत्वात्॥ तादृशान्यतरविषयतायां
मुभयाभावप्रतियोगिकोटौयेनसंबंधेनयत्रयदवगाहित्वंनिविष्ठंतत्रतेनसंबंधेनतदवगाहिज्ञानत्वावच्छिन्ननिरूपितप्रतिबं
धकतावच्छेदकत्वविवक्षयातद्विषयतायाविरोधिविषयतात्ववारणेनिर्वन्हिर्वन्हिमान्धूमादित्यादावव्याप्तिस्तादृशविरोधिविष १०२

यत्वाप्रसिद्धेरतोनिष्कृष्टंविरोधित्वमाह ॥ साध्यवत्पक्षविषयताबहिर्भूतेतिसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्ष
तावच्छेदकावच्छिन्नविशेष्यताबहिर्भूतेत्यर्थः ॥ पर्वतोवह्निमान्द्रव्याभावादित्यादौस्वरूपासिद्धिविषयतायाविरोधित्वनिर्वाहायप्रकारता
यांसाध्यतावच्छेदकावच्छिन्नत्वनिवेशः ॥ तच्चसाध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वं ॥ तेनमहानसंवह्निमन्महानसीयवह्न्यभा
वादित्यादौस्वरूपासिद्धिविषयतायानविरोधिविषयतात्वानुपपत्तिः ॥ द्रव्यंवह्निमद्वह्न्यभावविशिष्टपर्वतादित्यादौहेत्वसिद्धिविष
यतायांविरोधिविषयतात्वनिर्वाहायतादृशप्रकारतानिरूपितविशेष्यतायांपक्षतावच्छेदकावच्छिन्नत्वनिवेशः ॥ तच्चपक्षतावच्छेद
कपर्याप्तावच्छेदकताकत्वं ॥ तेनवृत्तित्वंघटवृत्तिघटादित्यादौघटवृत्तित्वाभाववद्वृत्तित्वंघटवृत्तीत्याकारकव्यभिचारज्ञानीयविषयतायान
विरोधित्वानुपपत्तिः ॥ यद्यपितादृशविशेष्यताभिन्नत्वंनतादृशविशेष्यताबहिर्भूतत्वंपर्वतोवह्निमानितिज्ञानीयप्रकारतायास्ता
दृशविशेष्यताभिन्नत्वात्सिद्धिविषयाऽतिव्याप्तेरवारणात्तथापितादृशविशेष्यताघटकविषयताभिन्नत्वमेवतादृशविशेष्यता
बहिर्भूतत्वंतादृशविशेष्यताघटकत्वंचतादृशविशेष्यतावन्निष्ठभेदप्रतियोगितानवच्छेदकत्वंदर्शितवह्नित्वावच्छिन्नप्रकारताया

स्तादृशविशेष्यतावन्निष्ठभेदप्रतियोगितानवच्छेदकतया घटकविषयताभिन्नत्वाभावान्न सिद्धिविषयेऽतिव्याप्तिः ॥ तादृशविशेष्यताव
न्निष्ठभेदप्रतियोगितावच्छेदकत्वमेव वा बहिर्भूतां तेन विवक्षणीयमभावद्वयनिवेशे प्रयोजनाभावात् ॥ नचासिद्ध्यात्मकज्ञानीयवि
षयतानामपि विषयभेदभिन्नानां चालिनीन्यायेन तत्तद्व्यक्तित्वेन तादृशविशेष्यतावन्निष्ठभेदप्रतियोगितावच्छेदकत्वात्सिद्धिविषया
तिव्याप्तिवारणं दुर्घटमिति वाच्यं ॥ तादृशभेदप्रतियोगितावच्छेदकतावच्छेदकोक्तोभयाभावाधिकरणताप्रयोजकतावच्छेदकविष
यतात्वकत्वस्य विवक्षणीयतया सिद्धिविषयतायास्तत्तद्व्यक्तित्वेन तादृशभेदप्रतियोगितावच्छेदकत्वेऽप्युक्तोभयाभावाधिकरणता
प्रयोजकतावच्छेदकनिरूप्यनिरूपकभावापन्नविषयतात्वस्य तादृशविशेष्यतावत्सिध्यात्मकज्ञाननिष्ठभेदप्रतियोगितावच्छेदक
तावच्छेदकत्वविरहेण सिद्धिविषयेऽतिव्याप्तिवारणात् ॥ यदिन्वेवमपि पाषाणमयः पर्वतो वन्हिमान्पाषाणमयत्वाभाववत्पर्व
तकालीनधूमादित्यादौ पाषाणमयत्ववत्पर्वतरूपहेतौ सिद्धा व्याप्तिस्तद्विषयतात्वस्य तादृशविशेष्यतावन्निष्ठभेदप्रतियोगिता
वच्छेदकतावच्छेदकत्वाभावात् ॥ साध्यविशिष्टपक्षविषयतांतःपातित्वपक्षे साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावाप्रयोजकत्वो

भयाभावरूपंविरोधित्वंनिरुच्यदर्शितहेत्वसिद्धिसंग्रहेपर्वतोवन्हिमान्धूमादित्यादौसाध्यव्याप्यहेतुमत्पक्षेऽतिव्याप्तिस्तज्ज्ञानस्यसि
द्धिविधयासमूहालंबनानुमितिप्रतिबंधकतयातद्विषयतायांपक्षेसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावाप्रयोजकत्वविरहेणोभया
भावरूपविरोधित्वानपायादितिविभाव्यतेतदातादृशविशेष्यतावच्छिन्नभेदप्रतियोगितानवच्छेदकत्वमेवतादृशविशेष्यताबहिर्भू
तत्वंवक्तव्यंवन्हित्वावच्छिन्नप्रकारतानिरूपितायापर्वतत्वावच्छिन्नानिरूप्यनिरूपकभावापन्नविशेष्यतातस्यास्तादृशविशेष्यत्वाव
च्छिन्नभेदप्रतियोगितावच्छेदकत्वेपिपाषाणमयत्ववान्पर्वतइतिज्ञानीयपाषाणमयत्वविशिष्टपर्वतत्वावच्छिन्नायाहेत्वसिद्धिविष
यतायास्तादृशभेदप्रतियोगितानवच्छेदकत्वान्नहेत्वसिद्धावव्याप्तिः सिध्यात्मकज्ञानीयवन्हित्वावच्छिन्नप्रकारतायाअवच्छेदककु
क्षिप्रविष्टानामवच्छेदकतयातादृशभेदप्रतियोगितावच्छेदकतयातदनवच्छेदकत्वाभावान्नसिद्धिविषयातिव्याप्तिरपि॥ नचैवम
पिह्रदोवह्न्यभाववान्वन्हेरित्यादौस्वरूपासिद्धावव्याप्तिस्तद्विषयतायास्तादृशभेदप्रतियोगितानवच्छेदकत्वविरहादितिवाच्यं॥ता
दृशविशेष्यत्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वपक्षेसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावाप्रयोजकत्वोभयाभावस्यैवानवच्छे

दकत्वंतेनविवक्षणात् ।। साध्यव्याप्यहेतुमत्पक्षविशेष्यत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकत्वमपिविशेषणंदेयंतेननसिद्धिवि
षयेसाध्यव्याप्यहेतुमत्पक्षेऽतिव्याप्तिः ।। अथैवमपिस्कंदरदंडिपुरुषसाध्यकेसाध्यप्रकारकसिध्यात्मकज्ञानीयायाःसौंदर्यनिष्ठप्र
कारतानिरूपितदंडत्वावच्छिन्नविषयतायाःस्कंदरदंडविशिष्टपुरुषत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्य
त्वावच्छिन्नभेदप्रतियोगितावच्छेदिकायातादृशपुरुषत्वावच्छिन्नप्रकारतातद्घटकताभावेनतादृशभेदप्रतियोगितानवच्छेदकतयो
क्तविरोधिविषयतात्वेननिरूप्यनिरूपकभावापन्नायास्तस्यास्तादृशोभयाभावाधिकरणताप्रयोजकत्वेनचसिद्धिविषयेऽतिव्या
प्तिर्दुर्वारैवेतिचेन्न ।। विशिष्टसाध्यकेतद्घटकपदार्थद्वयनिरूप्यनिरूपकभावापन्नविषयतानिरूपितसाध्यप्रकारतायाएवसाध्य
तावच्छेदकावच्छिन्नप्रकारतापदेनविवक्षितत्वादेवंपक्षतावच्छेदकावच्छिन्नविशेष्यत्वादिकमपि ।। यद्वासाध्यतावच्छेदकावच्छि
न्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबंधकतानवच्छेदकत्वमेवतादृशविशेष्यताबहिर्भूतत्वंवि
वक्षितंनिरुक्तसाध्यकेसौंदर्यनिष्ठप्रकारतानिरूपितदंडत्वावच्छिन्नविषयतायानिरूप्यनिरूपकभावापन्नायास्तादृशविशेष्यत्वा

त्वावच्छिन्नप्रतिबंधकतायामवच्छेदकत्वान्नासिद्धिविषये ऽतिव्याप्तिः ॥ नन्वह्रदो वन्हिमान्धूमादित्यादौ धूमाभावविशिष्टह्रदरूपस्वरूपा
सिद्धावव्याप्तिस्तदीयविषयताया ह्रदत्वावच्छिन्ने एकत्रद्वयमितिरीत्याजायमानवन्हिधूमाभावावगाहिज्ञानीयवन्हित्वावच्छिन्नप्रकारता
निरूपितविशेष्यत्वाभिन्नतया तदवच्छिन्नप्रतिबंधकतानवच्छेदकत्वविरहाद्धेदस्य व्याप्यवृत्तितया धूमाभावत्वावच्छिन्नप्रकारतानिरूपि
तह्रदत्वावच्छिन्नविशेष्यतात्वेनापि तादृशप्रतिबंधकतानवच्छेदकत्वायोगादिति वाच्यं ॥ साध्यतावच्छेदकावच्छिन्नप्रकारतानिरू
पितत्वावच्छिन्नविषयतानिष्ठावच्छेदकताकप्रतिबंधकतानवच्छेदकस्य विवक्षितत्वात् ॥ तादृशनिरूपितत्वावच्छिन्नत्वंच तादृश
निरूपितत्वपर्याप्तावच्छेदकताकत्वमतो ह्रदो वन्हिमत्वप्रकारकप्रमाविशेष्यत्ववान्धूमादित्यादौ यत्र धूमाभावस्य तादृशप्रमाविशे
ष्यतात्वधूमाभावत्वोभयरूपेण भानं तादृशज्ञानीयसाध्यतावच्छेदकस्वरूपसंबंधावच्छिन्नसाध्यतावच्छेदकतादृशप्रमाविशेष्य
तात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रतिबंधकतायां धूमाभाववद्ध्रदत्वावच्छिन्नाविषयताया अवच्छेदकत्वेपि न स्व
रूपासिद्धावव्याप्तिः ॥ नन्वेवमपि घटवृत्तित्वाभाववद्वृत्तित्वं घटवृत्तिघटादित्यादौ घटवृत्तित्वाभाववद्वृत्तित्वं घटवृत्तीत्याकारकव्य

भिचारज्ञानीयविषयतायास्तादृशविशेष्यत्वावच्छिन्नप्रतिबंधकतानवच्छेदकत्वविरहात्तादृशव्यभिचारेऽव्याप्तिरेवंपर्वतोवन्हि
मान्वह्न्यभाववत्पर्वतकालीनधूमादित्यादौवन्हिमत्पर्वतरूपहेत्वसिद्धावव्याप्तिः ॥ वन्हिमत्पर्वतरूपहेत्वसिद्धिविषयतायास्ता
दृशविशेष्यत्वावच्छिन्नसिद्धिप्रतिबंधकतायामवच्छेदकत्वात् ॥ ह्रदोवह्न्यभाववान्वन्हेरित्यादौवह्न्यभाववद्ध्रदरूपस्वरूपासिद्धाव
व्याप्तिश्चेतिचेन्न ॥ तादृशप्रतिबंधकतावच्छेदकत्वपक्षेसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावाप्रयोजकत्वोभयाभावस्यैवानवच्छे
दकत्वांतेनविवक्षणात् ॥ साध्यव्याप्यहेतुविशिष्टपक्षविशेष्यत्वावच्छिन्नप्रतिबंधकतानवच्छेदकत्वस्यापिस्वातंत्र्येणविशेषणत्वा
न्नासिद्धिविषयेसाध्यव्याप्यहेतुमत्पक्षेऽतिव्याप्तिरपि ॥ नचैवमपिनिर्वन्हिर्मन्हिमानित्यादिस्थलीयदोषेऽव्याप्तिस्तादृशविशेष्यत्वा
वच्छिन्नप्रतिबंधकत्वाप्रसिद्धिरितिवाच्यं ॥ तादृशाव्याप्तेरत्रवदंतीतिकल्पेऽस्वरसबीजत्वस्यग्रंथकृतैववक्ष्यमाणत्वात् ॥ यदि
चविरोधिविषयत्वाप्रसिद्धिनिंबधनाव्याप्तिर्नास्वरसबीजतयावक्ष्यतेकिंतूभयाभावेविरोधिविषयताप्रयुक्तत्वाभावनिबंधना
व्याप्तिरेवेतिसूक्ष्ममीक्ष्यतेतदाप्रतिबंधकतास्थानेतादृशविशेष्यत्वावच्छिन्नकारणतैवनिवेश्येतिशिवं ॥ वस्तुतस्तुअनु

मितित्वाभावप्रयोजकतानवच्छेदकरूपविशेषितविषयताविरोधिविषयतापदेनविवक्षिता ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभाववत्त्वावच्छिन्नविषयताया ह्रदत्वाद्यवच्छिन्नविषयतानिरूपितवह्नित्वाद्यवच्छिन्नप्रकारकत्वाभाव एव प्रयोजकत्वं न त्वनुमितित्वाभाव इति वह्न्यभाववद्ध्रदादौ लक्षणसमन्वयः ॥ सिद्धिविषयतायाश्चानुमितित्वाभाव एव प्रयोजकत्वान्नासिद्धिविषयेऽतिव्याप्तिः ॥ न च पर्वतो वह्निमान्वह्न्यभाववत्पर्वतकालीनधूमादित्यादौ वह्निमत्पर्वतरूपहेत्वासिद्धाववव्याप्तिस्तद्विषयताया अनुमितित्वाभावे प्रयोजकत्वादिति शंक्यं ॥ उभयाभावप्रयोजकतावच्छेदकस्यानुमितित्वाभावप्रयोजकतानवच्छेदकत्वविवक्षया अनुमितिजनकसकलकारणसमवधानकालीनसिद्धेरेवानुमितिप्रतिबंधकतया ताद्दशायावत्कारणसमवधानकालीनाप्रामाण्यज्ञानानामेव सिद्ध्युत्तेजकतया ताद्दशाप्रामाण्यज्ञानाभावविशिष्टसिद्धिविषयतात्वस्यानुमितित्वाभावप्रयोजकतावच्छेदकत्वेऽप्युभयाभावप्रयोजकतावच्छेदकसकलाप्रामाण्यज्ञानाभावविशिष्टहेत्वासिद्धिज्ञानीयविषयतात्वेऽनुमितित्वाभावप्रयोजकतानवच्छेदकत्वाक्षतेः ॥ हेत्वासिद्धिज्ञानप्रतिबंधकतायां सकलकारणसमवधानासमवधानकालीनानां सर्वेषामेवाप्रामाण्यज्ञानानामुत्तेजकत्वात् ॥ न च

बाधविषयताया अपि वन्हित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालीच्छानिष्ठवन्हिप्रकारकज्ञानत्वाभाव
प्रयोजकत्वं विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्ववद्विशेषणवन्निष्ठविशेष्याभावप्रयोजकत्वादाव
श्यकं तथाच व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकत्वाद्बाधादिविषयतायामनुमितित्वाभावप्रयोजकत्वादसंभ
व इति वाच्यं ॥ अनाहार्यज्ञाननिष्ठानुमितित्वाभावप्रयोजकतानवच्छेदकत्वस्यैव विवक्षितत्वादिच्छादिनिष्ठानुमितित्वाभावेबा
धादिविषयतायाः प्रयोजकत्वेपि तादृशाज्ञाननिष्ठानुमितित्वाभावे सिद्धिविषयताया एव प्रयोजकत्वाद्बाधादिविषयताया अतथा
त्वान्नासंभवः ॥ आहार्यज्ञाननिष्ठानाहार्यज्ञानत्वाभावे बाधादिविषयतायाः प्रयोजकत्वेऽनुमितित्वाभावेप्युक्तन्यायेन प्रयोज
कत्वादसंभवस्तदवस्थ एवेति ज्ञानेऽनाहार्यत्वनिवेशः ॥ द्वितीयकल्पे विषयतामात्रं निवेश्यं न तु विरोधिविषयतापर्यंत
मिति ॥ अथ पूर्वकल्पे यादृशस्थले साध्यवत्पक्षविषयकनिश्चयोत्तरं सिषाधयिषाधीनानुमितिः कस्यापि न जाता तादृशस्थल
संभवमभिप्रेत्य यथा विषयतायां विरोधित्वनिवेशाद्व्यावृत्तिरभिहिता तथैव यादृशस्थले साध्यवत्पक्षविषयकनिश्चयकाले भिन्न

विषयकानुमितिसामग्रीनैष्पत्यं तत्र तदुत्तरं तादृशानुमितिरेव जायते न साध्यवत्पक्षविषयकमानसज्ञानोत्पाद इति तत्स्थलमभिप्रेत्य तत्र
सिद्धिविषयेऽतिव्याप्तिवारकतया विरोधिविषयतापर्यंतनिवेशव्यावृत्तिरभिधातुं शक्यैवेति चेन्न ॥ योगजप्रत्यासत्त्या सर्वदाऽतीताना
गतसर्वं मनसा विशिष्य परोक्षीकृतवतो युक्तयोगिनः सिषाधयिषाबलादेवानुमित्युत्पत्तावपि सततप्रत्ययानुवृत्तिरूपसाध्यविशि
ष्टपक्षविषयकनिश्चयाव्यवहितोत्तरत्वस्यानुमितिद्वितीयक्षणे साध्यवत्पक्षज्ञाने सत्वात्तत्रोभयाभावसत्वात्सिद्धिविषयातिव्याप्त्यभा
वान्न तावत्पर्यंतनिवेशव्यावृत्तिः ॥ ननु यत्र पक्षे साध्यमस्ति हेतुश्च नास्ति तत्र सिध्युत्तरमनाहार्यमानसे उभयाभावोऽक्षत एव योगि
ज्ञानस्य प्रमात्वनियमेन तत्र पक्षे हेतुवैशिष्ट्यावगाहित्वाभावादिति वाच्यं ॥ तत्र तादृशोभयाभावस्य पक्षे हेतुवैशिष्ट्याभावप्रयुक्तत्वेन
स्वरूपासिद्धिज्ञानीयविषयताप्रयुक्तत्वेन वासिद्धिविषयताप्रयुक्तत्वाभावात् ॥ यत्तु दोषनिश्चयव्यधिकरणानुमित्यादावुभया
भावासत्वादसंभववारणाय विवक्षणीयसामानाधिकरण्यस्थानेऽसामानाधिकरण्यानित्यत्वोभयाभावो निवेश्यस्तथा च तादृशो
भयाभावसहिताव्यवहितोत्तरत्वाक्रांतईश्वरीयज्ञाने उभयाभावासत्वान्नोक्तस्थलेऽपि सिद्धिविषयेऽतिव्याप्तिरिति विरोधिपदमनर्थकमेव ॥

नन्वेश्वरज्ञानस्यमानसत्वाभावः शंक्यः ॥ ग्रंथकृतामानसपदेनविवक्षणीयदोषविशेषाजन्यत्वरूपस्यतस्यतत्राक्षतत्वादितिके
षांचित्समाधानंतत्सिद्धमन्नमितिन्यायग्रस्तत्वाद्धेयमेव ॥ यथाश्रुतविशिष्टांतराघटितत्वनिवेशइति ॥ यद्रूपावच्छिन्न
विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्येउभयाभावः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंयत्तद्रूपंतदवच्छिन्ना
घटितत्वनिवेशइत्यर्थः ॥ विशिष्टांतरविषयित्वाप्रयोज्येत्यादि ॥ अत्रप्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणा
यविशिष्टांतरविषयित्वाप्रयोज्येति ॥ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकंयद्यद्रूपंतत्तद्रूपावच्छिन्नविष
यित्वाप्रयोज्येति तदर्थस्तेन प्रमेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यायामधिकरणतायांतादृशयत्किंचिद्बाधादिविषयिता
प्रयोज्यत्वाभावसत्वेपि न क्षतिः ॥ व्यभिचाराग्रहकालीनघटानुमितिनिष्ठविशेषणज्ञानादिरूपकारणांतराभावमात्रप्रयुक्तव्या
प्त्यवगाहित्वाभावाधिकरणतायांविशिष्टांतरविषयित्वाप्रयोज्यत्वसत्वात्प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरतः स्वविषयि
ताप्रयुक्तेति ॥ स्वावच्छिन्नविषयिताप्रयुक्तेति तदर्थः ॥ विषयिताप्रयुक्तत्वमात्रनिवेशेधूमत्वादिनाधूलीपटलावगाहिव्यभि

चारज्ञानोत्तरघटाद्यनुमितिनिष्ठव्याप्त्यवगाहित्वाभावाधिकरणतायांव्यभिचारभ्रमीयविषयिताप्रयुक्तायांधूमाभाववद्वृत्तित्वविशिष्ट
वह्न्यादिरूपविशिष्टांतरविषयित्वाप्रयुक्तत्वाऽनपायादाधाराधेयभाववत्प्रयोज्यप्रयोजकभावस्यानुगतरूपावच्छिन्नस्याप्याश्रयभेदे
नभिन्नत्वात्प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्नेऽतिव्याप्तितादवस्थ्यमतःस्वविषयिताप्रयुक्तत्वनिवेशः ॥ नन्वविवक्षणीयविशिष्टांतर
विषयितात्वव्यापकत्वस्यदर्शितभ्रमीयविषयितासाधारणधर्मस्याक्षतत्वात्तद्धर्मावच्छिन्नाप्रयोज्यत्वस्यभ्रमीयविषयिताप्रयुक्ताधि
करणतायामसत्त्वेनदर्शितातिव्याप्त्यनवकाशाद्विषयितायांस्वीयत्वनिवेशोव्यर्थइतिवाच्यं ॥ यादृशविशिष्टांतरविषयितात्वव्याप
कोयोधर्मस्तद्धर्मावच्छिन्नतादृशविशिष्टांतरविषयितानिष्ठप्रयोजकताकान्यत्वस्यवक्ष्यमाणव्यापकताघटितसत्प्रतिपक्षसंग्र
हानुरोधेनाप्रयोज्यांतेनावश्यंविवक्षणीयस्यभ्रमीयविषयिताप्रयुक्ताधिकरणतायांसत्वाद्दर्शितातिव्याप्तेर्दुर्वारत्वात्स्वीयत्वनिवेश
आवश्यकः ॥ पर्वतोधूमाभाववानितिबाधभ्रमीयविषयिताप्रयुक्तायांपक्षेसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायांविशिष्टांत
रविषयितात्वव्यापकरूपावच्छिन्नाप्रयोजत्वसत्वाद्विषयिताप्रयुक्तत्वसत्वाच्चप्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरितिविषयितायां

स्वीयत्वनिवेशाइत्यपिकेचित् ॥ पर्वतोवन्हिमान्धूमादित्यादौपाषाणमयत्वविशिष्टपर्वतत्वावच्छिन्नविषयिताप्रयोज्यायांपक्षेसाध्य
वैशिष्ट्यावगाहित्वाभावाधिकरणतायांविशेष्यांतरविषयिताप्रयोज्यत्वसत्वात्पाषाणमयत्वविशिष्टपर्वतेऽतिव्याप्तिरतोविशेष्यदल
मावश्यकंतथाच्चपाषाणमयोनवन्हिमानितिज्ञानासमानकालीनपाषाणमयपर्वतविषयकनिश्चयोत्तरसाध्यतद्व्याप्यानुमितावुभया
भावासत्वान्नतत्रातिव्याप्तिः॥ नन्वस्वविषयिताप्रयोज्यत्वमत्रविरोधिविषयतानिरूपितस्वविषयिताप्रयोज्यत्वनिवेशेनतत्राव्याप्ति
वारणंशंक्यं॥ साध्यवत्पक्षविषयताबहिर्भूतत्वरूपविरोधित्वस्यपाषाणमयत्वविशिष्टपर्वतविषयतायामक्षतत्वात्॥ यदिचोभ
याभावप्रतियोगितावच्छेदककोटावित्यादिनिरुक्तरूपंविरोधित्वंनिवेश्यतेतदापिपर्वतत्वावच्छेदेनवन्हिसाध्यकेपर्वतत्वसामानाधि
करण्येनपाषाणमयत्वाभावविशिष्टपर्वतकालीनधूमहेतुकेपर्वतत्वसामानाधिकरण्येनपाषाणमयत्वविशिष्टपर्वतस्यादोषत्वात्तत्रा
तिव्याप्तिरुभयाभावप्रयोजिकायांपर्वतेपर्वतत्वावच्छेदेनवह्न्यवगाहित्वाभावाधिकरणतायांपाषाणमयत्वावच्छेदेनवह्न्यभावावगाहि
ज्ञानसमानकालीनपर्वतत्वसामानाधिकरण्येनपाषाणमयत्वावगाहिज्ञानीयपर्वतत्वसामानाधिकरण्येनपाषाणमयत्वविशिष्टपर्व

तविषयितायास्तादृशविरोधिविषयतानिरूपितत्वाक्रांतायाः प्रयोजकत्वाद्विशेष्यदलमावश्यकं ॥ अथैवमपि विशेष्यदले विरोधि
विषयताप्रयुक्तत्वं व्यर्थं निर्वह्निः पर्वतो वह्निमानित्यादावुभयाभावप्रयोजकीभूताभावाधिकरणतायां घटादिविषयित्वाप्रयुक्तत्वेन
घटादेः स्वपदेन धर्तुमशक्यत्वाद्विशिष्टांतराघटितत्वदलेनैव वारणात् ॥ मैवं विशेष्यदले तदनिवेशे निर्वह्निः पर्वतो वह्निमानित्यादौ
पाषाणमयत्वविशिष्टपर्वतत्वावच्छिन्नेऽतिव्याप्तिस्तद्विषयितायाः पर्वतत्वावच्छिन्ने वह्न्यवगाहित्वाभावाधिकरणताप्रयोजकत्वेन व्या
पकाभावस्येत्यादिन्यायेन निर्वह्निः पर्वतत्वावच्छिन्ने वह्न्यवगाहित्वाभावाधिकरणतायामपि प्रयोजकत्वात् ॥ तन्निवेशे केवलपाषाणम
यत्वविशिष्टपर्वतविषयकनिश्चयोत्तरं पर्वतवह्न्यवगाह्यनुमित्युत्पत्त्यात्तन्निश्चयोत्तरानुमितिसामान्यनिष्ठस्य पर्वते वह्न्यवगाहित्वा
भावस्य कथमपि पाषाणमयत्वविशिष्टपर्वतविषयिताप्रयुक्तत्वविरहेण तादृशपर्वतविषयितायां साध्यवत्पक्षविषयताबहिर्भू
तत्वरूपविरोधित्वाक्रांतविषयतानिरूपितत्वसत्त्वेऽपि तत्रातिव्याप्त्यनवकाशः ॥ अथैवमपि विरोधिविषयताप्रयुक्तत्वविशे
षणस्य वस्तुमात्रातिव्याप्तिवारणप्रयोजनकत्वकथनासंगतिर्दुर्वारैव घटादावतिव्याप्तिविरहादिति चेन्न ॥ घटादिमान्वह्न्यभा

ववान्घटादिमांश्चपर्वतइतिज्ञानीयनिरूप्यनिरूपकभावापन्नघटादिनिष्ठविषयतायाअप्युक्तयुक्त्यास्तादृशपक्षेसाध्यावगाहित्वाभावा
धिकरणताप्रयोजकत्वेनघटत्वादेरपिस्वपदेनधर्तुंशक्यत्वाद्दुक्तमात्रेऽतिव्याप्तिस्तदनुपादानेदुर्वारैव ॥ यत्तुस्वविषयिताप्रयुक्तेत्यनेन
स्वविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताकत्वमवश्यंनिवेशनीयमन्यथाधूमव्यभिचारिवन्हिमान्धूमवानित्यादौधूमव्यभिचारिवन्हि
मत्वावच्छिन्नेऽतिव्याप्तिर्विशिष्टांतरव्यभिचारविषयिता प्रयोज्यायांपक्षेसाध्यावगाहित्वाभावाधिकरणतायांधूमव्यभिचारिवन्हिमान्धू
माभाववानितिज्ञानीयायानिरूप्यनिरूपकभावापन्नास्वपदग्राह्यधूमव्यभिचारिवन्हिमत्वावच्छिन्नविषयितातत्प्रयोज्यत्वाद्विशेष्यदल
सत्वाच्चतथाचघटत्वादेःस्वपदेनग्रहणेतदवच्छिन्नविषयितात्वव्यापिकायाघटइतिज्ञानीयविषयितातत्साधारणविषयितात्वाव
च्छिन्नप्रयोज्यत्वस्यतादृशाभयाभावप्रयोजकीभूताभावाधिकरणतायामसत्वान्नवक्तमात्रेऽतिव्याप्तिरितिनन्न ॥ स्वविषयितात्व
व्यापकरूपावच्छिन्नप्रयोजकताकत्वनिवेशेपियथाश्रुतेतल्लक्षणस्यन्हदोधूमवान्वन्हेरित्यादौप्रमेयत्वविशिष्टेयोधूमाभावस्तद्विशिष्टह्र
देतिव्याप्तिस्तद्घटकधूमाभाववद्ध्रदरूपबाधांत्मकविशिष्टांतरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यायांह्रदत्वावच्छिन्नेपक्षेयद्वान्हिरूपंहेतुम

त्वंतदवगाहित्वाभावाधिकरणतायांवह्न्यभावावच्छेदकत्वेन गृहीतप्रमेयत्वविशिष्टधूमाभाववद्ध्रदविषयिताप्रयोज्यत्वात् ।। नचतादृ
शाधिकरणतायां वह्न्यभावावच्छेदकधूमाभावावच्छिन्नरूपविशिष्टांतरविषयिताप्रयोज्यत्वंशंक्यंवह्न्यभावव्याप्यधूमाभावाप्रसि
द्धेस्तदवच्छिन्नस्याप्रसिद्धेरतो विशिष्टांतरविषयिताप्रयोज्यस्वविषयिताप्रयोज्ययत्किंचिदधिकरणतानिरूपकोयउभयाभावप्र
योजकीभूताभावोविरोधिविषयिताप्रयुक्ततदधिकरणतावत्त्वविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यकत्वमेवैकाधिकर
णताघटितंदलद्वयनिष्कृष्टार्थतयोपादेयंतथाचनोक्तातिव्याप्तिःप्रमेयत्वविशिष्टोयोधूमाभावस्तद्विशिष्टह्रदविषयकनिश्चया
व्यवहितोत्तरानुमितिसामान्यनिष्ठंयत्पक्षेसाध्यावगाहित्वाभावाधिकरणत्वंतन्नविशिष्टांतरविषयित्वाप्रयोज्यंयच्चविशिष्टांतर
विषयित्वाप्रयोज्यंपक्षेहेतुमत्वावगाहित्वाभावाधिकरणत्वंतन्नविरोधिविषयिताप्रयुक्तंसत्वविषयकनिश्चयोत्तरानुमितिसामान्य
निष्ठंधूमाभावस्यवह्न्यभावावच्छेदकत्वाग्रहकालीनविशिष्टधूमाभाववत्तानिश्चयोत्तरंवन्हिमत्वावगाह्यनुमित्यप्रसादेवंसतिस्वविषयि
तात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वाविवक्षणेपिधूमव्यभिचारिवन्हिमान्धूमवानित्यादौधूमव्यभिचारिवन्हिमत्वावच्छिन्नेनातिव्याप्ति

त्तद्विषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठंयद्वाध्यवगाहित्वाभावाधिकरणत्वंतन्नविशिष्टांतरविषयित्वाप्रयोज्यंयच्चाविशिष्टांतरविष
यित्वाप्रयोज्यंपक्षेसाध्यावगाहित्वाभावाधिकरणत्वंतन्नविरोधिविषयिताप्रयुक्तंसत्त्वविषयकनिश्चयोत्तरानुमितिसामान्यनिष्ठंस्वप
दग्राह्यधूमव्यभिचारिवन्हिमत्वावच्छिन्नविषयकनिश्चयोत्तरंतादृशवन्हिमत्वावच्छिन्नेसाध्यानुमित्युत्पादादिति **सुधियोविदांकुर्व
तु ॥ यत्किंचिद्विशिष्टांतरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशेनेति** ॥ व्यभिचारविषयितात्व
स्यसामान्यतोविशिष्टांतरविषयितात्वव्यापकत्वासंभवात्प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरतोयत्किंचिदितिस्वावच्छिन्ना
विषयकप्रतीतिविषयतावच्छेदकंयद्यद्रूपंप्रत्येकंतत्तद्रूपावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वाभावकूटनिवेशला
भाय ॥ **अथ**यत्किंचिद्विशिष्टांतरविषयितात्वव्यापकप्रयोजकतानिरूपितप्रयोज्यत्वशून्यत्वनिवेशेनापिव्यभिचारघटितबा
धसंग्रहःसंभवतितादृशबाधविषयिताप्रयोज्यायापक्षेसाध्यावगाहित्वाभावाधिकरणतातन्निष्ठप्रयोज्यतानिरूपकप्रयोजक
तायाःकेवलव्यभिचारज्ञानीयविषयितासाधारणतादृशविषयितात्वव्यापकत्वविरहादितिप्रयोजकतायांतादृशविषयितात्वव्या

पकरूपावच्छिन्नत्वनिवेशोऽनर्थकइतिचेन्न ॥ विषयभेदभिन्नविषयितास्वरूपप्रयोजकतानांचालिनीन्यायेनतादृशविषयितात्ववन्निष्ठा
भावप्रतियोगितयातादृशप्रयोजकताया अप्रसिद्धेः ॥ नच तादृशविषयितात्ववन्निष्ठाभावप्रतियोगितानवच्छेदकरूपावच्छिन्ननिरूपकता
कप्रयोज्यताशून्यत्वमेवनिवेशनीयमितिवाच्यं ॥ तादृशप्रयोजकतात्वरूपमादायतदवच्छिन्ननिरूपकताकप्रयोज्यताशून्यत्वस्यक
स्यामप्यधिकरणतायामसत्वात्तादृशाधिकरणत्वाप्रसिद्धेरसंभवस्यैवप्रसंगात् ॥ यदिचस्वनिष्ठप्रयोज्यतानिरूपकत्वसंबंधेन
तादृशविषयितात्वव्यापकाधिकरणतान्यत्वमप्रयोज्यांतेनविवक्षितमित्युच्यतेतदाऽसंभववारणेप्येतादृशपरंपरासंबंध
स्यप्रतियोगितावच्छेदकत्वेविवादात्तथाविवक्षितुमशक्यमितितादृशविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वमेवनिवि
ष्टमित्यवधेयं ॥ अत्रप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षविषयिताप्रयोज्याया
मधिकरणतायांप्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षरूपविशिष्टांतरविषयितात्वव्यापकंयत्प्रतिहेतुव्यापकताग्रहविशि
ष्टग्रहत्वंतिप्रतिहेतुमत्पक्षविषयितात्वंतदवच्छिन्नप्रयोज्यत्वनियमेनतादृशासत्प्रतिपक्षासंग्रहइतियादृशविशिष्टांतरविषयितात्व

व्यापकीयोधर्मस्तदवच्छिन्नतादृशविशिष्टांतरविषयितानिष्ठप्रयोजकताकान्यत्वमेवाप्रयोज्यांतेनविवक्षणीयं॥ एवंच सतिवह्न्यभाववज्जला
दिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नेऽतिव्याप्तिस्तद्विषयिताप्रयोज्यायांतादृशोभयाभावप्रयोजकाभावाधिकरणतायांविशिष्टांतरवह्न्यभावव
ज्जलादिमत्कालीनजलवद्ध्रदनिष्ठविषयितानिष्ठप्रयोजकताकान्यत्वसत्वात्तद्वारणाययादृशविशिष्टविषयकनिश्चयविशिष्टयादृश
विशिष्टविषयकनिश्चयोत्तरानुमितिसामान्यउभयाभावस्तादृशविशिष्टद्वयविषयिताशून्यप्रतीतिविषयत्वरूपंविशिष्टद्वयाघटि
तत्वंनशक्यतेनिवेशयितुंदर्शितसत्प्रतिपक्षस्यप्रतिहेतुव्यापकसाध्याभावप्रतिहेतुमत्पक्षरूपतादृशविशिष्टद्वयविषयिताशून्यप्र
तीतिविषयत्वाभावात्तदसंग्रहापत्तेः॥ **किंतु** विशिष्टांतरविषयित्वाप्रयोज्याधिकरणतायामेवप्रतिहेतुव्यापकत्वप्रकारकत्वप्रतिहे
तुप्रकारकत्वोभयाप्रयोज्यज्ञानवैशिष्ट्यप्रयोज्याधिकरणताभिन्नत्वमेवदेयमिति**केचिद्वदंति॥ तदपरेनक्षमंते**व्यापकसामा
नाधिकरण्यघटितसत्प्रतिपक्षविषयिताप्रयोज्यायामधिकरणतायांविशिष्टांतरहेतुमत्पक्षप्रतिहेतुव्यापकसाध्याभावादिविष
यिताप्रयोज्यत्वनियमेनतादृशसत्प्रतिपक्षासंग्रहतादवस्थ्यात्॥ हेतुमत्पक्षप्रतिहेतुव्यापकसाध्याभावादिविषयिताव्यावृत्तप्र

योजकतानिवेशेचप्रमेयत्वविशिष्टतादृशसत्प्रतिपक्षातिव्याप्तेर्दुर्वारत्वात् ।। **वस्तुतस्तु** यादृशविशिष्टांतरविषयितात्वव्यापकंतादृ
शविषयितात्वावच्छिन्नव्यापकतावच्छेदकंवायद्रूपम नाहार्यज्ञानादिवृत्तित्वादिसहिततद्रूपपर्याप्तावच्छेदकताकतादृशविशिष्टांतर
विषयितानिष्ठप्रयोजकताकान्यत्वमेवाप्रयोज्यांतेनविवक्षणीयंसत्प्रतिपक्षप्रयोज्यायामधिकरणतायांतादृशहेतुमत्पक्षविषयि
तात्वपर्याप्तावच्छेदकताकत्वाभावादप्रयोज्यांतविशेषणवलान्नसत्प्रतिपक्षासंग्रहः ।। **नन्वेवंसति** प्रमेयत्वविशिष्टासाधारण्याति
व्याप्तिः पक्षधर्मताज्ञानकालीनज्ञानवृत्त्यसाधारण्यविषयिताप्रयोज्याधिकरणतायांविशिष्टांतरासाधारण्यविषयितात्वपर्याप्ता
वच्छेदकताकान्यत्वसत्वात् ।। **यदिच** पक्षवृत्त्यसाधारण्यस्यापिविशिष्टांतरत्वात्तद्विषयितात्वव्यापकरूपपर्याप्तावच्छेदकताकत्वस्यै
वप्रमेयत्वविशिष्टासाधारण्यप्रयोज्याधिकरणतायांसत्वान्नप्रमेयत्वविशिष्टासाधारण्येऽतिव्याप्तिरिति **विभाव्यतेतदापि** पक्ष
वृत्त्यसाधारण्येऽतिव्याप्तिर्दुर्वारेति **वाच्यं** ।। व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्यसत्प्रतिपक्षत्वेपक्षवृत्तित्वविशेषितस्यै
वासाधारण्यरूपतास्वीकारात्तत्रातिव्याप्तेरभावात् ।। पक्षवृत्तित्वाघटितासाधारण्यस्यचविशेष्यदलविरहेणैववारणात् ।। केचिन्म

तोक्तरीत्या विशिष्टांतरविषयिताप्रयोज्याधिकरणतायां भिन्नांतविशेषणमुपादायैव विशिष्टद्वयाघटितत्वविशेषणवारणी
यातिप्रसंगो वारणीय इति पक्षवृत्तित्वघटितासाधारण्यस्य यथाश्रुतविशिष्टद्वयाघटितत्वविरहेपि न क्षतिः॥ यद्वा विशिष्ट
द्वयाघटितत्वं विशिष्टांतरविषयिताप्रयोज्याधिकरणतायां निरुक्तभिन्नांतवा निवेश्यैव लक्षणं परिष्कार्यं तथाहि॥ उभया
भावप्रयोजकाभावाधिकरणतेत्यत्र द्वितीयमभावपदमविवक्षितार्थमेवं च व्यापकसामानाधिकरण्यरूपव्याप्तिघटितसत्प्रतिपक्षप्रयो
ज्यायां पक्षे साध्यावगाहित्वाभावाधिकरणतायां पूर्वोक्तरीत्या विशिष्टांतरविषयिताप्रयोज्यत्वसत्वेपि पक्षे साध्याभावावगा
हित्वाधिकरणतायामनुमितिनिष्ठायां परामर्शीयसत्प्रतिपक्षविषयिताप्रयोज्यायां प्रतिबंधकतावच्छेदकाधिकरणताविध
यादर्शितोभयाभावप्रयोजिकायां प्रति हेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षरूपविशिष्टांतरविषयितात्वव्यापकरू
पावच्छिन्नप्रयोजकताकान्यत्वसत्वात्तादृशसत्प्रतिपक्षसंग्रहः॥ वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदविषयिताप्रयोज्यातु न
साध्याभावावगाहित्वाधिकरणता यातु तत्प्रयोज्या साध्यावगाहित्वाभावाधिकरणता सा तु वह्न्यभाववज्जलादिमत्कालीनजलवद्ध्र

द्रूपविशिष्टांतरविषयितात्वव्यापकरूपावच्छिन्नप्रयोज्यैवेतिन तत्रातिव्याप्तिरपि ॥ स्वविषयिताप्रयोज्येत्यनेनस्वविषयिता
व्यापकतावच्छेदकंयद्रूपमनाहार्यज्ञानादिवृत्तित्वसहिततद्रूपपर्याप्तावच्छेदकताकत्वं **विवक्षणीयं तेन** ह्रदो वन्हिमान्वह्न्यभा
ववज्जलादिमद्वृत्तिजलवद्ध्रदादित्यादौ तादृशविशिष्टह्रदेनातिव्याप्तिरित्थंचपक्षवृत्तित्वघटितासाधारण्यस्यलक्ष्यत्वेपिनतद
संग्रहः ॥ **नवा** प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षसंग्रहोपीति **ध्येयं** ॥ **एतेनार्थे** तस्मिन्लक्षणे ह्रदो वन्हि
मान्जलादित्यादौ हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वस्य पक्षवृत्तित्वाघटितस्यैवासाधारण्यरूपतामते तत्राव्याप्तिः
॥ वह्न्यभावव्याप्यतयागृहीतस्यजलादेर्वन्हिमत्ताबुद्धिविशेष्ये प्रकारतयाभानेतादृशसमूहालंबनानुमितेः कार्यकालविध
याप्रतिबंधकत्वमतेऽनुत्पादेन तादृशासाधारण्यविषयकनिश्चयोत्तरानुमितिर्घटाद्यनुमितिरेवतस्यामुभयाभावसत्वेपि
पक्षधर्मताज्ञानशून्यकाले केवलासाधारण्यज्ञानस्याप्रतिबंधकतया तदुत्तरानुमितिनिष्ठोभयाभावे विरोधिविषयिताप्र
युक्तत्वाभावा **दन्यथा** निर्वन्हिः पर्वतो वन्हिमानित्यादौ पाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तिप्रसंगात् ॥ **नन्वय** द्विष

यकनिश्चयेपक्षधर्मताज्ञानसमानकालीनत्वविशेषणान्नाव्याप्तिरितिवाच्यं ॥ आहार्यपक्षधर्मताज्ञानकालीनासाधारण्यविषयक
ज्ञानस्यप्रतिबंधकतयोक्तदोषतादवस्थ्येनानाहार्यत्वस्यपक्षधर्मताज्ञानविशेषणत्वावश्यकत्वेनस्वरूपासिध्यसंग्रहप्रसंगात् ॥ अ
नाहार्यपक्षधर्मताज्ञानकालीनानाहार्यतद्विषयकनिश्चयासंभवात् ॥ नचानाहार्यत्वमसाधारण्यविषयकनिश्चयकालीनत्वाहा
र्यत्वोभयाभाववत्वरूपंग्राह्यमतोनोक्तासंग्रहइतिवाच्यं ॥ वन्हिव्यापकीभूताभावप्रतियोगिजलंवन्हिमज्जलादित्यादौस्वरूपासिद्धि
ज्ञानस्योक्तोभयाभाववत्वविरहेणतादृशस्थलीयस्वरूपासिद्ध्यसंग्रहस्यदुर्वारत्वात् ॥ अत्रकेचित् ॥ असाधारण्यत्वावच्छिन्न
विषयितामात्रनिरूपकत्वानाहार्यपक्षधर्मताज्ञानाकालीनत्वोभयाभावस्ययद्विषयकनिश्चयविशेषणत्वमुपगम्योक्तस्थलीयस्वरू
पासिद्धिसंग्रहस्तज्ज्ञानस्यासाधारण्यविषयितातिरिक्तहेत्वभावादिविषयितानिरूपकत्वेनतद्विषयितामात्रनिरूपकत्वाभावेनोभया
भावस्याक्षतत्वात्तद्विषयितामात्रनिरूपकत्वंचतद्विषयित्वाव्यापकविषयिताशून्यत्वेसतितद्विषयितावत्वंतेनतद्घटकपदार्थविष
यितानांतद्विषयितातिरिक्तत्वेनतद्विषयितामात्रनिरूपकत्वस्याप्रसिद्धावपिनक्षतिः ॥ नचैवंसत्यसाधारण्यासंग्रहोदुर्वारोऽ

साधारण्यघटादिविषयकनिश्चयस्यपक्षधर्मताज्ञानशून्यकालीनस्यापिनिरुक्तोभयाभाववत्त्वेनतदुत्तरानुमितावुभयाभावस्यविरोधि
विषयिताप्रयुक्तत्वविरहादितिवाच्यं॥जातिमान्वह्न्यभाववानितिनिश्चयवारणायाव्यापकविषयिताशून्यत्वनिवेशावश्यकतयाताद
शनिश्चयस्यातथात्वादितिपूर्वपक्षसमाधानाडंबरोनिरवकाशः॥निरवकाशश्चाथैवमप्यसाधारण्यविषयिताप्रयोज्या
यामधिकरणतायांनियमेनविशिष्टांतरहेतुमत्पक्षविषयिताप्रयुक्तेनविशिष्टांतराघटितत्वविरहेणतदसंग्रहोदुर्वारः॥यत्तुविशि
ष्टांतरविषयितायांहेतुमत्पक्षविषयिताभिन्नत्वंहेतुमत्पक्षविषयितांतःपातित्वासाधारण्यविषयिताभिन्नत्वोभयाभावोवानिवे
शनीयः॥नचजलव्यापकवह्न्यभावादावतिव्याप्तिःशंक्यातस्यलक्ष्यत्वादितिनोक्तदोषइतितन्न॥एवंसतिधूमाभाववत्पर्व
तकालीनपर्वतपक्षकवन्हिसाध्यकधूमहेतुकेप्रमेयत्वविशिष्टधूमवत्पर्वतरूपाश्रयासिद्धावतिव्याप्तिर्विशिष्टांतरीभूतधूमव
त्पर्वतरूपाश्रयासिद्धिविषयितायांनिरुक्तोभयाभावासत्वात्॥मैवं॥असाधारण्येऽव्याप्तिवारणायविशिष्टांतरविषयितानि
ष्ठप्रयोजकतायांज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयितात्वानवच्छिन्नत्वोभयाभावोनिवेशनीयःहेतुमत्पक्षविषयितानि

ष्ठप्रयोजकताच नोक्तोभयाभाववती किंतु दोषांतरविपरीतासाधारण्यादिविषयितानिष्ठप्रयोजकतैव तन्निरूपितप्रयोज्यत्वाभाव
स्यस्वविषयिताप्रयोज्याधिकरणतायां सत्वान्नासाधारण्येऽव्याप्तिः॥ **नन्वेवमपि** कांचनमयह्रदोवन्हिमान्जलादित्यादौ कांच
नमयत्वव्यापकीभूताभावप्रतियोगिजलादेराश्रयासिद्धित्वस्य ग्रंथकृताव्यवस्थापनात्प्रमेयत्वविशिष्टायांतस्यामतिव्याप्तिर्विशि
ष्टांतरीभूततादृशजलत्वावच्छिन्नविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावासत्वेनदोषांतरविषयितानिष्ठप्रयोजकताया एवो
भयाभाववत्वात्तन्निरूपितप्रयोज्यत्वाभावस्यस्वविषयिताप्रयोज्याधिकरणतायामक्षतत्वादिति **वाच्यं** ॥ ज्ञानवैशिष्ट्यावच्छि
न्नत्वासाधारण्यविषयितात्वाश्रयासिद्धिसाध्यासिद्धिविषयितात्वान्यतमानवच्छिन्नत्वोभयाभावस्यैवनिरुक्तोभयाभावप
देनविवक्षणेनानुपपत्यभावादित्थंच प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षादेरपिनासंग्रहस्तत्रापि
विशिष्टांतरप्रतिहेतुमत्पक्षविषयितानिष्ठप्रयोजकतायामुक्तोभयाभावासत्वेनविशिष्टांतराघटितत्वाक्षतेः॥ **नन्वेवमपि**
प्रमेयत्वविशिष्टवह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वावच्छिन्नेऽतिव्याप्तिर्विशिष्टांतरतादृशह्रदविषयितानिष्ठप्रयोजकता

यामुभयाभावासत्वादिति **वाच्यं** यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयोत्तरानुमितावुभयाभावस्ता
दृशविशिष्टद्वयाघटितत्वरूपविशिष्टद्वयाघटितत्वविशेषणेनतस्यवारणीयत्वात् ॥ विशिष्टद्वयाघटितत्वशरीरेचसत्प्रतिपक्षघटक
दलद्वयविषयिताभिन्नत्वं **देयंतेन** नसत्प्रतिपक्षासंग्रहः ॥ **नच्चैवंसति** ह्रदोवन्हिमान्वह्न्यभाववज्जलादिमद्वृत्तिजलाभावादित्यादौ
तादृशजलवद्ध्रदरूपस्वरूपासिद्धावव्याप्तिस्तस्यावह्न्यभाववज्जलावच्छिन्नजलवद्ध्रदरूपाविशिष्टघटितत्वादिति **वाच्यं** ॥ तादृ
शविशिष्टद्वयविषयितयोर्ज्ञानवैशिष्ट्याप्रयोज्याधिकरणत्वाप्रयोजकत्वेनविशेषणीयत्वात् ॥ स्वरूपासिद्धिघटकदलद्वयवि
षयितयोर्ज्ञानवैशिष्ट्याप्रयोज्यहेतुवैशिष्ट्यावगाहित्वाभावाधिकरणत्वप्रयोजकतयातदभावविरहेणोक्तस्वरूपासिद्धावव्या
प्तिविरहा **दित्याहुः** ॥ **केचित्तु** असाधारण्येऽव्याप्तिवारणायविशिष्टांतरविषयितायामसाधारण्यविषयिताप्रयोज्याधिकर
णताप्रयोजकत्वासाधारण्यविषयिताभिन्नत्वोभयाभावोनिवेश्यः हेतुमत्पक्षविषयितायामुक्तोभयसत्वेनोभयाभाववतीदोषां
तरविपरीतासाधारण्यविषयितैवतदप्रयोज्यत्वस्यस्वविषयिताप्रयोज्याधिकरणतायांसत्वादसाधारण्येलक्षणसमन्वयः ॥

नन्वेवमपिह्रदोवन्हिमान्जलादित्यादौप्रमेयत्वविशिष्टबाधेऽतिव्याप्तिविशिष्टांतरकेवलबाधविषयितायांपक्षधर्मताज्ञानका
लीनबाधासाधारण्योभयविषयकसमूहालंबनात्मकज्ञानीयासाधारण्यविषयिताप्रयोज्याधिकरणताप्रयोजकत्वेननिरुक्तोभयाभ
वविरहेणोभयाभाववतीव्यभिचारविषयितैवतदप्रयोज्यत्वस्यस्वविषयिताप्रयोज्याधिकरणतायांसत्वात्॥असाधारण्यस्यवि
शिष्टांतरत्वेपितद्विषयित्वाप्रयोज्यत्वस्यपक्षधर्मताज्ञानासमानकालीनबाधज्ञानोत्तरज्ञाननिष्ठपक्षेसाध्यवैशिष्ट्यावगाहित्वाभावा
धिकरणतायामक्षतत्वादितिवाच्यं॥स्वविषयितायामपिनिरुक्तोभयाभावोनिवेशनीयः॥यद्वाऽसाधारण्यविषयिताप्रयो
ज्याधिकरणतानिरूपितत्वासाधारण्यविषयितात्वानवच्छिन्नत्वोभयाभाववतीयाविशिष्टांतरविषयितानिष्ठप्रयोजकतातन्नि
रूपितप्रयोज्यत्वाभावएवाप्रयोज्यांतेनविवक्षणीयः॥इत्थंचासाधारण्यस्थलीयप्रमेयत्वविशिष्टबाधेनातिव्याप्तिर्विशिष्टांत
रकेवलबाधविषयितानिष्ठप्रयोजकतायामसाधारण्याविषयकबाधज्ञानानंतरोत्पन्नानुमितिनिष्ठसाध्यवैशिष्ट्यावगाहित्वाभा
वाधिकरणतानिरूपितायामसाधारण्यविषयिताप्रयोज्याधिकरणतानिरूपितत्वाभावेनतदभावप्रयुक्तोभयाभाववत्वात्तन्निरू

पितप्रयोज्यत्वाभावस्यप्रमेयत्वविशिष्टबाधविषयिताप्रयोज्याधिकरणतायामभावात् ॥ **नन्वच** यत्रासाधारण्याप्रसिद्धिस्तत्रपर्वतोधूमवा
न्हेरित्यादौव्यभिचारेऽव्याप्तिरिति**वाच्यं** ॥ भ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नासाधारण्यविषयितायाएवनिवेशात् ॥
धूमव्यापकाभावप्रतियोगीवन्हिरित्याकारकज्ञानीयविषयितामादायतत्रलक्षणगमनसंभवात् ॥ **नन्वेवं** निवेशेयत्रासाधारण्य
मप्रसिद्धमथचासाधारण्यपक्षधर्मत्वदोषाणासमूहालंबनमेवजातंतत्रप्रमेयत्वविशिष्टदोषेऽतिव्याप्तिः केवलदोषविषयितानि
ष्ठप्रयोजकतायांनिरुक्तोभयाभावासत्वात्तादृशोभयाभाववती विपरीतदोषविषयितानिष्ठप्रयोजकतैवतन्निरूपितप्रयोज्यत्वा
भावस्यप्रमेयत्वविशिष्टदोषविषयिताप्रयोज्याधिकरणतायांसत्वादसाधारण्यस्यचाप्रसिद्धत्वात्तस्यविशिष्टांतरत्वासंभवेनत
द्विषयितानिष्ठप्रयोजकतायामुभयाभावसत्वेप्यनिस्तारादिति**वाच्यं** ॥ सामानाधिकरण्येनसाध्यकेऽवच्छेदकावच्छेदेनसा
ध्यकेचलक्षणभेदवदगत्याऽसाधारण्यप्रसिद्ध्यप्रसिद्धिस्थलीयलक्षणयोरपिभेदस्वीकारेणासाधारण्यप्रसिद्धिस्थलीयल
क्षणएवप्रयोजकतायामुभयाभावनिवेशोनानुपपत्त्यभावात् ॥ **नन्वेवमपि** वन्हिव्यापकीभूताभावप्रतियोगिजलंवन्हिम

ज्जलादित्यादौमेयत्वविशिष्टेवन्हिव्यापकीभूताभावप्रतियोगिजलवृत्तिवह्न्यभावरूपबाधेऽतिव्याप्तिर्दुर्वाराविशिष्टांतरता
ह्रदाजलवृत्तित्वविशिष्टवह्न्यभावत्वावच्छिन्नविषयितानिष्ठप्रयोजकतायामवच्छेदककुक्षिप्रविष्टानामवच्छेदकत्वानगींकार
नयेऽसाधारण्यविषयिताप्रयोज्याधिकरणतानिरूपितत्वासाधारण्यविषयितात्वानवच्छिन्नत्वोभयवत्वेनोभयाभावविरहा
द्विपरीतदोषादिविषयितानिष्ठप्रयोजकतायाएवतथात्वात् ॥ **नच**विशिष्टांतरविषयितात्वव्यापकरूपावच्छिन्नेत्यनेनवि
शिष्टांतरविषयितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वंविवक्षणीयंतथाचनिरुक्तस्थलेताह्रदारूपंताह्रदाजलत्वाव
च्छिन्नविषयितात्वमपितदवच्छिन्नप्रयोजकतायामसाधारण्यविषयितात्वानवच्छिन्नत्वाभावप्रयुक्तंनिरुक्तोभयाभाववत्वेन
तन्निरूपितप्रयोज्यताशून्यत्वस्यस्वविषयिताप्रयोज्याधिकरणतायामसत्वान्नप्रमेयत्वविशिष्टनिरुक्तबाधेऽतिव्याप्तिरितिवा
च्यं ॥ तथापिह्रदोवन्हिमान्धूमादित्यादौप्रमेयत्वविशिष्टबाधेऽतिव्याप्तिर्विशिष्टांतरकेवलबाधविषयितानिष्ठप्रयोजकताया
वन्हिव्यापकीभूताभावप्रतियोगिजलह्रदोवह्न्यभाववानितिज्ञानीयासाधारण्यविषयिताप्रयोज्याधिकरणतानिरूपितत्वा

साधारण्यविषयितात्वानवच्छिन्नत्वोभयवत्वेनविपरीतबाधादिविषयितानिष्ठप्रयोजकताया एवतथात्वादितिचेन्न ॥ असाधार
ण्यविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताकाधिकरणतानिरूपितत्वस्यैवनिरूपितत्वांतेनविवक्षितत्वादुक्तविशिष्टांतरवि
षयितायांतादृशाधिकरणतानिरूपितत्वविरहेणोभयाभावस्याक्षतत्वात् ॥ यदिचैवमप्यसाधारण्यविषयितात्वस्याति
प्रसक्ततयाज्ञानवृत्तित्वविशिष्टस्यैवतस्यप्रयोजकत्वंतस्यचासाधारण्यविषयितात्वव्यापकत्वाभावात्तादृशरूपावच्छिन्नप्रयोजकता
काधिकरणत्वाप्रसिद्धिरितिविभाव्यतेतदाऽसाधारण्यविषयितात्वव्यापकविषयिताशून्यज्ञानवृत्तित्वविशिष्टासाधारण्यविषयि
तात्वव्यापकरूपावच्छिन्नत्वमेवविवक्षणीयंशून्यांतोपादानात्प्रमेयत्वादिनाऽसाधारण्यतावच्छेदकावगाहिज्ञानीयविषयितासा
धारण्यविषयितात्वव्यापकत्वस्यप्रयोजकतावच्छेदकविषयितात्वेऽसत्वेपिनक्षतिरितिवदंति ॥ तदुभयमपिनयुक्तंप्रति
हेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षरूपविशिष्टांतरविषयितायांनिरुक्तोभयाभावविरहेणता
दृशविषयितादोषांतरविषयतैवस्वविषयिताप्रयोज्यायामधिकरणतायांतत्प्रयोज्यत्वस्याक्षतत्वात्प्रमेयत्वविशिष्टतादृशसत्प्रतिपक्षानिव्याप्तेर्दु

वीरत्वादित्यादिपूर्वपक्षसमाधानतत्खंडनकोलाहलश्चेत्यलंबहुना ॥ दोषज्ञानविषयविषयकज्ञानप्रतिबध्यानाहार्यज्ञानप्रसिद्धिस्थ
लेदोषमुक्त्वातदप्रसिद्धिस्थलेऽव्याप्तिमाहेवमिति ॥ दीधितिकृता पर्वतत्वावच्छेदेनवह्न्यभावस्यपक्षतावच्छेदकघटकत्वएवाव्याप्ति
रुद्धृतानत्वन्यत्रेत्याशयेनाहेवमिति ॥ तज्ज्ञानस्य ॥ पर्वतत्व सामानाधिकरण्येनवह्न्यभावज्ञानस्येत्यर्थः ॥ अप्रतिबंधकत
येति ॥ तज्ज्ञानस्यपर्वतत्वावच्छेदेनवह्न्यवगाहिज्ञानप्रतिबंधकत्वेपिताद्दशावगाहितायानिर्वन्हिपर्वतत्वावच्छिन्नेवह्न्यवगाहित्वा
व्यापकतयाप्रकृतेऽनुपयोगादितिभावः ॥ नापीत्यादि ॥ पर्वतत्वावच्छेदेनवह्न्यभाववत्वस्य ॥ पर्वतत्वव्यापकस्वरूपसंबं
धेनवह्न्यभाववत्वस्य ॥ स्वरूपसंबंधरूपप्रयोज्यप्रयोजकभावनिवेशएवोक्ताव्याप्तिरितितमनिवेश्यप्रकारांतरेणाव्याप्तिमुद्धरतां
मतमुपन्यस्य दूषयति ॥ यत्विति ॥ विरोधिविषयकयद्विषयकेति ॥ ताद्दशयद्रूपावच्छिन्नविषयकेत्यर्थः ॥ अत्रयद्रू
पावच्छिन्नविरोधिविषयताकनिश्चयेत्युक्तौवह्न्यभावत्वाद्यवच्छिन्नेएकदेशेतिव्याप्तिर्निरूप्यनिरूपकभावापन्नतद्रूपावच्छिन्नवि
रोधिविषयताकनिश्चयोत्तरानुमितावुभयाभावसत्वादतोविरोधिविषयकयद्विषयकेत्युक्तं ॥ तथाचैकदेशविषयिनायावि ११७

वक्षणीयविरोधिविषयितानतिरिक्तवृत्तित्वविरहान्नातिव्याप्तिः ॥ नन्वेवैकदेशवारणायस्वावच्छिन्नविषयतात्वव्यापकविरोधिताकयद्रूपावच्छि
न्नविषयताकनिश्चयेत्यादिरीत्याविवक्षणीयंविरोधिविषयतायांयद्विषयताव्यापकत्वविवक्षणेविषयतात्वनिवेशेगौरवाद्विरोधित्वस्यवह्न्य
भाववत्ताद्यवच्छिन्नविषयतात्वव्यापकताभावान्नैकदेशेऽतिव्याप्तिरितिवाच्यं ॥ तथासतिसाधनसमानाधिकरणसाध्याभावरूपव्यभिचा
रेऽव्याप्तिस्तज्ज्ञानेतुल्यवित्तिवेद्यतयाभासमानंयत्साध्याभाववद्वृत्तिसाधनतावच्छेदकावच्छिन्नंतद्विषयितायाएवविरोधितयाविरोधित्वे
उक्तव्यभिचारविषयितात्वव्यापकत्वाभावात् ॥ एवंघटोऽवृत्तिरित्यादौघटावच्छिन्नात्मकबाधाव्याप्तिस्तत्रापितज्ज्ञानेतुल्यवित्तिवेद्य
तयाभासमानःवृत्तित्ववद्घटःनद्विषयितायाएवविरोधित्वेनतादृशबाधविषयितात्वव्यापकत्वस्यविरोधित्वेऽसत्वात् ॥ न
न्वेवंतत्रवस्तुमात्रेऽतिव्याप्तिर्दुर्वारैवेति ॥ ननुह्रदोवह्निमान्धूमादित्यादौसर्वत्रैववस्तुमात्रेऽतिव्याप्तिसंभवात्तत्रेत्यनेननि
र्वह्निर्वह्निमानित्यत्रैववस्तुमात्रेऽतिव्याप्तिकथनमसंगतं ॥ नचतत्रेत्यस्यतादृशपरिष्कारेत्यर्थकतयावस्तुमात्रेसर्वत्रैवातिव्याप्ति
रिष्टेतिवाच्यं ॥ तथासतिविरोधिविषयिताप्रयोज्यत्वविशेषणनिवर्तनीयवस्तुमात्रातिव्याप्तिनादवस्थ्यसूचकदुर्वारैवेत्यस्यवैय्य

र्थ्यापत्तेरिति न्चेन्न ॥ सामानाधिकरण्येनसाध्यकस्थलीयलक्षणस्या वच्छेदकावच्छेदेनसाध्यकस्थलीयलक्षणस्यच पूर्वोक्तरीत्या भिन्नत्वेनसामानाधिकरण्येनसाध्यवत्स्थलीयलक्षणस्यसर्वत्रनोदासीने ऽतिव्याप्तिः सामानाधिकरण्येनसाध्यवत्त्वभयाभावप्रति योगिकोटावित्यादिविरोधित्वस्यसामानाधिकरण्येनयासाध्याभावविषयतातन्छालिङ्गानीयविषयितायामपिसत्वेन सामानाधिकर ण्येनयःसाध्याभाववस्तद्विषयकउदासीनविषयकविरोधिविषयक निश्चयोत्तरानुमितिसामान्यउभयाभावासत्वादतस्तस्याप्युदा सीने ऽतिव्याप्तिरपेक्षितेत्यभिप्रायेणनिर्वन्हिर्वन्हिमानित्याद्याहार्यस्थलबोधकंतत्रेत्युपन्यस्तमित्थंन्चाहार्यस्थलेउदासीने ऽतिव्या प्तेर्विरोधिविषयिताप्रयुक्तत्वसार्थक्यप्रदर्शनायोपन्यस्ततयासैवातिव्याप्तिरिदानीमपितदवस्थ्येतिसूचनायदुर्वारैवेत्युक्तमपि संगतं ॥ अत्रप्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणायविरोधिविषयित्वानतिरिक्तवृत्तिविशिष्टांतरविषयित्वाव्यापक स्वविषयिताव्यापकोभयाभावप्रयोजकाभाववत्त्वरूपविशिष्टांतराघटितत्वंदेयं ॥ यस्तुविरोधित्वमन्यथानिरुच्यलक्षणमु पवर्णयतितन्मतमुपन्यस्यदूषयति ॥ यत्त्विति ॥ निरुक्तसाध्यहेतुवैशिष्ट्यावगाहीति ॥ साध्यतावच्छेदकाव

च्छिन्नसाध्यतद्व्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नहेतुवैशिष्ट्यावगाहीत्यर्थः॥ **विशेषणेत्यादि**॥ **अत्र** विशेषणविशेष्यतावच्छेदकभावानापन्नविरुद्धकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानत्वं धर्मितावच्छेदकतान्यस्वावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावृत्तिप्रतियोगिताकाभावत्वावच्छिन्नधर्मितावच्छेदकतानात्मकप्रकारतानिरूपितत्वस्वावच्छेदकावच्छिन्ननिरूपितविरोधिविषयतानिरूपितत्वस्वरूपितविशेष्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावृत्तित्वस्वसमानाधिकरण्यैतच्चतुष्टयसंबंधेनप्रकारताविशिष्टविशेष्यतावत्त्वं॥ अभावीयप्रतियोगितायां पर्याप्तिप्रतियोगितावृत्तित्वं स्वनिरूपितावच्छेदकतात्वावच्छिन्नत्वसंबंधेन॥ एवमग्रे विशेष्यतायां पर्याप्तिप्रतियोगितावृत्तित्वमपि स्वनिरूपितावच्छेदकतात्वावच्छिन्नत्वसंबंधेन बोध्यं॥ तेनान्यत्र विशेषणविशेष्यतावच्छेदकभावापन्नयोरेव वन्हितदभावयोर्निर्वन्हिः पर्वतो वन्हिमानिति ज्ञाने पर्वतांशे प्रकारत्वेपि न पक्षे साध्यवैशिष्ट्यावगाहितादृशानिश्चयाप्रसिद्धिः॥ प्रथमसंबंधनिवेशाद्ध्रदो वन्हिमान् शैवालादित्यत्र ह्रदो वन्हिमान्वन्हिव्याप्यशैवालवांश्चेति समूहाल

नात्मकज्ञानीयशैवालनिरूपितविशेष्यतायाउक्तत्रितयसंबंधेनवन्हित्वावच्छिन्नप्रकारताविशिष्टत्वेपिनसंशयान्यतादृशज्ञाना
प्रसिध्यातत्रत्यदोषाव्याप्तिः॥ तत्रस्वपदार्थप्रकारतायांधर्मितावच्छेदकतानात्मकत्वस्यनिवेशाद्वन्हिमान्ह्रदोवह्न्यभाववद्ध्रदकाली
नजलवानित्यादौवह्न्यभावत्वावच्छिन्ननिरूपितह्रदत्वावच्छिन्नविशेष्यतायांनिरुक्तसंबधचतुष्टयेनवन्हित्वावच्छिन्नप्रकारतावत्वे
पिनसंशयान्यतादृशज्ञानाप्रसिद्धिः॥ स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वनिवेशेपर्वतोवन्हि
मान्महानसीयवह्न्यभावादित्यादौसंशयान्यतादृशज्ञानाप्रसिध्याव्यभिचारेऽव्याप्तिरतस्तत्रस्वावच्छेदकतापर्याप्त्यवच्छेदकेत्यादि
निवेशः॥ महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकतात्वेनतादृशाभावप्रतियोगितावच्छेदकतायामहानसीयत्ववन्हित्वोभ
यपर्याप्तत्वेपितद्व्यक्तित्वेनवन्हित्वनिष्ठतद्व्यक्तित्वावच्छेदेनवन्हित्वमात्रेपिपर्याप्तेः स्वावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नानु
योगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वनिवेशेतत्रैववन्हित्वावच्छिन्नप्रकारताविशि
ष्टतादृशामहानसीयवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायास्तादृशसमूहालंबनेसत्वात्तादृशसंशयान्यज्ञानाप्रसि

ध्याव्यभिचारेऽव्याप्तिरतस्तादृशपर्याप्तिप्रतियोगितावृत्तित्वमभावीयप्रतियोगितायां निविष्टं तथा च तादृशवन्हित्वनिष्ठतद्व्यक्ति
त्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितायां निरुक्तसंबंधेन महानसीयवह्न्यभावीयप्रतियोगित्वासत्वान्न दोषः ॥ निर्वन्हिः पर्वतो
वन्हिमानित्यादौ पक्षे संशयान्यतादृशज्ञानाप्रसिद्धिवारणाय तत्रैवाग्निमप्रकारतायामपि धर्मितावच्छेदकतानात्मकत्वनिवेशः ॥
द्वितीयसंबंधनिवेशाद्वृक्षः कपिसंयोगी कपिसंयोगाभावादित्यादौ न संशयान्यतादृशज्ञानाप्रसिध्याव्यभिचारेऽव्याप्तिः ॥ तृती
यसंबंधनिवेशात्पर्वतोऽवृत्तिर्द्रव्यादित्यत्र पर्वतोऽवृत्तिर्द्रव्यव्यापकावृत्तित्वसमानाधिकरणद्रव्यवांश्चेति समूहालंबने हेत्वंशे यासा
मानाधिकरण्यघटकवृत्तित्वनिष्ठवृत्तित्वत्वावच्छिन्नप्रकारता तद्विशिष्टावृत्तित्वनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्य
तावत्वेपि न संशयान्यतादृशज्ञानाप्रसिद्धिः ॥ चतुर्थसंबंधनिवेशात्पर्वतो वह्न्यभाववानित्यादौ वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपि
तपर्वतत्वावच्छिन्नविशेष्यतायाः पर्वतो वन्हिमानिति विभिन्नज्ञानीयवन्हित्वावच्छिन्नप्रकारताविशिष्टत्वेपि न पक्षे संशयान्यतादृश
ज्ञानाप्रसिद्धिः ॥ **नन्वेवमपि** पर्वतो वह्न्यभाववत्पर्वतकालीनवन्हिमानित्यादौ संशयान्यतादृशज्ञानाप्रसिद्धिस्तादृशज्ञानेन निरु

त्कचतुष्टयसंबंधेनवन्हित्वावच्छिन्नप्रकारताविशिष्टायावह्न्यभाववत्तावच्छिन्नप्रकारताविशिष्टायावापर्वतत्वावच्छिन्नविशेष्यतायाःसत्वा
दितिचेन्न ॥ प्रथमसंबंधप्रविष्टधर्मितावच्छेदकतानात्मकत्वस्थानेऽवच्छेदकतानात्मकत्वस्यैवनिवेशाद्वह्न्यभावस्यसाध्यतावच्छेदक
कोटिप्रविष्टत्वेनतद्विषयतायास्तथात्वाभावात् ॥ नचैवंसत्येकधर्मावच्छिन्नविशेष्यकत्वनिवेशस्थानीयतृतीयसंबंधनिवेशानं
व्यर्थंपर्वतोऽवृत्तिर्द्रव्यादित्यत्रहेत्वंशेव्याप्तिघटकवृत्तित्वस्यव्याप्तिविशिष्टहेतुज्ञानीयप्रकारतावच्छेदकत्वेनतादृशसमूहालंबनज्ञा
नीयवृत्तित्वत्वावच्छिन्नप्रकारतायाअवच्छेदकत्वानात्मकत्वविरहेणैवतादृशस्थलेसंशयान्यतादृशज्ञानाप्रसिध्यभावादितिवाच्यं
॥ परामर्शात्मकज्ञानेहेत्वंशेव्याप्तिघटकसामानाधिकरण्यस्योपलक्षणतयैवभानस्वीकर्तमतेतादृशवृत्तित्वप्रकारतायाअव
च्छेदकत्वानात्मकत्वस्याव्याहतत्वादितिदिक् ॥ वन्हिव्याप्यवान्वन्हिव्याप्यव्याप्यवांश्चह्रदोवह्न्यभाववानित्याहार्यज्ञा
नोपगमेनेति ॥ अनाहार्यसमूहालंबनेस्यमतद्वयसिद्धत्वेभ्रमान्यवृत्तियदीयविषयितेत्यादिविवक्षायामप्यसंभवोभ्रमान्य
समूहालंबनानात्मकज्ञानीयवह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयितायापक्षविशेष्यकसाध्यावगाहिह्रदोवन्हिमान्वह्न्यभाववांश्चे

त्याद्याहार्यसमूहालंबनात्मकज्ञानवृत्तित्वात्समूहालंबनासमूहालंबनरूपसमानाकारज्ञानीयविषयितयोर्भेदाभावात् ।। शेष
सार्थक्यानुपपत्तिश्च ।। अमान्यवृत्तिवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिता यान्ह्रदोवह्निव्याप्यवान्वह्न्यभाववांश्चेत्याहार्यसमूहा
लंबनतादृशानिश्चयावृत्तित्वविरहात् ।। नचाभ्युपगमेनेत्यस्यस्वमतेऽभ्युपगमेनेत्यर्थस्तथाचयत्विितिमतेआहार्यसमूहालं
बनास्वीकारान्नासंभवशेषवैय्यर्थ्यंइतिवाच्यं ।। तथासतिसमूहालंबनमादायैवासंभवसंभवाद्विशिष्टवैशिष्ट्यावगाह्याहार्य
ज्ञानमादायासंभवप्रदर्शनेबीजाभावप्रसंगात् ।। एवंघटाद्युदासीनेऽतिव्याप्तिवारकतयासामान्यपदस्यावश्यकत्वंप्रदर्श्या
संभवसंगमनेबीजाभावश्चसामान्यपदासत्वेपिसमूहालंबनासमूहालंबनज्ञानीयविषयितयोर्भेदाभावेनयत्किंचिद्विषयि
तायाअप्याहार्यसमूहालंबनतादृशानिश्चयावृत्तित्वविरहात् ।। नचयत्तुमताभिप्रायकत्वमाहार्यसमूहालंबनस्यवक्तुंशा
क्यं ।। अमान्यवृत्तियदीयविषयितासामान्यंतादृशानिश्चयावृत्तीतिविवक्षायांतन्मतेदर्शितदिशाऽसंभवस्यैवसंभवेनवक्ता
भिधानस्यतन्मतेदोषत्वकथनासंगतेश्चेतिचेत्अत्रकेचिदभ्युपगमनेत्यस्यमतेऽभ्युपगमनेत्यर्थः ।। विशिष्टवैशिष्ट्यावगाह्या

हार्यज्ञानमादायासंभवप्रदर्शनंचमतद्वयेपितत्संभवप्रदर्शनायस्वमतेआहार्यसमूहालंबनस्वीकारेपियत्वितिमतेतदस्वीकारा
द्भ्रमान्यवृत्तीत्यादिविवक्षायामसंभवाभावान्नग्रंथकाररीतिविरुद्धत्वदूषणदानासंगतिवदंति॥ वस्तुतस्तुमतद्वयेप्याहार्यस
मूहालंबनंनास्तीत्यभ्युपगमेप्युदासीनघटादावतिव्याप्तिवारणाययद्रूपावच्छिन्नविषयितासामान्यंतादृशनिश्चयावृत्तीति
विवक्षायावन्हिव्याप्यसाध्यकेह्रदपक्षकेवन्ह्यभाववद्ध्रदादावतिव्याप्तिवारणेनशेषवैयर्थ्यासंभवयोःशक्योपपादकतयासर्वो
पिग्रंथःसुसंगतएव॥ नन्वेवंसत्येकविशिष्टेपरावगाह्याहार्यस्यसर्वमतसिद्धत्वेनैतादृशाहार्याभ्युपगमेनेत्येतदभिनवस्वीका
रार्थकमसंगतमतोऽभ्युपगमेनेतिवाक्यस्वरसात्समूहालंबनाहार्यस्यसर्वसंमतत्वविरहात्तस्यैवाभिनवाभ्युपगमइत्यर्थत्वं
युक्तंतथाचनग्रंथसंगमनमितिवाच्यं॥ तत्तदभावान्यतरधर्मितावच्छेदककतत्तदभावान्यतरप्रकारकज्ञानस्याहार्यत्वप्रसि
द्धावपितत्तव्द्याप्यधर्मिनावच्छेदककतत्तदभावप्रकारकज्ञानस्याहार्यत्वंनक्वचिदप्युक्तमतस्तस्यसर्वमतसिद्धत्वप्रदर्शनायैवता
दृशाहार्याभ्युपगमेनेत्युक्तिः॥ भ्रमान्यवृत्तियदीयविषयितासामान्यंतादृशनिश्चयावृत्तितदीयविषयिता

याविवक्षणेन निर्वाहेऽपीति ॥ अत्रेदं चिंत्यं यत्तितिमते ह्रदो धूमव्यापकवन्हिसमानाधिकरणधूमवान्घटादित्यादौ वह्न्यभाववद्ध्रदेऽतिव्याप्तिः शेषदलनिवेशेऽपि दुर्वारा न हि वह्न्यभाववद्ध्रदनिश्चयोत्तरानुमितौ पक्षे दर्शितसाध्यावगाहनसंभवति धर्मिणि धूमादिमत्ताबुद्धिं प्रति वह्न्यादेर्धूमव्यापकत्वग्रहस्य धर्मिणि वह्न्यभाववत्ताग्रहस्य च द्वयोरेवैकविशिष्टापरत्वादिना कार्यकालविधयाप्रतिबंधकत्वात् ॥ यदि च शेषदलेन वह्न्यभाववद्ध्रदादेर्वारणेऽपि न क्षतिरनाहार्यज्ञानीयतद्विषयितायाधूमव्यापकत्वांशे आहार्यपक्षे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चये वर्तमानतया विरोधित्वान्निर्वाहेणैव तदतिव्याप्तिवारणात् ॥ न ह्याहार्यात्मनो वन्हिव्याप्यधूमवत्तानिश्चयस्य वह्न्यभाववत्ताग्रहे प्रतिबंधकत्वं येनानाहार्यज्ञानीयवह्न्यभाववद्ध्रदविषयिता दर्शिताहार्यनिश्चये न वर्तेतेति विभाव्यते तदा वह्न्यभाववद्ध्रदातिव्याप्तिवारकतया शेषसार्थक्यं वर्णयतः शिरसि शेषवैयर्थ्यदूषणपाषाणनिक्षेपः ॥ न च शेषदलेऽनुमितिनिष्ठोभयाभावे तदधिकरणतायां वा ज्ञानवैशिष्ट्याप्रयोज्यत्वासाधारण्यविषयिताप्रयोज्यत्वोभयाभावो निवेश्यः। यत्तथा च निरुक्तस्थले वह्न्यभाववद्ध्रदविषयकनिश्चयस्य वन्हिव्याप्यानुमितौ ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबंधक

तयातद्धुत्तरानुमितावुभयाभावस्यनिरुक्तोभयाभावविरहान्नवह्न्यभाववद्धृदत्वावच्छिन्नेतिव्याप्तिरितिवाच्यं ॥ एवमपिवन्हि
व्याप्याभाववान्हृदोवन्हिव्याप्यवानित्यादौवह्न्यभाववद्धृदत्वावच्छिन्नेतिव्याप्तिर्दुर्वाराआहार्यसमूहालंबनाभावाद्धूमान्यवृत्तितद्विष
यितायास्तादृशनिश्चयावृत्तित्वान्निरुक्तशेषदलसत्वाच्चेतिवक्त्रोक्तदूषणदानानौचित्यमेवेति ॥ उक्तपूर्वपक्षेस्वयंसमाधानमा
ह ॥ परेत्विति ॥ वह्न्यादिविशिष्टेति ॥ वन्हित्वावच्छिन्नप्रकारताकेत्यर्थस्तथाच वन्हित्वावच्छिन्नप्रकारतानिरूपि
तसमवायसंबधावच्छिन्ननिरवच्छिन्नधर्मितावच्छेदकतासंबंधेनवन्हित्वावच्छिन्नप्रकारताकानाहार्यतत्पुरुषीयबुद्धिंप्रतिव
ह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितसमवायसंबंधावच्छिन्ननिरवच्छिन्नधर्मितावच्छेदकतासंबंधेनवह्न्यभावत्वावच्छिन्नप्र
कारताकतत्पुरुषीयनिश्चयत्वेनप्रतिबंधकत्वंचैत्रीयहृदोवह्न्यभाववानितिज्ञानोत्तरंमैत्रीयहृदोवन्हिमानितिज्ञानोत्पत्त्याउभ
यत्रतत्पुरुषीयत्वनिवेशः ॥ नचपुरुषभेदेनप्रतिबध्यप्रतिबंधकभावेधर्मितावच्छेदकधर्मनिवेशापेक्षयालाघवविरहःशंक्य
पुरुषापेक्षयाधर्माणामानंत्यात्तद्भेदेनप्रतिबध्यप्रतिबंधकभावएवगौरवात् ॥ निरूपितत्वसंबंधेनहृदत्वविशिष्टवन्हिसामान्या

भाववत्ताज्ञानोत्तरं समवायसंबंधेन ह्रदत्वविशिष्टे वन्हिबुद्ध्युत्पत्त्या समवायेन ह्रदत्वविशिष्टे वह्न्यभावबुद्ध्युत्तरं निरूपितत्वसंबं
धेन ह्रदत्वविशिष्टे वन्हिबुद्ध्युत्पत्त्या चोभयत्र समवायसंबंधावच्छिन्नधर्मितावच्छेदकतानिवेशः ॥ जातिमान्वह्न्यभाववानिति ज्ञा
नोत्तरं ह्रदो वन्हिमानिति बुद्धेर्ह्रदो वह्न्यभाववानिति निश्चयोत्तरं जातिमान्वन्हिमानिति बुद्धेश्चोत्पत्त्योभयत्र धर्मितावच्छेदकता
यां निरवच्छिन्नत्वनिवेशः ॥ जातिमान्वह्न्यभाववान्जातिमान्वन्हिमानिति ज्ञानयोश्च पृथगेव प्रतिबध्यप्रतिबंधकभाव ऊह्यः
॥ ह्रदो वह्न्यभाववानिति ज्ञानोत्तरं ह्रदो घटवान्द्रव्यं वन्हिमदिति ज्ञानस्य ह्रदो घटवान्द्रव्यं वह्न्यभाववदिति ज्ञानोत्तरं ह्रदो वन्हिमा
निति ज्ञानस्य चोत्पन्नत्वोभयत्र केवलधर्मितावच्छेदकतायाः संबंधत्वमुपेक्ष्य तद्विशेषस्य संबंधत्वादरः ॥ स्वनिरूपकत्व स्वभिन्ना
वच्छेदकत्वनिरूपकत्वोभयसंबंधेनावच्छेदकताविशिष्टान्यत्वरूपावच्छेदकताद्वयानिरूपकत्वविशेषितविशेष्यतानिरूपित
त्वेनापि निरुक्तावच्छेदकता विशेषणीया तेन स्कंदरह्रदत्वावच्छेदेन वह्न्यभाववत्ताज्ञानोत्तरं ह्रदत्वसामानाधिकरण्येन वन्हि
मत्ताज्ञानोत्पत्तावपि न क्षतिः ॥ **अथ** ह्रदत्वसामानाधिकरण्येन वन्हिमत्ताबुद्धिं प्रति ह्रदत्वसामानाधिकरण्येन वह्न्यभावव

त्ताज्ञानस्यप्रतिबंधकतावारणायधर्मितावच्छेदकत्वव्यापकत्वविशिष्टसंसर्गकबुद्धेरेवप्रतिबंधकत्वस्योपगंतव्यतयाधर्मि
तावच्छेदकभेदेनप्रतिबंधकताभेदएवएतन्मतेव्यापश्यकइतिचेन्न ॥ धर्मितावच्छेदकावच्छेदेनविशिष्टबुद्धौसंसर्गांशेतद्व्या
पकत्वमेवभासतेनत्वन्यव्यापकत्वमितिस्वीकाराद्धर्मितावच्छेदकमनिवेश्यअधिकरणानिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठा
वच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपि
ताभावनिष्ठावच्छेदकतानिरूपितायास्वरूपत्वनिष्ठावच्छेदकतातन्निरूपितायास्वरूपादिनिष्ठसांसर्गिकविषयताशालिनिश्च
यत्वेनप्रतिबंधकत्वोपगमसंभवात् ॥ इत्थंचह्रदोवन्हिमान्धूमादित्यादौवह्न्यभाववद्ध्रदात्मकदोषज्ञानोत्तरज्ञाननिष्ठोयःप्रतिबध्य
तावच्छेदकीभूतवन्हित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वनिष्ठधर्मितावच्छेदकतासंबंधेनह्रदत्वनिरूपितसंबंधित्वाभावस्तत्र
प्रतिबंधकज्ञानीयवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वनिष्ठधर्मितावच्छेदकतात्मकविषयतायाःप्रयोजकत्वाल्लक्षण
समन्वयएवमेवव्यभिचारादावूह्यः ॥ निर्वन्हिर्वमानित्यादौवह्न्यभाववन्निष्ठवह्न्यभावादौलक्षणमुपपादयतिएवंचेति ॥ त

द्देशेत्यत्रदेशपदंधर्मितावच्छेदकपरं ॥ **तदवच्छेदकतावच्छेदकत्वेति** ॥ तदवच्छेदकताधर्मितावच्छेदकावच्छिन्नत्वेतद
वच्छेदकत्वंचधर्मितावच्छेदकइतिबोध्यं ॥ **ननु**निरुक्तसंबंधावच्छिन्नप्रतियोगिताकेच्छाविरहाधिकारणतावैशिष्ट्यस्यवह्नि
त्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतायांनिवेशोवह्न्यभावनिष्ठतादशाधर्मितावच्छेदकताया एवाप्रसिद्धिरिच्छास
त्वसत्वएवनिर्वह्निर्वह्निमानित्याहार्यज्ञानोदयात्तदीयधर्मितावच्छेदकतायाइच्छाविशिष्टत्वात् ॥ इच्छाविरहदशायांचता
दृशज्ञानस्यैवानुपपत्तेरितिकथंनिर्वह्निर्वह्निमानित्यादौलक्षणसमन्वयइत्याशंक्यकल्पांतरमाह **तादृशेति** ॥ निरुक्तसं
बंधावच्छिन्नप्रतियोगिताकेच्छाविरहस्येच्छाकालेपिप्रतिबंधकज्ञानेसत्वादाह **विशेषणताविशेषधर्मितावच्छेद
कताघटितेति** ॥ **ननु**निरुक्तधर्मितावच्छेदकतासंबंधेनवह्निमताज्ञानंप्रतिनिरुक्तधर्मितावच्छेदकताप्रत्यासत्यावह्न्य
भाववत्तानिश्चयत्वेनप्रतिबंधकत्वेधर्मितावच्छेदकमनिवेश्यवह्न्यभाववत्ताज्ञानेनिश्चयत्वं **दुर्वचंतथाहि**वह्न्यभावव
त्ताज्ञानेनिश्चयत्वंनतावद्वह्न्यभावाभावाप्रकारकत्वेसतिवह्न्यभावप्रकारकत्वंह्रदोवह्निमानितिज्ञानेप्रतिमहानसंवह्न्यभावाभा

ववद्ध्रदोवह्न्यभाववानितिज्ञानस्यप्रतिबंधकत्वानुपपत्तेः॥ नापिवह्न्यभावनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकाव
च्छिन्नविशेष्यतानिरूपितायावह्न्यभावाभावनिष्ठप्रकारतातच्छून्यत्वेसतिवह्न्यभावप्रकारत्वंदर्शितज्ञानीयवह्न्यभावाभावा
दिप्रकारतायामहानसंवह्न्यभाववदितिज्ञानीयवह्न्यभावप्रकारतानिरूपितविशेष्यतावच्छेदकंयन्महानसत्वंतदवच्छिन्न
विशेष्यतानिरूपितत्वानपायात्तस्यैवासंग्रहतादवस्थ्यात्॥ नापितादृशवह्न्यभावाभावप्रकारताशालित्वतादात्म्योभयसंबं
धेनवह्न्यभावज्ञानविशिष्टान्यत्वं॥ महानसोवह्न्यभावाभाववान्नवाह्रदोवह्न्यभाववानितिज्ञानासंग्रहात्॥ नापिस्वावच्छिन्न
विशेष्यतानिरूपितवह्न्यभावाभावप्रकारताशून्यत्वस्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावप्रकारताकत्वोभयसंबंधेनकिंचि
द्धर्मविशिष्टत्वंनिरुक्तनिर्णयत्वस्यदर्शितसमूहालंबनसाधारण्येपितद्विशिष्टस्यधर्मितावच्छेदकतासंबंधेनमहानसत्वेपि
सत्वान्महानसंवन्हिमन्नवेतिविशिष्टबुध्यनुपपत्तेरत आहाधिकमन्यत्रानुसंधेयमिति॥ अयंभावः प्रतिबंधकताव
च्छेदककोटौनिश्चयत्वमनिवेश्यवह्न्यभावसंशयोत्तरंवन्हिविशिष्टबुध्युत्पत्तिनिर्वाहायप्रतिबंधकतावच्छेदकनिरुक्तधर्मिताव

च्छेदकतारूपप्रत्यासत्तिघटकवह्न्यभाववत्ताद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतायामेववह्न्यभावाभावप्रकारत्वानिरूपितत्वंदेयंतथा
चतादृशविशेष्यतानिरूपितधर्मितावच्छेदकतासंबंधेनवह्न्यभाववत्ताज्ञानत्वेनैवप्रतिबंधकत्वंसंशयेसमुच्चयवैलक्षण्यायप्रकारता
द्वयानिरूपितैकैवविशेष्यतास्वीक्रियतइतिसंशयोत्तरंविशिष्टबुद्ध्युपपत्तिः ॥ नन्चसमुच्चयाविषयस्यकोट्योर्विरोधस्यसंशयविषय
तयैववैलक्षण्यसिद्धौप्रकारताद्वयनिरूपितैकविशेष्यतायाअक्लृप्तायाःस्वीकारोनयुक्तइतिवाच्यं ॥ विरोधोपस्थितिंविनापिविशेष
दर्शनकोटिस्मरणधर्मिज्ञानादिकारणसत्वेसंशयस्यानुभवसिद्धतयानिखिलसंशयानांविरोधविषयकत्वासंभवेनसमुच्चयव्यावर्तना
यसंशयेविलक्षणविषयतास्वीकारस्यावश्यकत्वादतएवक्वचिद्विरोधभानस्यापितत्प्रयोजकाधीनत्वादित्यत्रदीधितिकृताक्व
चिदित्युक्तं ॥ संशयेकोट्योःसंसर्गतयाविरोधभानस्वीकारेतादृशविरोधविषयतायाःसमुच्चयवैलक्षण्यानुपपत्त्यैवसंशये
स्वीकारात्किमपराद्धमतिरिक्तविशेष्यतया ॥ अथनिखिलसंशयेषुप्रकारताद्वयनिरूपितैकविशेष्यत्वमपिनसंभवति ॥
नीलपर्वतत्वंधर्मितावच्छेदकीकृत्यवह्न्यभावंशुद्धपर्वतत्वंधर्मितावच्छेदकीकृत्यवह्न्यभावाभावंवह्निंवाऽवगाहमानस्यसंशय

स्यतथात्वायोगात् ॥ तत्रवह्न्यादिप्रकारतानिरूपितविशेष्यतायानैल्यानवच्छिन्नत्वेनतदवच्छिन्नवह्न्यभावप्रकारतानिरूपितविशे 
ष्यताभिन्नत्वात् ॥ तत्रवह्न्यादिप्रकारतानिरूपितविशेष्यतायानैल्यावच्छिन्नत्वोपगमेनीलपर्वतत्वंधर्मितावच्छेदकीकृत्यदर्शित
कोटिद्वयमवगाहमानस्यसंशयस्यततोवैलक्षण्यानुपपत्तेः ॥ नचनीलपर्वतोवन्हिमान्पीतपर्वतोवह्न्यभाववानित्याकारकस
मूहालंबनवन्नीलपर्वतोवह्न्यभाववान्पर्वतोवह्न्यादिमानितिज्ञानमपिनिर्णयएवेतिवाच्यं ॥ तथासतिकार्यकालेपर्वतत्वाव
च्छेदेनवह्न्यादिमत्तानिर्णयस्यप्रतिबंधकस्यसत्वान्नीलपर्वतत्वावच्छेदेनवह्न्यभावादिविशिष्टबुद्ध्यनुत्पत्तेरितिचेन्नैवं ॥ द
र्शितसंशयेप्युभयप्रकारतानिरूपितैकैवविशेष्यताकिंतुतस्याःपर्वतत्वावच्छिन्नत्वेनवह्न्यादिप्रकारतानिरूपितत्वंनैल्यविशिष्टपर्व
तत्वावच्छिन्नत्वेनचवह्न्यभावप्रकारतानिरूपितत्वमितिविशेषः ॥ नीलपर्वतोवह्न्यभाववान्नवेतिसंशयेचविशेष्यतायाएकरूपेणै
वोभयप्रकारतानिरूपितत्वमितिततस्तस्यवैलक्षण्यनिर्वाहः ॥ यदिचसंशयसमुच्चययोर्वैलक्षण्यायोभयप्रकारतानिरूपि
तमेकविशेष्यत्वमतिरिक्तमास्तां संशयेपरंतुतत्रप्रत्येकप्रकारतानिरूपितविशेष्यताद्वयसत्वेपिबाधकाभावस्तत्प्रयोजकसाम 

ग्र्या अपि तत्र सत्वात् ॥ नच तदवच्छिन्नं प्रति संशयसामग्र्याः प्रतिबंधकत्वकल्पनात्तत्प्रयोजकसामग्र्येव नास्तीति वाच्यं ॥ त
त्र संशयसामग्र्याः प्रतिबंधकत्वे मानाभावात् ॥ नच संशयसमुच्चयवैलक्षण्यान्यथानुपपत्त्यैव तत्स्वीकार इति शंक्यं ॥ संशयव्यावृ
त्तविषयतायाः समुच्चयेऽभावेपि संशयनिष्ठविलक्षणविषयतायास्तत्राभावेनैव तस्य संशयवैलक्षण्यनिर्वाहात् संशयव्यावृत्तविष
यितारूपमेव तत्र वैलक्षण्यमनुभूयत इति तु शपथैकनिर्णेयमिति विभाव्यते तदास्तु संशयेतिरिक्तविषयत्वाकल्पनमस्तु चो
भयप्रकारतानिरूपितविशेष्यताद्वयं किंतु समुच्चयव्यावर्तनाय संशयीयविशेष्यतयोरवच्छेद्यावच्छेदकभावः स्वीक्रियते त
था च वह्न्यभावाभावप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नवह्न्यभावादिप्रकारतानिरूपितविशेष्यतानिरूपितधर्मिता
वच्छेदकतासंबंधेन वह्न्यभाववत्ताज्ञानत्वेन प्रतिबंधकतेति न कोपि शंकावसर इति ॥ अथैवमपि वह्न्यभावाभाववति ह्र
दे वह्न्यभावप्रकारकमित्यप्रामाण्यज्ञानस्यैव ह्रदो वह्न्यभाववानिति ज्ञानप्रतिबंधकतायामुत्तेजकत्वं नतु वह्न्यभावाभावव
ति घटे वह्न्यभावप्रकारकमित्यप्रामाण्यज्ञानस्येति धर्मितावच्छेदकनिवेशो दुर्वार एवेति चेन्न ॥ स्वीयवह्न्यभावाभाववद्वृत्ति

त्वप्रकारतानिरूपितायावद्व्यभावप्रकारतानिरूपितविशेष्यतानिष्ठविशेष्यतातदवच्छेदकतावच्छेदकत्वसंबंधावच्छिन्नप्रतियो गिताकाप्रामाण्यग्रहाभावाधिकरणताविशिष्टधर्मितावच्छेदकता या एव प्रतिबंधकतावच्छेदकसंबंधत्वोपगमेनतादृशाप्रामाण्यग्र हाभावस्यविशेषणताविशेषधर्मितावच्छेदकताघटितसामानाधिकरण्यसंबंधेन प्रतिबंधकविशेषणत्वोपगमेनवादोषानवका शेनधर्मितावच्छेदकनिवेशानावश्यकत्वादितिदिक्॥ **पक्षतेत्यादि** ॥ पक्षतासाध्यताहेतुतावच्छेदकनिवेशेनमाश्रयासिद्धिसा ध्याप्रसिद्धिहेत्वसिद्ध्यादेः संग्रहार्थं ॥ **अत्रचेति** ॥ **प्रतिबंधकतावच्छेदकत्वात्मकेति** ॥ ज्ञानवैशिष्ट्यावच्छिन्नत्वासा धारण्यविषयकज्ञानीयप्रतिबंधकताव्यक्तिभिन्नत्वोभयाभाववत्तादृशाग्रहप्रतिबंधकतावच्छेदकत्वात्मकेत्यर्थस्तेनपर्वतोवन्हि मान्धूमादित्यादौपाषाणमयत्वविशिष्टपर्वतेनातिव्याप्तिः ॥ **इत्यभिप्रायइति** ॥ अभिप्रायइत्यनेनास्वरसस्तद्बीजंतूक्तयुक्त्या तत्तद्धर्मावच्छिन्नभेदकूटावच्छिन्नभेदस्यातिरिक्तत्वेघटाभावाभावत्वस्याप्यनेकघटेषुसंबंधकल्पनामपेक्ष्यतादृशाभावत्वविशि ष्टस्यातिरिक्तधर्मिणएवैकस्यकल्पयितुंयुक्तत्वेनस्वाभावाभावस्यस्वस्वरूपत्वसिद्धांतभंगइति॥ **अधिकरणविकासकत**

येति ॥ तत्तद्धर्मावच्छिन्ननिरूपितत्वस्येत्यादिः ॥ **अधिकरणानां** ॥ विषयितानां ॥ **निकासकतया** ॥ परिच्चायकतया ॥ तथाच तत्तद्विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्वमेवलक्षणंविषयितायांतत्तद्धर्मावच्छिन्ननिरूपितत्वंपरिच्चायकमात्रंतेनतत्तद्धर्मवत्वमात्रस्यैवलक्षणत्वसंभवेशेषवैय्यर्थ्यशंकानवकाशइतिभावः ॥ ॥ **विदुषांकंठभूषायैरघुनाथेननिर्मिते ॥ संन्यायरत्नेसामान्यनिरुक्तिःपूर्णतामगात् ॥ ॥ इतिमीमांसान्यायपंचास्यश्रीमद्राघवाचार्यशिष्यस्यपर्वतेइत्युपनामकस्यरघुनाथस्यकृतौन्यायरत्नाभिधायांगदाधरीपंचवादटिप्पण्यांसामान्यनिरुक्तिः संपूर्णा ॥**

**॥ अथपंचलक्षणी ॥**

॥ नसंभवतिनोत्पत्तुमर्हतीति ॥ अत्रसंपूर्वकभूधातोरुत्पत्तियोग्यत्वरूपमेर्थमभिसंधायोक्तमुत्पत्त्यर्हत्वंनास्तीति ॥ व्याप्तिनिश्चयश्च निषेद्धुमशक्यः सिद्ध्यसिद्धिभ्यांव्याघातात् ॥ **नचोत्पत्तियोग्यत्वाभावेपिवक्तुमशक्यश्चार्वाकमतेधर्म्यप्रसिद्धेरितिवाच्यं** ॥ व्याप्तिविषयकत्वसंशयान्यत्वज्ञानत्वानांप्रत्येकंप्रसिद्धानामेकजन्यतावच्छेदकत्वाभावस्यैवविवक्षितत्वात् ॥ व्याप्तिविषयकत्वसंशयान्यत्वज्ञानत्ववृत्तिसमुदायत्वंजन्य

तावच्छेदकतापर्याप्त्यनवच्छेदकमितिपरमार्थः ॥ **नच** सामान्यतोजन्यतावच्छेदकेसंशयान्यत्वस्यवक्तुमशक्यत्वाद्व्याप्त्यंशेसंश
यान्यत्वंवक्तव्यंतच्चव्याप्त्यभावनिष्ठप्रकारत्वानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यताकत्वरूपंचार्वाकमतेऽप्रसिद्धमेवेतिवा
च्यं ॥ वाप्त्यभावाप्रकारकत्वस्यैवतदर्थत्वात् ॥ **अथवा** पक्षताग्रंथोक्तत्रितयसंबंधेनव्याप्तिविषयिताविशिष्टविषयिताशून्य
त्वंविवक्षणीयंतच्चघटज्ञानादौप्रसिद्धमितिनकश्चिद्दोषः ॥ **प्रतीक्षां विधायेति** ॥ प्रतीक्षाभविष्यत्कालकर्तव्यत्वप्रकारकज्ञा
नानुकूलव्यापारः सचव्याप्तिग्रहोपायश्चवक्ष्यतइत्येवंरूपः ॥ **तत्प्राथम्यइति** ॥ तस्यव्याप्तिस्वरूपनिरूपणस्य ॥ **प्राथम्ये**
प्रथमतःकर्तव्यत्वेइत्यर्थः ॥ तस्यव्याप्तिस्वरूपनिरूपणस्य ॥ **व्याप्तिग्रहोपायप्रतिपादनौपयिकत्वमिति** ॥ औपयिक
त्वंव्याप्तिग्रहोपायप्रतिपादनघटकोपायविषयकप्रतिपत्तिप्रयोजकत्वं ॥ प्रतिपतिश्चव्याप्तिग्रहजनकव्यभिचारज्ञानाभा
वसहचारज्ञानयोर्व्याप्तिग्रहजनकत्वप्रकारिका ॥ प्रयोजकत्वंचजनकज्ञानेजनकताघटकीभूतजन्यतावच्छेदकविशि
ष्टज्ञानस्यहेतुतयाजन्यतावच्छेदकीभूताव्यभिचारनिश्चयत्वसहचारज्ञानत्वयोर्ज्ञानेघटकीभूताव्यभिचारसहचारज्ञान

योर्हेतुतयापरंपरयाजनकत्वरूपंबोध्यं ॥ ननुप्रामाण्यव्यवस्थापनस्याप्रमाणसाधर्म्येणेत्यादिग्रंथेनसमाप्ततयासमारब्धे
तिकथंयुज्यतेआसमाप्तेरेवसमारब्धत्वव्यवहारादतआह ॥ अनिष्पन्नत्वादिति ॥ अपरिसमाप्तेरित्यर्थः ॥ अप्रमाणसा
धर्म्येणेत्यादेःपरमतनिराकरणपरत्वात्समारब्धेतियुज्यतइतिशेषः ॥ अनिष्पन्नत्वादित्यस्यानंतरंतन्निष्पत्तिरवश्यंसंपा
दनीयेतिसूचनायेतिशेषइतिकेचित् ॥ अनिष्पन्नत्वादित्यत्रपंचम्यर्थोज्ञानज्ञाप्यत्वंतस्यसमारब्धत्वेऽन्वयः ॥ निष्पन्नत्व
मतीतकृतिविषयत्वंकृतावतीतत्वंचस्वोत्पत्त्यधिकरणक्षणवृत्तिकृतिजन्यक्रियाजन्यफलानुकूलव्यापारानुकूलत्वप्रतियो
गित्वोभयसंबंधेनवर्तमानध्वंसविशिष्टत्वं ॥ द्वितीयादिदिवसीयकार्यस्याद्यसिद्धत्वव्यवहारवारणायप्रतियोगित्वनिवेशः॥
अनेककृतिसाध्यकार्यस्यकतिपयकृतिक्षणेसिद्धत्वव्यवहारवारणायद्वितीयसंबंधनिवेशः ॥ एतेनपरीक्षायांसमारब्ध
त्वविशेषणप्रयोजनंसूचितं ॥ तच्चप्रामाण्यपरीक्षायाःप्रामाण्यसाधकयुक्तिप्रदर्शनेनसिद्धत्वज्ञानवतःप्रवृत्त्यनुदयेनत
त्प्रतिबंधकसिद्धत्वज्ञाननिवर्तनंतन्निवृत्तिश्चसिद्धत्वघटकातीतत्वग्रहनिवर्तनद्वारातन्निवर्तनंचपरीक्षाविषयककृतिध्वं

सासमानकालीनपरीक्षाविषयककृतिविषयत्वरूपसमारब्धत्वघटकपरीक्षाविषयककृतिध्वंसासमानकालीनत्वज्ञानस्योक्त
संबंधद्वयेनवर्तमानध्वंसवत्वरूपातीतत्वज्ञानेप्रतिबंधकतया ॥ नन्वोक्तसंबंधेनोक्तध्वंसवत्वज्ञाने आद्यत्वनिश्चयस्यकथंप्र
तिबंधकत्वमितिशंक्यं ॥ आद्यत्वस्योक्तसंबंधेनोक्तध्वंसवत्वाभावव्याप्यतयातदभावव्याप्यवत्ताज्ञानविधयैवप्रतिबंधकत्वा
त् ॥ नन्वेकमात्रकृतिजन्यफलानुकूलकृतावुक्तोभयसंबंधेनतादृशध्वंसवत्वाद्यत्वयोः समावेशेनसामान्यव्याप्तिभंगइतिवा
च्यं ॥ तथापिप्रामाण्यपरीक्षाद्यकृतित्वस्यतादृशकृताववभावेनविशेषव्याप्तेरव्याहतत्वात् ॥ इत्थंच समारब्धत्वविशेषणाधी
नकृतिविशेष्यकाद्यत्वज्ञानेजातएवनिरुक्तसंबंधेनतादृशध्वंसवत्वज्ञानानुत्पादेनतद्धटितसिद्धत्वज्ञानानुत्पादः संभवतिनान्य
थेति ॥ व्याप्तिग्रहोपायप्रतिपादनस्यानुमानप्रामाण्यव्यवस्थाप्रयोजकत्वज्ञानार्थंकारणीभूतेतिविशेषणंवक्तव्यंतच्चान्यथा
सिद्धमितिशंकतेयद्यपीति ॥ प्रामाण्यव्यवस्थापकत्वकथनमिति ॥ व्यवस्थानिश्चयःसचानुमानधर्मिकस्तथाचव्य
वस्थापकत्वंप्रामाण्यानुमितिप्रतिबंधकस्वरूपासिद्धिज्ञानविघटकत्वं ॥ आवश्यकत्वंसफलत्वं ॥ प्रामाण्यव्यवस्थापकत्ववि १२८

शिष्टव्याप्तिग्रहोपायप्रतिपादननिदानत्वलाभाय तद्विशेषणं ॥ नच तल्लाभः किमर्थमिति शंक्यं ॥ तल्लाभस्य व्याप्तिनिरूपण
स्यात्यंतावश्यकत्वलाभार्थत्वादित्याशयेन समाधानमाह तथापीति केचित् ॥ कारणीभूतांतोपादान एवोक्तरीत्यालब्धस्या
पि प्रामाण्यव्यवस्थापनजनकत्वस्य धर्मिपारतंत्र्येण व्याप्तिग्रहोपायप्रतिपादनजनके व्याप्तिनिरूपणे लाभो भवति नान्यथेति
पुनः कारणीभूतांतविशेषणमित्याशयेनाह तथापीत्यपरे ॥ परे तु स्यादेवं यदि भूतांतेन ग्रंथेन व्याप्तिग्रहोपायप्रतिपादन
स्यावश्यकत्वसूचनं ग्रंथकर्तुरभिप्रेतं तदेव न किंतु तस्येदानीं कर्तुमर्हत्वे विवादाभावसूचनाय स्वानुमतिसूचनमेवाभिप्रेतं त
च्च न पूर्वग्रंथतात्पर्यविषय इत्याह तथापीति ॥ भवत्वित्यादिनाऽऽकांक्षितत्वमित्यंतेन भूतांतोत्कीर्तनफलं स्वानुमतिसूचनं
स्पष्टीकृतमित्याहुः ॥ प्रथमतस्तद्वेवोचितमिति ॥ विशेषणविशिष्टविशेष्यजनकत्वग्रहे धर्मिपारतंत्र्येण विशेषण
जनकत्वस्यापि ग्रहादुभयजनके निरूपणीये विशेष्यमात्रजनकव्याप्तिस्वरूपनिरूपणस्य प्राथम्यमनुचितमित्याशंकावि
रहाद्व्याप्तिस्वरूपनिरूपणस्यैव प्राथम्यमुचितमिति भावः ॥ ननु व्याप्तिस्वरूपं निरूपयतीत्येव वक्तव्ये व्याप्तिस्वरूपनिरू

पणमारभतइतिकिमर्थमुक्तमर्थाबाधेऽप्यधिकलेखनस्यायुक्तत्वादित्यत **आह** ॥ **प्रथमतइति** ॥ **निरूपयतीत्यसंगतमिति** ॥ निरूपयतीत्यत्राख्यातार्थकृतौ निरूपणस्यसाध्यत्वाख्यविषयतासंबंधेनान्वयस्यशाब्दखंडे मिश्रैर्व्यवस्थापितत्वात्पूर्वपक्षाभिधानजनककृतेः सिद्धांतकथनपर्यवसितनिरूपणसाध्यकत्वाभावादितिभावइति **केचित्** ॥ **अपरेतु**व्याप्तिस्वरूपंनिरूपयतीत्यत्रव्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारानुकूलवर्तमानकृतेरेववाक्यार्थतयाअत्रोच्यतइत्यादिनाप्रतिपादितस्यैवस्वमतेव्याप्तिस्वरूपत्वात्तद्विषयकनिरूपणानुकूलकृतेर्वर्तमानकालीनत्वाभावेननिरूपयतीतिवाक्यार्थबाधादितिभाव**इत्याहुः** ॥ **आरभतइत्युक्तमिति** ॥ व्याप्तिस्वरूपनिरूपणमित्यादिः ॥ परमतनिराकरणपूर्वकव्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारोव्याप्तिस्वरूपनिरूपणपदार्थः द्वितीयार्थोविषयत्वंआङ्पूर्वकरभधातोश्चाद्यकृतिरर्थः आख्यातार्थश्चाश्रयत्वंवर्तमानकालश्चकालस्यधात्वर्थेऽन्वयस्तथाच परमतनिराकरणपूर्वकस्वमतसिद्धव्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारानुकूलवर्तमानाद्यकृतिमान्मणिकारइतिवाक्यार्थः ॥ आद्यकृतेश्चस्वरूपनिरूपणविषयकत्वनियमात्सिद्धांतसिद्धव्याप्तिनिरूपणस्याद्यकृतिविषयत्वंतथाचोक्तं **पूर्वपक्षाभिधा**

**नतत्खंडनयोस्तदारंभकत्वमिति** ॥ आरंभकत्वमाद्यकृतिविषयत्वमितिभावः ॥ **केचित्तु** व्याप्तिस्वरूपनिरूपणमारभत
इत्यत्रनिरूपणपदार्थः पूर्ववदेव द्वितीयार्थउद्देश्यत्वंसामग्रीमेलनसाध्यककृतिदशायामपिघटमारभतइतिव्यवहारात् ॥ तच्च
सिद्धांतकथनसाध्यकत्वाभाववत्यामपिपूर्वपक्षाभिधानकृतौ सिंद्धातसाध्यकतत्कथनजनककृतौचाव्याहतंपरमतनिराकरण
पूर्वकत्वविशिष्टसिद्धांतकथनमुद्दिश्यैवपूर्वपक्षाभिधानतत्खंडनयोरारब्धत्वात् ॥ **तदारंभणरूपतेति** ॥ व्याप्तिनिरूप
णोद्देश्यककृतिविषयतेत्यर्थ**इत्याहुः** ॥ **अथ** परमतनिराकरणपूर्वकसिद्धांतकथनं यदिनिरूपणंतदानन्वित्यादिपूर्वप
क्षाभिधानस्यनिरूपणत्वानुपपत्याव्याप्तिस्वरूपनिरूपणमारभतेनन्वित्यादिनेत्रतृतीयार्थभेदान्वयस्यक्लेशेनैवोपपाद्यता
पत्तिः ॥ एवंपक्षधर्मतानिरूप्यतइत्यत्रापिपक्षधर्मतानिरूपणमारभ्यतइत्यस्यैववक्तव्यतापत्तिः पक्षताग्रंथेपिप्रथमतः पूर्व
पक्षस्यैवाभिधानात् ॥ **यदिच** निरूपणत्वंपूर्वपक्षनिरूपणसिद्धांतनिरूपणसाधारणं कथंचिन्निरुच्यपक्षतामणिः सं
गम्यतेतदाप्रकृतेपिनिरूपयतीतिकथंनोक्तंदीधितिकृतेतिचेन्न ॥ अपठितपूर्वग्रंथानामेकमपिसमग्रंपठनीयमिती

न्यायरत्नं च्छावतां झटितिनन्वित्यादिग्रंथाध्ययनेप्रवृत्त्यर्थं निरूपणमारभत इत्युक्तं निरूपयतीत्युक्त्या तु नारंभो लभ्यते कतिपयलक्ष ग॰ पं॰ टि॰
१२० णविचारोत्तरमपि निरूपयतीति व्यवहारसंभवात् ॥ पक्षताग्रंथे तु व्याप्तिनिरूपणानंतरमित्यभिधानादेव पक्षतानिरूपणारं
भलाभादारभ्यत इति नोक्तमिति विभावनीयं सूक्ष्मबुद्धिभिः ॥ नन्वित्यादिमूले व्याप्तिज्ञान इत्यत्र सप्तम्यर्थो विष
यत्वं तत्रानुमितिजनकताविशिष्टज्ञानस्यान्वये जनकतायाअप्यवच्छेदकतयाऽन्वयः ॥ व्याप्तिपदार्थश्च पक्षतावच्छेदकाव
च्छेदकावच्छिन्नविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारतारूपविलक्षणविषयताश्रयश्चास्मि
व्याप्तिपदंच व्याप्तिपदार्थत्वावच्छिन्ने लाक्षणिकं तत्र सप्तम्यर्थविषयतायाअन्वयः किंशब्दार्थः समभिव्याहृतपदार्थविशेषणधर्म
व्याप्यधर्मप्रकारकजिज्ञासाविषयस्तथाचानुमितिजनकतावच्छेदकनिरुक्तविषयताश्रयज्ञानीयविषयताश्रयव्याप्तिपदार्थ
त्वव्याप्यधर्मप्रकारकजिज्ञासाविषयाभिन्नो व्याप्तिपदार्थ इति बोधो ज्ञेयः ॥ न तावदित्यत्र भेदबोधोपयुक्तप्रतियोग्यनुयो
गिवाचकपदाभावादाहगादाधर्यो व्याप्तिरिति ॥ तथाच व्याप्तिपदाव्यभिचरितत्वपदयोः सत्वान्न काचित्क्षतिः ॥ अत्रव्या १२०

प्तिपदार्थस्यपक्षत्वेऽव्यभिचरितत्वभेदस्यसाध्यत्वेकूटरूपहेतुर्वक्तव्यस्तत्रचकेवलान्वयिन्यभावादित्यभिहितकेवलान्वयिवृत्त्यभाव
प्रतियोगित्वरूपहेतुरसिद्धःस्यादपिचव्याप्तिपदस्यांतेनिविष्टत्वात्तदर्थस्यपक्षत्वमनुपपन्नमुद्देश्यवाचकपदस्यपूर्ववृत्तित्वनियमा
द्योजनायाश्चायुक्तत्वादित्याशंक्याव्यभिचरित्वपदार्थस्यपक्षत्वमाह **तथाचेति** ॥ **अव्यभिचरित्वपदार्थइति** ॥ अत्राव्य
भिचरितत्वत्वस्याननुगतत्वेनपक्षतावच्छेदकत्वासंभवादव्यभिचरितत्वपदस्यतत्प्रतिपाद्यत्वरूपानुगतधर्मावच्छिन्नपरत्वमं
गीकृत्याव्यभिचरितत्वपदार्थस्यपक्षत्वानुसरणं ॥ **नचा**ननुगतमेवपक्षतावच्छेदकमस्त्विति **वाच्यं** ॥ एकधर्मावच्छिन्नस्यव्या
प्तित्वनिराकरणेप्यन्यधर्मावच्छिन्नस्यव्याप्तित्वशंकाऽनिराकरणात्तत्तद्धर्मावच्छिन्नरूपार्थपंचकपरतायास्तत्पदस्यवक्तव्यतया
सकृदुच्चरितइतिन्यायातिक्रमापत्तेर्वाक्यभेदापत्तेश्च ॥ **नन्व**त्रोच्यतइत्यादिनावक्ष्यमाणव्याप्तिभेदसाधनेसिद्धसाधनंसाध्याभा
ववदवृत्तित्वादिभेदसाधनेबाधइत्यतआह **नानुमितिजनकज्ञानविषयइति** ॥ तथाचानुमितिजनकज्ञानविषयत्वस्या
व्यभिचरितत्वपदार्थेपरैःस्वीकारान्नसिद्धसाधनबाधाविति भावः ॥ **अथैव**मपिवह्न्यभाववदवृत्तित्वकालीनपर्वतोवह्निमानित्या

तित्वाव्यवहितोत्तरत्वयोर्द्धर्मधर्मितावच्छेदकभावेविनिगमनाविरहेणगुरुतरकार्यकारणभावद्वयकल्पनापत्तेः ॥ मैवंफलमुखगौरवस्यादोषत्वात् ॥ यद्वा ॥अनुमितित्वावच्छिन्नत्वस्थानेज्ञानत्वानवच्छिन्नत्वस्यैवनिवेशनीयतयानपूर्वोक्तदोषः ॥ धर्मितावच्छेदकप्रकारकज्ञानीयजन्यतायाज्ञानत्वेनैवावच्छेदात् ॥ अथैवमपिहेत्वधिकरणवृत्त्यभावत्वेनतादृशवृत्तित्वाभावस्यभानसंभवेनोक्तविषयतायामतद्वयएवतत्रसत्वेनबाधइतिचेन्न ॥ पक्षविषयतानिरूपितहेतुविषयतानिरूपितत्वस्यापितत्रनिवेशात् ॥ नन्वेवमपियत्रावृत्तिभेदःसाध्यतेआधेयत्वंहेतुस्तत्रपक्षविषयतानिरूपितहेतुविषयतानिरूपितविषयतायाअपिसत्वेनबाधोवर्ततएव ॥ नच्चाव्यभिचारपदार्थत्वसामानाधिकरण्येनैवसाध्यसिद्धिरुद्देश्येतिसांप्रतं ॥ तथासतिसाध्यवद्भिन्नेत्यादेर्व्याप्तित्वानिराकरणापत्तेः ॥ यादृशांकुरविशेषानुमितिःकस्यापिनाभूत्तदभाववद्वृत्तित्वस्याव्यव्यभिचरितत्वपदार्थतयातत्रसाध्यस्यमतद्वयसिद्धेःसिद्धसाधनापत्तेश्च ॥ मैवंपक्षविषयतानिरूपितहेतुतावच्छेदकसंबंधावच्छिन्नविषयतानिरूपितानुमितिजनकतावच्छेदकविषयतानाश्रयत्वस्यसाध्यत्वात् ॥ नचहेतुमद्वृत्तित्वस्यस्वरूपसंबंधेनाभावांशेभानाद्वृत्ति

प्तिपदार्थस्यपक्षत्वेऽव्यभिचरितत्वभेदस्यसाध्यत्वेकूटरूपहेतुर्वक्तव्यस्तत्रचकेवलान्वयिन्यभावादित्यभिहितकेवलान्वयिवृत्त्यभाव
प्रतियोगित्वरूपहेतुरसिद्धःस्यादपिचव्याप्तिपदस्यांतेनिविष्टत्वात्तदर्थस्यपक्षत्वमनुपपन्नमुद्देश्यवाचकपदस्यपूर्ववृत्तित्वनियमा
द्योजनायाश्चायुक्तत्वादित्याशंक्याव्यभिचरित्वपदार्थस्यपक्षत्वमाह **तथाचेति** ॥ **अव्यभिचरित्वपदार्थइति** ॥ अत्राव्य
भिचरितत्वत्वस्याननुगतत्वेनपक्षतावच्छेदकत्वासंभवाद्व्यभिचरितत्वपदस्यतत्प्रतिपाद्यत्वरूपानुगतधर्मावच्छिन्नपरत्वमं
गीकृत्याव्यभिचरितत्वपदार्थस्यपक्षत्वानुसरणं ॥ **नचाननुगतमेवपक्षतावच्छेदकमस्त्विति वाच्यं** ॥ एकधर्मावच्छिन्नस्यव्या
प्तित्वनिराकरणेप्यन्यधर्मावच्छिन्नस्यव्याप्तित्वशंकाऽनिराकरणात्तत्तद्धर्मावच्छिन्नरूपार्थपंचकपरतायास्तत्पदस्यवक्तव्यतया
सकृदुच्चरितइतिन्यायातिक्रमापत्तेर्वाक्यभेदापत्तेश्च ॥ **नन्वत्रोच्यत**इत्यादिनावक्ष्यमाणव्याप्तिभेदसाधनेसिद्धसाधनंसाध्याभा
ववदवृत्तित्वादिभेदसाधनेबाधइत्यतआह **नानुमितिजनकज्ञानविषयइति** ॥ तथाचानुमितिजनकज्ञानविषयत्वस्या
व्यभिचरितत्वपदार्थेपरैःस्वीकारान्नसिद्धसाधनबाधावितिभावः ॥ **अथैव**मपिवह्न्यभाववदवृत्तित्वकालीनपर्वतोवन्हिमानित्या

दावनुमितिजनकज्ञानविषयत्वस्यानुमितिजनकतावच्छेदकविषयत्वस्यचाव्यभिचरितत्वपदार्थेसत्वाद्बाधोदुर्वारः ॥ **नच** धर्मितावच्छेदकतानात्मकत्वस्यविषयताविशेषणत्वान्नबाधइति**वाच्यं** ॥ तथापिसाध्याभाववद्वृत्तिहेतुकेऽनुमितिजनकज्ञानीयधर्मितावच्छेदकतानात्मकविषयतायाअपितत्रसत्वेनबाधस्यदुर्वारत्वात् ॥ **नच** तत्रापिव्याप्तिपदार्थधर्मितावच्छेदकतयैवसाध्याभाववद्वृत्तित्वस्यभानान्नबाधइति**वाच्यं** ॥ एवमपिसामानाधिकरण्यत्वेनतादृशवृत्तित्वाभावावगाहिज्ञानमादायबाधस्यदुर्वारत्वात् ॥ **अथ** भ्रमान्यवृत्तित्वस्यतादृशविषयतायांनिवेशान्नदोषइतिचेत्**सत्यं** ॥ तथापिसाध्याभाववद्वृत्तित्वकालीनपक्षकस्थलेधर्मितावच्छेदकप्रकारकज्ञानविधयानुमितिजनकज्ञानीयतादृशविषयत्वस्यतत्रसत्वाद्बाधस्यानिराकरणात् ॥ **नन्वनु**मितित्वावच्छिन्नजन्यतानिरूपितजनकतापर्यंतनिवेशान्नदोषइतिचेत्**तथासति** सिद्धसाधनापत्तेस्तथाह्यनुमितिंप्रतिपरामर्शानामनेकलिंगकानांहेतुत्वेपरस्परजन्यानुमितौव्यभिचारापत्त्यातत्तल्लिंगकपरामर्शविशिष्टानुमितिंप्रतितस्यतस्यहेतुतायावक्तव्यतयातत्रचानुमितित्वस्यजन्यतावच्छेदकेनिवेशस्यनिष्प्रयोजनकतयाऽनुमितित्वावच्छिन्नजन्यतानिरूपितज

त्वविषयताहेतुतावच्छेदकस्वरूपसंबधावच्छिन्नेतिसांप्रतंपक्षविषयतानिरूपितत्वावच्छेदकहेतुतावच्छेदकसंबंधावच्छिन्नविषयतात्ववद्विषयतानिरूपितत्वपर्यंतस्यविवक्षणीयतयापक्षस्यात्रप्रकारत्वेन हेतोश्चतद्देशे विशेष्यत्वेनहेतुविषयतायांतादृशसंबंधावच्छिन्नविषयतात्वेनपक्षविषयतानिरूपितत्वविरहात् ॥ **अथवा**चरमविषयतायांस्वरूपसंबंधावच्छिन्नत्वनिवेशेनसर्वोप्ययंदोषोवारणीयः ॥ **अथैवमपि**वह्न्यभाववद्वृत्तिहेतुकेऽनुमितिजनकज्ञानीयतादृशविषयतायाअपितत्रसत्वाद्बाधइतिचेन्न ॥ हेतुतावच्छेदकावच्छिन्नविषयतानिरूपितत्वस्यापिविषयतायांविशेषणदानात् ॥ **अथैवमपि**साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकस्यव्याप्तित्वमतेहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतायाअपितत्रसत्वाद्बाधइतिचेन्न ॥ तादृशविषयत्वपर्याप्त्यभावस्यविवक्षितत्वात् ॥ इत्थंचानुमितिनिष्ठज्ञानत्वानवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतधर्मितावच्छेदकतानात्मकपक्षविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसंबंधावच्छिन्नविषयतानिरूपितस्वरूपसंबंधावच्छिन्नविषयताश्रयभेदःसाध्यइतिनकश्चिद्दोषइतिसंक्षेपः ॥ निरुक्तपक्षेनिरुक्तसाध्यस्यसाध्यतायांतद्भिन्नेत्यादिनाप्रतिपादितसाध्या

साध्याभाववदवृत्तित्वस्य तत्पदार्थो विशेषणमतो न बाध इति भावः ॥ **नन्वेवमपि** तत्पदं व्यर्थमिति **शंक्यं** ॥ तथासति साध्याभाववदवृत्तित्वादीनां विशेषधर्मत्वालाभेन तदवच्छिन्नभेदकूटस्य हेतोरप्रयोजकतालाभान्न्यूनतापत्तेरिति **दिक्** ॥ **स्यादेत**द्भेदानुयोगिवाचकं पदांतरमुपलभ्येत तदेव न तथाच तत्पदस्यैव तथात्वं वक्तव्यं तथाच कथं न पूर्वोक्तदोषावकाश इत्यत **आह** ॥ **व्याप्तिरिति** ॥ तथाच तादृशव्याप्तिपदसत्वान्न दोष इति **भावः** ॥ **अनुषंगेनेति** ॥ अनुषंगो वाक्यांतरे स्वस्मात्पूर्वपठिते श्रुतस्य पदस्य स्वघटकत्वेनानुसंधानं ॥ अतादृशपदानुसंधानमध्याहार इति विवेकः ॥ **नन्वत्र** साध्याभाववदवृत्तित्वादिभेदकूटस्य हेतुत्वे,व्यभिचारविशिष्टवैशिष्ट्यावगाहिबोधजनकतायां तादृशाहेतुमत्यां निरुक्तसाध्यासत्वाद्व्यभिचार इत्यतः पर्यवसितहेतु**माह** ॥ **तथाचेति** ॥ अत्रापि हेतुपदप्रयोजनं पूर्ववदेव अन्यदपि पूर्ववद्बोध्यं ॥ **घटितेति** ॥ एतच्च पर्याप्त्यनिवेशसूचनाय तन्निवेशे साध्यहेत्वोरप्रसिद्ध्यापत्तेः ॥ **विशेषेत्यादि** ॥ **ननु** संयोगविशेषाभावकूटस्य तत्सामान्याभावसाधकत्वं न सर्वानुमतं प्राचीनमते तदभावान्नैवं ॥ व्याप्यवृत्तिप्रतियोगिकाभावकूटस्य तत्वे विवादाभावात् ॥ **ननु** कूटरूप

त्वविषयताहेतुतावच्छेदकस्वरूपसंबधावच्छिन्नेतिसांप्रतंपक्षविषयतानिरूपितत्वावच्छेदकहेतुतावच्छेदकसंबंधावच्छिन्नविषय
तात्ववद्विषयतानिरूपितत्वपर्यंतस्यविवक्षणीयतयापक्षस्यात्रप्रकारत्वेनहेतोश्चतदंशेविशेष्यत्वेनहेतुविषयतायांतादृशसंबंधावच्छि
न्नविषयतात्वेनपक्षविषयतानिरूपितत्वविरहात् ॥ **अथवा**चरमविषयतायांस्वरूपसंबंधावच्छिन्नत्वनिवेशेनसर्वोप्ययंदोषोवार
णीयः ॥ **अथैवमपि**वह्न्यभाववद्वृत्तिहेतुकेऽनुमितिजनकज्ञानीयतादृशविषयतायाअपितत्रसत्वाद्बाधइतिचेन्न ॥ हेतुताव
च्छेदकावच्छिन्नविषयतानिरूपितत्वस्यापिविषयतायांविशेषणदानात् ॥ **अथैवमपि**साध्यसमानाधिकरणवृत्तिहेतुतावच्छे
दकस्यव्याप्तित्वमतेहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतायाअपितत्रसत्वाद्बाधइतिचेन्न ॥ तादृशविषयत्वपर्या
प्त्यभावस्यविवक्षितत्वात् ॥ इत्थंचानुमितिनिष्ठज्ञानत्वानवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतधर्मितावच्छेदकताना
त्मकपक्षविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसंबंधावच्छिन्नविषयतानिरूपितस्वरूपसंबंधावच्छिन्नवि
षयताश्रयभेदःसाध्यइतिनकश्चिद्दोषइतिसंक्षेपः ॥ निरुक्तपक्षेनिरुक्तसाध्यस्यसाध्यतायांतद्भिन्नेत्यादिनाप्रतिपादितसाध्या

भाववदवृत्तित्वादिभेदपंचकस्य हेतोरसिद्धिरतः पर्यवसितमाह ॥ अनुमितिजनकत्वमिति ॥ अव्यभिचारपदार्थावच्छि
न्नहेतुविषयता॥ अव्यभिचारपदजन्यप्रतीतिविषयत्वेन संकेतविषयधर्मावच्छिन्नहेतुविषयतेत्यर्थः ॥ अत्र केचिज्ज्ञेयत्वंवा
च्यत्वाव्यभिचारीतिव्यवहारानुरोधेन साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्याप्यव्यभि
चारपदार्थत्वावश्यकत्वाद्धेतुपदानुपादानेऽव्यभिचारपदार्थावच्छिन्नसाध्यतावच्छेदकनिष्ठविषयताघटितधर्मावच्छिन्न
त्वाभावस्य सिद्धांतिमतेऽनुमितिजनकतायामभावाद्बाध इति तदुपात्तमित्याहुः ॥ अथैवमपि हेतुत्वस्य सामान्यतः केव
लान्वयित्वेन साध्यतावच्छेदकविषयताव्यावृत्तिर्दुर्घटा विशिष्य धूमत्वादिना हेतुविशेषेपि धूमसाध्यतावच्छेदककानुमिति
जनकतायां बोधो दुर्वार एव ॥ अनुमितिजनकतात्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे आलोकादिलिंगकानुमिति
जनकतायां धूमविषयताघटितसाध्यस्य मतद्वयेपि सत्वात्सिद्धसाधनं लिंगभेदेपि कारणतैक्यमते व्यापकसामानाधिकर
ण्यज्ञानस्य पृथक् हेतुतामादायार्थांतरं पक्षतानिष्ठजनकतायां निरुक्तसाध्यपर्यवसानमादायार्थांतरंचेति चेन्न ॥ हेतुविषय

हेतुरसिद्धइत्याशंक्याह ॥ **तत्रेति** ॥ केवलान्वयीत्यादिमूलेकेवलान्वयिपदंनवास्तवकेवलान्वयिपरमभावादित्यस्यसाध्याभा
ववदवृत्तित्वाभावपरतया तत्र तादृशाभावाद्यसंभवात् ॥ यदितत्वेनज्ञातपरंतदातादृशकेवलान्वयित्वाक्रांते धूमादौ तादृशाभावा
सत्वाज्ज्ञेयत्वादावसत्वाच्चव्याहतिर्नितरामितिकेवलान्वयिपदस्यकेवलान्वयित्वग्रहकालीनानुमितिजनकज्ञानपरत्वमभावपद
स्यचसाध्याभाववदवृत्तित्वविषयताभावपरत्वंचावलंब्यव्याचष्टे ॥ **साध्येति** ॥ इत्थंचकेवलान्वयिनिनिरूप्यनिरूपकभावाप
न्नतादृशविषयत्वग्रहसंभवान्नव्याहतिरितिभावः ॥ अत्रात्यंतान्योन्याभावघटितद्विविधव्याप्त्यभिप्रायेणात्यंतान्योन्याभावघटि
तद्विविधकेवलान्वयित्वग्रहोपन्यासः ॥ **अथा**त्यंताभावाप्रतियोगित्वान्योऽन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्व
यित्वग्रहौनात्यंतान्योन्याभावघटितव्याप्तिग्रहे प्रतिबंधकौभवितुमर्हतस्तत्संसर्गकविशिष्टबुद्धौतदभावप्रकारकज्ञानस्याप्र
तिबंधकत्वात् ॥ साध्यप्रतियोगित्वतदवच्छिन्नप्रतियोगित्वसंसर्गकव्याप्तिज्ञानस्यैवलाघवेनानुमितिहेतुतया तादृशप्रतियो
गितासंसर्गकव्याप्तिज्ञानेनिरुक्तकेवलान्वयित्वग्रहयोरप्रतिबंधकत्वादितिचेन्न ॥ साध्येत्यंताभावाप्रतियोगित्वज्ञानेऽभावेपि

त्वादेश्च साध्यनिष्ठाव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्व विरहात् ॥ **अथैवमपि**संयोगाभावसाध्यकद्रव्यत्वहेतौ तादृशे
द्वितीयलक्षणासत्वादसंगतिर्दुर्वारैवेति चेदत्र **केचित्** ॥ अव्याप्यवृत्तिसाध्यकेत्यस्यनव्याप्यवृत्तिरव्याप्यवृत्ति रितिव्युत्पत्त्या नि
रवच्छिन्नवृत्तिकान्यसाध्यकहेतावित्यर्थस्तथाच संयोगाभावस्य गुणादौ निरवच्छिन्नवृत्तिकत्वेन तदन्यत्व विरहान्न तत्साध्य
कहेतोरुद्देश्यतावच्छेदकाक्रांतत्वमिति वदंति **तदसत्** ॥ जन्यज्ञानविषयत्वस्य विषयतासंबंधेनजन्यज्ञानस्य वा साध्यता
यां हेतौ निरुक्ताव्याप्यवृत्ति साध्यके द्वितीयलक्षणासत्वेनासंगतेस्तथापि दुर्वारत्वात् ॥ **वस्तुतस्तु** ॥ अव्याप्यवृत्तिसाध्य
केत्यत्राव्याप्यवृत्तित्वंस्वसमानाधिकरणत्वस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्वप्रतियोगिकत्वैतत्त्रितय सं
बंधेन किंचिदभाव विशिष्टत्वरूपं विवक्षितं संयोगाभावस्य स्वसमानाधिकरणत्व स्वप्रतियोगिकत्वैतदुभय संबंधेन सं
योगरूपाभावविशिष्टत्वात्तत्साध्यकहेतोरव्याप्तेः स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वनिवेशः ॥ तच्चावच्छेद
कत्वं साध्यतावच्छेदकसंबंधावच्छिन्नं ग्राह्यं तेन संयोगाभावादेरपि संयोगसमानाधिकरणाभावप्रतियोगितानिरूपितका

हेतुरसिद्धइत्याशंक्याह ॥ **तत्रेति** ॥ केवलान्वयीत्यादिमूलेकेवलान्वयिपदंनवास्तवकेवलान्वयिपरमभावादित्यस्यसाध्याभा
ववदवृत्तित्वाभावपरतयातत्रतादृशाभावाद्यसंभवात् ॥ यदितत्वेनज्ञातपरंतदातादृशकेवलान्वयित्वाक्रांतेधूमादौतादृशाभावा
सत्वाज्ज्ञेयत्वादावसत्वाच्चव्याहतिर्नितरामितिकेवलान्वयिपदस्यकेवलान्वयित्वग्रहकालीनानुमितिजनकज्ञानपरत्वमभावपद
स्यचसाध्याभाववदवृत्तित्वविषयताभावपरत्वंचावलंब्य**व्याचष्टे** ॥ **साध्येति** ॥ इत्थंचकेवलान्वयिनिनिरूप्यनिरूपकभावाप
न्नतादृशविषयत्वग्रहसंभवान्नव्याहतिरितिभावः ॥ अत्रात्यंतान्योन्याभावघटितद्विविधव्याप्त्यभिप्रायेणात्यंतान्योन्याभावघटि
तद्विविधकेवलान्वयित्वग्रहोपन्यासः ॥ **अथा**त्यंताभावाप्रतियोगित्वान्योऽन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्व
यित्वग्रहौनात्यंतान्योन्याभावघटितव्याप्तिग्रहेप्रतिबंधकौभवितुमर्हतस्तत्संसर्गकविशिष्टबुद्धौतदभावप्रकारकज्ञानस्याप्र
तिबंधकत्वात् ॥ साध्यप्रतियोगित्वतदवच्छिन्नप्रतियोगित्वसंसर्गकव्याप्तिज्ञानस्यैवलाघवेनानुमितिहेतुतयातादृशप्रतियो
गितासंसर्गकव्याप्तिज्ञानेनिरुक्तकेवलान्वयित्वग्रहयोरप्रतिबंधकत्वादिति**चेन्न** ॥ साध्येत्यंताभावाप्रतियोगित्वज्ञानेऽभावेपि

प्रतियोगितया साध्याभावावगाहनस्य तुल्यवित्तिवेद्यतामतसिद्धत्वात्तदवगाहिज्ञानस्य व्याप्तिग्रहप्रतिबंधकत्वावश्यकत्वमित्यभि
प्रायात् ।। यद्वा प्रतियोगितासंसर्गावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकावच्छिन्नाभावप्रकारकाभाववत्तावच्छिन्नविशेष्यकग्रह
दशायां स्वावच्छिन्नप्रतियोगिताकत्वसंबंधावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभावप्रकारकाभाववत्तावच्छिन्नविशेष्यकग्रहदशा
यां वेत्यस्यैव विवक्षितत्वात्तयोश्च तादृशव्याप्तिग्रहप्रतिबंधकत्वात् ।। नन्वदर्शितग्रहयोरभावत्वसामानाधिकरण्येन तादृशाभावप्रका
रकत्वे तादृशग्रहयोर्न व्याप्तिग्रहविरोधित्वं सामानाधिकरण्येन ग्राह्यबुद्धौ सामानाधिकरण्येन तदभावग्रहस्याविरोधित्वात् ।। अभा
वत्वावच्छेदेन तादृशाभावप्रकारकत्वे चाहार्यत्वापत्तिरभावांशे साध्यस्यैव भानादिति वाच्यं ।। साध्यतावच्छेदकसंबंधावच्छिन्नसाध्य
तावच्छेदकावच्छिन्नप्रतियोगितया एव प्रतियोगितावच्छेदकसंबंधतया तेन संबंधेनाभावांशे साध्यस्याभानेनाहार्यत्वानवकाशा
त् ।। ननु केवलान्वयिन्यभावादित्यनेन केवलान्वयित्वग्रहकालीनानुमितिजनकज्ञानवृत्तित्वमभावे लब्धं तत्र विशिष्टस्योपलक्षि
तस्य वा हेतुत्वं विशिष्टस्य हेतुत्वे स्वरूपासिद्धिर्ज्ञानवृत्तित्वविशिष्टस्यानुमितिजनकतायामभावादुपलक्षितस्य हेतुत्वे साध्याभाव

कालिकसंबंधावच्छिन्नावच्छेदकत्वेपिनक्षतिः॥ स्वप्रतियोगिकत्वानिवेशेआकाशाभावविशिष्टद्रव्यत्वसाध्यकपृथिवीत्वहेतोः संग्रहः स्यादतस्तन्निवेशः॥ स्वसमानाधिकरणत्वानिवेशे द्रव्यत्वाभावमादायतद्विशिष्टद्रव्यत्वसाध्यकपृथिवीत्वहेतोः संग्रहः स्यात्तत्रचाव्याप्तिविरहादतस्तंन्निवेशः॥ उक्ताव्याप्यवृत्तित्वविशिष्टाधिकरणवृत्तित्वमेवाव्याप्यवृत्तिसाध्यकत्वमतो रूपवान्जलपरमाणुत्वादित्यादौयथाश्रुतेऽव्याप्यवृत्तिसाध्यकत्वरूपोद्देश्यतावच्छेदकाक्रांतेअव्याप्तेरसत्वेपिनक्षतिस्तल्लाभश्चाव्याप्यवृत्तिसाध्यंयस्मिन्तदव्याप्यवृत्तिसाध्यकंतस्मिन्सत्वित्यादिविग्रहाज्ज्ञेयः॥ उक्ताव्याप्यवृत्तित्वशरीरघटकसामानाधिकरण्यसंबंधेनस्वविशिष्टस्यस्वाधिकरणएवसत्वेनतत्रजलपरमाणुत्वादेरसत्वान्नक्षतिः॥ अथवादिवाक्यार्थविकल्पस्थलेयथाकाममेवविकल्पितार्थोपन्यासः संभवतिनच तत्पौर्वापर्योपन्यासेनियोगपर्यनुयोगोस्तितथाचदीधितिकृतां पूर्वपूर्वलक्षणपरित्यागबीजकथनंकिमितिचेदत्रवदंति॥ दीधितिकृतांपौर्वापर्येलक्षणानांबीजकथनेनतात्पर्यंयेनभवदीयशंकावकाशः स्यात्किंतुप्रथमादिलक्षणेऽव्याप्यवृत्तिसाध्यकादिस्थलेष्वव्याप्त्यादिदोषानभिधानेनमणिकारीयन्यूनतायाअवतरणव्याजेनपरिहारएवेति॥

तेनचप्रथमलक्षणएवाव्याप्यवृत्तिसाध्यकाव्याप्तिर्नद्वितीयादिलक्षणेपीत्यपिसूचितंभवति ॥ केचित्तुलक्षणपंचकस्यैककर्तृकत्वाभा
वेनलक्षणपंचकस्यावतरणासंगतिमाशंक्यमणिकृताव्युत्क्रमेणलक्षणोपन्यासः किमर्थंनकृतइतिशंकायामधुरेणसमापयेदितिन्याये
नपरिजिहीर्षयालक्षणचतुष्टयेदोषंप्रदर्श्यसाध्यवदन्यावृत्तित्वलक्षणस्यमधुरत्वमेवदर्शितंनलक्षणपंचकंपूर्वपूर्वदूषणेनावतारित
मितिसमाधानमाहुःस्तदसत् ॥ एवंसतितृतीयलक्षणस्यप्रथमतउपन्यासेबीजाभावस्तदवस्थएव ॥ अव्याप्तिमिति ॥ अ
थव्याप्यवृत्तिसाध्यकद्रव्यंपृथिवीत्वादित्यादावपिविशिष्टाभावमादायाव्याप्तिसंभवेनासंभवएववक्तुमुचितोनाव्याप्तिः ॥ नचघटवन्नि
त्यज्ञानत्वादित्यादौलक्षणसमन्वयान्नासंभवइतिवाच्यं ॥ तत्रापिनित्यज्ञानान्यत्वविशिष्टाभावमादायाव्याप्तेः ॥ यदिचनित्यज्ञा
नान्यत्वविशिष्टघटोपिनित्यज्ञानेस्वीक्रियतेतथापिव्याप्यवृत्तिसाध्यकेपिक्वचिदव्याप्तिसंभवेनतदुपेक्षानिर्बीजा ॥ नचसाध्याभा
वपदस्यसाध्यतावच्छेदकावच्छिन्नाभावपरतयानविशिष्टाभावमादायदोषइतिवाच्यंतथासतिसाध्याभाववत्पदस्यसाध्याभा
वीयनिरवच्छिन्नाधिकरणपरतांस्वीकृत्याव्याप्तेरपिशक्यवारणत्वात् ॥ नचयथाश्रुताभिप्रायकताशक्यतेवक्तुमसंभवस्यैवप्रसं १३७

गात् ॥ अत्रेदं समाधानं प्रतियोगितासंसर्गकव्याप्तिज्ञानस्यैवानुमितिहेतुतया भावांशे साध्यस्य प्रतियोगितासंसर्ग एव निवेशनीय
स्तत्र च स्वलक्षणोक्तरीत्या साध्यविशेषणीभूतसाध्यतावच्छेदकावच्छिन्नप्रतियोगितात्वेनैव प्रतियोगिताभासत इति किंचिद्धर्मविशि
ष्टसाध्यस्याभावमादाय न दोषः ॥ एतेनाथात्र नाव्याप्तिसंभवो गुरुधर्मावच्छिन्नसाध्यकाव्याप्तिवारणाय साध्याभावपदेन साध्यव्या
पकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकस्यैवाभावस्य विवक्षणीयतया तत्र व्यापकतायां प्रतियोगिवैयधिकरण्यानिवेशेन
संयोगाभावस्य लक्षणाघटकत्वात्तादृशद्रव्यत्वाभावमादाय लक्षणसंगमनादित्याशंक्य तादृशस्थलस्य हेतुतावच्छेदकसंबंधानु
योगिनिष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदककत्वरूपकेवलान्वयिसाध्यकत्वेन तत्राव्याप्तेरिष्टत्वात्साध्याभावपदेन
तादृशाभावविवक्षाया निष्प्रयोजनकत्वात्तथा विवक्षणेपि मिश्रलक्षणोक्तदिशा व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवे
शावश्यकतया संयोगाभावस्य लक्षणघटकत्वादव्याप्तिरस्त्येवेति समाधानं हेयं यथाश्रुतलक्षणवाक्यलभ्य एवार्थे दूषणदाना
त् ॥ आशंक्येति ॥ साध्यवत्ताग्रहविरोधितानियामकसंबंधेनैव साध्याभाववत्ताया निवेशनीयतया निरवच्छिन्नदैशिकवि

शेषणतायास्तथात्वेऽव्याप्तिविरहादव्याप्तेराहेत्यनुक्ताऽव्याप्तिमाशंक्येत्युक्तिरितिकेचित् ॥ गादाधर्यां कपिसंयो
गीति ॥ संयोगसामान्याभावस्य द्रव्ये सविवादतया कपिपदं ॥ ननु दीधित्युक्ततत्पुरुषपक्षोऽसंगतः कर्मधारयपक्षे लाघवा
दधिकरणभेदेनाभावभेदानभ्युपगमाच्चेत्याशंकायामाह साध्यवद्भिन्नो यः साध्याभाववानित्यादि ॥ अभेदेति ॥ ए
तच्च गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमंगीकृत्य तेन साध्यवद्भिन्नवृत्तित्वत्वापेक्षयाऽभेदेन साध्यवद्भिन्नविशिष्टसाध्याभा
ववद्वृत्तित्वत्वस्य गुरुत्वेनानवच्छेदकतया न तदवच्छिन्नाभावरूपलक्षणवाक्यार्थाप्रसिद्धिः ॥ साध्याभावांशवैयर्थ्यमि
ति ॥ तद्वैयर्थ्ये च तद्घटितधर्मस्य व्याप्यतावच्छेदकत्वासंभवादितरभेदानुमानासंभवेनानुमितिलक्षणघटकत्वासंभवात्त
दुपोद्घातसंगत्या तन्निरूपणासंभवादिति भावः ॥ अथात्र व्याप्यतानवच्छेदकत्वप्रयोजकव्यर्थविशेषणघटितत्वं न संभवति
स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मांतरघटितस्यैव तस्य नीलधूमत्वादौ दृष्टत्वात् प्रकृते च साध्यवद्भिन्नाधिकरणवृत्तित्व
त्वपर्याप्तावच्छेदकताका भावादन्य एव साध्याभावघटितरूपपर्याप्तावच्छेदकताकोऽभाव इति तच्छरीरे साध्याभावाघटितरू

पावच्छिन्नाभावस्यानिवेशादेतल्लक्षणे गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वावश्यकत्वाच्च ॥ नन्वेवं स्वसमानाधिकरणेत्यादि
नियमस्य निर्बीजत्वं शंक्यं प्राचीनमते साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकस्यैव व्याप्तित्वाद्गुरोस्तादृशसामानाधिकरण्या
वच्छेदकत्वाभावात् ॥ नवीनमते च हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वघटितव्याप्तेर्गुरुधर्मघटिततादृशावच्छेदक
त्वावच्छिन्नाभावाप्रसिद्धेरेव बीजत्वादिति चेन्न ॥ साध्याभावांशस्याव्याप्तिवारकत्वरूपसार्थकत्वाभाव एव वैयर्थ्यपदेन विवक्षि
तः ॥ यद्यव्याप्त्याद्यवारकस्यापि लक्षणघटकताभ्युपेयते तदाऽभावाधिकरणविशेषणतया प्रमेयत्वादिनिवेशेऽपि वैयर्थ्याभा
वः प्रसज्येत ॥ यदपि साध्यसामानाधिकरण्यावच्छेदकरूपस्य व्याप्तित्वासंभवरूपं स्वसमानाधिकरणेत्यादिनियमे बीजमु
पन्यस्तं तदपि न संभवति तत्र स्वरूपसंबंधरूपावच्छेदकत्वनिवेशस्य दूष्यत्वात् ॥ गुरुत्वमेव तादृशावच्छेदकत्वाभावे बीजं न
तु स्वसमानाधिकरणेत्यादिव्यर्थविशेषणघटितत्वमित्यस्यैव वक्तुमुचितत्वाच्च ॥ अन्यथा कंबुग्रीवादिमत्वस्यापि व्याप्यतावच्छे
दकत्वापत्तेर्दुर्वारतातदभावप्रयोजकस्य स्वसमानाधिकरणेत्यादिव्यर्थविशेषणघटितत्वस्य तत्राभावात् ॥ स्वसमानाधिकरण

भावमात्राधिकरणकाभावस्याधिकरणस्वरूपत्वपक्षेसर्वस्यैवाभावस्यसामानाधिकरण्यसंबंधेनसाध्यवत्वात्तदन्याभावाप्रसिद्धेःस्वप्रतियो
गिकत्वनिवेशस्तन्निवेशेप्यप्रसिद्धिरितितुनशंक्यं॥तन्निवेशस्यसाध्यसामानाधिकरण्यावच्छेदकस्वप्रतियोगिकत्वस्यसंसर्गतयानिवेश
फलकत्वात्॥अभावभेदाभावस्याभावस्वरूपत्वेप्यभावभेदप्रतियोगिकत्वावच्छेदेनतत्सामानाधिकरण्यानभ्युपगमात्तस्यनिरुक्तसंबं
धेनसाध्यवद्भिन्नत्वाक्षतेः॥एतेनसाध्यसामानाधिकरण्यघटकवृत्तित्वंयदियेनकेनचित्संबंधेननिवेश्यतेतदावन्हिमान्धूमादित्यादौव
ह्न्यभावादेरपिकालिकसंबंधेनसाध्यवद्वृत्तितयासाध्यवदन्याभावाप्रसिद्धिरतःस्वरूपसंबंधेनैवतन्निवेश्यंतथाचपर्वतत्वात्मकाभावमा
दायसाध्यपदसार्थक्यसंभवेस्वप्रतियोगिकत्वंव्यर्थं॥नन्वस्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधेनैवसाध्यवद्वृत्तित्वंवक्तव्य
मितिवाच्यंकालिकसंबंधावच्छिन्नप्रतियोगिताकाकाशाभावाभाववानात्मत्वादित्यादौतादृशेनकालिकेनसाध्यवद्वृत्तित्वाप्रसिद्धेरि
तिनिरस्तं॥अखंडाभावघटकतयासार्थक्यसंभवाच्च॥साध्यसामानाधिकरण्यंचसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यंतेन
विशिष्टसत्तावान्जात्यधिकरणत्वादित्यादौसत्ताभावस्यैवसाध्यवदन्यतेपिनक्षतिः॥संयोगीद्रव्यत्वादित्यादौद्रव्यवृत्तित्वविशिष्टाभा

पावच्छिन्नाभावस्यानिवेशादेतल्लक्षणेगुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वावश्यकत्वाच्च ॥ नचस्वसमानाधिकरणेत्यादि
नियमस्यनिर्बीजत्वंशंक्यंप्राचीनमतेसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकस्यैवव्याप्तित्वाद्गुरोस्तादृशसामानाधिकरण्या
वच्छेदकत्वाभावात् ॥ नवीनमतेचहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वघटितव्याप्तेर्गुरुधर्मघटिततादृशावच्छेदक
त्वत्वावच्छिन्नाभावाप्रसिद्धेरेवबीजत्वादितिचेन्न ॥ साध्याभावांशस्याव्याप्तिवारकत्वरूपसार्थकत्वाभावएववैयर्थ्यपदेनविवक्षि
तः ॥ यद्यव्याप्त्याद्यवारकस्यापिलक्षणघटकताभ्युपेयतेतदाऽभावाधिकरणविशेषणतयाप्रमेयत्वादिनिवेशेपिवैयर्थ्याभा
वःप्रसज्येत ॥ यदपिसाध्यसामानाधिकरण्यावच्छेदकरूपस्यव्याप्तित्वासंभवरूपंस्वसमानाधिकरणेत्यादिनियमेबीजमु
पन्यस्तंतदपिनसंभवतितत्रस्वरूपसंबंधरूपावच्छेदकत्वनिवेशस्यदूष्यत्वात् ॥ गुरुत्वमेवतादृशावच्छेदकत्वाभावेबीजंन
तुस्वसमानाधिकरणेत्यादिव्यर्थविशेषणघटितत्वमित्यस्यैववक्तुमुचितत्वाच्च ॥ अन्यथाकंबुग्रीवादिमत्वस्यापिव्याप्यतावच्छे
दकत्वापत्तेर्दुर्वारतातदभावप्रयोजकस्वसमानाधिकरणेत्यादिव्यर्थविशेषणघटितत्वस्यतत्राभावात् ॥ स्वसमानाधिकरण

भावमात्राधिकरणकाभावस्याधिकरणस्वरूपत्वपक्षेसर्वस्यैवाभावस्यसामानाधिकरण्यसंबंधेनसाध्यवत्वात्तदन्याभावाप्रसिद्धेः स्वप्रतियो
गिकत्वनिवेशस्तन्निवेशेप्यप्रसिद्धिरितितुनशंक्यं ॥ तन्निवेशस्यसाध्यसामानाधिकरण्यावच्छेदकस्वप्रतियोगिकत्वस्यसंसर्गतयानिवेश
फलकत्वात् ॥ अभावभेदाभावस्याभावस्वरूपत्वेप्यभावभेदप्रतियोगिकत्वावच्छेदेनतत्सामानाधिकरण्यानभ्युपगमात्तस्यनिरुक्तसंबं
धेनसाध्यवद्भिन्नत्वाक्षतेः ॥ एतेनसाध्यसामानाधिकरण्यघटकवृत्तित्वंयदियेनकेनचित्संबंधेननिवेश्यतेतदावन्हिमान्धूमादित्यादौव
ह्न्यभावादेरपिकालिकसंबंधेनसाध्यवद्वृत्तितयासाध्यवदन्याभावाप्रसिद्धिरतःस्वरूपसंबंधेनैवतन्निवेश्यंतथाचपर्वतत्वात्मकाभावमा
दायसाध्यपदसार्थक्यसंभवेस्वप्रतियोगिकत्वंव्यर्थं ॥ नचस्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधेनैवसाध्यवद्वृत्तित्वंवक्तव्य
मितिवाच्यं कालिकसंबंधावच्छिन्नप्रतियोगिताकाकाशाभावाभाववानात्मत्वादित्यादौतादृशेनकालिकेनसाध्यवद्वृत्तित्वाप्रसिद्धेरि
तिनिरस्तं ॥ अखंडाभावघटकतयासार्थक्यसंभवाच्च ॥ साध्यसामानाधिकरण्यंचसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यंतेन
विशिष्टसत्तावाञ्जात्यधिकरणत्वादित्यादौसत्ताभावस्यैवसाध्यवदन्यत्वेपिनक्षतिः ॥ संयोगीद्रव्यत्वादित्यादौद्रव्यवृत्तित्वविशिष्टाभा १४०

यभादायैवलक्षणंसंगमनीयं ॥ **यत्तु** स्वप्रतियोगिकत्वस्वसमानाधिकरण्योभयसंबंधेनसाध्यवदन्याभावनिवेशेमहानसीयवह्न्यभावस्ययाह्
शसाध्यप्रतियोगिकत्वंनतत्सामानाधिकरण्यंयादृशसाध्यसामानाधिकरण्यंनतत्प्रतियोगिकत्वमित्युक्तोभयसंबंधेनसाध्यवद्भिन्नत्वेनलक्षण
घटकतापत्तिः ॥ **नच** स्वाश्रयप्रतियोगिकत्वस्वावच्छिन्नसामानाधिकरण्योभयसंबंधेनसाध्यतावच्छेदकवदन्यत्वस्यैवनिवेशानी
यतयानतस्यलक्षणघटकतेतिवाच्यं ॥ तथासतिसाध्यवदन्याभावस्यलक्षणाघटकतयामूलास्वारस्यंस्यादितितन्न ॥ साध्यसामाना
धिकरण्यावच्छेदकस्वप्रतियोगिकत्वस्यसंसर्गतयानिवेशेउक्तदोषाभावादित्याहुस्तदसत् ॥ संयोगेनद्रव्यस्याव्याप्यवृत्तितापक्षेनि
रुक्तसंबंधेनसाध्यवदन्याभावाप्रसिद्ध्यापत्तेः ॥ **विरुद्धधर्माध्यासेनेति** ॥ अध्यासोवर्तमानता ॥ **अयंभावः** कपिसंयोगा
भाववत्वंस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकाव्यासज्यवृत्तिधर्मसमानाधिकरणंव्याप्यवृत्तित्वाव्याप्यवृत्तित्वसमानाधि
करणत्वाद्यन्नैवंतन्नैवमित्येवंव्यतिरेक्यनुमानेनभेदसिद्धिरिति ॥ **यद्वा** योव्याप्यवृत्तिताऽव्याप्यवृत्तितावच्छेदकयद्धर्मवान्स
स्ववृत्तिभेदप्रतियोगितावच्छेदकधर्मसमानाधिकरणतद्धर्मवान्यथारूपादिरित्येवमनुमानंद्रष्टव्यं ॥ **यद्यपि** व्याप्यवृत्तिताऽव्याप्य

वृत्तितावच्छेदकसत्तात्ववत्वंसत्तायामस्तितत्रसाध्यस्याभावाद्व्यभिचारस्तथापियद्धर्मेभावावृत्तित्वस्यविवक्षितत्वान्नदोषः॥ **भेदका**
**भावेनेति** ॥उक्तहेतोराकाशाभावत्ववृत्तित्वाभावेनेत्यर्थस्तथाचहेतोःपक्षधर्मताविरहान्नभेदसिद्धिरितिभावः॥ **ननूक्तहेतोःप**
क्षवृत्तित्वाभावेपिगगनाभावत्वंव्यक्तिद्वयवृत्तिघटवृत्तिवृत्तित्वेसतिघटान्यवृत्तिवृत्तिःभावावृत्तिधर्मत्वात्पटत्वाभावघटात्वाभावान्य
तरत्ववदित्यनुमानेनाकाशाभावस्याप्यधिकरणभेदेनभेदसिद्धिरित्या**शंक्याह** ॥ **अत एवेति** ॥अभावेसाध्यीयत्वंनयेनकेन
चित्संबंधेनातिप्रसंगात्किंत्वनुयोगिताख्यविलक्षणसंबंधेनतथाचाभावत्वनिवेशोव्यर्थइत्यगत्याऽभावपदमेवतादृशानुयोगि
ताख्यसंबंधलाभायेतिवक्तव्यंतथाचविलक्षणानुयोगितासंबंधेनसाध्यीयत्वनिवेशव्यावृत्तिरभावमात्रस्याधिकरणभेदेनभेदप
क्षेपिस्कघटैवेत्याशयेनाह ॥ **अथवेति** ॥ **साध्यीयपरं** ॥लक्षणयासाध्यविशिष्टबोधकं॥ **यद्यप्यनु**योगिताविशेषरूपाभ
वत्वस्यभावाभावसाधारणत्वमवश्यंवक्तव्यमन्यथाघटाभावाभावोघटइतिघटेऽभावत्वव्यवहारोनस्यादित्थंचाभावपदस्यानु
योगिताविशेषविशिष्टेशक्तत्वाद्यथाश्रुतार्थकत्वेपिसाध्यपदसार्थक्यसंभवाल्लाक्षणिकत्वमनुचितं॥ **तथापिसाध्याभावेत्यत्र**

तत्पुरुषत्वात्पूर्वपदेलक्षणायाआवश्यकत्वात्साध्यपदस्यविलक्षणानुयोगितासंबंधेनसाध्यविशिष्टेलक्षणायाआवश्यकत्वेतेनैवनिर्वाहेऽभावपदार्थविवक्षायाअनुयोगइतिभावः॥ **अभावीयविलक्षणानुयोगितेति** ॥ केवलानुयोगितासंबंधेनसाध्यीयपरत्वेवन्हिमान्धूमादित्यादौतादृशसमवायवद्वृत्तित्वस्यधूमेसत्वादव्याप्तिःस्यादतोविलक्षणेति॥ साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपितेतितदर्थः॥ **अथा**भावपदात्कथंतादृशविलक्षणानुयोगितालाभइतिचेदभावपदसमभिव्याहृतपदांतरस्यविलक्षणानुयोगितयास्वार्थविशिष्टबोधकत्वस्यव्युत्पत्तिसिद्धत्वादन्यथासंयोगोघटाभावइतिव्यवहारापत्तेः॥ **नच**भाववाचकपदसमभिव्याहृताभावपदस्यभावभिन्नार्थकत्वान्नायमतिप्रसंगइति**वाच्यं**॥ तथापिविषयिताघटत्वाभावाभावइतिव्यवहारापत्तेर्दुर्वारत्वात्॥ **ह्रदादिवृत्तिप्रमेयत्वादिमतीति**॥ **अथा**स्मिन्लक्षणेसाध्यवत्ताग्रहविरोधितानियामकसंबंधेनैवसाध्यवद्भिन्नवृत्तिसाध्याभाववत्तायाअग्रेनिवेशनीयतयावन्हिसाध्यकेतादृशोनदैशिकविशेषणतासंबंधेनप्रमेयत्ववत्तोऽप्रसिद्धत्वेननतदादायासंभवइतिचेन्न॥ दैशिकविशेषणतायास्वरूपत्वेनैवसंसर्गत्वा

त्स्वरूपसंबंधेनतादृशेनप्रमेयत्ववत्वमादायासंभवसंगतेः ॥ नचतथापिनासंभवः संभवति विषयितासंबंधावच्छिन्नप्रतियोगिताके
घटाभावादौसाध्येपटत्वादौतादृशेनविषयितासंबंधेनसाध्यवद्भिन्नवृत्तिनः कस्यापिहेत्वधिकरणेऽसत्वाल्लक्षणसमन्वयसंभवादिति
वाच्यं ॥ विषयितासंबंधावच्छिन्नप्रतियोगिताकाभावस्यविषयितायावृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेनाप्रसि
द्ध्यातत्साध्यकानुमानासंभवादित्यभिप्रायात् ॥ नचतथापिकालिकसंबंधावच्छिन्नप्रतियोगिताकघटाभावेसाध्येआत्मत्वादौ
लक्षणसमन्वयस्तादृशेनकालिकेनसाध्यवद्भिन्नवृत्तेः कस्यापिहेत्वधिकरणेऽभावादितिकथमसंभवइतिवाच्यं ॥ विषयित्व
कालिकादिसंबंधावच्छिन्नप्रतियोगिताकाभावस्यतत्संबंधावच्छिन्नाधिकरणत्वाभावरूपत्वात्स्वरूपसंबंधस्यैवसाध्यवत्ताग्रह
विरोधिज्ञानविषयतयाप्रमेयत्वादिकमादायासंभवसंगमात् ॥ वस्तुतस्तत्वभाववत्ताग्रहेऽभावाभाववत्ताज्ञानस्यस्वरूपसं
बंधेनैवविरोधित्वमितिकूटघटितेग्रंथकृदुक्तमताभिप्रायेणेदमितितत्वं ॥ अन्यथेति ॥ अथप्रतियोगितयाऽनुयोगित
यवासाध्यविशिष्टस्यैवाभावस्यलक्षणेनिवेशनीयतयाकेवलप्रतियोगितायास्तन्निरूपितानुयोगितायावासंसर्गत्वेचान्हि

मतिमहानसीयवह्न्यभावविषयिण्यावन्हिर्नास्तीतिप्रतीत्यापत्तेर्वन्हित्वावच्छिन्नप्रतियोगितायास्तन्निरूपितानुयोगितायावासंसर्गं
तयाभानमावश्यकमितिप्रयोजनांतरान्वेषणंकुतइतिचेदत्र **केचित्** ॥ साध्यत्वस्यप्रतियोगितावच्छेदकत्वसंभवात्साध्यताव
च्छेदकनिवेशनमनुचितमित्यभिप्रेत्यतन्निवेशस्यप्रयोजनांतरान्वेषणमित्याहुस्तदसत्साध्यत्वस्यप्रकृतानुमितिविधेयत्वरूपस्यानु
पस्थितिदशायामप्यनुमितेरानुभाविकतयासाध्यत्वनिवेशासंभवान्महानसीयवह्न्यभावमादायलक्षणासत्वप्रसंगाच्च ॥
**नच** साध्यतावच्छेदकत्वनिवेशोपिपूर्वदोषतादवस्थ्यं **शंक्यं** ॥ तत्परिचितवन्हित्वादीनांविशिष्येवनिवेशात् ॥ **अपिच** विशि
ष्टसत्तावान्जात्यधिकरणत्वादित्यादौसाध्यत्वावच्छिन्नाभावस्यजात्यादावेववर्तमानतयाऽतिव्याप्तेः ॥ **नच** प्रमात्मकानुमि
तिविधेयत्वमेवसाध्यत्वमिति **वाच्यं** ॥ एवंसतिसाध्यतावच्छेदकावच्छिन्नत्वनिवेशापेक्षयागौरवापत्तेः ॥ **वस्तुतस्तु** प्रति
योगितायाःप्रकारतयानिवेशोपिसाध्यतावच्छेदकावच्छिन्नत्वंनिवेश्यमित्यभिप्रेत्याव्याप्तिवारकतयापितस्यसार्थक्यप्रका
शनमभिप्रेत्यवाप्रयोजनांतराभिधानमितिध्येयं ॥ अधिकरणभेदेनाभावभेदेत्वाह ॥ **पृथिवीत्वाभावद्द्रव्य**

त्वाभावान्यतरेति ॥ एवमुत्तरत्रापिस्थलांतरानुसरणंबीजंबोध्यं ॥ अव्याप्त्यापत्तेरिति ॥ अथात्राभावाभेदप
क्षेऽसंभवएववक्तव्यःकुत्रापिलक्षणगमनाभावात् ॥ नचैतद्रूपवानेतत्वादित्यादौतद्गमनंशक्यं ॥ तत्रापिविशिष्टाभावो
न्याभावमादायाव्याप्तेःसत्वात् ॥ नचविषयितयाघटसाध्यकेनित्यज्ञानत्वहेतौलक्षणसमन्वयःसंभवतीतिवाच्य ॥ तत्रापि
नित्यज्ञानान्यत्वविशिष्टाभावमादायाव्याप्तेः ॥ नचनित्यज्ञानान्यत्वविशिष्टघटोपिनित्यज्ञानेवर्ततेघटांशेनित्यज्ञानान्यत्ववैशि
ष्ट्यप्रकारकत्वस्यैवतत्रप्रयोजकत्वादितिवाच्यं ॥ तथापिपटपदजन्यबोधविषयताविशिष्टघटाभावस्यहेत्वधिकरणेऽबाधान्न
हितादृशोपिघटस्तत्रवर्ततइतिशक्यंवदितुंतथासतिघटस्यपटपदवाच्यताप्रसंगात् ॥ नचेच्छायास्तादृशघटवत्वएवेयमाप
त्तिर्नज्ञानस्येतिवाच्यं ॥ ज्ञानेच्छयोःसमानविषयकत्वनियमाज्ज्ञानस्यतद्वत्वेइच्छायास्तद्वत्वनियमात् ॥ ज्ञानत्वेनकृतित्वेन
वाज्ञानकृत्योःशक्तित्वस्येच्छावद्विनिगमनाविरहेणवक्तव्यत्वाच्चेतिचेन्न ॥ संकेतस्यलोकेपदार्थोपस्थितिप्रयोजकतयादृष्टत्वे
नतत्सजातीयेच्छैवशक्तिपदार्थोनतुज्ञानमितिज्ञानस्यतादृशघटवत्वेपिबाधकाभावादित्यभिप्रायात् ॥ वैशिष्ट्यव्यासज्यवृत्तिधर्मो

नवच्छिन्नत्वेनप्रतियोगिताविशेषणत्वे एकव्यक्तिसाध्यकेलक्षणसमन्वयान्नासंभवइति **केचित्** ॥ **अथ** साध्यतावच्छेदकावच्छि
न्नाभावनिवेशेपिमहानसीयवह्न्यभाववारणमशक्यंतस्यसाध्यतावच्छेदकवन्हित्वावच्छिन्नप्रतियोगिताकत्वात् ॥ **नच** साध्यता
वच्छेदकपर्याप्तावच्छेदकताकत्वनिवेशात्ताद्दशाभाववारणसंभवइति **वाच्यं** ॥ तथापिमहानसीयत्वविशिष्टवन्हित्वव
तोभावमादायदोषावारणात् ॥ **नच** ताद्दशाभावोगुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्धइति **वाच्यं** ॥ एतल्लक्षणेगुरु
धर्मस्यप्रतियोगितावच्छेदकत्वावश्यकत्वादन्यथासाध्यवद्भिन्नवृत्तिसाध्याभाववद्वृत्तित्वत्वस्यसाध्यवद्भिन्नवृत्तित्वत्वापेक्षया
गुरुतयातदवच्छिन्नाभावरूपलक्षणवाक्यार्थाप्रसिध्यापत्तेरिति **चेदत्रवदंति** ॥ उपलक्षितधर्मावच्छिन्नाभावविशिष्ट
धर्मावच्छिन्नाभावयोर्वैलक्षण्यायविशिष्टधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकताविशिष्टप्रतियोगिकसंबंधावच्छि
न्नाविशेषणविशेष्योभयपर्याप्तावाउपलक्षितधर्मावच्छिन्नप्रतियोगितावच्छेदकताकेवलसंबंधावच्छिन्नाविशेष्यमात्रप
र्याप्तावेत्यवश्यमुपगंतव्यं तथाचप्रकृतेमहानसीयत्वोपलक्षितधर्मावच्छिन्नाभावस्यहेतुमत्यसत्वेनताद्दिशिष्टावच्छिन्नाभा

वस्यहेतुमतिसत्वेपितस्यविवक्षणीयसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नसाध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वविर
हेणानुपपत्यभावादिति **दिक्** ॥ **कालिकसंबंधेनद्रव्यत्वाभावेति** ॥ अत्रद्रव्यत्वपदंतदधिकरणत्वपरंतेनकालिकसंबं
धेनद्रव्यत्वाभाववत्ताबुद्धौस्वरूपसंबंधेनैवतदभाववत्ताज्ञानस्यविरोधितयातेनसंबंधेनद्रव्यत्ववत्तोऽप्रसिद्धत्वेपिनक्षतिः
॥ **अथवा** भावाभावसाधारणदैशिकविशेषणताभिप्रायकमिदं ॥ **नन्वेवं** साध्यवत्ताग्रहविरोधितानियामकसंबंधेनसा
ध्याभाववत्वनिवेशोव्यर्थइति **वाच्यं** ॥ मतद्वयसाधारण्यानुरोधेनतन्निवेशात् ॥ **साध्यतावच्छेदकसंबंधेनसाध्य**
**वत्ताज्ञानंप्रतीत्यादि** ॥ साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रकारताशाल्यनाहार्यज्ञानसा
मान्यंप्रतियादृशसंबंधेनसाध्यतावच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्न
वत्तावगाह्यनाहार्याप्रामाण्यज्ञानानास्कंदितनिश्चयसामान्यंप्रतिबंधकंतादृशसंबधेनेत्यर्थस्तेनपर्वतःसंयोगेनवन्हिमा
न्कालिकसंबंधावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रतियोगिताकाभाववांश्चेतिसमूहालंबनात्मकसाध्यवत्ताज्ञानविशेषंप्रति

कालिकसंबंधेनवह्न्यभाववत्ताज्ञानस्यकालिकसंबंधेनप्रतिबंधकत्वेपिवन्हिमान्धूमादित्यादौनाव्याप्तिः ॥ एवंचसाध्यतावच्छेदकसंबं
धनिवेशस्यापिसार्थक्यमन्यथास्वरूपसंबंधेनसंयोगसंबंधावच्छिन्नवह्न्यभाववत्ताज्ञानस्यसाध्यवत्ताज्ञानसामान्यांतर्गतंयत्सम
वायेनसाध्यवत्ताज्ञानंतंप्रत्यप्रतिबंधकतयादैशिकविशेषणतायाअपिसंग्रहानुपपत्तेः ॥ नचैवमपिनानाधर्मितावच्छेदकक
साध्यवत्ताज्ञानसाधारणैकप्रतिबध्यतायाअभावेनदैशिकविशेषणतायाअसंग्रहस्तदवस्थएवेति **वाच्यं** ॥ सर्वंवह्न्यभाव
वदितिनिश्चयीयप्रतिबध्यतायाएवतथाविधायाःप्रसिद्धेः ॥ प्रकृतलक्षणेसर्वत्वावच्छिन्नविशेष्यकत्वेनैवनिश्चयस्यविशेष
णीयत्वात् ॥ **यद्वा**स्वसमानधर्मितावच्छेदककत्वेनसाध्यवत्ताज्ञानंविशेषणीयंस्वंप्रतिबंधकनिश्चयइति **दिक्** ॥ **यत्तु** साध्य
तावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिवेशेनैवोक्तसमूहालं
बनमादायदोषवारणसंभवात्साध्यवत्ताज्ञानसामान्यनिवेशोगौरवग्रस्तः प्रकारतायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वानिवे
शेपर्वतोवह्न्यभावत्वावच्छिन्नकालिकसंबंधावच्छिन्नप्रतियोगिताकाभाववानितिज्ञाननिष्ठायाःकालिकसंबंधावच्छिन्नवह्न्य

भावत्वावच्छिन्नप्रकारताशालिनिश्चयनिरूपितप्रतिबध्यतायाः प्रतियोगित्वसंबंधावच्छिन्नवन्हित्वावच्छिन्नप्रकारताघटित धर्मावच्छिन्नतया कालिकसंबंधस्यापि संग्रहापत्त्या वन्हिमान्धूमादित्यादावव्याप्त्यापत्तिरतस्तदुपात्तं॥ साध्यतावच्छेदकधर्मावच्छिन्नत्वस्य प्रकारतायामनिवेशे वन्हिमत्त्वप्रकारकप्रमाविषयो धूमादित्यादौ साध्याभावत्वावच्छिन्नकालिकसंबंधावच्छिन्नप्रतियोगिताकाभावत्वेन साध्यवत्ताज्ञानं प्रति कालिकसंबंधेन साध्याभाववत्ताज्ञानस्य प्रतिबंधकतया कालिकसंबंधसंग्रहापत्तिरतस्तन्निवेशः॥ नन्वेवमपि संयोगेन वन्हिमान्पर्वतो वन्ह्यभावत्वावच्छिन्नकालिकसंबंधावच्छिन्नप्रतियोगिताकाभाववानित्याकारकज्ञानं प्रति संयोगेन वन्हिविशिष्टे पर्वते कालिकसंबंधेन वन्ह्यभाववत्ताज्ञानस्य प्रतिबंधकतया कालिकसंबंधसंग्रहो दुर्वार एव तादृशज्ञानीयप्रतिबध्यतायां धर्मितावच्छेदकविषयिताविधया संयोगसंबंधावच्छिन्नवन्हित्वावच्छिन्नप्रकारिताया अवच्छेदकत्वादिति वाच्यं॥ सर्वत्वावच्छिन्नविशेष्यकवन्ह्यभावप्रकारताशालिज्ञाननिरूपितप्रतिबध्यतावच्छेदककोटौ धर्मितावच्छेदकविषयिताया अनिवेशेनोक्तदोषाभावान्निवेशेपि वा नवन्हित्वावच्छिन्नप्रकारतात्वेन किंतु धर्मितावच्छेदकतात्वेनैव निवि

शतां वा विशिष्यैव फलेच्छानामुत्तेजकत्वपक्षे ग्राह्यधर्मितावच्छेदकभेदेन प्रतिबध्यप्रतिबंधकभावभेदस्यावश्यकत्वात्तथा
पि न क्षतिः धर्मितावच्छेदकतानात्मकत्वेन प्रकारताया विशेषणीयत्वादिति **तदसत्** ॥ एवं सति वृत्त्यनियामकसंबंधस्या
भावप्रतियोगितावच्छेदकत्वे प्रतियोगितासंबंधेन वन्हेः साध्यतायां वन्हिध्वंसत्वहेतावव्याप्तेर्दुर्वारतापत्तेस्तत्र साध्याभावत्वा
वच्छिन्नकालिकसंबंधावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नवत्ताबुद्धिं प्रति कालिकसंबंधेन साध्याभाववत्ताज्ञानस्य
प्रतिबंधकतया कालिकसंबंधसंग्रहस्य दुर्वारत्वात्तादृशज्ञानीयप्रतिबध्यतायां प्रतियोगितासंबंधावच्छिन्नवन्हित्वावच्छिन्न
प्रकारताया अवच्छेदकत्वात् ॥ **यदि च** साध्यतावच्छेदकसंबंधतायां तादृशरूपावच्छिन्नेपर्याप्तातादृशरूपविशिष्टसाध्य
तावच्छेदकसंबंधपर्याप्तावच्छेदकताकत्वं प्रकारतायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वं दर्शितप्रतिबध्यतावच्छेदककोटि
प्रविष्टप्रकारता च न साध्यतावच्छेदकभुद्धप्रतियोगितात्वविशिष्टप्रतियोगित्वसंबंधावच्छिन्ना ऽपि तु प्रतियोगित्वसंबंधाव
च्छिन्नत्वविशिष्टप्रतियोगितावाच्छिन्नेति नोक्तदोषः ॥ **एतेन** निरवच्छिन्नविशेषणताया एव कपिसंयोगवत्ताधीविरोधित्वा

नविषयतयाल्लक्षणेसाध्यवद्भिन्नवृत्तित्वविशेषणंव्यर्थमितिनचेत्याग्निमशंकायाअनुत्थितिर्मूलावच्छिन्नत्वविशिष्टसम
वायसंबंधेनकपिसंयोगवत्ताज्ञानंप्रतिमूलावच्छिन्नविशेषणतासंबंधेनकपिसंयोगाभाववत्ताज्ञानस्यप्रतिबंधकतया
तादृशासंबंधेनकपिसंयोगाभाववत्तायावृक्षेऽसत्वात्तद्विशेषणवैयर्थ्यानवकाशादितिपरास्तमितिविभाव्यतेतदापि
विपरीतज्ञानानुत्तरत्वस्यप्रतिबध्यतावच्छेदकत्वपक्षेप्रतिबध्यतावच्छेदककोटौप्रकारकत्वनिवेशेप्रयोजनविरहेणद
र्शितप्रकारकत्वावच्छिन्नत्वस्यप्रतिबध्यतायांनिवेशासंभवात्॥ कालिकविशेषणतयावह्न्यभाववान्देशिकविशेषण
तयावह्न्यभाववानितिज्ञानविशिष्टस्यपर्वतःकालिकसंबंधेनवह्न्यभाववानितिज्ञानस्यवन्हिमत्ताज्ञानंप्रत्यवच्छेदकध
र्मदर्शनविधयाप्रतिबंधकत्वात्कालिकसंबंधग्रहेवान्हिसाध्यकस्थलेदुर्वारइतिप्रतिबंधकादिशिनिश्चयसामान्योपादा
नं॥ एवंचस्वप्रकारकत्वनिश्चयत्वादीनामपिसार्थक्यमित्यलंबहुना॥केचित्विति॥ साध्यात्मकस्वभावनिरूपिते
त्यस्यसाध्यनिरूपितेत्येवार्थःसाध्येस्वाभावत्वकथनमसंभावनावारणायेतिभ्रमेणशंकतेनचेति॥भ्रमंनिराकरोति॥

शेषणतासंबंधस्यावच्छेदकत्वेपि तादृशप्रतियोगितावच्छेदकरूपेण तादृशप्रतियोगिताश्रयीभूताभावस्य साध्यवद्भिन्नवृत्तेर्व्य
तिरेकिमात्रस्य कालिकसंबंधावच्छिन्नाभावोऽव्याप्यवृत्तिरिति मते प्रसिद्धावपि तस्याधिकरणभेदेन भिन्नत्वावश्यकतयात्मन्यवृ
त्तेरव्याप्त्यनवकाशादिति चेन्न ॥ स्वावच्छेदकावच्छिन्नानधिकरणनिरूपितस्वावच्छेदकसंबंधावच्छिन्नाधेयतावच्छेदिकाया
याप्रतियोगितातत्तदन्यत्वस्य साध्याभावनिष्ठप्रतियोगितायां निवेशेन सर्वसामंजस्यात् ॥ विशिष्टसत्ताभावसाध्यके विशिष्टस
त्तात्वावच्छिन्नप्रतियोगिताया विशेष्यमात्रवृत्तितया स्वावच्छेदकावच्छिन्नानधिकरणनिरूपितस्वावच्छेदकसमवायसंबंधाव
च्छिन्नाधेयतावच्छेदकत्वेपि विशिष्टसत्ताधिकरणत्वरूपसाध्याभावनिष्ठप्रतियोगितैव तादृशीति तादृशप्रतियोगितावच्छेद
कस्वरूपसंबंधेन विशिष्टसत्ताधिकरणत्वरूपसाध्याभाववदवृत्तित्वमादायैव तत्साध्यके गुणत्वहेतौ लक्षणसमन्वय इति शि
वं ॥ अथैवमपि कालिकसंबंधावच्छिन्नप्रतियोगिताकाकाशाभावाभावे साध्ये आत्मत्वादावव्याप्तिरस्त्येव तादृशसाध्यस्य
योव्यधिकरणसंयोगसंबंधावच्छिन्नप्रतियोगिताकाभावीयश्च तादृशसाध्यगगनोभयत्वावच्छिन्नाभावस्य योर्गगनाभावात्म

व्या॰प॰रत्नं १४८ कसाध्याभाववसमनियतत्वेन तदभिन्नतया दैशिकविशेषणतासंबंधस्य लक्षणघटकत्वात् ॥ नच तादृशाभावयोः साध्याभा ग॰पं॰टी॰
वसमनियतत्वेऽपि तयोः केवलान्वयितया दैशिकविशेषणतासंबंधावच्छिन्नप्रतियोगिताकतदभावस्याप्रसिद्ध्या साध्याना
त्मकत्वान्न दैशिकविशेषणतायाः साध्यनिरूपितप्रतियोगितावच्छेदकत्वमिति वाच्यं ॥ साध्ये तत्प्रतियोगित्वविरहाय्यग
गने गगनाभावाभावत्वमिव तदभावत्वस्यापि युक्तिसिद्धत्वात् ॥ मैवं ॥ अभावविरहात्मत्वं प्रतियोगित्वमिति मते तदावश्यकत्वे
पि प्रतियोगित्वस्य स्वरूपसंबंधरूपत्वे तदनावश्यकत्वात्समवायसंबंधावच्छिन्नप्रमेयाभावाभावस्य सत्तास्वरूपत्वं वदतां ग्रं
थकृतां प्रतियोगित्वस्य प्रकृतलक्षणे स्वरूपसंबंधस्यैवादरणीयत्वात् ॥ अथैवमप्यभावत्वावच्छिन्नकालिकसंबंधावच्छिन्न
प्रतियोगिताकाभावे दैशिकविशेषणतया साध्ये आत्मत्वादावव्याप्तिस्तत्र साध्यस्य यः कालिकसंबंधावच्छिन्नाभावस्तस्य यो दै
शिकविशेषणतासंबंधावच्छिन्नाभावस्तस्य साध्यरूपतया दैशिकविशेषणताया अपि लक्षणघटकत्वात् ॥ नच दर्शिताभा
वस्य साध्यरूपत्वेऽपि तदीयप्रतियोगितानस्वनिष्ठा साध्यतावच्छेदकसंबंधावच्छिन्नसाध्याभावस्यैव स्वपदार्थत्वादिति वाच्यं ॥ १४८

तत्रेत्यादिना ॥ लाघवमनुरुध्यपूर्वकल्पेवक्ष्यमाणदोषंचावेक्ष्याह साध्यतावच्छेदकसंबंधेनवृत्तिमत्साध्यनिरूपि
तेति ॥ तादृशप्रतियोगितावच्छेदकयत्संबंधेनसाध्यवद्भिन्नवृत्तित्वमभावस्येति ॥ तथाचसाध्यनिरूपित
स्वनिष्ठप्रतियोगितावच्छेदकयत्संबंधेनसाध्यवद्भिन्नवृत्तिर्यःसाध्याभावस्तस्यतेनसंबंधेनयदधिकरणंतद्वृत्तित्वाभावोव्याप्ति
रितिसमुदितार्थःपर्यवसितः ॥अथैवमपिकालिकसंबंधेनसर्ववान्कालत्वादित्यादौसाध्याभावस्ययःकालिकसंबंधावच्छि
न्नाभावस्तस्यसर्वतःपातितयासाध्यतावच्छेदकसंबंधेनवृत्तिमत्साध्यस्वरूपतयाकालिकसंबंधस्यापितथात्वेनतादृशसं
बंधेनसाध्यवद्भिन्नेजन्यकालेवर्तमानस्यसाध्याभावस्याधिकरणेमहाकालेहेतोःसत्वादव्याप्तिरेवंदिक्कृतविशेषणतयासर्व
साध्यकेमहादिक्त्वहेतौविषयितासंबंधेनसर्वसाध्यकेनित्यज्ञानत्वहेतौदिक्कृतविशेषणतांविषयितांचादायाव्याप्तिर्दुर्वारा॥नचतादृशायद्य
त्संबंधेनेतिवक्तव्यंप्रकृतेतादृशायावदंतर्गतदैशिकविशेषणतासंबंधेनहेतुमतिसाध्याभावासत्वान्नाव्याप्तिरितिशंक्यं॥ तथासतिग्रंथकृ
तावक्ष्यमाणस्वनिष्ठत्वविशेषणप्रयोजनासंगतेरितिचेन्न॥जन्यानांमहाकालमहादिग्वृत्तितायामवच्छेदकत्वंनतुकालदिक्त्वे ॥ विष

यितासंबंधोनाभावप्रतियोगितावच्छेदकोनवातेनसाध्यत्वमितिमतेनैवैतत्परिष्कारकरणात् ॥ **अथै**वमपिगगनाभावत्वावच्छिन्न
कालिकसंबंधावच्छिन्नप्रतियोगिताकाभावे विशेषणता विशेषणसाध्ये आत्मत्वहेताववव्याप्तिस्ताद्दशसाध्यस्यकालवृत्तित्वविशिष्टग
गनाभावाभावसमनियततयातदभिन्नत्वेनतदभावस्यकालवृत्तित्वविशिष्टगगनाभावरूपतयादैशिकविशेषणतायाअपिसा
ध्यनिरूपितसाध्याभावनिष्ठप्रतियोगितावच्छेदकसंबंधतयातेनसंबंधेनगगनाभावात्मकसाध्याभावस्यसाध्यवद्भिन्नेवर्त
मानस्यात्मनिसत्वात् ॥ **नच**साध्यनिरूपितसाध्याभावनिष्ठप्रतियोगिताव्यक्तिर्येनरूपेणयेनसंबंधेनावच्छिन्नातेनरूपेण
तेनसंबंधेनसाध्यवद्भिन्नवृत्तेः साध्याभावस्यतेनरूपेणतेनसंबधेनयदधिकरणंतद्वृत्तित्वाभावोव्याप्तिरितिविवक्षितंकाल
वृत्तित्वविशिष्टगगनाभावत्वावच्छिन्नायाः साध्यनिरूपितप्रतियोगितायाअवच्छेदकीभूतदैशिकविशेषणतासंबंधेनकाल
वृत्तित्वविशिष्टगगनाभावत्वावच्छिन्नाधिकरणत्वस्यात्मन्यसत्वान्नाव्याप्तिरिति **वाच्यं** ॥ एवंसतिप्रतियोगितायांस्वनिष्ठ
त्वविशेषणवैयर्थ्यापत्तेः ॥ दर्शितस्थलेकालिकसंबंधावच्छिन्नप्रतियोगिताकसाध्याभावनिष्ठप्रतियोगितायांदैशिकवि

साध्यतावच्छेदकसंबंधावच्छिन्नप्रकृतसाध्याभावस्य निखिलाभावरूपतया कालिकसंबधावच्छिन्नप्रतियोगिताकाभावनिष्ठप्र
तियोगितायाअपिस्वनिष्ठत्वाक्षतेः ॥ नन्वकालिकसंबंधावच्छिन्नप्रकृतसाध्याभावस्यदैशिकविशेषणतयानित्यमात्रवृत्तितया
सर्वदेशासंग्राहकत्वेननतस्यसाध्यतावच्छेदकसंबंधावच्छिन्नसाध्याभावत्वंकल्प्यते किंतुसर्वदेशसंग्राहकगगनाभावादीनां॥
व्यतिरेकिणस्तथात्वेनिरुक्तसाध्याभावस्यकालिकाव्याप्यवृत्तितापत्तेरितिवाच्यं ॥ व्यतिरेकिणः कालिकसंबंधावच्छिन्नप्रति
योगिताकाभावस्यकेवलान्वयितयानित्यमात्रवृत्तितायाअसिद्धेर्गगनाभावादिवत्तस्यापिसर्वदेशसंग्राहकत्वाविशेषा
त्साध्यतावच्छेदकसंबंधावच्छिन्नसाध्याभावत्वावश्यकत्वादितिचेन्न ॥ व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपविरुद्धधर्माध्या
सादभावभेदवादिनांमतेव्यतिरेकिप्रतियोगिककालिकसंबंधावच्छिन्नाभावस्याधिकरणभेदेनभेदात्सर्वदेशसंग्राहक
त्वासिद्धेरिति बहुतरमूहनीयं ॥ अथास्मिन्लक्षणेतादात्म्यसंबंधेनघटसाध्यकेघटत्वहेतावव्याप्तिस्तत्रसाध्यी
भूतघटनिरूपितघटभेदात्मकसाध्याभावनिष्ठप्रयोगित्वाप्रसिद्धेः ॥ घटभेदाभावस्य घटत्वस्वरूपत्वात् ॥ यदिच घ

टभेदाभावस्यघटत्वरूपत्ववद्घटस्वरूपत्वमपिस्वीक्रीयतेतादात्म्यसंबंधेनघटवत्तयाघटभेदाभावप्रतीतिनियामकत्वाच्चनातिप्रसंग
इत्युच्यतेतदाघटभिन्नंघटत्वाभावादित्यादावव्याप्तिर्घटत्वात्मकसाध्याभावनिष्ठप्रतियोगितावच्छेदकसमवायसंबंधेनघटत्वात्म
कसाध्याभावस्यसाध्यवद्भिन्नवृत्तित्वात्तेनसंबंधेनघटात्मकसाध्याभावाधिकरणेकपालेहेतोर्वृत्तेः॥ यदिचसाध्यनिरूपितयादृ
शसाध्याभावनिष्ठप्रतियोगितावच्छेदकयत्संबंधेनसाध्यवद्भिन्नवृत्तित्वंयादृशसाध्याभावस्यवर्ततेतेनसंबंधेनतादृशसाध्याभाववत्त्वंनिवे
शनीयंसमवायस्यघटात्मकसाध्याभावनिष्ठप्रतियोगितावच्छेदकत्वाभावान्नतमादायाव्याप्तिरित्युच्यतेतदाघटभेदस्यघ
टत्वाभावसमनियतत्वेनतद्भिन्नत्वोपगमेनघटत्वस्यतत्प्रतियोगित्वव्यवस्थापनस्यनिष्फलत्वापत्तिर्घटत्वस्यघटभेदप्रति
योगित्वाभावेपिघटात्मकसाध्याभावमादायघटभेदसाध्यकेपटत्वादौलक्षणगमनसंभवादितिचेदत्रब्रूमः॥ तादात्म्यसंबं
धेनघटस्यसाध्यतास्थलेघटतादात्म्यस्यैवसाध्यत्वोपगमकर्तृप्राचीनमतेनैवैतत्परिष्कारकरणाद्घटभेदाभावस्यघटत्व
मात्रस्वरूपत्वेपिक्षतिविरहात्॥ अस्तुवातादात्म्यसंबंधेनघटादेःसाध्यत्वंतथापिनक्षतिःसाध्यनिरूपितस्वनिष्ठप्रतियो १४९

गित्वनदवच्छेदकत्वान्यतरावच्छेदकसंबंधस्यैवविवक्षणादित्यलं ॥ ननुसाध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबंधे
नसाध्याभाववत्वनिवेशेलक्षणेसाध्याभावपदवैयर्थ्यंतदनिवेशेस्वपदस्यसाध्यवद्भिन्नवृत्तित्वरूपेणगगनाभावपरिचाय
कत्वप्रसक्तावपिगगनाभावादिनिष्ठप्रतियोगितायांसाध्यनिरूपितत्वाभावेनसाध्यनिरूपितप्रतियोगितायांगगनाभा
ववृत्तित्वाभावेनस्वनिष्ठसाध्यीयप्रतियोगितावच्छेदकसंबंधरूपपरंपरासंबंधघटकवृत्तित्वांशेगगनाभावप्रतियोगिक
त्वाभावेनतादृशपरंपरायाःसाध्याभावातिरिक्तवस्तुसंबंधतायाअसंभवादितिस्वपदप्रयोगमूलकपरंपरासंबंधविवक्षा
भिमानेनशंकनेनचेति ॥ दर्शितविशिष्टस्यसाक्षात्संबंधत्वमेवविवक्षितंनतुपरंपरात्वमितिस्पष्टतयादर्शयितुंसाध्य
निरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबंधेनसाध्याभाववत्वमित्यत्रद्विधानिविष्टसाध्याभावघटितवाक्यार्थंशब्दांतरेणा
भिधायसाध्याभाववत्वनिवेशसाफल्यंस्पष्टयति ॥ स्वपदार्थस्यद्विधानिवेशेनेति ॥ साध्यनिरूपितेत्यादिसंबंध
घटकतयासाध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वरूपलक्षणघटकतयाचेत्यर्थः ॥ निवेशेनेत्यंतंनिवेशध्रौव्येहेतुस्तथा

चसाध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबंधरूपविशिष्टघटकवृत्तित्वांशेगगनाभावप्रतियोगिकत्वाभावेपि विशिष्ट
घटकविशेष्यांशेदैशिकविशेषणतारूपेगगनाभावप्रतियोगिकत्वस्याक्षततयासाध्याभाववत्वानिवेशेगगनाभावमादायाव्या
प्तिः स्यादेवेतिभावः ॥ वस्तुतस्तु परंपरासंबंधनिवेशेपि समवायसंबंधावच्छिन्नमहानसीयत्वावच्छिन्नाभावमादायवन्हि
मान्धूमादित्यादावव्याप्तिवारणायसाध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाभावनिवेश आवश्यकएवे
तिनसाध्याभावपदवैयर्थ्यं ॥ केचित्तु साध्यनिरूपितेत्यादि ॥ साक्षात्संबंधनिवेशेपिसाध्याभावपदवैयर्थ्यं तथाहि
साध्याभाववत्वमनिवेश्यसाध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबंधेनसाध्यवद्भिन्नवृत्तिपदार्थवत्वमेवनिवेश्यं
स्वपदस्यविशेष्यव्यक्तिपरत्वानियमेनयत्पदार्थव्यक्तिमत्वमुपपादनीयं सैवव्यक्तिः स्वपदेनोपपादेयातथाचगगनाभाव
व्यक्तेस्तन्निष्ठप्रतियोगिताव्यक्तेः साध्यनिरूपितत्वविरहेणस्वपदेनोपादानासंभवाद्गगनाभावमादायाव्याप्त्यप्रस
क्तेरित्याशंकतेनचेति ॥ लक्षणवाक्येस्वपदंपरित्यज्यसाध्याभावपदमेवनिवेश्यंसाध्याभावपदस्यतुविशेष्यव्यक्तिप

रत्वनियमाभावादभावांतरवारणायसाध्याभाववत्वनिवेशआवश्यकइत्याशयेनसमाधानमाहस्वपदार्थस्येति ॥ स्व
पदार्थत्वेनस्वपदार्थस्येत्यर्थइत्याहुः ॥ **यादृशसंबंधेनप्रकृतसाध्यवतितद्भिन्नवृत्तिसाध्याभावोनवर्ततइति**
॥ **अथ**यादृशसंबंधेनेत्यस्यसाध्यवन्निरूपितयत्संबंधावच्छिन्नवृत्तित्वाभाववान्तादृशाभावइत्यर्थेसत्ताभावसाध्यकेसम
वायासंग्रहः ॥ साध्यवन्निरूपिततत्संबंधावच्छिन्नवृत्तेरप्रसिद्धेः ॥ यदिचतादृशसाध्याभावनिष्ठसाध्यवन्निरूपितवृत्तित्वं
यत्संबंधानवच्छिन्नमित्यर्थस्तदाऽयमात्मात्मज्ञानादित्यादौसाध्याभावेसाध्यवद्वृत्तित्वाप्रसिद्धिः ॥ यदिचसाध्याभावनिष्ठयत्सं
बंधावच्छिन्नवृत्तित्वंसाध्यवदनिरूपितमित्यर्थस्तदाविशिष्टसत्ताभावसाध्यकेसमवायासंग्रहइतिचेन्न ॥ यत्संबंधावच्छिन्न
तादृशसाध्याभावत्वविशिष्टाधिकरणत्वाभावःसाध्यवद्वृत्तिरित्येतादृशार्थस्यविवक्षणान्नपूर्वोक्तदोषाणामवकाशःसाध्या
भावत्वविशिष्टाधिकरणत्वाभावनिवेशान्नविशिष्टसत्ताभावसाध्यकेसमवायासंग्रहः ॥ **नचैवंविवक्षणेपि**शब्दज्ञानान्यत
रत्वसाध्यकेनित्यज्ञानत्वहेतौविषयितासंबधावच्छिन्नतादृशसाध्याभावत्वविशिष्टाधिकरणत्वाभावस्यसाध्यवतिशब्देवृत्ते

विषयितासंबंधसंग्रहादव्याप्तिरिति **वाच्यं** ॥ साध्यवद्वृत्तिरित्यनेनसाध्यव्यापकइतिविवक्षणात् ॥ **नन्वेवं** तथाप्ययमात्माशब्दज्ञानान्य
तरस्मादित्यादौकालिकसंबंधावच्छिन्नतादृशसाध्याभावाधिकरणत्वाभावस्यसाध्यव्यापकत्वात्कालिकसंबंधमादायातिव्याप्तिरे **तेन**
शब्दज्ञानान्यतरत्वसाध्यकेनित्यज्ञानत्वहेतौविषयितासंबंधव्यावर्तनाययत्संबंधावच्छिन्नाधेयतासंबंधावच्छिन्नप्रतियोगिता
कःप्रकृतसाध्यवतोऽत्यंताभावःसाध्यवद्भिन्नवृत्तिसाध्याभावेवर्ततेयद्वाप्रकृतसाध्यवत्वावच्छिन्नानुयोगिताकभेदप्रतियोगिता
यांयेनसंबंधेनतादृशसाध्याभावोऽवच्छेदकः ॥ **यद्वा** यत्संबंधावच्छिन्नतादृशसाध्याभावनिष्ठावच्छेदकताकप्रतियोगिता
साध्यवतिदैशिकविशेषणतयानवर्ततेतेनसंबंधेनेतिविवक्षणमप्य**पास्तं**मुक्तस्थलेतादृशकालिकसंबंधमादायातिव्या
प्तेरिति **वाच्यं** ॥ साध्यवद्वृत्तिरित्यनेनसाध्यव्यापकत्वेसतिसाध्यव्याप्यत्वस्यविवक्षणात् ॥ साध्यव्याप्यत्वविवक्षणेनैवशब्द
ज्ञानान्यतरत्वसाध्यकेविषयितासंबंधव्यावर्तनेपिनित्यत्वसाध्यकेमहाकालमात्रवृत्तिहेतौकालिकसंबंधव्यावर्तनाय साध्य
व्यापकत्वनिवेशोऽवश्यकः ॥ **अत्रेदंबोध्यं** निरुक्तसंबंधपरिचायकरूपस्यापिव्यापकत्वव्याप्यत्वघटितत्वेनपूर्वंनिरुक्त

संबंधपर्यास्वायकरूपापेक्षयालाघवाभावादलंवाग्जालेनेत्युक्तिर्विचारणीयैवेति ॥ इत्यनेनेनेति ॥ तदंतवाक्येनेत्यर्थः ॥ अन
वच्छिन्नवृत्तिकत्वरूपेति ॥ तथाच तादृशवृत्तित्वलाभायैवसाध्यवद्भिन्नीयत्वंनतुलक्षणघटकमग्रेसाध्यवद्भिन्नेइश्वरेइति
तुस्वरूपकीर्तनमात्रंनतुतदंशस्यलक्षणघटकत्वाभिप्रायेणतादृशवृत्तित्वनिवेशेतदंशस्यव्यर्थत्वादितिध्येयं ॥ तथासती
ति स्वमतेतादृशज्ञानत्वाभावाभावस्यविरुद्धधर्माध्यासभियाऽतिरिक्तत्वस्वीकारेणाधिकरणभेदेनभेदान्नाव्याप्तिरितिभा
वः ॥ ईश्वरेनित्यस्कस्वांगीकारेनिरुक्तज्ञानत्वाभावेसाध्येस्कस्वंव्यभिचारीतिसत्ताभावसाध्यकस्थलांतरानुसरणं ॥ दीधितौ
कर्मादाविति गुणादावितिवक्तव्येकर्मादावितिद्रव्यकर्मेतिसूत्रानुसारिविभागापेक्षमितिध्येयं ॥ गादाधर्यांविनिगम
ना॥ विरहेपीति॥ अथैवंकपिसंयोगाभावोधिकरणभेदाद्भिन्नोऽधिकरणभेदेप्यभिन्नइतिसिद्धं तावताकपिसंयोग्येतद्वृक्षत्वादित्यादावव्या
प्तिर्दुर्वारैव ॥ नचाव्याप्तिखंडनेनतात्पर्यंकिंतुमानाभावादितिपंक्त्यर्थदूषणएवेतिवाच्यं ॥ यत्तस्तादृशपंक्त्यर्थोऽधिकर
णभेदेनाभावभेदएवमानाभावस्तत्रदूषणंचाशक्यमितिचेन्न ॥ यथाश्रुतग्रंथार्थोनविवक्षितः किंत्ववधारणाऽगर्भएवेति

सूचयितुमधिकरणभेदेनाभावभेदो व्यवस्थापितः ॥ **वस्तुतस्तु** साध्यवद्भिन्नवृत्तित्वस्थानेऽव्याप्यवृत्त्यनेकवृत्तियोंऽभाव
स्तद्भिन्नत्वरूपविशेषणप्रक्षेपेऽव्याप्तिवारणमपिसुकरमित्यभिप्रेत्याधिकरणभेदेनाभावभेदोव्यवस्थापितइतिहृदयं ॥ अ
**त्रेदंचिंत्यं** ॥ प्रतियोगितासंसर्गककपिसंयोगत्वावच्छिन्नप्रकारप्रमांप्रतिगुणविधयास्वविषयकलौकिकप्रत्यक्षंप्रतिवि
षयविधयाचकपिसंयोगत्वावच्छिन्नाभावस्यतादात्म्यसंबंधेनकारणत्वेकल्पनीयकारणतावच्छेदकत्वंयदिकपिसं
योगाभावत्वस्यतदागौरवंस्यादितिकपिसंयोगाभावनिष्ठतद्व्यक्तित्वमेवकारणतावच्छेदकंवाच्यंतथाचाधिकरणभेदेनाभाव
भेदेतद्व्यक्तित्वस्यकारणतावच्छेदकत्वंनसंभवतीत्यधिकरणभेदेप्यभावाभेदएवस्वीकर्त्तुमुचितइति ॥ साकल्यंसाध्याभावव
तिसाध्येचबोध्यमित्यत्रविधेयाविमर्शादाह **बोध्यमित्यस्येति** ॥ **वास्तवतयेति** वास्तवत्वमवश्योपादेयविशेषणांतरा
वारणीयप्रयोजनकत्वंतथाचवह्निमान्पर्वतान्यत्वादित्यादौयत्किंचिद्वह्न्यभाववतिपर्वतादौहेत्वभावसत्वेपिसकलसाध्याभा
ववन्निष्ठत्वाभावान्नेदंप्रयोजनंवास्तवमितिभावः ॥ **तत्प्रदर्शनस्यैवोचितत्वादिति** ॥ **नन्वेतद्रूपगगनोभयवानेतद्व** १५२

सादित्यादौसाध्येसाकल्यविशेषणनिवेशस्यवास्तवप्रयोजनंसंभवतितथाहिसाध्येसाकल्यानिवेशेप्रतियोगिव्यधिकरणैतद्रूपत्वा
वच्छिन्नाभावमादायातिव्याप्तिः साध्याभाववतिसाकल्यविशेषणेपिदुर्घटातन्निवेशेच प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्य
धिकरणसकलसाध्याभावाप्रसिद्ध्यैवनातिव्याप्तिरितिचेन्न ॥ साध्येसाकल्यविशेषणदानेप्येतद्रूपगगनान्यतरत्वावच्छिन्नाभाव
मादायातिव्याप्तेर्दुर्वारतयासाध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यस्यहेतौस्वतंत्रविवक्षयाऽन्यथैववातत्रातिव्याप्तेर्वार
णीयत्वात्तत्प्रयोजनस्यवास्तवत्वविरहात् ॥ किंचनिरुक्तसाध्यकेएतद्रसवद्वृत्तित्वावच्छिन्नाभावस्यापिसाध्येसाकल्यविशेषणा
सत्वेलक्षणघटकतयासाध्याभाववतिसाकल्यदानेनाप्यतिव्याप्तिवारणसंभवात् ॥ साध्यतावच्छेदकातिरिक्तोयोव्यासज्य
वृत्तिधर्मइति ॥ अथात्रसाध्यतावच्छेदकातिरिक्तोयोधर्मस्तदनवच्छिन्नप्रतियोगितानिवेशेनैवोपपत्तौव्यासज्यवृत्तित्वनिवे
शोव्यर्थइतिचेन्न ॥ व्यासज्यवृत्तित्वानिवेशेसाध्यतावच्छेदकातिरिक्तत्वेनबहूनांधर्माणांनिवेशेगौरवापत्तिरतोधर्मसंकोचा
र्थंतन्निवेशः ॥ यदिचसाध्यतावच्छेदकातिरिक्तधर्मनिष्ठावच्छेदकत्वनिरूपकत्वसामान्याभावनिवेशान्नबहुधर्मनिवेशापत्तिरि

तिविभाव्यतेतदाऽखंडाभावसंपादकत्वेननव्यासज्यवृत्तित्वानिवेशवैयर्थ्यं ॥ नचव्यासज्यवृत्तित्वाघटितस्यलक्षणस्यसंभवेतद्घटितगुरुलक्षणारंभोऽन्याय्यइतिवाच्यं ॥ साध्येसाकल्यस्यमूलोक्तस्यसार्थक्यायैवतद्घटितलक्षणादरात् ॥ यत्तुव्यासज्यवृत्तित्वंविहायनिरुक्तसामान्याभावानिवेशेप्रमेयवन्हिमान्धूमादित्यादावगतिस्तत्रप्रमेयवन्हित्वस्यगुरुतयाऽनवच्छेदकत्वेनवन्हिसामान्याभावस्यैवलक्षणघटकत्वंवक्तव्यंतत्तुनघटतेतदीयप्रतियोगितायांसाध्यतावच्छेदकातिरिक्तवन्हित्वावच्छिन्नत्वादिति तदसद्गुरुधर्मावच्छिन्नसाध्यकहेतौहेतुतावच्छेदकसंबंधानुयोगिनिष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदककत्वरूपकेवलान्वयिसाध्यकत्वेनतत्राव्याप्तेरिष्टत्वस्यासकृदावेदितत्वात् ॥ गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेतदवच्छिन्नसाध्यकानुमानमेवनास्तीत्यभिप्रायस्यवक्तुंशक्यत्वाच्च ॥ अतएवलाघवेनसाध्यतावच्छेदकावच्छिन्नाभावनिवेशौचित्यवर्णनंसंगच्छतेऽन्यथातथानिवेशेगुरुधर्मावच्छिन्नसाध्यकाव्याप्तेरपरिहारात्साध्यतावच्छेदकावच्छिन्नेत्यनेनसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वस्यैवविवक्षणीयतयालाघवानवकाशादितिदिक् ॥ तत्रलक्षणसंगतेरिति ॥ अथतत्ररूपघटोभयाभावस्यप्रतियो

गिव्यधिकरणस्यसंभवाद्धूवत्येवाव्याप्तिरिति **चेन्न** ॥ घटत्वस्यैवतादृशाभावप्रतियोगितावच्छेदकत्वसंभवात्तादृशोभयत्वाव
च्छिन्नप्रतियोगिताकाभावस्यगुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्धत्वादित्याशयात् ॥ **यद्वा** साध्यवद्भिन्नवृत्तिताव
च्छेदकधर्मावच्छिन्नत्वाभावस्यसाध्यनिष्ठप्रतियोगितायांनिवेशेतत्रलक्षणसमन्वयसंभवादित्यभिप्रायः ॥ **साध्याभावा
धिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमितिफलितार्थइति** ॥ **यद्यप्युक्तफलि
तार्थेहेत्वभावेसकलसाध्याभाववन्निष्ठत्वविशेषणाप्रवेशान्निधूमत्वव्याप्यवान्निर्वन्हित्वादित्यादौदीधितिकृतावक्ष्यमाण
व्याप्त्यसंगति **स्तथापि** यथाश्रुताभिप्रायेणस्वप्रतियोग्यनधिकरणतावद्यावत्साध्याभाववन्निष्ठाभावप्रतियोगित्वमितिकिंचि
त्परिष्काराभिप्रायेणवावक्ष्यमाणाव्याप्तिःसंगमनीया **आत्ममहाकालेति** ॥ अत्रमहत्पदानुपादानेधूमसाध्यकेऽतिव्याप्तिः
कुतोनोक्तेतिशंकास्याज्जन्यमात्रस्यकालोपाधितयाव्यभिचारनिरूपकस्यापिसाध्यवत्वात् ॥ महत्पददानेतुमहत्वाभाववति
कालत्वाभावबोधनाज्जन्यमात्रस्यकालत्वाभावज्ञानेनतादृशशंकानुदयान्मतद्वयसाधारण्यायप्रसिद्धस्थलोपेक्षेति **बोध्यं** ॥

असंभवोऽव्याप्तिर्वेति ॥ एकज्ञानविषयत्वादीनां संसर्गत्वानभ्युपगमे आत्मभिन्नं ज्ञानवदन्यत्वादित्यादौ लक्षणसं
भवादुक्तमव्याप्तिर्वेति ॥ अस्मदीयफलितार्थस्येति ॥ यद्यप्येतादृशफलितार्थस्य व्याप्तित्वे व्याप्तेर्विशिष्टैकार्थरूप
तानुपपत्तिरतः सकलसाध्याभाववन्निष्ठस्वावच्छेदकावच्छिन्नानाधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणतानिरूपका
भावीयहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वं व्याप्तिरित्येव वक्तव्यं तथाच हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यानिवेशानु
योगो दुर्वार एवेति प्रतिभाति तथापि सकलसाध्याभाववन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकहेतुतावच्छेदकाव
च्छिन्नत्वविशिष्टप्रतियोगित्वरूपफलितार्थे तात्पर्यान्नानुपपत्तिरित्यवधेयं ॥ अनेकाशेषत्वरूपसाकल्यस्येति ॥
अत्रानेकत्वं व्यासज्यवृत्तिधर्मपर्याप्त्यधिकरणत्वं ॥ व्यासज्यवृत्तित्वं चैकत्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नापर्याप्तिकत्वरू
पमेकत्वविरुद्धत्वं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वतादात्म्यैतदुभयसंबंधेन किंचिद्धर्मविशिष्टत्वं वेत्यन्यदेत
त् ॥ अशेषत्वं च समभिव्याहृतपदार्थतावच्छेदकधर्मव्यापकीभूतो योऽनेकवृत्त्यव्यासज्यवृत्तिधर्मभिन्नो धर्मस्तत्पर्याप्त्यधि

करणत्वंबोध्यं॥ भेदहेतुकेति गुणवान्यघटभेदादित्यादावित्यर्थः॥ स्वस्मिन्नेवेति घटभेदरूपहेतुभेदत्वेनगगनाभाव एव
गगनाभावस्यवृत्तिमत्वमित्यर्थः॥ यदि च घटभेदभेदत्वेनगगनाभावस्यकेवलान्वयित्वंतदाघटभेदोनघटभेदइतिप्रयोगा
पत्तिरिति ध्येयं॥ कालिकसंबंधावच्छिन्नप्रतियोगिताकवह्न्यभावमादायेति॥ अत्रवह्न्यभावपदंवह्न्यभावान्यत्वविशि
ष्टवह्न्यभावपरंतेनप्रतियोगितायांहेतुतावच्छेदकावच्छिन्नत्वविशेषणसत्वेपिनक्षतिस्तादृशविशिष्टवह्न्यभावाभावप्रतियो
गितायांवह्न्यभावत्वस्यैवावच्छेदकत्वसंभवस्तन्नशंक्यस्तथासतितादृशविशिष्टाभावस्यवह्न्यभावरूपदेशावच्छेदेनकालवृत्ति
त्वानुपपत्तेः॥ प्रतियोगितावच्छेदकावच्छिन्नानधिकरणदेशस्यैवकालवृत्तितावच्छेदकत्वादिति ध्येयं॥ सकलशब्दस्य
व्यापकत्वार्थकतयेति॥ सकलशब्दस्यव्यापकत्वपरतयेत्यर्थस्तत्परत्वंतच्छाब्दबोधाजनकस्यापिमानसबोधमादाय
निर्वहतीतिबोध्यं॥ यत्तुव्यापकत्वंसकलशब्दस्यशक्यंलक्ष्यंवेतियथाश्रुतमेवसम्यगिति तदसदिव प्रतिभाति॥ त
थाहि सकलघटारूपवंतः सकलघटनिष्ठंपृथिवीत्वमित्यादौघटेव्यापकत्वप्रतीत्यापत्तेरितरथासकलाश्वतेघटाश्चेतिकर्मधा

रयाविवरणानुपपत्तेः ॥ एतेन सकलशब्दार्थव्यापकत्वे उत्तरपदार्थतावच्छेदकघटत्वस्य निरूपितत्वेनान्वयो व्यापकत्वस्य तु रूपपृथिवी
त्वयोरन्वय इति निरस्तं ॥ पदार्थतावच्छेदकघटत्वस्य घटविशेषणतयोपस्थितत्वात्तस्य व्यापकत्वान्वयस्यैकविशेषणतयेत्यादिव्युत्पत्ति
विरुद्धत्वात् ॥ व्यापकत्वस्य रूपान्वयित्वे रूपवंत इति तद्धितवृत्त्यनुपपत्तेश्च सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेत्यभि
युक्तवचनादिति दिक् ॥ देयमेवेति ॥ तथा च तद्विशिष्टहेत्वभाववत्त्वस्यैव व्यापकतावच्छेदकत्वं विवक्षणीयं निरुक्तस्थले तादृ
शासंयोगाभाववत्त्वस्य स्वपदेनोपादानसंभवान्नातिव्याप्तिः ॥ नन्वेवमेतद्वृक्षत्ववान्कपिसंयोगाभावादित्यादावतिव्याप्तिस्तत्र
स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टहेत्वभावस्याप्रसिद्ध्या तादृशहेत्वभाववत्त्वस्य स्वपदेनोपादानासंभवादत आह न देयमे
वेति तद्दाने एतद्वृक्षत्ववान्कपिसंयोगादित्यादावुक्तातिव्याप्तिं वारयत्यधिकरणत्वाभावस्यैवेत्यादिना ॥ शाब्दबोधस्या
पि कथंचिदिति ॥ साध्यवत्पदार्थे साध्यवत्त्वावच्छिन्नप्रतियोगिताकेऽभेदेनान्यपदार्थैकदेशे भेदेऽन्वीयमाने धर्मिपारतंत्र्येण
साध्यस्यावच्छिन्नप्रतियोगिताकत्वसंबंधेनान्वयः स्वीक्रियत एवमन्यपदार्थे भेदवन्निरूपितात्मकेऽभेदेन वृत्तित्वेऽन्वीयमाने धर्मि

पारतंत्र्येणान्यस्य निरूपितत्वसंबंधेनान्वयः स्वीक्रियते एवंवृत्तित्वपदार्थे वृत्तित्वप्रतियोगिताकात्मकेऽभेदेनवृत्तित्वात्मकेवा सा
क्षात्प्रतियोगितासंबंधेन नञात्मकनिपातार्थेऽन्वीयमाने साध्यवद्विशेषितभेदवद्विशेषितवृत्तित्वत्वावच्छिन्नस्यापि तादृशवृत्तित
त्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनान्वयः स्वीक्रियत इति व्याप्तेः शाब्दबोधः ॥ **नचाभेदेनैकविशेषितापरपदार्थघटितधर्मावच्छि
न्नाभावाद्भेदेनैकपदार्थतावच्छेदकविशेषितापरपदार्थघटितधर्मावच्छिन्नाभावोऽन्य एव प्रतियोगितावच्छेदकभेदादिति कथं नि
रुक्तान्वय इति वाच्यं** ॥ समनियताभावानामैक्योपगमेन तादृशधर्मावच्छिन्नाभावयोर्भेदविरहात् ॥ **अप्रमाणत्वादिति** ॥ अ
यंभावः ॥ नञ्कंबुग्रीवादिमत्प्रतियोगिकभेदभानोपगमे तस्य नीलघटेपि सत्वेन तादृशवाक्यस्य प्रामाण्यापत्तिरतोऽन्वयिताव
च्छेदककंबुग्रीवादिमत्त्वावच्छिन्नत्वस्यैव प्रतियोगितायां भानमभ्युपेयं तस्य चाप्रसिद्धत्वात्संसर्गांशेभ्रमत्वमादाय तादृशवाक्य
स्याप्रामाण्यं संपादनीयं तथा सति पटः कंबुग्रीवादिमदन्य इत्यादेः प्रामाण्यानिर्वाह इति ॥ **तद्विशिष्टसंबंधिनिष्ठाभावी
याया प्रतियोगितेति** ॥ कंबुग्रीवादिमत्वविशिष्टसंबंधिनिष्ठाभावीयप्रतियोगितावच्छेदकतात्वापेक्षया घटत्वघटिततादृ

शावच्छेदकतात्वस्य लघुतया तादृशावच्छेदकत्वसामान्याभावाप्रसिद्धिरतः कूटनिवेशः ॥ अथान्यत्संबंधावच्छिन्नप्रतियोगि
तानिरूपितंपारिभाषिकावच्छेदकत्वंप्रत्यापनीयं तेनसंबंधेनसंबंधित्वंप्रतियोगित्वंचयदिविवक्ष्यते तदासमवायेनप्रमेयगगनंना
स्तीत्यादावगतिः ॥ समवायेनगगनत्वविशिष्टसंबंधिनोऽप्रसिद्धेः ॥ यदिन्वतादात्म्यसंबंधेनैकैकसंबंधेनवातदागुणेसत्तानास्तीतिस्यात् ॥ गुणान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगितानिरूपितनिरुक्तपारिभाषिकावच्छेदकत्वस्य सत्तात्वे सत्वादिति
चेदत्र केचित् ॥ येनयेनसंबंधेनस्वविशिष्टसंबंधित्वंप्रसिद्धंप्रत्येकंतत्तत्संबंधावच्छिन्नत्वंसंबंधित्वप्रतियोगित्वयोर्निवेश्या
वच्छेदकत्वाभावकूटरूपमेवव्यापकतावच्छेदकत्वंपारिभाषिकावच्छेद्यत्वशरीरेनिवेशनीयं ॥ यदिन्वविषयितासंबंधघटितं
व्यापकतावच्छेदकत्वंकंबुग्रीवादिमत्वनिरूपितंघटत्वेदुर्घटंतदातत्संबंधातिरिक्ताएवप्रसिद्धसंबंधाग्राह्याइतिवदंति ॥ परेतु
॥ यत्संबंधावच्छिन्नप्रतियोगितानिरूपितपारिभाषिकावच्छेदकत्वंग्राह्यंतेनैवसंबंधित्वंप्रतियोगित्वंचग्राह्यं ॥ नन्वेवंसमवायेन
प्रमेयगगनसंबंधिताप्रसिद्धिरितिवाच्यं ॥ समवायेनतादृशगगनसंबंधित्वंहि ॥ यदधिकरणानुयोगिकतत्संबंधाप्रतियोगि

त्वतत्संबंधप्रतियोगित्वोभयाभावः प्रमेयत्वविशिष्टगगनेवर्ततेतत्त्वमेवतच्चघटादौप्रसिद्धं ॥ नन्वेवं तन्निष्ठाभावीयतत्संबंधाव
च्छिन्नप्रतियोगितानवच्छेदकत्वंगगनत्वेदुर्घटमितिवाच्यं ॥ तन्निष्ठाभावीयतत्संबंधावच्छिन्नप्रतियोगितानवच्छेदकत्वंहितन्नि
ष्ठाभावीयप्रतियोगितासामान्येसमवायावच्छिन्नत्वसमवेतनिष्ठत्वयद्धर्मावच्छिन्नत्वैतन्निरूपिताभावच्छिन्नाभावस्तत्वमित्यस्यविवक्षि
तत्वादितिवदंति ॥ संबंधज्ञानस्यविशिष्टबुद्धावनपेक्षितत्वादिति ॥ तत्प्रकारकबुद्धिंप्रत्येवतज्ज्ञानस्यहेतुत्वात्कूटसंसर्गकबुद्धौ
कूटज्ञानानपेक्षणादितिभाव ॥ ननुतादृशप्रतियोगितासंबंधावच्छिन्नसाध्यसंबंधवन्निष्ठप्रकारतानिरूपितभेदनिष्ठप्रकार
तानिरूपितविशेष्यताशालिबोधजनकत्वप्रकारतानिरूपितायावाक्यनिष्ठेच्छीयविशेष्यतातच्छाल्येतादृशतात्पर्यज्ञानस्ये
वसाध्यवदन्यइत्येतादृशवाक्यजन्यशाब्दबोधंप्रतिहेतुतयातस्यचतादृशसंबंधप्रकारताकत्वात्तज्ज्ञानाभावेनतदनुपपत्तिरि
तिचेन्न ॥ साध्यसंबंधविशिष्टसंबंधिनिष्ठाभावीयतत्तत्प्रतियोगितावच्छेदकत्वाभावकूटवद्धर्मावच्छिन्नप्रतियोगितासंबं
धावच्छिन्नसाध्यसंबंधविशिष्टनिष्ठप्रकारतानिरूपितभेदनिष्ठप्रकारतानिरूपितविशेष्यताशालिबोधजनकत्वनिष्ठप्रका

रतानिरूपितइच्छीयविशेष्यतासंबंधेनसाध्यसंबंधविशिष्टप्रकारकवाक्यविशेष्यकज्ञानस्यैवतादृशशाब्दबोधहेतुतयातस्यचतादृशसंबंधप्रकारकत्वाभावेनतादृशसंबंधज्ञानाभावेपिनतदनुपपत्तिः॥ शाब्दबोधेसंबंधतात्पर्यज्ञानंनहेतुःकिंतुप्रकरणज्ञानमेवेतिमताभिप्रायेणेतिकेचित्॥ अनियतसंबंधस्थलएवसंबंधतात्पर्यज्ञानंहेतुरित्यभिप्रायेणेदमुक्तसंबंधस्यनियतत्वान्नतज्ज्ञानापेक्षेत्यपरे॥ यद्यपिप्रतियोगितानांतत्तद्व्यक्तित्वेननिवेशेतत्तत्प्रतियोगिताव्यक्त्यवच्छेदकत्वाभावकूटवद्धर्मावच्छिन्नत्वमेवपर्यवसितंतच्चनकंबुग्रीवादिमत्वस्यसंबंधःकंबुग्रीवादिमत्वप्रतियोगिकपदार्थाघटितत्वात्तथापिस्वसमानाधिकरणतादृशकूटवद्धर्मावच्छिन्नत्वमेवसंबंधतयाविवक्षितंसामानाधिकरण्यघटकाधिकरणत्वांशस्यकंबुग्रीवादिमत्वप्रतियोगिकतयातद्घटितस्यनिरुक्तकूटवद्धर्मावच्छिन्नत्वस्यकंबुग्रीवादिमत्वसंबंधत्वनिर्वाहः॥ यद्वास्वविशिष्टसंबंधिनिष्ठाभावीयप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवद्धर्मावच्छिन्नत्वमेवसंबंधउभयावृत्तित्वपर्यंतमुपलक्षणंतस्यकंबुग्रीवादिमत्वप्रतियोगिकपदार्थघटितत्वात्तत्संबंधत्वनि

र्वाहइतिध्येयं॥ तदधिकरणावृत्तित्वरूपमिति॥ तदन्विताधिकरणवृत्तित्वाभावरूपमित्यर्थस्तेनसाध्यस्यासामाना
धिकरण्यपदार्थाघटकत्वेपिनक्षतिः॥ इदंचसमानमधिकरणंयस्यससमानाधिकरणस्तस्यभावःसामानाधिकरण्यंसाध्यस्यसा
मानाधिकरण्यंसाध्यसामानाधिकरण्यंनसाध्यसामानाधिकरण्यंसाध्यासामानाधिकरण्यमितिव्युत्पत्तिमभिप्रेत्यताद्दशव्युत्पत्तौ
समानमधिकरणंयस्येत्यत्रयत्पदोत्तरषष्ठ्याआधेयत्वमर्थःसमानपदस्याधेयतानिरूपकमर्थःअधिकरणपदार्थःसएवसमानपदार्थै
कदेशाधेयतायांषष्ठ्यर्थाधेयतायाअन्वयःसमानपदार्थस्याधिकरणपदार्थेऽभेदेनान्वयस्तथाचयन्निष्ठाधेयतानिरूपकाभिन्नमधिकरण
मितिविग्रहवाक्याद्बोधःसमानाधिकरणेतिसमासवाक्येआधेयतानिरूपकाऽधिकरणनिरूपिताधेयतावान्लक्षणयाऽधिकरणपदार्थः
समानपदंताद्दशार्थेलक्षणातात्पर्यग्राहकमेवसमानाधिकरणपदोत्तरभावप्रत्ययेनताद्दशाधेयत्वंबोध्यत्वेसाध्यस्यसामानाधिकर
ण्यमित्यत्रसाध्यपदोत्तरषष्ठ्यर्थआधेयत्वंतस्यसामानाधिकरण्यपदार्थघटकाधेयतायामन्वयस्ताद्दशसाध्यसामानाधिकरण्यपदार्थ
स्यनञर्थेऽभावेऽन्वयइतिसाध्यनिष्ठाधेयतानिरूपकाधिकरणनिरूपितवृत्तित्वाभावःसाध्यासामानाधिकरण्यपदार्थः॥ तदनधि

न्यायरत्ना करणवृत्तित्वस्येति ॥ समानमेवसामानंसाध्यस्यसामानंनभवतीतिसाध्यासामानंतदधिकरणंयस्यससाध्यासामानाधिक ग॰पं॰टी
१५८ रणस्तस्यभावः साध्यासामानाधिकरण्यमितिविग्रहेसमानपदार्थःआधेयतानिरूपकंतदेकदेशाधेयतायांसाध्यपदोत्तरषष्ठ्य
र्थाधेयतायाअन्वयः नञर्थोभेदवान्तदेकदेशेभेदेप्रतियोगितयासमानपदार्थान्वयस्तथाचसाध्यनिष्ठाधेयतानिरूपकभेदवा
न्साध्यासामानपदार्थःसाध्यासामानमधिकरणंयस्येतिबहुव्रीह्यावधिकरणपदार्थःआधेयतानिरूपकंतदेकदेशाधेयतायांयत्प
दोत्तरषष्ठ्यर्थाधेयतायाअन्वयस्तथाचयन्निष्ठाधेयतानिरूपकंसाध्यनिष्ठाधेयतानिरूपकभिन्नमितिविग्रहवाक्यार्थःसमासवा
क्येसाध्यानधिकरणवृत्तिर्लक्षणयाऽधिकरणपदार्थःसाध्यासामानपदंतादृशलक्षणातात्पर्यग्राहकंभावप्रत्ययेनतादृशवृत्ति
त्वंबोध्यतइतिसाध्यानधिकरणवृत्तित्वंसाध्यासामानाधिकरण्यपदार्थइतिकेचित् ॥ परेतुसाध्यपदंसाध्याधिकरणलक्ष
कंसमानपदस्याभिन्नमर्थः भावप्रधानोनिर्देशः यद्वाअभिन्नत्वंतदर्थस्तथाचसाध्यसमानमित्यस्यसाध्याधिकरणाभि
न्नत्वमित्यर्थस्ततश्चसाध्यसमानंनभवतीतिव्युत्पत्त्यानञोऽभाववतिलाक्षणिकतयासाध्याधिकरणाभेदाभाववान्साध्याधि १५८

करणभिन्नपर्यवसितः साध्यासामानपदार्थः अधिकरणत्वादिविद्वेदप्रतियोगिकाभावरूपस्यस्वरूपसंबंधरूपस्यस्वकृत्युभयात्रवृत्तिधर्मवत्वात्मक
तादात्म्यरूपस्यवाभेदस्यापि ससंबंधिकेन भेदेनवृत्तित्वेनवाघटिततया ससंबंधिकत्वान्नञोमध्यनिवेशस्यापिसाधुत्वाविघ
टकत्वात्तादृशार्थकसाध्यासामानपदेनाधिकरणपदस्यबहुव्रीहौभावप्रत्ययेचसाध्यानधिकरणवृत्तित्वं साध्यासामानाधिकरण्यपदाल्लभ्य
तइतिवदंति॥वक्ष्यमाणलक्षणाभेदइति॥ साध्यावैय्यधिकरण्यानधिकरणत्वरूपलक्षणार्थाभेदइत्यर्थस्तत्र।पिसाध्यस्यविअधिक
रणंयस्यससाध्यव्यधिकरणस्तस्यभावः साध्यवैय्यधिकरण्यमितिविग्रहेविपदस्याधिकरणंभेदश्चखंडशक्त्यार्थः अव्ययाना
मनेकार्थत्वात्षष्ठ्यंतसाध्यपदार्थान्विताधिकरणस्यभेदेतस्यचाधेयतानिरूपकरूपाधिकरणपदार्थैःधिकरणपदार्थैकदेश
धेयतायांयत्पदोत्तरषष्ठ्यर्थाधेयत्वस्यान्वयेयन्निष्ठाधेयतानिरूपकंसाध्याधिकरणभिन्नमितिविग्रहवाक्याद्बोधः॥ समासेतु
साध्याधिकरणभिन्नवृत्तिर्लक्षणयाःधिकरणपदार्थः पूर्वपदेतात्पर्यग्राहकेभावप्रत्ययेनतादृशवृत्तित्वं बोध्यतइतिसाध्यानधि
करणवृत्तित्वंसाध्यवैय्यधिकरण्यपदार्थः॥ पौनरुक्त्यापत्तिरितिक्वचित्पाठः॥ भिन्नकर्तृकमप्येकंलक्षणंवाक्यद्वयेनोपन्य

स्यतोमणिकृतइतिशेषः ॥ स्वानधिकरणाधिकरणार्थकत्वइति॥असमानाधिकरणपदेनसमानमसमानमसमानमधिकरणंयस्यत
द्समानाधिकरणमितिविग्रहेसमानपदार्थस्याधेयतानिरूपकस्यभेदविशिष्टरूपनञर्थैकदेशेभेदेन्वयःतथाचाधेयतानिरूपक
भिन्नमसमानपदार्थः अधिकरणपदार्थःआधेयतानिरूपकंतदैकदेशाधेयतायांषष्ठ्यंनयत्पदार्थस्ययन्निष्ठत्वस्यान्वयस्तथाचयन्नि
ष्ठाधेयतानिरूपकमाधेयतानिरूपकभिन्नमितिविग्रहवाक्यार्थःयद्यप्यसमानपदेनाधेयतानिरूपकसामान्यभेदोनविवक्षितुंशक्यो
ऽप्रसिद्धत्वात्तथापिसमानपदस्याधेयताविशेषनिरूपकलक्षकत्वादधिकरणविशेषभिन्नमेवतत्पदेनविवक्षितमेतल्लाभायैव
स्वानधिकरणेत्यत्रस्वपदमुपात्तं ॥ समासेतुस्वाधिकरणरूपाधिकरणविशेषभिन्नाधिकरणकंलक्षणयाऽधिकरणपदार्थःअत
समानपदंतात्पर्यग्राहकमितिस्वानधिकरणाधिकरणकमसमानाधिकरणपदार्थः॥ तदधिकरणानधिकरणकत्वपरतयेति
॥ असमानाधिकरणेत्यत्रनञ्व्यत्यासेनसमानानधिकरणेतिशब्दकल्पनयासमानंनअधिकरणंयस्येतिव्युत्पत्तौयदधिकरण
मधिकरणविशेषभिन्नमितिविग्रहवाक्यार्थःसमासवाक्येयदधिकरणानिष्ठभेदप्रतियोग्यधिकरणवृत्तिर्लक्षणयोत्तरपदार्थः

पूर्वंपदंतात्पर्यग्राहकमितितदधिकरणानधिकरणकमसमानाधिकरणपदार्थइतिकेचित् ॥ असमानाधिकरणमित्यत्रनसमानमधि
करणंयस्यसाध्यस्येतिव्युत्पत्तिस्तत्रचसमानपदार्थेशैवालाद्यधिकरणेयत्पदार्थसाध्याधिकरणभेदोविधेयोनतुसमानपदार्थभेद
साध्याधिकरणेविधेयइतिनञ्व्यत्यासंविनाप्युक्तार्थलाभइत्यन्ये ॥ **परेतु**नसमानमधिकरणंयस्यसाध्यस्येतिव्युत्पत्तौयत्पदार्थसा
ध्यस्यसमानपदार्थेऽधिकरणेऽन्वयस्तादृशाधिकरणविशेषितनञर्थभेदस्याधिकरणपदार्थेशैवालाधिकरणरूपेऽन्वयइतिस्वी
कारान्नञ्व्यत्यासंविनैवदर्शितार्थलाभःसंभवतीतिवदंति ॥ **यदधिकरणानधिकरणकंसाध्यंतत्वानधिकरणत्वस्य**
**व्याप्तित्वेपीति** ॥ यद्यप्ययमर्थोनसाध्यासामानाधिकरण्यानधिकरणत्वमितिलक्षणवाक्याल्लभ्यतेकिंतुसाध्यमसमानाधि
करणंयस्यतत्वानधिकरणत्वमितिविग्रहवाक्यादेवतथापितस्यतादृशलक्षणवाक्यतात्पर्यविषयत्वान्नासंगतिर्लक्षणवा
क्यतात्पर्यविषयीभूतार्थस्यैवलक्षणत्वस्यान्यत्रोक्तत्वाल्लक्षणवाक्यजन्यशाब्दबोधविषयीभूतार्थस्तूक्तलक्षणार्थाभिन्नइति
हृदयं ॥ **गौरवंचेति** ॥ **इदमुपलक्षणं** ॥ असर्वज्ञदुर्ज्ञेयतापिद्रष्टव्या ॥ **साध्यनिष्ठेति** ॥ साध्येऽसामानाधिकरण्यस्या

 धिकरणयत्किंचिद्व्यक्तिवृत्तित्वाभावोयस्यतत्साध्यासामानाधिकरण्यमितिव्युत्पत्त्याभावप्रधाननिर्देशात्साध्यनिष्ठासामानाधिकरण्य 
 लाभइतिकेचित् ॥ असामानाधिकरण्यप्रतियोगित्वस्यसामानाधिकरण्यएवसत्वाद्व्यभिचारिणिवह्न्यादिहेतुकेऽतिव्याप्तिरतआह
तत्प्रतियोगित्वंचेति ॥ साध्येति ॥ तादृशावच्छेदकत्वस्यायोगोलकवृत्तित्वेपर्याप्तत्वादतिव्याप्तिरतोनिरूपितत्वसंबंधे
नयदवच्छेदकमिति ॥ समवायित्वंसमवायानुयोगित्वंस्वरूपसंबंधेनहेतुः ॥ साध्यतावच्छेदकसंबंधावच्छिन्नत्वविवक्षणेपि
समवायेनवृत्त्यप्रसिध्याऽव्याप्तेर्दुर्वारत्वात्समवायेनहेतूपेक्षासमवेतत्वासमवेतत्वाभयाभावमादायतादृशप्रतियोगित्वप्रसिद्धेरवच्छे
दकाधिकरणाप्रसिध्युद्भावनं ॥ ननुसाध्यानिष्ठाभावप्रतियोग्यधिकरणत्वमेवविवक्षणीयंप्रतियोगिताचसाध्यतावच्छेदकसं
बंधावच्छिन्नाधेयतासंबंधावच्छिन्नत्वेनविशेषणीयासतायांसमवायावच्छिन्नाधेयतयाव्यधिकरणसंबंधेनसामान्याभावसंभ
वान्नदोषः ॥ नचवह्न्यादौसंयोगावच्छिन्नाधेयतासंबंधेनपर्वतहृदोभयाभावमादायतत्प्रतियोगितायाःपर्वतेसत्वादव्याप्तिरिति
वाच्यं ॥ व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनप्रतियोगितायाविवक्षणीयत्वादतआह ॥ वह्निमान्धूमादित्यादाविति ॥अ १६०

योगोलकीयेति ।। अथमहानसीयवह्न्यादौपर्वतवृत्तित्वाभावसत्वादव्याप्तिसंभवेऽयोगोलकीयवह्निपर्यंतानुधावने किंबीज
मितिचेद्धूमवान्वन्हेरित्यादौह्रदादिवृत्तित्वाभावमादायातिव्याप्तेर्दुर्वारणाययद्यद्व्यक्तिवृत्तित्वाभाववत्साध्यंतत्तद्वृत्तित्वानधिकरण
त्वंयदिविवक्ष्यतेतदावन्हिमान्धूमादित्यादौयावंतिहेतुमंतितत्तद्व्यक्तिवृत्तित्वाभावकूटमपिसंभवतीतिज्ञापयितुमित्यवेहि ।।
साध्यनिष्ठाधेयत्वेति ।। वैशिष्ट्यव्यासज्यवृत्तिधर्मातिरिक्तधर्मावच्छिन्नाधेयताधिकरणभेदेनभिन्नैवनतुस्वावच्छेदकध
र्मैक्येऽधिकरणभेदेप्यभिन्नेतिमतानुसरणाद्वन्हिनिष्ठसंयोगसंबंधावच्छिन्नाधेयत्वानिरूपकाधिकरणेगुणादौहेतुतावच्छेदक
संयोगसंबंधेनवृत्यप्रसिध्यावान्हिमान्धूमादित्यादावव्याप्तिरितिपूर्वपक्षानवकाशइतिध्येयं ।। दर्शितदिशाऽधेयत्वभेदेपियत्किंचिदा
धेयतानिरूपकत्वाभावमादायप्रसक्ताभव्याप्तिशंकांसाध्यनिष्ठाधेयतात्वरूपसामान्यधर्मपुरस्कारेणसाध्यनिष्ठाधेयतायाअ
निरूपकत्वांतविशेषणघटकतानतुयत्किंचिदाधेयतात्वेनेतिदीधित्याशयंप्रकटयन्वारयति ।। अनिरूपकत्वमिहेति ।।
अनिरूपकत्वांतविशेषणघटकाधेयत्वमित्यर्थः ।। आधेयतात्वावच्छेदेनेति ।। साध्यनिष्ठाधेयतात्वरूपसामान्यधर्मवि

शोषितमित्यर्थइति **केचित्** ॥ **परेतु** पद्याधेयतावच्छेदकभेदेनैवाधेयत्वतन्निरूपकत्वयोर्भेदस्तदा ऽ **निरूपकत्वं** ॥ अनिरू
पकत्वप्रतियोगिनिरूपकत्वं ॥ **आधेयतात्वावच्छेदेन** ॥ **आधेयतात्वव्यापकं** ॥ तथाचसाध्यनिष्ठाधेयतात्वव्यापक
निरूपकत्वावच्छिन्नभेदो निवेश्यइतिपर्यवसितं ॥ अत्रव्याप्यत्वंस्वाश्रयाश्रयत्वसंबंधेनव्यापकत्वंतुस्वनिरूपिताधेयतावत्व
संबंधेनग्राह्यंतेनाधेयतात्वनिरूपकत्वयोर्वैयधिकरण्येपिनक्षतिः ॥ **नचधूमवान्वह्न्यधिकरणत्वादित्यादौ** द्रव्यत्वावच्छि
न्नाधेयतासाधारणसाध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नभेदस्यगुणादावेवसत्वादतिव्याप्तिरितिवाच्यं ॥ ता
दृशाधेयतात्वव्याप्यत्वस्यापिनिरूपकत्वविशेषणत्वात्तादृशाधेयतात्वव्याप्यत्वंचसाध्यानुयोगिकत्वविशिष्टस्वाश्रयाश्र
यत्वसंबंधावच्छिन्नप्रतियोगिताकतादृशाधेयतात्वाभाववत्तिस्वनिरूपितवृत्तित्वसंबंधेनावृत्तित्वं ॥ **यदिचावच्छेदकैक्ये**
प्यधिकरणभेदेनैवाधेयताभेदस्तदासाध्यनिष्ठाधेयतानिरूपकंयद्यत्तत्तद्भेदकूटमेवनिवेश्यंसाध्यनिष्ठेत्यादिग्रंथस्याप्य
त्रैवतात्पर्यमितिवदंति ॥ अव्याप्यवृत्त्यधिकरणतायाअव्याप्यवृत्तित्वमते ऽ व्याप्यवृत्तिव्यभिचारिण्यतिव्याप्तिरभावेप्रति १६१

योगिवैय्यधिकरण्यादिप्रवेशेगौरवमित्यालोच्याह॥ **अथवेति**॥ **अप्रसिद्धेरतो हेत्वधिकरणत्वाभावस्येति**॥ एतेनहृ
त्यनियामकेनव्यधिकरणेनवासंबंधेनहेतुतास्थलेऽव्याप्तेरतिव्याप्तेर्वावारणमधिकरणत्वनिवेशनप्रयोजनमितिवर्णयंतोजगदी
शाः **परास्ताः**॥ यत्स्थलीयाव्याप्तिवारणायव्यापकताघटितपरिष्कारारंभस्तत्रैवसत्तावान्द्रव्यत्वादित्यादावधिकरणत्वनिवेश
प्रयोजनसंभवेतदुपेक्षायानिर्बीजत्वादिति **ध्येयं**॥ **पूर्वनिपातितस्यैवनञइति** अत्रयद्यत्यंताभावार्थकेननञाउत्तरपदा
र्थाभावेविद्यमानंयद्व्ययंतत्समस्यतइत्यर्थकेनअव्ययंविभक्तीत्यादिसूत्रेणसिद्धोव्ययीभावः यद्विवास्फबंतेननञ्समस्यते
इत्यर्थकेननञितिसूत्रेणसिद्धस्तत्पुरुषोवाश्रियतेउभयथापिनञएवपूर्वनिपातस्तस्यैवाव्ययमितिनञितिचप्रथमांतपदप्रति
पाद्यत्वेनसमासशास्त्रेप्रथमांतशब्दप्रतिपाद्यमुपसर्जनसंज्ञंस्यादित्यर्थकेनप्रथमानिर्दिष्टंसमासउपसर्जनमितिसूत्रेणोपस
र्जनसंज्ञत्वादुपसर्जनंपूर्वमितिपाणिनिनाऽभिधानादितिभावः॥ **प्रत्ययानुपपत्तेरिति**॥ तथाचागत्यापृषोदरादिगणपा
ठकल्पनयापृषोदरादीनियथोपदिष्टमित्यनेनैवनिरुक्तप्रयोगाणांसाधुत्वमुपपादनीयमितिभावः॥ **केचित्तु** घटानधिकरणत

मित्यादावधिकरणपदमेवघटाधिकरणलाक्षणिकंघटपदंतुतात्पर्यग्राहकमाकांक्षानिर्वाहकं॥आगमविकरणशबादिवत्॥ए
वंसतिनप्राथमिकसमासासंभवः असमानाधिकरण पदस्ययदधिकरणानधिकरणत्वरूपार्थस्यदीधित्युक्तस्यनसमान
मसमानमित्याद्यधिकरणविशेषार्थकसमानपदस्यनञाप्राथमिकसमासमभ्युपेत्यैववक्तव्यत्वाच्च॥नचघटपदमेवघटाधिकर
णलाक्षणिकमधिकरणपदंतात्पर्यग्राहकमितिकुतोनस्यादितिवाच्यं॥नञःउत्तरपदार्थभेदबोधकत्वव्युत्पत्तिभंगापत्तेरितिन
अधिकरणमनधिकरणमितिदर्शितव्युत्पत्त्यैवविवक्षितार्थलाभसंभवेनञोमध्यनिवेशोऽप्रामाणिकएवेतिवदंति॥साध्यनि
ष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपेति॥इदमुपलक्षणंसाध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वरूपस्याप्यर्थस्यला
भःसंभवतितथाहिसाध्येऽधिकरणानधिकरणत्वंयदधिकरणवृत्तित्वाभावोयस्यतत्साध्याधिकरणानधिकरणत्वंभावप्र
धानतयातत्वलाभस्तदभावश्चसाध्यपदोत्तरनञाबोध्यतइतिसाध्यनिष्ठासामानाधिकरण्यसंबंधित्वाभावलाभःसंबंध
श्चप्रतियोगित्वमेवेति॥परेतुसाध्यनिष्ठाधेयत्वानिरूपकत्वस्यसाध्यवद्भिन्नत्वस्यवाव्यापकीभूतोयोऽभावस्तत्प्रतियोग्य

धिकरणतासामान्यकत्वरूपोप्यर्थः साध्यानधिकरणानधिकरणत्वशब्दात्प्रतिपादयितुंशक्यतेतथाहिसाध्यानधिकरणम
धिकरणंयस्येतिव्युत्पत्तिस्तत्रसाध्यानधिकरणमित्यस्यसाध्यनिष्ठाधेयत्वानिरूपकंसाध्यवद्भिन्नंवार्थःअनधिकरणंयस्येत्य
त्राधिकरणपदमन्यपदार्थहेत्वधिकरणलाक्षणिकंयस्येतितात्पर्यग्राहकं ॥ अथवाऽधिकरणपदमाधेयताविशेषनिरूपकरू
पाधिकरणेलाक्षणिकंतदेकदेशाधेयताविशेषेयस्येतिषष्ठ्यंतार्थहेतुनिष्ठत्वस्यान्वयोभावप्रधाननिर्देशाच्चानधिकरणमि
त्यनेनहेत्वधिकरणत्वाभावलाभः इत्थंचोद्देश्यतावच्छेदकव्यापकत्वमसतिबाधकेविधेयेभासतइतिव्युत्पत्तिबलाद्धेत्वधि
करणत्वाभावरूपेविधेयेसाध्यानधिकरणत्वरूपोद्देश्यतावच्छेदकव्यापकत्वलाभइतिवदंति ॥ यथासंभवमितिना
नाव्यक्तिसाध्यकहेतुत्वसामानाधिकरण्येनेत्यर्थः ॥ अवच्छेदकावच्छेदेनान्वयेबाधकमाह ॥ तेनेति ॥ यद्यपिशब्दवा
न्गगनत्वादित्यादावपिनाव्याप्तिस्तथाप्यग्रेविवक्षणीयमिथोव्यधिकरणद्व्यवृत्तिसाध्यतावच्छेदककत्वरूपनानाव्यक्ति
साध्यकत्वशरीरनिविष्टमिथःपदप्रयोजनंनतत्रेतितत्त्यागः ॥ वक्ष्यमाणरीत्या ॥ एकसाध्यव्यक्तिनिष्ठाधेयत्वेत्यादिरी

त्वा ॥ अत एवाग्रेनानाधिकरणसाध्यकेसर्वत्रेतिवक्ष्यतीति ॥ अत्रसर्वत्रेत्यस्यानुक्तौपूर्ववदेवसामानाधिक
रण्येनान्वयभ्रमःस्यादित्याशयइतिकेचितू ॥ अग्रएवसर्वत्रेतिवक्ष्यतीत्यर्थस्तथाचाग्रइवेहाप्यवच्छेदकावच्छेदेनान्वय
स्यविवक्षितत्वेऽत्रापिसर्वत्रेतिपठेदित्यपरे ॥ मिथोव्यधिकरण द्वयवृत्तिसाध्यतावच्छेदककइति ॥ यद्यपिमिथोव्य
धिकरणत्वंनपरस्परानधिकरणवृत्तित्वंभूतत्वाभावभावमूर्तत्वाभावान्यतरवान्गुणत्वादित्यादेरप्युद्देश्यतावच्छेदका
क्रांततयातत्राव्याप्तिरूपविधेयाभावेनबाधापत्तेः ॥ नापिपरस्पराधिकरणावृत्तित्वंतादृशान्यतरसाध्यकमनस्त्वहेतो
रसंग्रहापत्तेः ॥ एतेनपरस्परानधिकरणहेत्वधिकरणवृत्तित्वमपिनिरस्तं ॥ तथापियत्किंचित्साध्यानधिकरणहे
त्वधिकरणवृत्तित्वेतात्पर्यान्नदोषः ॥ अधिकरणनिरूपकतावच्छेदकस्यैवेति ॥ अत्रजगदीशमथुरानाथौविशि
ष्टसत्तागुणवृत्तिरितिधीःप्रमैवविशिष्टसत्तावान्गुणइतिधीरप्रमैवेतिस्वानुभवानुसारेणकल्पयंतोविशिष्टसत्तात्वंगु
णनिष्ठाधिकरणतानिरूपकतानवच्छेदकमपिगुणनिरूपिताधेयतावच्छेदकंभवत्येवेतिमन्येते गदाधरास्त्वविशेषे १६३

णदर्शितधीद्वयस्याप्रमात्वंमन्यमानाविशिष्टसत्तात्वस्यगुणनिरूपिताधेयतावच्छेदकत्वंनक्षमंतदितिध्येयं॥नानाव्यक्तिके
तिनोक्तमिति॥अथैवमप्यत्रसर्वत्रेतिपदंकिमर्थंपूर्ववदेवयथासंभवमव्याप्त्यापिनिर्वाहादथसर्वत्रेत्यनुक्तौद्वितीयस्य
वैकल्पिकस्यार्थस्यकेवलान्वयिभिन्नएवनानाधिकरणसाध्यकेऽव्याप्तिरितिभ्रमःस्यादतःसर्वत्रेतिवक्तव्यमेतत्सूचनायै
वसर्वत्रेत्यस्यकेवलान्वयिनिव्यतिरेकिणिचेतिभवानंदादीनांव्याख्यानमितिचेन्न॥एवंसतिनानाव्यक्तिकइतिपूर्वग्रंथे
पिसर्वत्रेतिवक्तव्यंस्यादन्यथाप्रथमलक्षणीयद्वितीयवैल्पिकार्थस्याव्याप्तेस्तत्रसत्वेनतदकथनेनन्यूनतासाम्यात्॥
मैवंनानाव्यक्तिसाध्यकेचेतिचकारेणकेवलान्वयिनोपिसमुच्चयात्सर्वत्रेतितत्रानुक्तावपिन्यूनताविरहात्॥नन्वत्रापिस
र्वत्रेतिस्थानेचकारंपठित्वाकेवलान्वयिसाध्यकसमुच्चयःकुतोनकृतःवैरूप्यस्यान्याय्यत्वादितिशंक्यमुपायस्योपायां
तरादूषकत्वात्॥अथनानाव्यक्तिकेत्यस्यस्थानेनानाधिकरण[illegible]कुतोनोक्तंद्रव्यंपृथिवीत्वादित्यादौपूर्वलक्षणस्या
व्याप्तिविरहेपियथासंभवमव्याप्तौतात्पर्यस्यवक्तुंशक्यत्वादितिचेन्न॥पूर्वलक्षणेसाध्याधिकरणनानात्वंनाव्याप्तिप्र

योजकंकिंतुसाध्यनानात्वमित्याशयेनपूर्वंनानाव्यक्तिसाध्यकेत्युक्तंतदपि एतद्वृत्तियावद्धर्मसाध्यकेव्यभिचारेणयथा
श्रुतंनप्रयोजकमितिमिथोइत्यादिरीत्यापारिभाषिकंतदनुसृतमितिध्येयं ॥ यद्धेतुमदिति ॥ यत्किंचित्पदार्थवदित्युक्तौ
तृणादिमत्त्वावयवावच्छेदेनवन्हिसामानाधिकरण्याभावस्यधूमादावक्षतत्वात्तद्दोषतादवस्थ्यमतोहेतुनिवेशः ॥ धूमेपर्वते
नवन्हिमत्संयुक्तत्वमितिप्रतीतेरधिकरणभेदेनक्लृप्तधूमनिष्ठातिरिक्ताधिकरणतायामेवपर्वतावच्छिन्नत्वभानमुपगम्यवार
णसंभवात्पर्वतावच्छिन्नत्वविशिष्टतादृशाभावनिरूपितविलक्षणाधिकरणतास्वीकारोव्यर्थइत्यभिप्रायेणाह ॥ अभा
वाधिकरणतायामेववेति ॥ यद्यपिपूर्वकल्पेविशिष्टाधिकरणतानिवेशोव्यर्थःसार्वभौममतेविशिष्टातिरिक्तत्वाद्धे
त्वधिकरणावच्छिन्नत्वविशिष्टानधिकरणत्वनिवेशादेवाव्याप्तिवारणसंभवात्तथापिमतद्वयसाधारण्येनतन्निवेशोबो।
ध्यः ॥ परस्परेति ॥ यथारूपनिष्ठायांतदधिकरणतायांस्वावयवोनावच्छेदकस्तथाधूमनिष्ठतदधिकरणतायांपर्वतोनाव
च्छेदकइत्यर्थः ॥ कालोपाधितयेति ॥ कालत्वेनेत्यर्थः ॥ एतेनपर्वतस्यतादृशाभावावच्छेदकत्वेइदानीमित्यादिप्रती

तिरेव नियामिका नास्तिह पर्वते इत्यादि प्रतीतिरिति सूचितं ॥ **वैलक्षण्यमिति** ॥ अखंडोपाधिरूपमिति शेषः ॥ प्रकारांतरेण वैलक्षण्यमाशंक्य निराकुरुते ॥ **नचेति** ॥ **व्यभिचारिणीति** ॥ महाकालभिन्नो घटत्वादित्यादाविव्यर्थः ॥ **नच** महाकालावच्छेदेन महाकालान्यवृत्तित्वाभावस्य महाकालवृत्तिवृत्तितया कालिकसंबंधानवच्छिन्नतादृशाधिकरणताप्रसिद्ध्यैव नातिव्याप्तिरिति शंक्यं ॥ महाकालपरिमाणनिष्ठतादृशाधिकरणतायां महाकालस्य कालिकसंबंधेनेव समवायेनाप्यवच्छेदकत्वसंभवात्समवायावच्छिन्नाधिकरणतायां कालिकसंबंधानवच्छिन्नत्वप्रसिद्धिसौलभ्यात् ॥ **कालिकव्याप्यवृत्तावपीति** ॥ आकाशत्वे इदानीमाकाशत्वसामानाधिकरण्यं न तदानीमिति प्रत्ययाभावादिति भावः ॥ **यद्यपि** व्याप्यवृत्ताविव्यस्य सामानाधिकरण्ये इति क्लीबविशेषणत्वात्क्लीबत्वमवेक्षितमिति व्याप्यवृत्तिनीत्येव वक्तुमुचितं **तथापि** व्याप्यवृत्तिपदे व्याप्यानिरवच्छिन्ना वृत्तिर्यस्येति विग्रहात्तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति सूत्रेण तृतीयादिविभक्तौ परतः पुरुषसाधारणप्रवृत्तिनिमित्तकशब्दस्य पुंवद्भावविधानात्प्रकृते व्याप्यवृत्तिशब्दप्रवृत्तिनिमित्तस्य निरवच्छिन्नवृत्तित्वस्य पुरुषसाधारण्यान्न

 पुंवद्भावानुपपत्तिरिति ध्येयं ॥ दैशिकसंबंधेनात्मत्वानधिकरणेति ॥ एतेनकालिकसंबंधातिरिक्तसंबंधेनतस्याव 
 च्छेदकत्वाभावः सूचितः ॥ कालिकाव्याप्यवृत्तित्वापत्तेरिति ॥ तत्कालावच्छिन्नत्वस्यतदन्यकालावच्छेदेनतद्वृत्त्यभावप्रति
योगित्वव्याप्यत्वात्तदुपगमेतादृशप्रतियोगित्वापत्तेरित्यर्थइतिकेचित् ॥ वस्तुतस्त्वाकाशत्वमिहात्मत्वसमानाधिकरणमि
तिप्रतीतिवदाकाशांतर्भावेणाकाशत्वमात्मत्वसमानाधिकरणमिहनेतिप्रतीतिरप्यनुभवसिद्धा तत्रप्रथमप्रतीतौकालिकसंबं
धावच्छिन्नत्वरूपंकालविधयाऽवच्छेदकत्वंयदिभासतेतदानेदानीमितिप्रतीत्यापत्तेरितिभावः ॥ धूमाद्यंतरसंयुक्तेति ॥
यद्यपिस्वावयवसंयुक्तधूमादौतादृशाभावानधिकरणत्वसंभवान्नहेतुपदस्यतद्धेतुपरत्वंयुक्तंतथापिधूमवान्वन्हेरित्यादौपर्व
तीयवन्हौतादृशाभावानधिकरणत्वमादायातिव्याप्तेर्वारणायहेतुतावच्छेदकावच्छेदेनतदनधिकरणत्वविवक्षणावश्यकत्वाद्यु
क्तंतद्धेतुपरत्वंहेतुपदस्य ॥ ननुहेतुपदस्यतद्धेतुपरत्वेव्याप्तेस्तत्तद्व्यक्तिरूपतापत्त्यानकस्यापितद्व्यक्तित्वस्यानतिप्रसक्तंधूमत्वमि
तिधूमत्वस्यव्याप्यतावच्छेदकत्वंनस्यान्नचेष्टापत्तिर्धूमत्वावच्छिन्नहेतुकानुमित्यपलापापत्तेर्धूमादित्यादिन्यायप्रयोगासांगत्याप 

त्तेश्चेत्यत आह ॥ एवंचेतिकेनापिरूपेणेति॥ अन्यतमत्वादिनेत्यर्थः॥ धूमत्वादिकमवच्छेदकमिति ॥ तावत्तत्तद्व्य
क्तित्वान्यतमत्वावच्छिन्नानतिप्रसक्तस्यधूमत्वादेर्व्याप्यतावच्छेदकत्वंनिराबाधंतावद्व्याप्तीनांस्वप्रतियोगिवृत्तित्वस्वसामानाधिकर
ण्योभयसंबंधेनभेदविशिष्टान्यत्वरूपानुगततद्व्यक्तित्वत्वरूपसामान्यप्रत्यासत्त्या ज्ञातुंशक्यत्वान्नदुर्ज्ञेयतापीतिभावः॥ अथै
वमपिसत्तावान्समवायेनप्रमेयादितिप्रयोगानुपपत्तिरसमवेतप्रमेयस्यनिरुक्तव्याप्त्यघटकत्वेनप्रमेयत्वस्यसमवेतप्रमेयनिष्ठ
तत्तद्व्यक्तित्वान्यतमत्वावच्छिन्नातिप्रसक्ततया तदवच्छेदकत्वविरहादितिचेन्न॥ तादृशान्यतमत्वावच्छिन्नानतिप्रसक्तशब्दे
नतादृशान्यतमत्वंहेतुतावच्छेदकसंबंधप्रतियोगिनियद्धर्मविशिष्टेवर्तमानाभावप्रतियोगितायामनवच्छेदकंतत्वस्यविवक्षित
त्वात्॥ अनुगतव्याप्तिंवदतांमतमाह॥ यत्विति॥ हेतुतावच्छेदकसंबंधेनस्वानुयोगिनोयदधिकरणमिति ॥ स्व
पदमधिकरणतासामान्यपरंतथाचहेतुतावच्छेदकसंबंधेनस्वानुयोगिनोयदधिकरणंतदनवच्छिन्नायायास्वात्मिकाधिक
रणतातत्तदन्यसाध्यसामानाधिकरण्याभावाधिकरणतावद्भिन्नत्वमित्यर्थस्तेनधूमवान्वह्नेरित्यादोस्वपदग्राह्यघटादिनिष्ठ

धिकरणताश्रयानुयोग्यनवच्छिन्नाधिकरणतासामान्यभेदस्यस्वस्मिन्नेवसत्वेपिनातिव्याप्तिः॥ अथोत्पत्तिकालेधूमेनवन्हि
मत्संयुक्तत्वमितिप्रतीतिसिद्धाभावाधिकरणतामादायधूमादावव्याप्तिवारणायस्वानुयोग्यधिकरणानवच्छिन्नत्वमित्यत्रस्वानु
योग्यधिकरणनिष्ठावच्छेदकतायांहेतुतावच्छेदकसंबंधावच्छिन्नत्वस्यावश्यनिवेश्यंतथाहेतुतावच्छेदकसंबंधावच्छिन्नावच्छे
दकताकान्यायाअधिकरणतातदन्यायासाध्यसामानाधिकरण्याभावाधिकरणतातद्भिन्नत्वमेवलक्षणमस्तुहेतुतावच्छेदक
संबंधेनस्वानुयोग्यधिकरणांशस्यवैय्यर्थ्यमितिचेन्न॥ तथासतिहेतुतावच्छेदकसंबंधावच्छिन्नातीतानागतदेशांतरीयका
लांतरीयावच्छेदकतानामपिलक्षणेनिवेशापत्यागौरवात्॥ किंचसत्तावान्द्रव्यत्वादित्यादावव्याप्तिस्तत्रासमवेतवृत्यधिकर
णतायाहेतुतावच्छेदकसंबंधावच्छिन्नावच्छेदकताकान्यत्वात्समवेतेचसाध्यसामानाधिकरण्याभावाधिकरणतायाअसत्वेन
हेतुतावच्छेदकसंबंधावच्छिन्नावच्छेदकताकान्याधिकरणतान्यतादृशाधिकरणतायाअप्रसिद्धेः॥ नचोत्पत्तिक्षणविशि
ष्टद्रव्येगुणेनसत्तावत्समवेतत्वमितिप्रतीत्योत्पत्तिक्षणविशिष्टद्रव्यावच्छेदेनसत्तावत्समवेतत्वाभावाधिकरणतायागुणादौ

प्रसिद्ध्यातस्याएवहेतुतावच्छेदकसंबंधावच्छिन्नावच्छेदकताकान्याधिकरणतान्यसाध्यसामानाधिकरण्याभावाधिकरणतात्वात्तद्भिन्न
त्वस्यहेतौसत्वाल्लक्षणसमन्वयः संभवतीति**वाच्यं** ॥ स्वानुयोग्यधिकरणांशानिवेशेप्युत्पत्तिक्षणविशिष्टपर्वतेधूमेनवन्हिमत्संयुक्तत्व
मितिप्रतीतिसिद्धसाध्यसामानाधिकरण्याभावाधिकरणतामादायाव्याप्तेर्वारणायतादृशप्रतीतेरुत्पत्तिक्षणविशिष्टपर्वतावच्छेद्य
त्वाभावविषयकत्वस्यैवोपगमात्तत्समशीलोत्पत्तिक्षणविशिष्टद्रव्येइत्याद्याकारकदर्शितप्रतीतेरुत्पत्तिक्षणविशिष्टद्रव्यावच्छेद्य
त्वाभावविषयकतयातादृशाधिकरणतान्यसाध्यसामानाधिकरण्याभावाधिकरणतायाः सत्तावान्द्रव्यत्वादित्यादावप्रसिद्धेरितिहे
तुतावच्छेदकसंबंधेनस्वानुयोग्यधिकरणांशानिवेशः ॥ तत्रैवस्वानुयोगित्वविशेष्यतयाहेतुतावच्छेदकावच्छिन्नस्यनिवेशायहेतुप
दंहेतुतावच्छेदकावच्छिन्नपरमित्युक्तमन्यथाद्रव्यंविशिष्टसत्वादित्यादावव्याप्त्यापत्तेःसत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावाधि
करणतायाः स्वानुयोग्यधिकरणगुणाद्यनवच्छेद्यत्वविरहेणस्वपदेनोपादानासंभवात् ॥ **उक्तदोषस्येति** ॥ उत्पत्तिकालेधूमेन
वन्हिमत्संयुक्तत्वमितिप्रतीतिसिद्धधूमनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतामादायाव्याप्तेरित्यर्थः ॥ **हेतुतावच्छे**

दकसंबंधावच्छिन्नत्वनिवेशेनापीति ॥ अपिनाविलक्षणदेशविधयाऽवच्छेदकत्वनिवेशेनाप्युक्तदोषवारणंकर्तव्य
मिति सूचितं ॥ अत्रेदंबोध्यं ॥ स्वानुयोग्यधिकरणनिष्ठावच्छेदकतायांहेतुतावच्छेदकसंबंधावच्छिन्नत्वनिवेशेहेतुतावच्छेद
कसंबंधेनस्वानुयोग्यधिकरणत्वनिवेशोव्यर्थ ॥ स्वावयवावच्छिन्नायाः साध्यसामानाधिकरण्याभावाधिकरणतायाहेतुतावच्छेदक
संबंधावच्छिन्नावच्छेदकताकान्यत्वेनस्वानुयोग्यधिकरणानवच्छिन्नत्वानपायेनतादृशांयत्त्वंतदन्यत्वविरहेणतामादायाव्याप्त्यन
वकाशात् ॥ नन्वेवंरूपनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतायाअपिस्वानुयोग्यधिकरणनिष्ठहेतुतावच्छेदकसंबंधा
वच्छिन्नावच्छेदकताकान्यत्वेनतादृशांयद्यत्त्वंतदन्यसाध्यसामानाधिकरण्याभावाधिकरणतायाअप्रसिद्धिरितिवाच्यं ॥ सा
ध्यशून्येहेतुतावच्छेदकसंबंधेनयोवृत्तिमान्तन्निष्ठसाध्यसामानाधिकरण्याभावाधिकरणतायाः स्वानुयोग्यधिकरणनिष्ठहेतु
तावच्छेदकसंबंधावच्छिन्नावच्छेदकताकत्वेनस्वपदेनोपादानासंभवात्तस्याएवतादृशांयद्यत्त्वंतदन्यसाध्यसामानाधिकरण्या
भावाधिकरणतात्वात्तामादायैवसर्वत्रलक्षणसमन्वयसंभवात् ॥ यत्तुस्वानुयोगिनोयदधिकरणमित्यत्रयद्यौधिकरणमिति

वक्तव्यमन्यथाद्रव्यंसत्वादित्यादौसत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावाधिकरणतायाःस्वानुयोग्यधिकरणंयद्द्रव्यंतदनवच्छि
न्नत्वेनतदन्यत्वाभावादतिव्याप्तेस्तथाचहेतुतावच्छेदकसंबंधेनस्वानुयोग्यधिकरणत्वानिवेशोवन्हिमान्धूमादित्यादौकालिकसंबंधेनस्वा
नुयोग्यधिकरणध्वंसादिनिष्ठहेतुतावच्छेदकसंबंधावच्छिन्नावच्छेदकतायाअप्रसिद्धेर्धूमावयवावच्छिन्नसाध्यसामानाधिकरण्या
भावाधिकरणतायाःस्वपदेनोपादानासंभवेनतादृशंयत्स्वंतदन्यत्वेनाव्याप्तिप्रसंगइतितन्निवेशइतितन्न ॥ स्वानुयोग्यधिकरण
तावन्निष्ठहेतुतावच्छेदकसंबंधावच्छिन्नावच्छेदकताकत्वसामान्याभावरूपस्वानुयोग्यधिकरणानवच्छिन्नत्वनिवेशेनद्रव्यंसत्वाद्
त्यादावतिव्याप्तिवारणाद्यद्यादिति निवेशानावश्यकत्वात् ॥ यदपि हेतुतावच्छेदकसंबंधेनेतितृतीयांतंस्वानुयोग्यधिकरणांशे
नान्वेतिकिंतुस्वानुयोग्यधिकरणानवच्छिन्नेत्यत्रावच्छेदकतायामेवेतिनतद्वैयर्थ्यमितितदपिन ॥ तथासतिरूपादिनिष्ठ
निरुक्ताधिकरणतायांधूमादिप्रसिद्धनिरुक्ताधिकरणतानांभेदस्याक्षततयातद्वदन्यत्वेनधूमादौलक्ष
णसमन्वयादितिग्रंथविरोधादिति ॥ साध्यवत्त्वंचोपलक्षणविधयेति ॥ तथाचयदुपलक्षितनिरूपितसमवायादेरेव

च्छेदकताघटकसंबंधत्वंतस्योपलक्षणतयाऽवच्छेदकत्वमितिसिद्धांतलक्षणेवक्ष्यमाणरीत्यासाध्यस्योपलक्षणतयाऽवच्छेदकत्ववि
वक्षायांसाध्योपलक्षिताधिकरणप्रतियोगिकनिरूपितत्वसंबंधावच्छिन्नसाध्याधिकरणनिष्ठावच्छेदकताकवृत्तित्वत्वावच्छिन्नप्रतियो
गिताकाभावःसाध्यसामानाधिकरण्याभावपदेनविवक्षणीयः॥ यद्वा स्वावच्छिन्ननिरूपकताकत्वसंबंधावच्छिन्नसाध्यनिष्ठावच्छेदक
त्वानिरूपितवृत्तित्वनिष्ठप्रतियोगिताकाभावस्तत्पदेनविवक्षणीयः साध्यविशिष्टाधिकरणवृत्तित्वाभावप्रतीतौचसाध्यस्याधिक
रणांशेभासमानस्यधर्मिपारतंत्र्येणवृत्तित्वरूपप्रतियोग्यंशेभाननियमात्ताद्दशप्रतीतिविषयाभावस्यात्तथात्वान्नतमादायोत्प
त्तिकालीनघटोगंधवान्पृथिवीत्वादित्यादावव्याप्तिः॥ ननुगंधानधिकरणोत्पत्तिकालविशिष्टपृथिव्यांपृथिवीत्वेनगंधवत्समवे
तत्वमितिप्रतीतिर्यथोत्पत्तिकालविशिष्टपृथिव्यवच्छेदेनपृथिवीत्वेगंधविशिष्टनिरूपितसमवेतत्वाभावमवगाहतेतथाधूमानिष्ठप
र्वतवृत्तितानवच्छेदकनितंबधूमासमानकालादिविशिष्टपर्वतेधूमेनवन्हिमत्संयुक्तत्वमितिप्रतीतिरपिताद्दशविशिष्टपर्वताव
च्छेदेनवन्हिमत्संयुक्तत्वाभावमवगाहतइतितद्विषयाभावमादायाव्याप्तिः॥ यदिचविशेष्यस्यपर्वतादेःप्रतियोग्यवच्छेदकतयावि

शिष्टस्य तस्य नाभावावच्छेदकत्वमिति तादृशाभावो धूमादावसिद्ध इत्यरुच्यते तदाशुद्धपृथिव्या अपि प्रतियोग्यवच्छेदकतया विशि
ष्टपृथिव्या अभावावच्छेदकत्वासंभवेन तादृशाभावोपि पृथिवीत्वादावसिद्ध इत्यधिकरणांशे साध्यस्योपलक्षणतयावच्छेदकत्वनिवेशो
निरर्थक इत्यभिप्रायेण शंकते ॥ नन्वेवं धूमादाविति ॥ एवं विशेष्यस्य प्रतियोग्यवच्छेदकत्वेपि किंचिद्रूपेणाभावावच्छेदकत्वे ॥
अनवच्छेदकत्वादिति ॥ अवच्छेदकघटकीभूतविशेषणविशेष्ययोरवच्छेदकतया भाने तयोरवच्छेद्याधिकरणाधिकरणत्वं नि
यामकमन्यथा ह्रदविशिष्टपर्वते धूमेन वन्हिमत्संयुक्तत्वमिति प्रतीत्यापत्तेरेवं च धूमवृत्तितानवच्छेदकदेशकालयोरवच्छेद्याधि
करणधूमानधिकरणत्वाद्धूमादौ तादृशाभावासिद्ध्या न तमादाय व्याप्तिरुत्पत्तिक्षणपृथिव्योः पृथिवीत्वस्य नित्यतयाऽवच्छेद्याधिकर
णतदधिकरणत्वसंभवेनोत्पत्तिक्षणविशिष्टपृथिव्यां पृथिवीत्वेन गंधविशिष्टसमवेतत्वमिति प्रतीतिसंभवादधिकरणांशे सा
ध्यस्योपलक्षणतयाऽवच्छेदकत्वविवक्षणं सार्थकमिति भावः ॥ नन्वेवमिति ॥ एवं विशिष्टस्यावच्छेदकत्वे विशेषणविशेष्य
योरुभयोरेवावच्छेद्याधिकरणाधिकरणत्वस्य नियामकत्व इत्यर्थः ॥ इत्यादिरप्यर्थ इति ॥ आदिपदेन तादृशप्रतीतेरवच्छे

घत्वाभावावगाहित्वमपिसंभवतीतिसूचित ॥ हेत्वधिकरणमात्रावच्छिन्नेति ॥ अथहेत्वधिकरणमात्रावच्छिन्नत्वस्यहेत्वधिकरणा
न्यानवच्छिन्नत्वसहितहेत्वधिकरणावच्छिन्नत्वरूपत्वेकेवलान्वयिनीदंवाच्यंज्ञेयत्वादित्यादावव्याप्तिर्हेत्वधिकरणान्याप्रसिद्धेः ॥ अतएवहे
त्वधिकरणनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वसहितहेत्वधिकरणनिष्ठावच्छेदकतानिरूपकत्वंतदित्यपिनसर्वस्याअप्यवच्छे
दकतायाहेत्वधिकरणनिष्ठत्वात्तदन्यावच्छेदकतायास्तत्राप्रसिद्धत्वात् ॥ नचहेत्वधिकरणनिष्ठादेशविधयायाऽवच्छेदकतातदन्याव
च्छेदकत्वानिरूपकत्वादिकमेवतदितिनोक्तस्थलेऽव्याप्तिरितिवाच्यं ॥ एवंसतितथासतीत्यादिनावक्ष्यमाणातिव्याप्त्यसंभवःरूप
निष्ठाधिकरणतायामप्ययोगोलकेरूपेनधूमवत्संयुक्तत्वमिदानींरूपेनधूमवत्संयुक्तत्वमितिप्रतीतिभ्यामयोगोलकोत्पत्तिकालोभया
वच्छिन्नत्वावगाहनात्तादृशाधिकरणतायाअप्रसिद्धेः ॥ एतेनस्वावच्छेदकताव्यापकहेत्वधिकरणताकत्वमेवतदितिनिरस्तं ॥
यदिचगगनादिनिष्ठाधिकरणतैवतादृशीत्युच्यतेतदावन्हिमान्धूमादित्यादावपितस्याएवप्रसिद्धत्वात्तत्रैवसंबंधांतरेणवर्तमान
इतिग्रंथविरोधइतिचेन्न ॥ तादृशग्रंथस्ययथाश्रुताभिप्रायकत्वात् ॥ वस्तुतस्तु ॥ हेत्वधिकरणनिष्ठायादेशविधयाऽवच्छेदक १६९

तातदन्यहेतुतावच्छेदकसंबंधावच्छिन्नस्वानुयोगिनिरूपिताधिकरणतानवच्छेदकनिष्ठावच्छेदकताकंयद्यत्स्वं त्तत्तद्भिन्नसा
ध्यसामानाधिकरण्याभावाधिकरणतावद्भिन्नत्वमितिनिष्कर्षोविवक्षितः इत्थंचरूपनिष्ठाधिकरणतायाः स्वानुयोगिनिरूपितहे
तुतावच्छेदकसंबंधावच्छिन्नाधिकरणताप्रसिद्ध्यास्वपदेनोपादानायोगेनसंबंधांतरेणेतिग्रंथसंगतिधूमवह्न्यादिनिष्ठाधिकरणतायाहेतु
तावच्छेदकसंयोगसंबंधावच्छिन्नस्वानुयोगिनिरूपिताधिकरणतानवच्छेदकोत्पत्तिकालस्वावयवादिनिष्ठावच्छेदकतानिरूपकतया
स्वपदेनोपादानसंभवान्नाव्याप्तिर्वक्ष्यमाणातिव्याप्त्यभावोवेतिध्येयं ॥ अवच्छेदकांतरानवच्छिन्नेति ॥ किंचिन्निष्ठावच्छे
दकतानिरूपितहेत्वधिकरणनिष्ठावच्छेदकताकेत्यर्थः ॥ अत्राहुरित्यस्वरसस्तद्बीजंतुरूपनिष्ठवह्निमत्संयुक्तत्वाभावाधिकरण
तावच्छेदकतायांपर्वतनिष्ठायामपिपर्वतत्वस्यावच्छेदकतयाऽवच्छेदकांतरानवच्छिन्नहेत्वधिकरणनिष्ठावच्छेदकताप्रसिद्ध्याऽ
संभवः ॥ अवच्छेदकांतरनिष्ठविलक्षणावच्छेदकतानिवेशेपितत्तद्वांतरकालावच्छिन्नपर्वतादेस्तत्तत्क्षणत्वकल्पनापेक्षया
तत्तद्वांतरकालस्यैवक्षणत्वसंभवेनोत्पत्तिक्षणनिष्ठावच्छेदकतायामप्यवच्छेदकांतरानवच्छिन्नत्वाक्षतेरव्याप्तिर्वेति ॥ यत्वि

**ति** ॥ अयोगोलकवृत्तितृणादिनिष्ठाधिकरणतायामुभयाभावसत्वादतिव्याप्तेः सामान्यपदं ॥ **पृथिवीरूपादित्यादाविति** ॥ **यद्यपि** ॥ धूमवान्वन्हेरित्यादावप्ययोगोलकीयवन्हिनिष्ठतादृशाधिकरणताया व्याप्यवृत्तितयाऽतिव्याप्तिसंभव**स्तथापि** धूमाधिकरणतदनधिकरणसाधारणैकवन्हिसंभवमभिप्रेत्यैतावदनुधावनं ॥ **ननु शुद्धसत्तायां** तत्तद्व्यक्तिवृत्तित्वासत्वेपि व्यासज्यवृत्तिधर्मवत्स्वीकारसंभवाद्गगनादिवद्व्याऽवृत्तित्वेप्येकत्वसंभवादत **आहैवमिति** ॥ नकेवलमनुगतधर्ममात्रोच्छेदः किंत्वन्यदपीत्याहैवमिति केचित् ॥ **ननु** विशिष्टसत्तानिष्ठतद्व्यक्तित्वानुपस्थितिदशायां नानुमितिरनुभवसिद्धेत्यत **आहैवमिति** ॥ **द्रव्यवृत्तित्वाभाववद्भेदस्यैवेति** ॥ तद्बोधकसमानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारसत्वादितिभावः ॥ **अतींद्रियसाध्यकेति** दीधितावतींद्रियसाध्यकमेकमपरंचातींद्रियहेतुकमितिव्यभिचारिद्वयं प्रतीयत इत्याशये **नाह** ॥ **इदंगुर्विति** ॥ **ननु** गुरुत्वविशिष्टवृत्तित्वाभावस्यातींद्रियतादृशवृत्तित्वप्रतियोगिकतयाऽतींद्रियत्वेपिगुरुत्वोपलक्षितवृत्तित्वाभावस्यजलपृथिव्यन्यतरवृत्तित्वाभावात्मकस्य न तथात्वलक्षणे साध्योपलक्षिताधिकरणवृत्तित्वाभावस्यैवनिविष्टत्वादत **आहाथवे** १७०

ति ॥ केचिदिति विशेषरूपेण संसर्गतास्वीकारे स्वरसः ॥ अत्रेति परिष्कारस्य पंथानोऽद्रष्टव्या इत्यनेनान्वितं ॥ स्वनिष्ठे
ति ॥ धूमांतरसंयुक्तस्वावयवेत्याद्युक्तरीत्याऽव्याप्तेः स्वनिष्ठत्वनिवेशः ॥ गगनभिन्नं घटत्वादित्यादौ स्वनिष्ठसाध्यवद्वृत्तित्वसा
मान्याभावाप्रसिद्धेर्हेतुतावच्छेदकसंबंधावच्छिन्नतादृशवृत्तित्वनिवेशः समवायेन धूमाधिकरणस्वावयवस्य स्वाधिकरणतावत्सा
मान्यांतर्गतस्य स्वनिष्ठतादृशाभावानवच्छेदकत्वविरहादव्याप्तिवारणाय स्वाधिकरणतायां हेतुतावच्छेदकसंबंधावच्छिन्नत्वनि
वेशः सत्ताधिकरणद्रव्यस्य तन्निष्ठतादृशावृत्तित्वाभावानवच्छेदकत्वाद्द्रव्यत्वसाध्यके तत्रातिव्याप्तिवारणाय सामान्यपदं ॥ हेतु
तावच्छेदकसंबंधेन यत्स्वाधिकरणमिति ॥ अत्र साध्यवद्वृत्तित्वे हेतुतावच्छेदकसंबंधनिवेशो व्यर्थः ॥ नच संयोगेन
धूमवति पर्वतरूपकालेऽयोगोलकीयवन्हेः स्वाधिकरणायोगोलकावच्छेदेनैव कालिकेन वृत्तिः कालवृत्तौ देशस्यावच्छेदकत्वा
त्तथा चायोगोलकाद्यवच्छेदेन धूमवद्वृत्तित्वसामान्याभावस्य वन्हावसत्वादतिव्याप्तेर्हेतुतावच्छेदकसंबंधनिवेश इति वाच्यं ॥ सामा
नाधिकरण्यनिरूपकमेव तदवच्छेदकमन्यत्तदभावावच्छेदकमिति ग्रंथकृत्संमतं तथा च सामानाधिकरण्यानिरूपकस्यायोगोलक

स्यतदभावावच्छेदकत्वमव्याहतमन्यथाहेतुतावच्छेदकसंबंधनिवेशेपिसंयोगेनधूमसाध्यकेकालिकेनवन्हेर्हेतुत्वेऽतिप्रसंगस्यदुर्वा
रत्वापत्तेःपरंतुहेतुतावच्छेदकसंबंधेनहेत्वधिकरणावच्छेद्यहेतुतावच्छेदकसंबंधावच्छिन्नसाध्यवद्वृत्तित्वाभाववद्भिन्नत्वरूपल
क्षणघटकपदार्थापरित्यागेनैवकतिपयपदार्थविशेषणविशेष्यभावव्यत्ययेनैवेदंलक्षणंकृतमितिज्ञापनायैवतदुपादानमिति
ध्येयं॥ अत्रहेतुभेदेनव्याप्तिभेदादुदक्षरत्वाच्चसाध्यवद्वृत्तित्वाभावघटितलक्षणांतरमाह॥ हेतुतेति॥ महानसायोगोलकसा
धारणदीर्घदंडादिरूपवस्तुहेतूभयाधिकरणमहानसादेःसाध्यवद्वृत्तित्वाभावानवच्छेदकत्वाद्धूमवान्वन्हेरित्यादावतिव्याप्तेःसामान्य
पदं॥ केवलान्वयिन्यात्मभिन्नंज्ञानवदन्यत्वादित्यादौचघटत्वप्रकारकप्रमाविषयत्वघटत्वाभावादिरूपतदधिकरणकत्वस्यहेताव
भावात्मकतहेतुनिवेशः॥ तद्वस्तुत्वावच्छिन्नोभयाधिकरणकधर्मवत्वानिवेशाद्व्याप्त्यैक्योपपत्तिः॥ उभयाधिकरणत्वनिवेशप्रयो
जनंस्वयंवक्ष्यते॥ अधिकरणतायांहेतुतावच्छेदकसंबंधावच्छिन्नत्वनिवेशाद्धूमवत्कपालसमवेतघटेसाध्यवद्वृत्तित्वाभावसत्वात्तदु
भयाधिकरणकपालस्यतदवच्छेदकत्वेपिधूमादौनाव्याप्तिः॥ अत्रान्वयन्निष्ठसाध्यवद्वृत्तित्वाभावानवच्छेदकत्वंतान्निष्ठहेतुताव

च्छेदकसंबंधावच्छिन्नतान्निष्ठाधेयतानिरूपकत्वसहिततत्संबंधावच्छिन्नयद्धर्मावच्छिन्नाधिकरणताव्यापकंतद्धर्मवत्वस्यैवव्याप्ति
त्वसंभवाद्धेतुतावच्छेदकसंबंधेनयद्वृत्तिमदित्येतावदनर्थकमेवपरंतुहेतुतावच्छेदकसंबंधेनयद्वस्तुप्रकृतहेतूभयाधिकरणप्रसि-
द्धिस्तद्वस्त्वेवयत्पदेनग्राह्यमितिसूचनायैवतदुक्तिरिति **बोध्यं** ॥ हेत्वधिकरणावच्छिन्नतदधिकरणतावदन्यत्वनिवेशएव
दीधितिकारोक्तदोषप्रसक्तिर्नतुतदवच्छिन्नस्ववृत्तिकान्यत्वनिवेशेइत्याशयेनाह ॥ **अथवेति** ॥ हेत्वधिकरणावच्छिन्नस्ववृ
त्तिकान्यत्वस्थानेहेतुतावच्छेदकसंबंधावच्छिन्नवृत्त्यनवच्छिन्नत्वनिवेशायोपक्रमते ॥ **वह्न्यादीति** ॥ विदुषांकंठभूषायैरघुनाथे
ननिर्मिते ॥ संन्यायरत्नेसंपूर्त्तिमगमत्पंचलक्षणी ॥ ॥ **इतिमीमांसान्यायपंचास्यश्रीमद्राघवाचार्यशिष्यस्य
पर्वतेइत्युपनामकस्यरघुनाथस्यकृतौगदाधरीपंचवादटिपण्यांन्यायरत्नाभिधायांसार्वभौमग्रंथांतपंच
लक्षणीसमाप्ता** ॥ ॥**अथचतुर्दशलक्षणी** ॥ ॥ **साध्यप्रतियोगिकाभावस्येत्यादि** ॥ **अत्रेदंबोध्यं**
॥साध्यमात्रप्रतियोगिकाभावनिवेशस्यशंकाबीजत्वेव्यासज्यवृत्तिधर्मावच्छिन्नाभावोनलक्षणघटकः गुरुधर्मस्याभावप्रतियोगि

तानवच्छेदकत्वेविशिष्टाभावोपीति ॥ **साध्यतावच्छेदकापर्याप्तेति** ॥ साध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नापर्या
प्तिकेत्यर्थस्तेनतद्वन्हित्वनिष्ठावच्छेदकतायाउभयपर्याप्तत्वे एकपर्याप्तत्वाभावासत्वेपि नक्षतिः ॥ **इदंच**समानाधिकरणधर्मावच्छि
न्नाभावसंग्रहाय ॥ **यत्तु**तन्नदेयमेव ॥ नचतदनिवेशेसमानाधिकरणधर्मावच्छिन्नाभावस्यलक्षणाघटकत्वेनव्यधिकरणध
र्मावच्छिन्नाभावमादायासंभवोतिव्याप्तिश्चेति **वाच्यं** ॥ तस्यलक्षणघटकत्वेप्यसंभवातिव्याप्त्योः प्रागेवोक्तत्वादिति **तन्न** ॥
व्यधिकरणधर्मावच्छिन्नाभावमस्वीकृत्य प्रथमतोमहानसीयवन्ह्यभावमादायलक्षणाव्याप्तिवारणार्थंसाध्यतावच्छेदकापर्याप्ते
त्यादिपरिष्कृतेततोऽप्रसिद्धावुद्भावितायांव्यधिकरणधर्मावच्छिन्नाभावंस्वीकृत्यशंकायाःकृतत्वात्तादृशाशंकायामेवासंभवा
तिव्याप्त्योःपूर्वमुक्तत्वात् ॥ **एतेना**वच्छेदकतायांसाध्यतावच्छेदकापर्याप्तत्वाविवक्षणेस्वसमानाधिकरणधर्मावच्छिन्नायायाप्रति
योगितातत्तदन्यत्वस्यनिवेशनीयतयाकूटसंकोचार्थमेवतन्निवेशइति**निरस्तं** ॥ उक्तरीत्यासाध्याभावसंग्राहार्थैवसार्थक्य
संभवात् ॥ **प्रमेयत्वविशिष्टापर्याप्तेति** ॥ प्रमेयत्वानवच्छिन्नेत्यर्थः ॥ **ननु**साध्याभावपदेनसाध्यतावच्छेदकसमनिय

तप्रतियोगिताकाभावविवक्षणेवन्हिमान्धूमादित्यादौतार्णातार्णदहनोभयाभावमादायाव्याप्तिः व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्यप्रतियो
गिताविशेषणत्वेवन्हिधूमोभयसाध्यकेतदन्यतराभावमादायलक्षणसमन्वयेपितादृशोभयसाध्यकव्यभिचारिणितमादायातिव्याप्तिः
॥ साध्यतावच्छेदकानवच्छिन्नत्वव्यासज्यवृत्तिधर्मावच्छिन्नत्वोभयाभावस्यप्रतियोगिताविशेषणत्वेगौरव मत आह ॥ साध्यताव
च्छेदकापर्याप्तसाध्यवृत्तिधर्मनिष्ठेत्यादि ॥ नन्वेतत्कल्पेवाच्यत्वसाध्यकेघटाभावस्यापिलक्षणघटकत्वात् मूलकृतांसौ
दंडमतानुधावनंनिर्बीजमितिचेन्न ॥ तादृशानुधावनस्यप्रमेयसाध्यकस्थलाभिप्रायकत्वात् ॥ वाच्यत्वसाध्यकेसमवायितया
वाच्यत्वाभावप्रदर्शनंसाध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशाभिप्रायेणेतिध्येयं ॥ यद्वासाध्यवृत्तिधर्मनिष्ठेत्य
नेनयत्पर्याप्त्यधिकरणधर्मविशिष्टाधिकरणंसाध्यवदित्यग्रेविवक्षितंतेनैववाच्यत्वसाध्यकेघटाभावोनलक्षणघटकइतिबोध्यं।
साध्यवृत्तिधर्मनिष्ठेत्यनेनेति ॥ अन्यथापर्याप्त्यधिकरणधर्मविशिष्टंसाध्यमित्युक्तौ प्रमेयसाध्यकेगगनत्वेनप्रमेयसामान्याभाव
संग्रहानुपपत्तिरतोऽधिकरणमितिसाध्यवदितिच ॥ नन्वेवंविवक्षणेसमवायितयावाच्यत्वाभावोलक्षणघटकोनस्यादतआह

वक्तव्यतस्त्विति ॥ अत्रेदं बोध्यं यत्पर्यात्यधिकरणधर्मविशिष्टाधिकरणमित्यत्राधिकरणं साध्यतावच्छेदकसंबंधेन वक्तव्यं त
थाच समवायित्वेन वाच्यत्वाभावस्य लक्षणघटत्वं संभवति ॥ एवं सति वाच्यत्वसाध्यके घटाभावोपेक्षणं साध्यतावच्छेदकसमनियतप्र
तियोगिताकाभावनिवेशकल्पाभिप्रायेणेति ॥ नन्वथेत्यादिग्रंथस्य यदि कूटघटितलक्षणाभिप्रायकत्वं दीधितिकृतोऽभिमतं तदा तद्दू
षणे संदर्भविरोधः स्वानभिप्रेतस्यैव दूषणीयत्वादतः संदर्भशुद्धिमाह ॥ व्यधिकरणेति ॥ तथाचाथेतिग्रंथस्य कूटघटितलक्ष
णाभिप्रायकत्वमगत्या स्वस्याभिमतं तत्तु न दूषितं प्रतियोग्यवृत्तिश्चेतिग्रंथावतारकत्वमेव तस्य दुष्टत्वान्न स्वाभिमतं तत्तु दूषितमिति
न संदर्भविरोध इति भावः ॥ तत्पदबोद्धव्यत्वेति ॥ तत्पदजन्यबोधविषयतेत्यर्थः ॥ यद्धर्म्यंश इत्यादि यद्धर्म्यंशे यद्धर्मि विशेष्यकत्वाव
च्छेदेन यस्य प्रकारता यन्निष्ठप्रकारताकत्वं ॥ अथवा यद्धर्म्यंशे यन्निष्ठविशेष्यतानिरूपितेत्यर्थोऽन्वयश्चास्य प्रकारतायां तद्धर्मप्र
कारकत्वविशिष्टवत्वोपगमादिति ॥ तन्निष्ठप्रकारतानिरूपितविशेष्यताया एव विशेष्यतासंबंधेन तत्प्रकारकत्वविशिष्टाधिकर
णतायां तत्र त्वादिति भावः ॥ अथ तत्पदबोद्धव्यत्वप्रकारकत्वविशिष्टेच्छाधिकरणत्वस्य तत्पदवाच्यत्वव्यवहारे विषयत्वं स्वीकृ

त्यपटोघटपदवाच्यइतिव्यवहारवारणेपिपटेघटपदवाच्यत्वमितिव्यवहारापत्तिर्दुर्वाराविशिष्टस्यशुद्धविशेष्यानतिरेकितयाघट
पदबोद्धव्यत्वप्रकारकत्वविशिष्टेच्छारूपेघटपदवाच्यत्वपदार्थेपटवृत्तितायाअक्षतत्वादितिचेन्न॥तादृशप्रतीत्याघटपदवाच्यत्व
त्वावच्छेदेनैवपटवृत्तित्वस्यविषयीकरणात्तन्निष्ठाधिकरणतानिरूपकतावच्छेदकस्यैवतदाधेयतावच्छेदकत्वोपगमाद्घटपदवाच्य
त्वत्वेपटवृत्तितावच्छेदकताभावेनविषयबाधात्॥स्वपर्याप्त्यवच्छेदकावच्छिन्नपर्याप्तिकत्वस्वावच्छिन्नत्वोभयसंबंधेनधर्मविशिष्टा
न्यत्वंव्यधिकरणधर्मावच्छिन्नत्वमित्यभिप्रायेणशंकतेनचेति॥विशिष्टाभावीयप्रतियोगितायाविशेषणांतर्भावेणपर्याप्तौमा
नाभावः॥नचविशिष्टाभावोपलक्षिताभावयोर्वैलक्षण्यानुपपत्तिरेवप्रमाणमितिवाच्यं॥विशिष्टाभावीयप्रतियोगितायावि
शेषणसाधारण्योपगमेनैवनिर्वाहादित्याशयेनसमाधत्ते॥ यत इति॥ विशेष्यांशमात्रइति॥विशेष्यांशमात्रवृत्तिधर्माव
च्छिन्नेइत्यर्थस्तेनविशेषणसाधारण्येपिनक्षतिः॥ ननुघटपटौनस्तइतिप्रतीतिःकेवलोभयत्वेनावच्छेदकत्वमवगाहतेतथा
सतियत्किंचिदुभयवतितादृशप्रतीत्यनुदयापत्तेरतोघटत्वसमानाधिकरणपटत्वसमानाधिकरणद्वित्वेऽवच्छेदकत्वमवगाह

तइतिवक्तव्यंतत्रचद्वित्वसमानाधिकरणंघटत्वंपटत्वंवेतिविनिगमनाविरहात्प्रतियोग्यंशेभासमानताद्वाघटत्वपटत्वयोरवच्छेदकत्वावगा
हनौचित्यात्त्रयाणामेवावच्छेदकत्वप्रसक्तौतेषांचैकधर्मावच्छिन्नापर्याप्तिकत्वरूपविरोधाश्रयत्वाद्विरुद्धोभयधर्मावच्छिन्नाभावव
द्घटपटोभयत्वावच्छिन्नाभावस्यापिकेवलान्वयित्वंस्यादितिशंकते॥ यद्यपीतिसमाधत्तेतथापीति॥ स्वातंत्र्येणापीति॥
प्रतियोगिनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोज्यत्वमवच्छेदकतायांस्वातन्त्र्यं अयंभावः॥ घटत्वेनघटपटोभयंनास्तीत्यत्रघ
टत्वेद्विविधमवच्छेदकत्वमेकंद्वित्वधर्मितावच्छेदकत्वेनापरंच्वव्यधिकरणत्वेनतत्रप्रथमावच्छेदकतायास्तदभावीयप्रतियोगि
विशेषणतापन्नत्वावच्छिन्नावच्छेदकतात्वरूपेणघटत्वपटत्वद्वित्वेतत्त्रितयपर्याप्ततातदवच्छेदकंतत्त्रित्वंद्वितीयावच्छेदकत्वस्यघट
त्वमात्रपर्याप्ततयातदवच्छेदकंघटत्वनिष्ठतव्यक्तित्वंतथाचप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकताव्यापकावच्छेदकताकप
र्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणतयैवाभावस्याविरोधाद्घटपटोभयाभावीयप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदक
ताव्यापिकायाघटत्वपटत्वद्वित्वैतत्त्रित्वनिष्ठाघटपटोभयवद्भूतलमितिप्रतीतिसिद्धघटपटोभयत्वावच्छिन्नाधिकरणतानिरूपक

तावच्छेदकतापर्याप्त्यवच्छेदकतातत्पर्याप्तिकायातादृशत्रितयनिष्ठानिरूपकतावच्छेदकतातत्कायातादृशोभयनिष्ठाधेयत्वरूपानि
रूपकतातन्निरूपिताधिकरणताघटपटोभयाधिकरणेवर्ततइतिनतादृशोभयत्वावच्छिन्नाभावस्यकेवलान्वयित्वं॥घटत्वेनघट
पटोभयंनास्तीतिप्रतीतिविषयाभावप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकतायास्तादृशत्रित्वघटत्वनिष्ठतद्व्यक्तित्वयोःसत्वेनघट
त्वेनघटपटोभयवदितिप्रतीतिविरहेणतादृशावच्छेदकताव्यापकावच्छेदकतापर्याप्तिकावच्छेदकताकनिरूपकतायाअप्रसिद्धत्वेन
विरोधिनोऽभावात्तादृशाभावस्यकेवलान्वयित्वमिति॥ एकदेशिमतानुयायितयेति ॥ अथविषयतायाविषयस्वरू
पत्वेपिघटादिरूपविषयतायाविषयतात्वेनैवस्वरूपसंबंधेनघटादिवृत्तित्वंनघटत्वादिनेतिघटत्वादिनाविषयत्वंनास्तीतिप्रतीतिवि
षयाभावइवसमवायित्वेनस्वरूपसंबंधेनवाच्यत्वभावस्यघटादावावश्यकत्वात्तादृशाभावस्यलक्षणघटकत्वसंभवेमूलस्यमतविशे
षपरतयालापनमनुचितं॥ नचतथापिमूलोक्तंव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वंतस्यनसंभवतिसमवायित्वस्यप्र
तियोगितासमानाधिकरणत्वादितिवाच्यं॥ प्रतियोग्यंशेप्रकारीभूतधर्मावच्छिन्नायाप्रतियोगिनिष्ठाधेयतातदनवच्छे

दकत्वस्यतादृशधर्मावच्छिन्ननिरूपकताकाधेयत्वाभावस्यवाप्रतियोगिताव्यधिकरणत्वपदार्थत्वात्समवायित्वादौतादृशविषयतात्वा
वच्छिन्नाधेयतानवच्छेदकत्वस्यतादृशविषयतात्वावच्छिन्ननिरूपकताकाधेयत्वाभावस्यचसत्वात्तद्वच्छिन्नाभावस्यव्यधिकरणधर्मा
वच्छिन्नप्रतियोगिताकत्वाक्षतेरितिच्चेन्न ॥ अथेत्यादिग्रंथस्यकूटघटितलक्षणाभिप्रायकतयाव्याख्यातत्वात्तत्रचसाध्याभावेसा
ध्यसमानाधिकरणसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वविशेषणस्यावश्यकतयासमवायितयावाच्यत्वाभावस्यविषयताया
विषयस्वरूपत्वेसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकतयातदन्यत्वविरहात् ॥ नचतत्रापिसमानाधिकरणधर्मेसाध्यताव
च्छेदकव्यापकत्वविशेषणस्यावश्यकतयातस्यापिलक्षणघटकत्वंसंभवतीतिवाच्यं ॥ समानाधिकरणधर्मावच्छिन्नाभावीयप्र
तियोगिताभेदस्यसाध्याभावीयप्रतियोगितायांनिवेशकल्पेतदनावश्यकत्वात् ॥ इत्यतइति ॥ यद्यपिप्रमेयसाध्यकेसंयो
गाद्यवच्छिन्नसमवायित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावःसुलभस्तथापिवस्तुगतिमनुरुध्येदं ॥ वन्हित्वेनेति ॥ अ
थैतादृशाभावप्रदर्शनंकिंस्वरूपसंबंधेनप्रमेयसाध्यकउतसमवायसंयोगाभ्यांवानाद्यो निर्वन्हा विल्यसंगतेःस्वरूपेणतादृशा

भावस्यकेवलान्वयित्वात् ॥ नांत्यः संयोगसमवायादिसंबंधावच्छिन्नाभावस्यगुणासामान्यादौवर्तमानतयावन्हित्वेनेत्यसंगतेरि
तिचेन्न ॥ संयोगादिनाप्रमेयसाध्यकेजलत्वादिहेतुकेसंयोगादिनाप्रमेयसामान्याभावस्यगुणादौसत्वेपिसाधनसामानाधिकरण्या
भावाद्वन्हित्वेनेतिसंगतं ॥ नचजलइत्येववक्तुमुचितंननिर्वह्निविमिशांक्यं ॥ जलत्वगुणत्वसत्वादिहेतुकस्थलसाधारण्येन
तदुक्तेः ॥ वस्तुतस्तुकूटघटितलक्षणेभावानांदैशिकविशेषणतयावृत्तित्वस्यव्यवस्थापितत्वात्स्वरूपसंबंधेनप्रमेयसाध्यकस्थ
लाभिप्रायकमेवेदमितिध्येयं ॥ वन्हिभिन्नत्वेनेत्यादि ॥ ननुवन्हिभिन्नत्वेनवन्हिगगनान्यतराभावीयप्रतियोगितायां
वान्हिभिन्नत्वेनवन्ह्यभावीयप्रतियोगिताभिन्नतयावन्हिमात्रनिष्ठत्वासंभवात्कथंतस्याः साध्यतावच्छेदकसमनैयत्यमितिचे
न्न ॥ अव्याप्तिवारणायसाध्यतावच्छेदकसंबंधावच्छिन्नाधेयताविशिष्टप्रतियोगितात्वेनसमनैयत्यस्यविवक्षणीयतया
तेनरूपेणतादृशप्रतियोगितायावन्हिमात्रनिष्ठत्वादेतदभिप्रायेणैवतन्मात्रनिष्ठत्वकथनमपि ॥ वस्तुतस्तुनायमाभासो
ऽवतरातिविषयितयावन्हेः साध्यकएवतथोक्तेस्तत्रवान्हिभिन्नत्वेनवन्हिगगनान्यतराभावीयप्रतियोगित्ववान्हिभिन्नत्वेनव

ह्यभावीयप्रतियोगित्वयोरैक्याभावात् ॥ एतेनपूर्वकल्पेतादात्म्यसंबंधावच्छिन्नसाध्यताकस्थलानुरोधेनसाध्यतावच्छेदकसंबंधाव
च्छिन्नसंबंधितायाविवक्षणा३ वत्त्यकत्वेनदर्शितप्रतियोगितायागगनसाधारण्येपिनक्षतिः ॥ विषयितासंबंधेनप्रमेयमा
त्रसाध्यकइति ॥ इदमत्रचिंत्यं ॥ संयोगेनप्रमेयसाध्यकेप्यप्रसिद्धिसंभवात्तावत्पर्यंतानुधावनंव्यर्थं ॥ नचतत्रसंयोगे
नगगनत्वेनप्रमेयसामान्याभावस्तथेतिशंक्यं तस्यहेतुसामानाधिकरण्याभावात् ॥ वृत्यनियामकसंबंधेनगगनस्यसंबंधित्वात् ॥
नचवृत्त्यनियामकसंबंधस्याभावप्रतियोगितानवच्छेदकत्वमताभिप्रायेणेदमितिवाच्यं ॥ विषयितायाअपितथात्वेनतत्सं
बंधावच्छिन्नाभावप्रदर्शनासंगतेरितिपरंतुविषयितायावृत्तिनियामकत्वमताभिप्रायेणेदमित्यवधेयं ॥ घटत्वादिना
वह्न्यभावादिरेवेति ॥ हेतुसामानाधिकरण्यघटकवृत्तौसंबंधनिवेशनमभिप्रेत्येदंजन्यानांकालत्वानंगीकरणेनवातेनव
न्हिसाध्यकेसमानाधिकरणधर्मावच्छिन्नवह्न्यभावस्यकालिकसंबंधेनहेतुसामानाधिकरण्येपिनक्षतिः ॥ अयमात्मेति ॥
अथायमात्माज्ञानादित्यादावात्मत्वसामान्याभाववारणायप्रतियोगितायांसाध्यतावच्छेदकानवच्छिन्नत्वमेवोपादेयं ॥ नचै

वमपिद्रव्यत्वाभावमादायदोषइतिवाच्यं ॥ साध्यनिष्ठत्वस्यापिनिवेशात् ॥ नचात्मत्वनिष्ठतद्व्यक्तित्वावच्छिन्नाभावमादायाव्या
प्तिरितिवाच्यं ॥ साध्यतावच्छेदकानवच्छिन्नत्वमित्यनेनसाध्यवृत्तिधर्मानवच्छिन्नत्वस्यविवक्षणात् ॥ यत्पर्याप्त्यधिकरणधर्मविशि
ष्टाधिकरणंसाध्यवत्तन्निष्ठावच्छेदकताकान्यत्वस्यतदर्थत्वान्नप्रमेयसाध्यकेतादृशाभावाप्रसिद्धिः ॥ घटत्वपटत्वोभाभ्यांप्रमेयसा
मान्याभावस्यतादृशस्यप्रसिद्धेःएवंचसाध्यनिष्ठत्वंनदेयमेव ॥ एतेनप्रतियोगितायांसाध्यनिष्ठत्वनिवेशेविशिष्टसत्तावान्जातेरित्यादाव
तिव्याप्तिरितिनिरस्तंतादृशाद्रव्यत्वाभावमादायतद्वारणादितिचेन्न ॥ हेतुसामानाधिकरण्यविशेषणापेक्षयागौरवात् ॥ यत्तुस्व
व्यधिकरणधर्मावच्छिन्नत्वमेवप्रतियोगितायांदेयंतच्चावच्छिन्नत्वसामानाधिकरण्योभयसंबंधेनधर्मविशिष्टान्यत्वरूपमेवस्वविशि
ष्टेतिनदेयमितिनगौरवावकाशइतितन्न ॥ समनियताभावैक्यमतेघटत्वेनधूमाभावस्यघटत्वेनवह्न्यभावाभिन्नतयावह्निरूपप्र
तियोगिसामानाधिकरण्यमादायातिव्याप्तेः ॥ नचयत्सामानाधिकरण्यनिवेशोपिसमनियताभावैक्यमतेऽतिव्याप्तेरेतल्लक्षणेव

टिप्पणं घटत्वपटत्वोभाभ्यांद्रव्यत्वाभावमित्यर्थः

क्ष्यमाणतयातौल्यमिति **वाच्यं** ॥ तथापिलक्षणद्वयानुरोधेनयत्सामानाधिकरण्योक्तेर्लक्षणांतरत्वाच्चनक्षतिः ॥ **एतेन**यत्सामाना
धिकरण्यमपहायप्रतियोगितायांगगनावच्छिन्नत्वनिवेशोपिसमाहितः ॥ **नतत्राव्याप्तेर्वारणंतत्फलमिति** ॥ **यद्यपि**
वन्हिसाध्यकेपिचरमक्रियात्मकाभावस्यलक्षणघटकतयातस्यस्वविशिष्टहेत्वधिकरणाप्रसिद्धेरव्याप्तेर्वारणंतत्फलंसंभवतित
**थापि**महाकालानुयोगिकधूमसंयोगस्यधूमांशेवृत्तिनियामकतायाअग्रेग्रंथकृताप्रतिपादनान्महाकालएवतादृशाभावविशि
ष्टंहेत्वधिकरणंसंभवतीतिनतत्राव्याप्तिरिति **ध्येयं** ॥ **पृथिव्याद्यष्टद्रव्येति** ॥ तादृशाष्टद्रव्यातिरिक्तंद्रव्यमात्मैवपरिभाषि
तस्तेनयत्किंचिदष्टद्रव्यातिरिक्तत्वस्यसकलद्रव्यसाधारण्येपिनक्षतिः ॥ द्रव्यंविशिष्टसत्वादित्यादौद्रव्यत्वसामान्याभावस्यकाले
वैशिष्ट्यसंभवात्स्ववैशिष्ट्यांशेसंबंधानिवेशादेतावदनुधावनं ॥ यदित्यादिविशेषणस्यनेदमसाधारणप्रयोजनमितिशंकते **यद्य**
**पीति** ॥ **नन्वे**कार्थसमवायसंबंधेनकपिसंयोगात्मकाभावस्यजातौवैशिष्ट्यसंभवान्नाव्याप्तिः ॥ **नन्च**परंपरासंबंधानांसंबंधत्व
निराकरणान्नेदंयुक्तमिति **शंक्यं** ॥ असमवायिकारणद्वैविध्यानुरोधेनसमवायैकार्थसमवायान्यतरसंबंधेनसत्तावत्वंभावत्वंत

द्भावोऽभावत्वमिति भावाभावयोर्लक्षणानुरोधेन च तस्य विशिष्टबुद्धिनियामकत्वरूपसंबंधताया आवश्यकत्वात्तदतिरिक्तैकज्ञानवि
षयत्वादिरूपपरंपराणामेव संबंधताया निराकरणादत आह ॥ सत्तावानिति ॥ केचित्तु कपिसंयोगात्मकाभावस्य प्रतियोगिवै
य्यधिकरण्याघटितव्यापकतानिवेशकल्पे लक्षणघटकत्वं न संभवतीत्यतस्तत्कल्पेपि दोषज्ञानायाह सत्तावानिति ॥ अथ प्रतियो
गिवैय्यधिकरण्याघटितव्यापकत्वकल्पे साध्यवन्निष्ठत्वांशे स्वरूपसंबंधनिवेशावश्यकतया कपिसंयोगात्मकाभावस्य साध्यवति
स्वरूपसंबंधेनासत्वाद्व्यापकताघटकत्वासंभवेन लक्षणघटकत्वं संभवत्येवान्यथा सत्ताभावीयप्रतियोगित्वावच्छिन्नाभावस्या
पि कालिकसंबंधेन साध्यवति सत्वात्तस्यापि लक्षणघटकत्वानुपपत्तिः॥ न च स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधे
न साध्यवद्वृत्तित्वं निविष्टमित्यभिप्रायेणेदमिति वाच्यं ॥ एवं सति प्रतियोगिवैय्यधिकरण्याघटितव्यापकत्वकल्पे पर्वतत्वात्म
काभावमादाय दोषवारणाय यत्सामानाधिकरण्यघटकवृत्तौ स्वरूपसंबंधनिवेशावश्यकत्वं प्रदर्श्य नानास्थाने संबंधानिवेशप्रयु
क्तगौरवोद्भावनस्यासंगत्यापत्तेरिति चेन्न ॥ साध्यवत्ताग्रहविरोधितानियामकसंबंधेन साध्यवद्वृत्तित्वनिवेशाभिप्रायेण स्वरस

स्यगौरवोद्भावनस्यचसंगतेरित्याहुस्तदसत्सत्ताभाववाञ्जातित्वादित्यादौतादृशसंबंधेनसाध्यवद्वृत्तित्वाप्रसिद्धेस्तथाविवक्षितुमश
क्यत्वात्साध्यसामानाधिकरण्यघटकवृत्तौस्वरूपसंबंधावच्छिन्नत्वनिवेशेसत्ताभावमादायाव्याप्तिविरहेप्यात्मवृत्तित्वविशिष्टस
त्ताभावमादायाव्याप्तिर्बोध्या॥ **व्यभिचारविरोधीति** ॥ व्यभिचाराभावव्याप्यइत्यर्थः॥ इहहेतावुपाधिर्नेहहेतावुपाधिरिति
व्यवहारद्वयप्रदर्शनेनाव्याप्यत्वसंबंधस्यविशिष्टबुद्धिनियामकत्वमभावप्रतियोगितावच्छेदकत्वंचदर्शितं॥ **अव्याप्यत्वस्येति** ॥
अव्याप्यत्वंचस्वाभाववत्त्वसंबद्धत्वंतेनात्मत्वाभावाभाववत्यात्मन्यात्मनोऽवृत्तित्वेपिनक्षतिः॥ यावत्पदस्यासाधारणप्रयोजनंनास्ती
त्यभिप्रायेणातएवेतिग्रंथमवतारयति॥ **नन्विति** ॥ **एतेनसाध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणस्यव्यावृत्तेःपश्चा
द्वक्ष्यमाणतयेत्यादि** जगदीशानामुपरिवक्ष्यमाणंदूषणमेतन्मतेनिरवकाशं॥ **स्वव्यापकतत्कत्वमिति**॥ अत्रस्वव्यापकत्वं
स्वसमानाधिकरणप्रतियोगिवृत्तिभेदप्रतियोगितानवच्छेदकत्वंभेदेप्रतियोग्यवृत्तित्वनिवेशाद्व्यासज्यवृत्तिधर्मावच्छिन्नसाध्यकेसा
ध्याभावीयप्रतियोगितायाःप्रत्येकवृत्तितयातत्रोभयत्वावच्छिन्नप्रतियोगिताकभेदस्यसत्वेपिनसाध्यतावच्छेदकव्याप्यप्रतियोगिता

याअप्रसिद्धिःस्वसमानाधिकरणप्रतियोग्यवृत्तिरित्यनेनस्वाधिकरणावच्छेदेनप्रतियोगिताश्रयवृत्तित्वाभाववत्वंप्रतियोगितानाधिकरणस्वाधिकरणवृत्तित्वंवाविवक्षितमितिनपरकीयकुचोद्यावकाशः॥ अतएवभूतत्वमूर्तत्वोभयत्वावच्छिन्नप्रतियोगिताया अपिसाध्यतावच्छेदकव्याप्यत्वात्तन्निरूपकाभावस्यलक्षणघटकत्वनिर्वाहः॥ यद्यप्येतत्कल्पेस्वविशिष्टत्वनिवेशप्रयोजनाभावेनयावद्धेत्वधिकरणजलपरमाणौकेनापिसंबंधेनभूतत्वमूर्तत्वोभयाभावासत्वान्नतादृशाभावस्यविवक्षणीयप्रतियोगिसामानाधिकरण्यमितिनातिव्याप्तिस्तथापिनित्यानामपिमूर्त्तानांदिगुपाधित्वमित्यभिमानेनेदमितिध्येयं॥ अथवाभूतत्वमूर्तत्वोभयघटकभूतत्वंबहिरिंद्रियग्राह्यविशेषगुणरूपमेवेतिनक्षतिः॥ व्यापकताघटकसंबंधेनप्रतियोगिसामानाधिकरण्यनिवेशनासंभवादिति॥ प्रतियोगितायांसाध्यतावच्छेदकव्यापकत्वस्यस्वरूपसंबंधेनैवसत्वात्तादृशप्रतियोगिताकस्यवह्न्याद्यभावस्यस्वरूपसंबंधेनप्रतियोगिसामानाधिकरण्याभावात्संयोगेनवह्न्यादिसाध्यकेधूमादिहेतावव्याप्तेरितिभावः॥ पर्वतभिन्नभेदस्येति॥ अथप्रतियोगितावच्छेदकसंबंधेनप्रतियोगिसामानाधिकरण्यनिवेशःसंभवःकुतोनोक्तः॥ नचप्रमेयसा

ध्यकेपक्षभिन्नभेदस्यसाध्यतावच्छेदकव्यापकप्रतियोगिताकत्वविरहेणघटत्वपटत्वोभाभ्यांप्रमेयसामान्याभावमादायलक्षणसमन्व यःसंभवतीतिवाच्यं॥ तत्रापिहेत्वधिकरणवृत्तितानवच्छेदकसंबंधावच्छिन्नाभावस्यतेनसंबंधेनहेत्वधिकरणेप्रतियोगिसामाना धिकरण्यासंभवात्॥ अत्रकेचित्॥ प्रतियोगितायांतादात्म्यसंबंधावच्छिन्नत्वदानेप्रमेयसाध्यकेलक्षणगमनान्नासंभवोऽभिहितः॥ वस्तुतस्तुविषयितासंबधस्यवृत्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेप्रमेयेसाध्येभूतलत्वादिहेतौलक्षणसमन्वयःसं भवातितत्रविषयित्वातिरिक्तसंबंधानांहेत्वधिकरणवृत्तितावच्छेदकत्वात्॥ वक्ष्यमाणस्थलांतरेति॥ घटत्वाभाववान्मेयत्वा दित्यादावित्यर्थः॥ अतिव्याप्तिरिति॥ पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायेत्यादि॥ नास्मा कंदोषइति॥ पूर्वमतेसत्वादितिभावः॥ यद्वायादृशप्रतियोगिताकाभावेस्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मा वच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताश्रयसामानाधिकरण्यस्यैवप्रतियोगिसामानाधिकरण्यमित्यनेनस्वमतेविवक्ष णीयत्वात्पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वावच्छिन्नप्रतियोगितायाअतादृशत्वान्नास्माकंमतेऽतिव्याप्तिरित्यभिप्रायः॥ भावरू

पप्रतियोगिसामानाधिकरण्यमिति ॥ साध्यतावच्छेदकसंबंधेति क्वचित्पाठः सप्रामादिकः ॥ व्यभिचारिणि सर्वेषामेवाभावानां पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तिवारणाय भावरूपप्रतियोगिनिवेशसार्थक्येपि साध्यतावच्छेदकसंबंधेनेत्यस्यव्यर्थत्वात् ॥ **नच** तदनिवेशेव्यभिचारिणि महाकालभिन्नः कालत्वादित्यादौ सर्वेषामभावानां कालिकसंबंधेन प्रतियोगिसमानाधिकरणत्वाद्गगनादीनांकालवृत्तित्वस्वीकाराद्गगनाभावस्यापि तथात्वाद्गगनादीनांकालावृत्तित्वेपीश्वरज्ञानभिन्नं गुणत्वादित्यादौ सर्वेषामेवाभावानां विषयितासंबंधेनप्रतियोगिसमानाधिकरणत्वात्तन्निवेश आवश्यक इति **वाच्यं** ॥ भावात्मकानांमहाकालभेदेश्वरज्ञानभेदाभावानांभावरूपप्रतियोगिसामानाधिकरण्याभावात् ॥ **नच** तादृशाभावानांमहाकालेश्वरज्ञानभिन्नाभावानांचलाघवान्महाकालत्वेश्वरज्ञानत्वादिरूपतास्वीकाराप्रसिध्यत्येव तेषांभावः प्रतियोगीति **वाच्यं** ॥ तथापि सर्वत्र व्यभिचारिण्येतद्रूपध्वंसाभावस्ययावदंतर्गतस्यभावरूपप्रतियोग्यप्रसिद्धेर्यातिव्याप्तिवारणस्यस्फुकरत्वात् ॥ यत्किंचिद्रूपावच्छिन्नसाध्यवत्तानिवेशोचसत्तावानिति ॥ **नन्वेवं** वन्हिमान्धूमादित्यादौ महानसीयवन्हित्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताक

महानसीयवह्न्यभावमादायाव्याप्तिसंभवेसत्तासाध्यकानुधावनंनिर्बीजमितिचेदत्रकेचित्॥ यत्किंचिद्रूपेसाध्यतावच्छेदकव्या
कत्वनिवेशेमहानसीयवह्न्यभावस्योक्तस्थलेनलक्षणघटकत्वमितितत्पर्यंतानुधावनमित्याहुः॥ वस्तुतस्तुसाध्यतावच्छेदकावच्छि
न्नत्वनिवेशस्यविशिष्टसत्तासाध्यकजातिहेतौव्यावृत्तेःपूर्वमुक्तत्वात्सत्तायाजातेश्चोपस्थितत्वात्तत्राव्याप्तिरुक्तेतिध्येयं॥ नतुत
थाविधविशेष्यतात्वेनेति॥ विशेषरूपेणसंसर्गतास्वीकारेव्यभिचारिणिसाध्यवदनुयोगिकस्वरूपसंबंधस्यापिव्यापकता
घटकतयातेनसंबंधेनवाच्यत्वाभावस्यव्यभिचारनिरूपकाधिकरणेप्रतियोगिसामानाधिकरण्याभावादभावेयावत्त्वंव्यर्थंस्यादि
तिभावः॥ ननुसंबंधसामान्येनधूमंप्रतिधूमान्यद्यत्समवेतंतदन्यप्रमेयस्यापिस्वरूपसंबंधेनव्यापकतयातदभावस्यसंयोग
संबंधावच्छिन्नधूमनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकसंबंधसामान्यांतर्गतसंयोगेनायोगोल
कादौप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरितिचेन्न॥ स्वरूपसंबंधावच्छिन्नप्रतियोगिताकतादृशप्रमेयाभावस्यस
र्वत्रवाच्यत्वाभावादिरूपतादृशप्रमेयसत्वेनाप्रसिद्धतयासंयोगादिसंबंधावच्छिन्नाभावस्यचधूमत्वस्यैवावच्छेदकत्वसं

भवेनाप्रसिद्धेः॥ **यत्त्वित्यादि** विशिष्टसत्तासाध्यकेऽव्यभिचारिणिगुणान्यत्वद्रव्यत्वाभावप्रतियोगिनांसाध्यवद्गुणादिनिष्ठभेदप्रतियो
गितावच्छेदकतयानतेषांलक्षणघटकतासंभवतीतिसत्ताद्यभावमादायातिव्याप्तिरतःसाध्यतावच्छेदकावच्छिन्नेति॥ **एतेन्मतेतदनि
वेशोलाघवादिति॥ ननु**भेदत्वस्यतादात्म्यसंबंधावच्छिन्नप्रतियोगिताकत्वरूपस्यनिवेशान्नलाघवावकाशः॥ **नच**भेदत्वमखं
डोपाधिरितिमतेनेदमिति**वाच्यं**॥ एवंसत्यपिवन्हिमान्धूमादित्यादौसाध्यव्यापकत्वेनाभिमतद्रव्यत्ववाच्यत्वादेरपिसाध्यवन्निष्ठायो
द्रव्यात्यंताभावादिस्तस्यापिस्वावच्छिन्नभिन्नभेदस्वरूपत्वाद्भेदत्वेनतत्प्रतियोगितावच्छेदकत्वेनसाध्यव्यापकस्यैवाप्रसिद्धेः
साध्यवन्निष्ठाभावीयायातादात्म्यसंबंधावच्छिन्नप्रतियोगितातदनवच्छेदकत्वरूपस्यैवसाध्यव्यापकत्वस्यनिवेशनीयत्वात्॥ **अ
त्रकेचि**द्भेदत्वमनुयोगिताविशेषःएवंचसाध्यवद्वृत्तितावच्छेदकतादशानुयोगितानिरूपकतानवच्छेदकत्वरूपव्यापकत्वस्यै
वनिवेश्यत्वान्नसाध्यव्यापकाप्रसिद्धिः॥ **नन्वेवं**लाघवानवकाशःवह्न्याद्यभावीयप्रतियोगितावच्छिन्नाभावेविद्यमानोयोघट
त्वाभावादिभेदस्तस्याधिकरणस्वरूपानतिरिक्ततयासाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्यवह्न्याद्यभावप्रतियोगिता

यांदुर्घटत्वाद्व्यापकताघटकसंबंधावच्छिन्नायासाध्यवद्वृत्तितावच्छेदकाभावत्वनिरूपकतातदनवच्छेदकत्वपर्यंतनिवेशावश्यकत्वात्॥ अथैवमपिव्यधिकरणधर्मावच्छिन्नावच्छेदकताकभेदमादायव्यापकत्वाप्रसिद्धिवारणायस्वव्यधिकरणधर्मानवच्छिन्नावच्छेदकताया एवनिवेशनीयतयानलाघवावकाशइतिचेन्न॥ तन्निवेशस्यसामानाधिकरण्येनानवच्छेदकत्वनिवेशेनसमानत्वात्॥ व्यधिकरणधर्मावच्छिन्नावच्छेदकताकात्यंताभावाभ्युपगमेत्वेतन्मतेप्यवच्छेदकतायांस्वव्यधिकरणधर्मानवच्छिन्नत्वनिवेशावश्यकत्वाच्च॥ घटत्वविशिष्टपर्याप्ततयेति॥ घटत्वघटोभयत्वावच्छेदेनपर्याप्ततयेत्यर्थः॥ शुद्धघटस्येति॥ घटत्वावच्छेदेनतत्पर्याप्त्यनधिकरणत्वादित्यर्थः॥ लक्षणघटकत्वापातादिति॥ अथपर्वतत्वात्मकाभावस्यलक्षणघटकत्वेपिनक्षतिस्तस्यव्यापकताघटकस्वरूपसंबंधेनपूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणत्वादितिचेदत्र केचित्॥ घटत्वाभाववान्प्रमेयत्वादित्यादौघटत्वात्मकाभावस्यतादृशप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेर्वारणायप्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायांव्याप्यवृत्तितानिरूपकत्वस्ययादृशप्रतियोगिताकाभावेस्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणध

र्मावच्छिन्नाभाववभिन्नत्वोभयाभाववत्तादृशात्वरूपस्यस्वाभाववत्तानवच्छिन्नत्वस्यवानिवेशनीयत्वात् ॥ नचतत्रघटत्वाभावप्रकारकप्रमाभा
वमादायातिव्याप्तिवारणंसंभवतिजन्यप्रमायाः प्रतियोगिवैय्यधिकरण्याघटितव्यापकत्वासंभवात्प्रमासामान्याभावस्यचव्यधिकरणध
र्मावच्छिन्नप्रतियोगिताकस्यैवप्रसिद्धेस्तस्यप्रतियोगिसामानाधिकरण्यावश्यकत्वात् ॥ नचतत्रघटभिन्नस्यतादात्म्यसंबंधेनसाध्यव्या
पकतयातद्भेदस्यव्यापकताघटकतादात्म्यसंबंधेनघटेप्रतियोगिसामानाधिकरण्यविरहेणनातिव्याप्तिरितिवाच्यं ॥ प्रतियोगिताया
प्रतियोगिस्वरूपत्वेघटभिन्नभेदीयप्रतियोगितायाव्यापकतानवच्छेदकत्वादित्याहुः ॥ अत्रेदंबोध्यं ॥ प्रतियोगितायाःप्रतियो
गिस्वरूपत्वेगयाभावमादायलक्षणद्वयसाधारणयावद्धेत्वधिकरणावच्छेदेनप्रतियोगिसामानाधिकरण्यनिवेशव्यावृत्तिदानासंग
तिस्तस्यलक्षणघटकत्वासंभवाद्धूमाभावस्यलक्षणघटकत्वाभावेनजलादिवृत्तीत्यादिग्रंथानुत्थितिश्चेतिप्रतियोगितायाःप्रतियो
गिस्वरूपत्वंनानुमतंग्रंथकर्तुरितिघटभिन्नभेदस्याप्युक्तस्थलेलक्षणघटकत्वंदुर्वारं ॥ वस्तुतस्तुवक्ष्यमाणरीत्याव्यापकतावच्छे
दकप्रतियोगितायांभेदानवच्छिन्नत्वविशेषणावश्यकतयानघटभिन्नभेदस्यलक्षणघटकत्वमित्यवधेयं ॥ हेतुसामानाधिक

**रण्यघटकाभावीयवृत्तावपीति** ॥ अथैवमपिघटत्वेनपर्वतत्वाभावाभावमादायाव्याप्तिर्दुर्वारैव ॥ **नच** समनियताभावा
नामैक्यमतेतस्यघटत्वेनवह्न्यधिकरणत्वाभावाभिन्नतयावह्न्यधिकरणत्वरूपप्रतियोगिसामानाधिरण्यंसंभवत्येवेति **वाच्यं** ॥
तन्मतेधूमवान्वह्नेरित्यादौवक्ष्यमाणातिव्याप्तिवारणाययद्धर्मप्रतियोगिताकाभावा इतिनिवेशस्यावश्यकत्वात् ॥ **अत्रकेचित्** ॥
भावप्रतियोगिकत्वरूपस्यभावभिन्नत्वस्यैवतादृशविशेषणेनविवक्षिततया घटत्वादिनापर्वतत्वाभावाभावस्यातथात्वान्नदोषः ॥ न
चैवंसतिपर्वतावृत्तित्वावच्छिन्नाभावस्यलाघवेनपर्वतत्वात्मकस्यसाध्यवतिदैशिकविशेषणतयावृत्तित्वविरहेणलक्षणघटकत्वापत्ति
रिति **वाच्यं** ॥ भावमात्रप्रतियोगिकत्वस्यतदर्थत्वान्निरुक्ताभावस्यपर्वतावृत्तिपर्वतत्वाभावादिप्रयोगिकत्वात् ॥ **नच** तथापिपर्व
तावृत्तिजातित्वावच्छिन्नाभावस्यलाघवेनपर्वतत्वात्मकस्यलक्षणघटकत्वंदुर्वारमिति **वाच्यं** । भावभिन्नत्वमित्यनेनसाध्यवद्वृत्तिर्योभा
वस्तत्प्रतियोगिप्रतियोगिकान्यत्वस्यविवक्षणान्नकोपिदोष **इत्याहुः** ॥ **परेतु** पर्वतत्वाभावत्वावच्छिन्नप्रतियोगितायाः सामान्या
भावीयप्रतियोगितायाः प्रतियोगितावच्छेदकधर्मस्वरूपत्वमितिजगदीशोक्तरीत्यापर्वतत्वाभावत्वस्वरूपत्वात्तदवच्छिन्नाभावए

वपर्वतत्वस्वरूपः वृत्तित्वेन पर्वतत्वाभावाभावीयप्रतियोगिताया अतिरिक्ततया तदवच्छिन्नाभावो न पर्वतत्वस्वरूप इति तस्य दैशि
कविशेषणतया साध्यवद्वृत्तित्वान्न तादृशप्रतियोगिताया व्यापकतावच्छेदकत्वमिति तादृशाभावस्य लक्षणघटकत्वमेव नास्तीति पूर्वप
क्ष एवायं नावतरतीति वदंति ॥ सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्येति ॥ प्रतियोगितासामानाधिकरण्यवृत्त्यव
च्छेदकतात्वावच्छिन्नपर्याप्तिशून्यत्वस्येत्यर्थस्तेन वह्न्यादिनिष्ठप्रतियोगित्वतद्वृत्तिप्रतियोगित्वाभ्यां वह्न्यभावमादाय न वह्न्यादि
निष्ठप्रतियोगितानां व्यापकतावच्छेदकत्वानुपपत्तिर्वह्निनिष्ठप्रतियोगित्वेन वह्नितदन्योभयाभावीयप्रतियोगितावच्छेदकत्वं तु ता
दृशोभयत्वांतर्भावेणैव पर्याप्तं ॥ केचित्तु समानाधिकरणधर्मावच्छिन्नाभावीयप्रतियोगिता प्रतियोगितावच्छेदकरूपाव्यधिकर
णधर्मावच्छिन्नप्रतियोगिताचातिरिक्ता एवं चात्र सामानाधिकरण्यमभेदस्तथा च तादृशप्रतित्वाभेदतदवच्छेदकत्वोभयाभावः सा
मानाधिकरण्येनात्रावच्छेदकत्वमिति न कोपि दोष इति वदंति ॥ गौरवादिति ॥ ननु प्रतियोगितावच्छेदकावच्छिन्नानधिक
रणत्वघटकावच्छिन्नत्वाधिकरणत्वादौ तत्तत्संबंधावच्छिन्नत्वस्य यादृशायादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं साध्य

वतस्तादृशतादृशप्रतियोगितावच्छेदकत्वाभावकूटस्य तन्मते निवेशनीयतयानैतन्मते गौरवमिति चेन्न ॥ तन्मते साध्यवन्निष्ठभेदप्र
तियोगितावच्छेदकतावच्छेदकत्वाभावस्यानुगतस्यैव निवेशनीयत्वात्॥ **वन्हिसंयोगादीति ॥ यद्यप्य**त्र तत्तत्संयोगाभावः सर्व्व
व लक्षणघटक इत्यसंभव एव वक्तुमुचितस्तथापि साध्यसमानाधिकरणनिष्ठत्वेन व्यापकतावच्छेदकप्रतियोगिताविशेषणत्वे एतद्रू
पवानेतद्रसादित्यादौ लक्षणसमन्वयस्तादृशप्रतियोगिताकाभावस्य हेतुमति प्रतियोगिसामानाधिकरण्यनियमादित्यभिप्रायः ॥
साध्यतावच्छेदकसंबंधेन प्रतियोग्यधिकरणत्वनिवेशे **त्वाह ॥ कालः सर्व्ववानिति ॥ सामान्यादिमात्रवृत्तीति** ॥ भावानांस्व
रूपसंबंधोऽभावानां दैशिकविशेषणतासंबंधश्च विलक्षणः एवंच वाच्यत्वसाध्यके घटत्वादिना वाच्यत्वाभावमादाय लक्षणसम
न्वय इति मात्रपदं तथाच जात्यभावसाध्यके व्यभिचारिणि दैशिकविशेषणताया व्यापकताघटकत्वाभावे घटत्वादिना वाच्यत्वा
भावमादायातिव्याप्तिसत्वेपि साध्यवत्वप्रकारकप्रमाभावमादायातिव्याप्तिवारणं भवतीति प्रघट्टकार्थः ॥ **प्रतियोग्यनधिकर
णसाध्यवतोऽप्रसिद्धिरिति** ॥ अथ घटादिभिन्नत्वेन घटाद्यभावीयप्रतियोगिताया घटादिमात्रवृत्तिताया अन्यत्रोक्तत्वाद्याद

शपदेनतादृशप्रतियोगितामादाय तदाश्रयानधिकरणत्वं साध्यवतोऽस्त्येवेति कथमप्रसिद्ध्यभिधानं॥ घटभिन्नत्वेनघटगगनान्य
तराभावीयप्रतियोगितायास्तादृशप्रतियोगिताभिन्नत्वेबाधकाभावात्तादृशप्रतियोगितायाघटमात्रवृत्तित्वासंभवस्तन्नशंक्यस्तथाप्य
प्रसिद्धेरभावात्॥ अत्रकेचित्॥ अप्रसिद्धिरित्यस्ययादृशप्रतियोगिताश्रयानधिकरणं साध्यवत्तादृशसमानाधिकरणधर्मावच्छिन्न
प्रतियोगितायाअप्रसिद्धिस्तथाचासंभवः घटभिन्नत्वेनघटाभावस्यापिलक्षणघटकत्वात्तस्ययावद्धेत्वधिकरणेषुप्रतियोगिसामाना
धिकरण्याभावात्॥ नन्वसमनियताभावैक्यमतेतस्यघटत्वादिनावह्न्यभावाभिन्नतयावह्निरूपप्रतियोगिसामानाधिकरण्यसंभवइ
तिवाच्यं॥ समनियताभावैक्यमतेऽतिव्याप्तिवारणाययद्धर्मप्रतियोगिताका इत्यादिविवक्षणावश्यकत्वादित्याहुः॥ अपरेतुयादृश
यादृशप्रतियोगिताश्रयानधिकरणंसाध्यवत्तादृशतादृशप्रतियोगितावच्छेदकत्वाभावकूटनिवेशेघटत्वाद्यवच्छिन्नप्रतियोगि
तावच्छेदकत्वाभावनिवेशेगौरवात्प्रतियोगित्वानिष्ठायासमानाधिकरणतयावच्छेदकतातन्निरूपकप्रतियोगितावच्छिन्नप्रतियो
गितैवयादृशप्रतियोगितेत्यनेनोपादेयातथाचतादृशप्रतियोगितायाअप्रसिद्धिर्घटभिन्नत्वावच्छिन्नप्रतियोगितायाअप्युपादाना

संभवादिति **वदंति** ॥ **ननु** समनियताभावैक्यमते प्रतियोगितावच्छेदकविशिष्टत्वस्य व्यावृत्तिरसंगतैव तन्मते गोत्वाभावादी
नां गोत्वत्वेन प्रमेयसामान्याभावाभिन्नतया सर्वत्र प्रमेयरूपप्रतियोगिसामानाधिकरण्यसंभवात्साध्यतावच्छेदकेत्यादिविशेष
णस्यैव वैयर्थ्यात् ॥ नच तदनैक्यमताभिप्रायेणैव तद्विशेषणमिति **वाच्यं** ॥ तदनैक्यमताभिप्रायेण प्रविष्टसाध्यतावच्छेदकेत्यादिदल
प्रविष्टप्रतियोगितावच्छेदकविशिष्टत्वव्यावृत्तेस्तदैक्यमताभिप्रायेण कथनस्यायुक्तत्वादिति **चेन्न** ॥ समनियताभावैक्यमतेपि साध्य
तावच्छेदकेत्यादिविशेषणव्यावृत्तिः संभवति कथमिति चेत्तन्मते तुल्ययुक्त्याऽतिव्याप्तिवारणाय यद्यत्प्रतियोगिताका यावंतोभावाः
स्वावच्छेदकसंबंधेन प्रतियोगिसमानाधिकरणा इति विवक्षाया आवश्यकत्वात् ॥ सत्तावान्जातेरित्यादौ संयोगादिना घटाभावस्य ता
दृशयावदंतर्गतस्य यावद्व्यत्वाधिकरणांतःपातिगुणादौ संयोगेन प्रतियोगिसामानाधिकरण्याभावात्साध्यतावच्छेदकेत्यादिविशेषण
स्यावश्यकत्वादित्यवेहि ॥ **फलतः साध्यवदिति** ॥ वन्हिसाध्यके महानसीयवह्न्यभावीयप्रतियोगितावच्छिन्नस्य साध्यवत्त्वं बहुत्व
सामान्याभावविरहेण तादृशाभावीयप्रतियोगिताया व्यापकतावच्छेदकत्वापत्तिवारणाय यत्किंचिदिति ॥ **नन्वत्र सामान्यपदं व्यर्थं** ॥

**नच** तदनुपादाने वह्निसाध्यके वह्निसामान्याभावीयप्रतियोगितावच्छिन्नयत्किंचिन्महानसीयवह्नेः साध्यवद्यत्किंचित्पर्वतासंबद्धत्वे
न वह्निसामान्याभावीयप्रतियोगिताया व्यापकतावच्छेदकत्वानुपपत्तेस्तदावश्यकमिति **वाच्यं** ॥ तादृशप्रतियोगिताया व्यापकतानव
च्छेदकत्वेपि द्रव्यत्वाभावमादायैव लक्षणसमन्वयसंभवात् ॥ **अत्र केचित्** ॥ सामान्यपदानुपादाने वह्न्यभावद्रव्याद्यभावीयानेकप्र
तियोगिताभेदकूटनिवेशापत्तेर्गौरवात्कूटसंकोचार्थं सामान्यपदोपादानात् ॥ **नच** तथासति तादृशानेकाभावानां लक्षणघटकता
पत्तेस्तेषां प्रत्येकं प्रतियोगिसामानाधिकरण्यनिवेशे गौरवमिति **वाच्यं** ॥ अनुयोगिन्येकमात्रवृत्तित्वस्यापि निवेशादित्या **हुस्त
दसत्** ॥ तथासति गवाभावस्थेति ग्रंथासंगतेर्जलादिवृत्तित्वविशिष्टेत्यादिग्रंथासंगतेश्च दुर्वारत्वात् ॥ तादृशग्रंथानुरोधेनैव
सामान्यपदोपादानमित्यस्यैव वक्तुं शक्यत्वाच्च ॥ **वस्तुतस्तु** ॥ वाच्यं ज्ञेयत्वादित्यादौ सत्ताभावीयप्रतियोगिताया अपि समवायेन
व्यापकतावच्छेदकत्वापत्तिस्तत्र तादृशप्रतियोगितायाः स्वपदेनोपादाने तदवच्छिन्नस्य साध्यवद्द्रव्यगुणकर्मरूपव्यक्तिसंबद्धत्वनिय
मात्समवायेन सामान्यादिसंबद्धत्वाप्रसिद्धेश्च घटाद्यभावीयप्रतियोगिताया एव स्वपदेनोपादेयत्वात्तदन्यत्वस्य तादृशप्रतियोगिता

यामक्षतत्वात्सत्ताभावस्यापिलक्षणघटकतयातस्यचव्यापकताघटकसमवायेनयावद्धेत्वधिकरणसामान्याद्यंतर्भावेण प्रतियो
गिसामानाधिकरण्याभावादव्याप्तेर्वारणायव्यापकताघटकसंबंधावच्छिन्नत्वावच्छिन्नाधिकरणतासामान्येसाध्यवद्यत्किंचिद्व्यक्त्यसंबद्धत्व
मेवनिवेशनीयंतत्रचसामान्यपदानुपादानेऽधिकरणतायाअधिकरणस्वरूपत्वमतेवह्न्यादिसाध्यकेव्यापकतावच्छेदकप्रतियोगि
तायाअप्रसिद्ध्यापत्तेर्द्रव्यत्वाभावीयप्रतियोगित्वावच्छिन्नाधिकरणतायामहानसादिरूपायाःसाध्यवद्यत्किंचित्पर्वतासंबद्धत्वा
दतःसामान्यपदोपादानं॥ अथैवमपिद्रव्यत्वाभावीयप्रतियोगितायाःसंयोगेनव्यापकतावच्छेदकत्वापत्तिःसंयोगसंबंधावच्छिन्न
तदवच्छिन्नाधिकरणत्वाप्रसिध्यातस्याःस्वपदेनोपादानासंभवात्तथासतितादृशप्रतियोगिताकाभावस्ययावद्धेत्वधिकरणगुणा
दौतादृशसंयोगेनप्रतियोगिसामानाधिकरण्याभावात्सत्तावान्जातेरित्यादावव्याप्तिर्दुर्वारैवेति वाच्यं॥ यादृशसंबंधावच्छिन्ना
धिकरणतासामान्येयादृशप्रतियोगित्वावच्छिन्ननिरूपकताकत्वसाध्यवद्यत्किंचिद्व्यक्तिवृत्तित्वोभयाभावस्तदन्यत्वमेवतेनसंबं
धेनव्यापकतावच्छेदकत्वमित्यस्यविवक्षणादितिदिक्॥ आत्ममहाकालान्यतरत्वादिति॥ विषयतासंबंधघटितसाध्यव्या

पकतावच्छेदकप्रतियोगिताकस्यात्मत्वप्रकारकयत्किंचित्प्रमाभावस्यप्रतियोग्यसमानकालीनखंडकालेप्रतियोगिसामानाधिकर
ण्याभावान्नातिव्याप्तिरितिहेतुकोटौमहेत्युक्तं ॥ **कारणत्वादीति** ॥ आदिपदेनपरमार्थसत्वपरिग्रहस्तस्यकालसंबंधरूपत्वात् ॥
**अवृत्तित्वप्रवादानुरोधेनाह** ॥ **नित्येति** ॥ अत्रापिकालान्यत्वप्रकारकयत्किंचित्प्रमाभावस्यज्ञानभेदप्रकारकयत्किंचित्प्र
माभावस्यचप्रतियोग्यसमानकालीनखंडकालेप्रतियोग्यविषयकेज्ञानेचप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरतोम
हेतीश्वरेतिचोपात्तमिति ध्येयं ॥ **इदंनित्यज्ञानंनित्यत्वेसतिसविषयकत्वादिति** ॥ **अथ** नित्यज्ञानत्वाभावीयप्रतियोगिता
याविषयितासंबंधघटितव्यापकतावच्छेदकत्वंनसंभवतिसाध्यवान्नित्यज्ञानेसर्वस्यैवविषयितासंबंधेनसत्वात्तेनसंबंधेनस्वप्र
तियोग्यनधिकरणसाध्यवतोऽप्रसिद्धत्वात् ॥ विषयितासंबंधेनसाध्यवन्नित्यज्ञानासंबद्धत्वविशिष्टसामान्यकप्रतियोगिताया
अप्रसिद्धत्वाच्च ॥ एतेनज्ञानेच्छयोः समानविषयकत्वनियमाद्गंगापदजन्यबोधविषयत्वविशिष्टतीरत्वावच्छिन्नाधिकरणताज्ञानेन
स्वीकर्तुंशक्यतेतथासतितीरेगंगापदशक्तिरेवस्यादेवंनित्यज्ञानान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणतापीतिस्वीकारेपिननि

स्तारः साध्यवद्यत्किंचिदित्यादिपरिष्कारस्यावश्यकत्वात्तत्र च घटत्वाद्यनंतभेदनिवेशे गौरवेण लाघवेन प्रतियोगितायाएवस्वपदे
नोपादेयतया तादृशतीराभावीयप्रतियोगितायानित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायाश्च विशेष्यीभूततीरघटमात्रनिष्ठ
तया तदवच्छिन्नस्यानित्यज्ञानासंबंधत्वविरहात्॥ अत्र केचित्॥ प्रतियोगिवैय्यधिकरण्याघटितव्यापकत्वाभिप्रायकमिदं त
थाच साध्यवन्निष्ठो यो व्यधिकरणधर्मेण विषयितया प्रतियोगित्वावच्छिन्नाभावस्तत्प्रतियोगितायांसामानाधिकरण्येनानवच्छेदक
त्वरूपं विषयितया साध्यव्यापकतावच्छेदकत्वं नित्यज्ञानत्वाभावीयप्रतियोगितायामक्षतं॥ नन्वतादृशप्रतियोगितायांसामाना
धिकरण्येनावच्छेदकत्वाप्रसिद्धिः शंक्या सामानाधिकरण्यावच्छेदकत्वोभयाभावस्य प्रतियोगितासमानाधिकरणवृत्तित्वाव
च्छिन्नावच्छेदकत्वनिष्ठप्रतियोगिताकाभावस्य वा सामानाधिकरण्येनानवच्छेदकत्वमित्यनेन विवक्षणात्॥ प्रतियोगिवैय्यधिक
रण्यघटितव्यापकत्वकल्पे तु नित्यज्ञानान्यत्वस्वनिष्ठतद्व्यक्तित्वोभयविषयकं जन्यज्ञानं पक्षस्तन्निष्ठतद्व्यक्तित्वं साध्यं तद्व्यक्तिनि
त्यज्ञानान्यतरत्वं हेतुस्तत्र तद्व्यक्तित्वनित्यज्ञानान्यत्वाभावप्रतियोगिनोर्विषयितासंबंधेन व्यापकतया तेन संबंधेन तादृशाभावयोः

प्रतियोगिसमानाधिकरणत्वादितिव्याप्तिवारणाययेनयेनेतिवीप्साआवश्यकीत्याहुः॥ वस्तुतस्तु नित्यज्ञानमित्यत्रनित्यत्वविशिष्टं
ज्ञानत्वमेवसाध्यत्वेनविवक्षितंवैशिष्ट्यंचस्वरूपस्वाभावविशिष्टघटाविषयकसर्वविषयकज्ञानत्ववत्वान्यतरसमवायोभयसंबंधघटित
सामानाधिकरण्यसंबंधेनतथाचसाध्यवद्घटाविषयकसर्वविषयकज्ञाननिष्ठोयोघटाभावीयप्रतियोगित्वावच्छिन्नस्यविषयितासंबंधा
वच्छिन्नप्रतियोगिताकोऽभावस्तत्प्रतियोगितानवच्छेदकत्वस्यनित्यज्ञानत्वाभावीयप्रतियोगितायामक्षतत्वान्नकाचिदपिक्षतिरितिसु
धियोविभावयंतु॥ समनियताभावैक्यमतेघटत्वादिनाद्रव्यत्वाभावस्यघटत्वादिनावह्न्यभावाभिन्नतयासाध्यतावच्छेदकसंयो
गसंबंधेनवह्निरूपप्रतियोगिसामानाधिकरण्यसंभवमाशंक्याह॥ घटवृत्तित्वविशिष्टद्रव्यत्वत्वादिनेति॥ हेतुसामानाधिक
रण्यसंपत्तयेघटवृत्तित्वविशिष्टेति॥ उभयाभावघटितेति॥ स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणय
त्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसंबंधसामान्यकत्वरूपेत्यर्थः॥ अव्याप्तेरिति॥ नन्वेभावपदस्य
पूर्वोक्तभावभिन्नार्थकत्वान्नघटत्वाभावसाध्यकेऽव्याप्तिरितिचेन्न॥ तथासतिकपिसंयोगात्मकाभावमादायस्वविशिष्टत्वविशेषण

व्यावृत्यसंगतेः॥ **ननु** सत्तावान्जातेरित्यादौतद्व्यावृत्तिःसंभवतीत्यत **आह**॥ **एवमिति**॥ **उक्तातिव्याप्तेरिति**॥ घटत्वाभाववा
न्मेयत्वादित्यादावित्यर्थः॥अभावेभावभिन्नत्वस्यप्रतियोगिनिभावत्वस्यचनिवेशोत्वाह॥ **आत्मत्वसाध्यकेति**॥ **बाधबुद्धिप्र
तिबंधकतायाइति**॥ तद्वत्ताज्ञाननिष्ठतत्संबंधावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशाल्यनाहार्यज्ञानत्वावच्छिन्नप्रतिबध्यतानि
रूपिततदभाववत्ताज्ञाननिष्ठप्रतिबंधकतायाइत्यर्थः॥ **संबंधविशेषनियंत्रितत्वानुरोधादिति**॥ तद्धर्मावच्छिन्नप्रतियो
गित्वांशेतत्संबंधावच्छिन्नत्वावगाहित्वघटितधर्मावच्छिन्नत्वानुरोधादित्यर्थः॥ **अन्यथा**॥ **तेनसंबंधेनतद्वत्ताज्ञानंप्रतिकेवल
तदभावावगाहिनिश्चयस्यप्रतिबंधकत्वे**॥ **अविरोधित्वप्रसंगादिति**॥ अत्रवस्तुगत्याघटसंयोगविरोधीयोऽभावस्तद्वृत्यनुयो
गितासंबंधावच्छिन्नप्रतियोगिप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकज्ञानत्वेनप्रतिबंधकत्वान्नदोषइतिनाशंकनीयंतादृ
शानुयोगितात्वेनान्यानुयोगितावगाहिज्ञानस्याप्रतिबंधकत्वप्रसंगात्॥ **उपनीतकांचनमयत्वादिनावह्न्यनुमितीति**
॥कांचनमयत्वज्ञानरूपसन्निकर्षसहकारेणवह्नित्वावच्छिन्नव्याप्यवत्तापरामर्शजन्याकांचनमयत्वप्रकारेणवह्न्यनुमितीत्य १८।१

र्थः ॥ प्रकारांतरानुसरणेति ॥ हेत्वधिकरणवृत्तितावच्छेदकस्वप्रतियोगितावच्छेदका येये संबंधाः प्रत्येकं तेन संबंधेन प्रति
योगिसामानाधिकरण्ये सति तेन संबंधेन प्रतियोगिसामानाधिकरण्यमिति निवेशानुसरणेत्यर्थः ॥ अथयावत्वमनुपादा
यसाध्यतावच्छेदकव्याप्यप्रतियोगिताकस्येत्येवपाठस्तदुत्तरं तदुपादायवासाध्यतावच्छेदकव्यापकप्रति
योगिताकाभावनिवेश इति पाठःप्रामादिकएव तथाहि साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावनिवेशकल्पे घट
त्वादिना रूपसामान्याभावाभावस्यापि लक्षणघटकतया तस्य प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः ॥ नच तस्यापि
पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसंभवाद्दुर्वत्येवातिव्याप्तिरिति वाच्यं ॥ घटत्वाभाववान्मेय
त्वादित्यादावतिव्याप्तिवारणाय प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां निरुक्तव्याप्यवृत्तितानिरूपकत्वस्य निवेश
नीयत्वात् ॥ ग्रंथकृताध्वंसप्रागभावरूपप्रतियोगिसामानाधिकरण्यस्यैवोक्तत्वाच्च ॥ नच समनियताभावैक्यमते घटत्वा
दिना रूपाभावाभावस्य घटत्वादिना वायुत्वाभावाभावाभिन्नतया वायुत्वाभावरूपप्रतियोगिसामानाधिकरण्यमस्त्येवेति वा

च्यं ॥ तत्कल्पेयद्यदित्यादिविवक्षायाबहुश आवेदितत्वादन्यथाव्यभिचारिसामान्य एवातिव्याप्तेरिति ॥ नन्वेवमपिरूपसामा
न्याभावेसाध्यइतिग्रंथोऽतएवेतिग्रंथोत्तरमेवलेखनीयइतिसंदर्भाशुद्धिर्दुर्वारैवेतिचेदत्रकेचित् ॥ उक्तरीत्याअथेतिग्रंथेऽवता
रितेयावत्त्वविशेषणस्यसाध्यतावच्छेदकेत्यादिविशेषणनिर्वाह्यतयातद्व्यावृत्तिप्रदर्शकग्रंथआवश्यकःएवमप्ययमात्माज्ञानादित्या
दाव्याप्तिवारणायएतेनेत्यादिग्रंथस्तत्रश्चमनोन्यत्वाभावस्यपरंपरासंबंधेनप्रतियोगिसामानाधिकरण्यसंभवान्नोक्तातिव्याप्तिःषुन्द्वारुइ
तिशंकायामेवंदलांतरेपीतिलिखित्वाप्रकृतंसमाप्यरूपादीत्यादिनोपेक्षाबीजप्रदर्शनमितिनसंदर्भाशुद्धिरितिवदंति ॥ रूपात्मका
भावस्यध्वंसप्रागभावद्रूपप्रतियोगीति ॥ भावस्यप्रागभावध्वंसयोरतिरिक्तत्वेपिध्वंसस्यप्रागभावःप्रतियोगिस्वरूपएवैवंप्राग
भावस्यध्वंसोऽपिप्रतियोगिरूपएवलाघवात्तथाचरूपध्वंसप्रागभावस्यरूपप्रागभावध्वंसस्यचरूपस्वरूपत्वात्प्रागभावध्वंसयो
श्चसप्रतियोगिकत्वनियमाद्रूपप्रतियोगित्वंतद्ध्वंसप्रागभावयोरव्याहतमित्यभिप्रायः ॥ यत्तुरूपवद्भिन्नभेदस्यरूपस्वरूपत्वसं
कारात्ताद्दशभेदप्रतियोगिरूपवद्भिन्नांतःपातिरूपध्वंसप्रागभावयोःरूपप्रतियोगित्वमित्यभिप्रायवर्णनंतदसत् ॥ धूमवान्वन्हे १८८

रित्यादौसर्वस्यैवातिव्याप्तिवारकधूमाभावादेर्विषयितयास्वावच्छिन्नभिन्नभेदस्वरूपत्वात्तत्प्रतियोगिविषयितयास्वावच्छिन्नभिन्नव
ह्न्यादिरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तिवारणायप्रतियोगितायांभेदानवच्छिन्नत्वविशेषणमावश्यकं॥ नन्वेवंसद्धेतौसा
ध्यशून्यभिन्नस्यापितादात्म्यसंबंधेनसाध्यव्यापकतयातद्भेदस्यापिलक्षणघटकतयातस्यव्यापकताघटकतादात्म्यसंबंधेनभेदानवच्छि
न्नप्रतियोगिताश्रयसामानाधिकरण्यविरहादव्याप्तिरितिवाच्यं॥ व्यापकतावच्छेदकप्रतियोगितायामपिभेदानवच्छिन्नत्वस्यविवक्षित
त्वादेवंचरूपवद्भिन्नभेदीयरूपध्वंसप्रागभावनिष्ठप्रतियोगितायाअतादृशत्वाध्वंसादिरूपप्रतियोगिसामानाधिकरण्यमादायाति
व्याप्त्यप्रसक्तेः॥ महाप्रलयेति॥ खंडप्रलयेपरमाणुषुरूपसामान्याभावोनसंभवतितथासतिभाविसर्गेरूपानुत्पादप्रसंगोऽसम
वायिकारणाभावात्तदर्थंपरमाणुषुपाककल्पनेवरंपूर्वसिद्धरूपस्वीकारेणेत्यतःप्रलयइत्यस्यमहाप्रलयइत्यर्थकारणं॥ मानाभावा
दिति॥ रूपध्वंसादिर्नतदत्यंताभावविरोधीतत्वेसाधकाभावादितिप्रयोगोबोध्यः॥ ननुघटोरूपसामान्याभाववान्नित्यरूपवदन्यत्वा
दित्यनुमानमेवघटेरूपात्यंताभावेप्रमाणमित्यतआहानुमानंचेति॥ अप्रयोजकं॥ व्यभिचारशंकानिवर्तकोयोदर्शितसाध्यहे

त्वोः कार्यकारणभावाद्यनुपपत्त्यापादकस्तर्कस्तच्छून्यमित्यर्थः ॥ प्रमात्मकेति ॥ तथाच रूपसामान्याभावो यदि रूपप्रागभावध्वंसावच्छि
न्नावृत्तिः स्यात्तदा तद्ध्वंसप्रागभाववच्छ्यामघटधर्मिकप्रमाविषयो न स्यादिति तर्केण रक्तरूपध्वंसप्रागभावयोः रक्तरूपसामान्याभावावि
रोधित्वानुमानेऽप्रयोजकत्वशंकानिरासः ॥ यत्र घटादौ पाकादिति ॥ अत्रेदं बोध्यं ॥ अंतराद्ययामे पूर्वरक्तापररक्तेच तद्रूपघटेपिम
ध्यरक्ततादशायां रक्तं रूपं नास्तीत्यापत्तिसंभवे पंचरूपघटपर्यंतानुधावनं निर्बीजं ॥ नच तत्र पूर्वरक्तापरप्रथमरक्तध्वंसप्रागभावयोः
सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वस्वीकाराद्रक्तं रूपं नास्तीतिप्रतीतिविषयतादृशव्यासज्यवृत्तिधर्मावच्छिन्ना
धिकरणतायाश्च तत्रासत्वान्नापत्तिसंभव इति वाच्यं ॥ पंचरूपस्थलेपि प्राथमिकरक्तध्वंसमध्यरक्तप्रागभावयोर्मध्यरक्तध्वंसचर
मरक्तप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वोपगमेन तत्राप्यापत्तेरसंभवात् ॥ प्राचीनैर्विशेषाभा
वादन्यस्य सामान्याभावस्यास्वीकारादिष्टापत्तिरतो दूषणांतरमाहैवमिति ॥ विनिगमनाविरहेण सर्वस्यैवाभावस्याधिकरणविशे
षकालविशेषावच्छेदेन घटत्वपटत्वादिधर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारापत्त्या नाभावभेदविलोप इत्यतो दूषणांतरमाहैव १८९

मिति॥ तत्समानाधिकरण तत्समनियतेति॥ अत्रसमानाधिकरणेत्यनेनदेशतोव्याप्यत्वंविवक्षितंसमनियतेत्यनेनकाल
तःसमनैय्यत्यंविवक्षितंतेनसमनियतस्यसामानाधिकरण्यनियमात्समानाधिकरणेतिव्यर्थमितिशंकानवकाशः॥ यत्रसंयुक्तयोः
रक्तघटयोरेकस्मिन्घटेरक्तरूपनाशोऽन्यस्मिन्रक्तघटेसंयोगनाशश्चैकदोत्पन्नःकालतोरक्तध्वंससमनियततादृशसंयोगध्वंसेरक्त
त्वावच्छिन्नप्रतियोगिताकत्वस्वीकारापत्यातादृशसंयोगध्वंसावगाहिरक्तघटेरक्तंरूपंनास्तीतिप्रतीतेःप्रमात्ववारणायदेशतोव्याप्य
त्वनिवेशः॥ एकाधिकरणेभिन्नकालोत्पन्नस्यश्यामरूपनाशस्यापिदेशतोरक्तरूपध्वंसव्याप्यत्वाच्छ्यामनाशस्यापिरक्तकाले
रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारापत्याश्यामरूपध्वंसावगाहिन्याःरक्तकालेरक्तंरूपंनास्तीतिप्रतीतेःप्रमात्वापत्तिवारणाय
कालतःसमनैय्यत्वनिवेशः॥ हेत्वधिकरण सामान्यांतर्भावेणेत्यर्थइति॥ स्वविशिष्टहेतुमद्वृत्तयोयावंतोधर्माःस्वप्रतियो
ग्यधिकरणतत्तत्प्रत्येकाश्रयवृत्तित्वमित्यर्थः॥ एतेनैकमात्रवृत्तिहेतुकेहेत्वधिकरणसामान्याप्रसिद्धिः स्वविशिष्टहेत्वधिकरणता
व्यापकत्वप्रतियोग्यधिकरणताकत्वनिवेशेकपिसंयोगात्मकाभावस्यप्रतियोग्यधिकरणतायाहेत्वधिकरणताव्यापकत्वेनाव्याप्ति

विरहात्वविशिष्टत्वविशेषणवैय्यर्थ्यापत्तिरित्यादिदूषणानवकाशः ॥ धूमवत्वप्रकारकप्रमाविषयत्वाभावस्येति ॥ महाकालस्य संयोगेननधूमवत्वमित्यभिप्रायेणेदमन्यथाताद्दशप्रमाविषयत्वस्यमहाकालेसत्वात्तत्रैवताद्दशप्रमाविषयत्वाभावस्यप्रतियोगिसामानाधिकरण्यंसंभवतीतिबोध्यं ॥ नन्वत्रधूमाभावमादायातिव्याप्तिवारणासंभवात्तावत्पर्यंतानुधानंनिर्बीजमितिचेदत्रकेचित् ॥ संयोगेनद्रव्यस्याव्याप्यवृत्तितामतेधूमाभावस्यापिप्रतियोगिसामानाधिकरण्यंपर्वतादावस्तीतिनतमादायातिव्याप्तिवारणमितितावत्पर्यंतानुधावनं ॥ नचविशेष्यतायाअपिज्ञानसमानकालीनत्वमतेऽव्याप्यवृत्तित्वात्ताद्दशाभावस्यापिप्रतियोगिसामानाधिकरण्यमक्षतंतस्याअतथात्वमतावलंबनेचद्रव्यस्यव्याप्यवृत्तित्वमतावलंबनसंभवात्प्रसिद्धधूमाभावत्यागोनिर्बीजएवेतिवाच्यं ॥ धूमनिष्ठप्रकारतानिरूपितप्रमीयविशेष्यतायाःसर्वमतएवव्याप्यवृत्तित्वंताद्दशविशेष्यतात्वस्येश्वरीयप्रमाविशेष्यतासाधारण्याद्धूमस्यव्याप्यवृत्तित्वंतुनतथेतिविशेषात् ॥ नन्वेवमपितस्यापिव्यापकताघटकस्वरूपसंबंधेनपूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यंदुर्वारमेवेतिचेन्न ॥ भावरूपप्रतियोगिसामानाधिकरण्यनिवेशेनातिव्याप्तिरित्यभिप्रायात् ॥ वस्तुतस्तुमहा

कालक्रियाऽयोगोलकान्यतमासमवेतत्वावच्छिन्नाभावमादायातिव्याप्तिवारणंबोध्यंतादृशाभावस्याप्यादिपदग्राह्यत्वात् ॥ महाकाले
चेत्युक्तमिति ॥ अथचरमध्वंसात्मकस्याप्यभावस्यैतत्कालीनघटध्वंसादौप्रलयकालावच्छेदेनसत्वादेतत्कालावच्छेदेनप्रतियोगि
नश्चसत्वात्संभवत्येवखंडकालेप्रतियोगिसामानाधिकरण्यं ॥ नचक्रियामात्रस्यैवकालोपाधित्वमित्यभिप्रायेणेदमितिवाच्यं ॥ तथा
सतिप्रलयस्यापिकालत्वानुपपत्याप्रलयावृत्तिमान्कालत्वादित्यस्यसद्धेतुत्वप्रसंगेनतत्रातिव्याप्तिदानस्यासंगत्यापत्तेरितिचेन्न ॥ प्र
लयत्वंहिजन्यद्रव्यानधिकरणत्वेसतिद्रव्याधिकरणत्वंप्रलयस्याकालत्वेचतादृशप्रलयत्वमेवनस्यादितिक्रियातिरिक्तस्यप्रलयात्मकध्वं
सस्यैवकालत्वंस्वीक्रियतेनतदतिरिक्तध्वंसस्येत्यभिप्रायान्नकोपिदोषः ॥ अन्यथापुनःसत्तावानिति ॥ यद्यपिप्रतियोगिवैय्य
धिकरण्याघटितव्यापकत्वकल्पेहेतुसामानाधिकरण्यांशेस्वरूपसंबंधावच्छिन्नत्वस्यनिवेशावश्यकत्वंपूर्वमुक्तंतदिदानींकथंस्ववि
शिष्टत्वानिवेशेतेनसंबंधेनहेतुसामानाधिकरण्यनिवेशंविस्मृत्यसत्ताभावमादायाव्याप्तिप्रदर्शनंसंगच्छतइतिशंकावतरतितथापि
गगनादिवृत्तित्वविशिष्टसत्ताभावमादायैवस्वविशिष्टेत्यस्यव्यावृत्तिर्विवक्षितेतिबोध्यं ॥ यत्तुविशिष्टाभावमादायसर्वत्रैतल्लक्षणस

मन्वयात्प्रतियोग्यवृत्तिश्चेतिग्रंथावतारकत्वानुपपत्तेर्विशिष्टाभावस्यसंबंधाभावरूपत्वमवश्यंवक्तव्यमितिताद्दशाभावस्यलक्षणघटकतान
संभवतीतिकेनचिदुक्तंतन्न ॥ प्रतियोग्यवृत्तिश्चेतिग्रंथावतारकत्वानुपपत्तेरेवैल्लक्षणंपरित्यज्यद्वितीयलक्षणानुसरणेबीजत्वस्यवक्ष्य
माणत्वात्॥ अत्रेदंबोध्यं ॥ द्वितीयलक्षणेव्यापकतायाः प्रतियोगिवैय्यधिकरण्याघटितायाएवनिवेशेनतत्रहेतुसामानाधिकरण्यांशे
स्वरूपसंबंधनिवेशावश्यकतयासत्तासाध्यकेसत्ताभावस्यस्वरूपसंबंधेनहेतुसामानाधिकरण्यविरहेणाविशिष्टसत्ताभावस्यतल्लक्षणा
घटकत्वेनाव्याप्तिविरहात्स्वविशिष्टेतिव्यर्थमितिशेषंपूर्ववदिशावसेयमितिदीधितिरसंगता॥ नचतल्लक्षणेभावभिन्नत्वमेवनिविशिष्टंन
हेतुसामानाधिकरण्यांशेस्वरूपसंबंधनिवेशइतिवाच्यं ॥ कपिसंयोगात्मकाभावस्यदैशिकविशेषणतयाहेतुसामानाधिकरण्यवि
रहेणभावभिन्नत्वविरहेणचेतिद्वितीयलक्षणेग्रंथकृदुक्तौ विशेषणद्वयनिवेशप्रयोजनाभावेनभावभिन्नत्वविरहेणेत्यस्यस्वरूपसंबं
धेनहेत्वसामानाधिकरण्येहेत्वर्थकतायाआवश्यकत्वेनस्वरूपसंबंधस्यैवहेतुसामानाधिकरण्येनिवेशनीयत्वात्॥ नचभावभिन्नत्व
विरहेस्वरूपसंबंधेनहेत्वसामानाधिकरण्यंहेतुः संभवतिताद्दशद्रव्यत्वाभावादेर्भावभिन्नत्वविरहाभावात्॥ नचैवंसमुच्चयार्थकतत्रत्य

चकारासंगतिरिति वाच्यं ॥ प्रतियोगिवैय्यधिकरण्याघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेणेत्यनेनैवसमुच्चयस्यविवक्षितत्वात् ॥ नच प्रतियोगिवैय्यधिकरण्याघटितव्यापकतायांसाध्यवन्हिष्ठत्वांशेस्वरूपसंबंधावच्छिन्नत्वनिवेशावश्यकतयाकपिसंयोगात्मकाभावस्यस्वरूपसंबंधेनसाध्यवन्हिष्ठत्वविरहेणलक्षणघटकत्वंसंभवत्येवेतिवाच्यं ॥ स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधेनैवसाध्यवद्वृत्तित्वस्यविवक्षणीयत्वादिति ॥ **जलवृत्तिद्रव्यमिति** ॥ इदंचजलादीतिदीधितिग्रंथानुरोधेन ॥ वन्हिमद्वृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्यधूमाभावाधिकरणकस्यधूमाभावस्वरूपस्यवन्हिमद्वृत्तिद्रव्यरूपप्रतियोगिसामानाधिकरण्यमादायप्रसिद्धहेतुकव्यभिचारिण्यतिव्याप्तिसंभवात् ॥ **इदंतुबोध्यं** ॥ एवंरीत्यागदाधरग्रंथसंगमनेपिदीधित्यसंगतिर्दुर्वारैवेति ॥ **अत्रकेचित्** ॥ कालिकसंबंधेनजलवृत्तित्वविशिष्टस्ययःकालिकसंबंधेनाभावस्तस्यधूमाभावाधिकरणकस्यधूमाभावस्वरूपतासंभवात्कालिकसंबंधेनजलवृत्तिद्रव्यरूपप्रतियोगिसामानाधिकरण्यमादायधूमवान्वन्हेरित्यत्रैवातिव्याप्त्यभिप्रायकंतादीधितिग्रंथस्यसंभवति ॥ नचताद्दशाभावस्यनित्यमात्रवृत्तेर्नजलत्वाभावरूपतासंभवतीतिवाच्यं ॥ समवायसंबंधावच्छिन्नप्रतियोगिता

कजलत्वाभावासमनैय्यत्येपिकालिकसंबंधावच्छिन्नप्रतियोगिताकजलत्वाभावसमनैय्यत्येनतद्रूपतासंभवादित्याहुस्तन्न ॥ जन्यस्य
कालोपाधितानभ्युपगंतृमतसाधारण्येनैवजलादीतिग्रंथस्यव्यभिचारिविशेषपरत्वस्यगदाधरैरुक्तत्वात् ॥ अथैवमप्ययोगोलक
भिन्नस्यापितादात्म्यसंबंधेनधूमंप्रतिव्यापकतयाअयोगोलकभिन्नभेदस्यलक्षणघटकतयाव्यापकताघटकतादात्म्यसंबंधेनायोगोल
कादौतद्भिन्नरूपप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः नचतादृशभेदाधिकरणकजलवृत्तित्वविशिष्टगोत्वाभावतादात्म्यसं
बंधेनायोगोलकवृत्तिद्रव्यान्यतराभावस्यतादृशभेदस्वरूपतयातादात्म्येनायोगोलकवृत्तिद्रव्यस्यापितत्प्रतियोगित्वात्तत्सामानाधिक
रण्यमादायातिव्याप्तिरस्त्येवेतिवाच्यं ॥ तथासतिजलादीतिग्रंथस्य व्यभिचारिविशेषपरत्वेनसंगमनस्यायुक्तत्वाद्धूमाभावाधिकर
णकजलवृत्तित्वविशिष्टगोत्वाभाववन्हिमद्वृत्तिद्रव्यान्यतराभावस्यापिधूमाभावरूपतासंभवेनधूमवान्वन्हेरित्यादावेवातिव्याप्तिसंभवा
दितिचेन्न ॥ पूर्वोक्तयुक्त्याप्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायांभेदानवच्छिन्नत्वविशेषणावश्यकतयैतद्रूपवानेतद्रसादि
त्यादौपटभिन्नभेदस्यव्यापकताघटकतादात्म्यसंबंधेनभेदानवच्छिन्नप्रतियोगिताश्रयसामानाधिकरण्याभावाद्व्याप्तिवारणायव्या

पकतावच्छेदकप्रतियोगितायामपितादृशविशेषणस्यावश्यकतयाऽयोगोलकभिन्नभेदस्यलक्षणघटकत्वा भावात्॥ **एवंसर्वत्रहेतुसमानाधिकरणमुभयत्वावच्छिन्नाभावमिति**॥ वाच्यत्वगगनोभयत्वाद्यवच्छिन्नाभावमित्यर्थस्तादृशोभयत्वावच्छिन्नाभावीयप्रतियोगितायाअव्यासज्यवृत्तितयासाध्यवतितादृशप्रतियोगित्वावच्छिन्नाभावासत्वाल्लक्षणघटकत्वमव्याहतं॥ **अथ**द्वितीयचक्रवर्तिलक्षणेयथाव्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वेसामानाधिकरण्येनानवच्छेदकत्वमित्यत्रसामानाधिकरण्येनेतिव्यर्थंस्यादितितदावश्यकत्वंतथाऽत्रापिव्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वेसाध्यवन्निष्ठाभावीयप्रतियोगितायांसामानाधिकरण्येनानवच्छेदकत्वरूपसाध्यव्यापकतावच्छेदकत्वघटकसामानाधिकरण्येनेत्यस्यवैयर्थ्यंस्यादितितदावश्यकत्वं॥ **यदिच**प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदकत्वस्यगौरवग्रस्तत्वात्तद्घटितव्यापकतावच्छेदकत्वमेवग्रंथकृदभिमतमितिमन्यतेतदापितादृशव्यापकतावच्छेदकत्वस्ययःदृशप्रतियोगितावच्छेदकविशिष्टानधिकरणंसाध्यवत्तादृशप्रतियोगितानवच्छेदकत्वरूपस्यशरीरेयादृशप्रतियोगितावच्छेदकविशिष्टत्ववैयर्थ्यस्यदुर्वारत्वादिति**चेन्न**॥ साध्यव

न्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वरूपस्यैवप्रतियोगिवैय्यधिकरण्यघटितव्यापकतावच्छेदकत्वरूपतायाःप्राग्दर्शि
तत्वात्तत्रचप्रतियोगितावच्छेदकविशिष्टत्वादेरनिवेशात्॥ नचतादृशावच्छेदकतानवच्छेदकत्वंतादृशावच्छेदकत्वत्वावच्छिन्न
तादृशावच्छेदकत्वनिष्ठप्रतियोगिताकत्वं तत्रचतादृशावच्छेदकतात्वेनघटाभावस्यघटाभावीयप्रतियोगितासाधारण्येनघटा
भावस्यापिलक्षणघटकत्वादसंभववारणायोपादेयप्रतियोगितायामवच्छेदकत्वनिष्ठत्वंव्यर्थंस्यादितिव्यधिकरणधर्मावच्छि
न्नाभावस्यावश्यकत्वमस्त्येवेति॥ मैवंप्रतियोगितासंबंधेनतादृशावच्छेदकत्वत्वविशिष्टविशिष्टाभावस्यैवनिवेशात्समानाधि
करणधर्मावच्छिन्नाभावस्यैवतथात्वात्तस्यघटाभावीयप्रतियोगितासाधारण्यविरहात्॥ एवंस्वविशिष्टसामान्येसाध्यवद्व्यक्तिं
चिद्व्यक्त्यसंबद्धत्वघटितपरिष्कारेपिस्वविशिष्टत्वावच्छेदेनैवप्रतियोगितयासाध्यवद्व्यक्तिंचिद्व्यक्तिसंबद्धत्वत्वविशिष्टविशि
ष्टाभावएवनिवेशनीयइतिनकोपिपूर्वपक्षावकाशइत्यलं॥ इतिप्रथमस्वलक्षणं॥ द्रव्यत्वेनधूमोनास्तीति॥ अथ
द्रव्यत्वेनधूमाभावीयप्रतियोगितायांद्रव्यत्वस्यावच्छेदकत्वेपिप्रतियोगितावच्छेदकेत्यनेनप्रतियोगितायाअनतिरिक्तवृत्तिस

द्यद्वच्छेदकमित्यादिविवक्षायाआवश्यकत्वेनतादृशाभावीयप्रतियोगितायाद्रव्यत्वादेरतिरिक्तवृत्तित्वेनैवनातिव्याप्तिः ॥ अथसामान्य
धर्मस्यविशेषाभावीयप्रतियोगितायामवच्छेदकत्वस्वीकारेमिश्रलक्षणेप्रमेयत्वेनगगनाभावस्यसाध्याभावव्यापकतयातत्प्रतियोगि
तावच्छेदकत्वस्यप्रमेयत्वेसत्वाद्वाच्यत्वसाध्यकप्रमेयहेतुकेःव्याप्तिकथनंदीधितिकृतोविरुध्येत ॥ नचप्रमेयत्वस्यप्रमाविषयत्वरूपस्य
विषयत्वापेक्षयागुरुत्वेनाभावप्रतियोगितावच्छेदकत्वंनसंभवतीत्यव्याप्तिसंगतिरितिवाच्यं ॥ एवंसतिप्रमेयत्वस्यगुरुत्वेनानवच्छे
दकत्वादित्युपेक्ष्यप्रमेयत्वव्याधिकरणप्रतियोगितायाअप्रसिद्धत्वादितिलिखनस्वारस्यभंगादितिचेन्न ॥ धूमवान्वन्हेरित्यादौधू
माभावव्यापकोयोवन्हित्वेनायोगोलकवृत्तिवन्हितदन्यवृत्तिवह्न्युभयाभावस्तत्प्रतियोगितावच्छेदकत्वमादायातिव्याप्तिवारणा
यस्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितानवच्छेदकस्वावच्छेदकस्यप्रतियोगितावच्छेदकेत्यनेनविवक्षणीयतयोक्तस्थलेप्र
मेयत्वस्यातथात्वेनाव्याप्तिकथनविरोधाभावात् ॥ अत्रकेचित् ॥ प्रतियोगितायान्यूनवृत्तिभिन्नंसद्यद्वच्छेदकमितिप्रथम
परिष्कारातिव्याप्तिवारणानुरोधेनवक्तृगतिमनुरुध्यवाद्रव्यत्वस्यतादृशाभावप्रतियोगितावच्छेदकत्वनिराकरणमित्याहुः ॥ न

नुद्रव्यत्वेनधूमाभावीयप्रतियोगितायांद्रव्यत्वस्यावच्छेदकत्वास्वीकारेशुद्धधूमवत्तानिश्चयोत्तरंद्रव्यत्वेनधूमाभाववत्ताबुध्यनापत्तिस्त
स्याधूमवत्तानिश्चयप्रतिबध्यतावच्छेदकधूमत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वाक्रांतत्वादितिचेन्न ॥
शुद्धधूमत्वावच्छिन्नप्रतियोगितासंबंधावच्छिन्नशुद्धधूमत्वावच्छिन्नप्रकारताघटितधर्मस्यैवधूमवत्तानिश्चयप्रतिबध्यतावच्छेदकत्वो
पगमात् ॥ तादृशप्रतीतौद्रव्यत्ववैशिष्ट्यस्याधिकस्यधूमांशेभानान्नोक्तापत्तिः॥ द्रव्यत्वेनधूमाभावीयप्रतियोगितायांद्रव्यत्वस्याव
च्छेदकत्ववादिनोपिमहानसीयधूमोनास्तीतिबुद्धेर्धूमवत्तानिश्चयप्रतिबध्यत्ववारणायनिरुक्तरूपस्यप्रतिबध्यतावच्छेदकत्वोपग
मस्यावश्यकत्वाच्च ॥ धूमशून्येंऽगारशेषेधूमवद्वृत्तित्वविशिष्टवह्न्यभावासत्वात्तादृशाभावस्यनधूमाभावसमनैयत्यसंभवइति
धूमकालावच्छिन्नेतिधूमवद्वृत्तित्वेविशेषणं ॥ उक्तप्रतीतेर्वह्नित्वेऽवच्छेदकतावगाहित्वेपितद्विषयस्यसामान्यरूपेणविशेषाभा
वत्वाप्रसक्तेरित्यभिप्रायेणाहास्तुवेति ॥ घटभिन्नत्वेनेति ॥ अत्रधूमत्वस्यावच्छेदकताप्रयोजकतृतीयांतोल्लेख्यत्वाभावाद्घट
धूमभेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्वरूपान्यतरत्वावच्छिन्नरूपप्रतियोगिनिसाक्षाद्विशेषणत्वाभावाच्चनतादृश

भावप्रतियोगितावच्छेदकत्वशंकेतिध्येयं॥ भेदत्वेनेति ॥ अत्राप्ययोगोलकभेदशून्येघटाभाववतितादृशाप्रतीत्यनुदयापत्तेर्नतादृशा
न्यतरत्वमात्रस्यप्रतियोगिताप्रतियोगितावच्छेदकत्वं ॥ भेदत्वेनायोगोलकभेदघटान्यतराभावस्यसंयोगसंबंधावच्छिन्नप्रतियोगिता
कस्यकेवलान्वयित्वेननायोगोलकभेदाभावसमनैय्यत्यंस्वरूपसंबंधावच्छिन्नप्रतियोगिताकस्यतत्समनैय्यत्यसंभवेप्ययोगोलक
भेदशून्यस्यस्वरूपसंबंधेनतादृशान्यतरत्वावच्छिन्नवतोऽप्रसिद्धत्वेनातिप्रसंगविरहात्तादृशान्यतरत्वस्यैवप्रतियोगितावच्छेद
कत्वसंभवेनातिव्याप्त्यप्रसक्तेस्तादृशाभावोपेक्षेतिध्येयं॥ न्यूनवृत्तित्वंचेति ॥ यद्यपि वाच्यत्वसाध्यकेलक्षणघटकज्ञेयत्वत्वे
नवाच्यत्वाभावीयप्रतियोगितायान्यूनवृत्त्यैवज्ञेयत्वत्वंन्यूनवृत्तित्वनिरुक्तौस्वपदेनतदभावीयप्रतियोगिताया एवोपादेयतयासम
नियताभावैक्यमतेतादृशाभावस्यवाच्यत्वत्वेनज्ञेयत्वाभावाभिन्नतयातदीयप्रतियोगितायाज्ञेयत्वेपिसत्वात्तथापिस्वसमानाधि
करणभेदप्रतियोगितावच्छेदकत्वस्यावच्छेदकत्वसामानाधिकरण्यैतन्निरूपसंबंधावच्छिन्नप्रतियोगिताकतदभावीयप्रतियोगि
त्वाभाववत्तदभावीयप्रतियोगितावच्छेदकंन्यूनवृत्तिभिन्नंसद्यदवच्छेदकमित्यनेनविवक्षणीयमितिनदोषः॥एतत्कल्पेसाध्यव्याप

कतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपिस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वंदेयंतेनवन्हिसाध्यकेवन्हित्वेनमहानसीयवन्हिघटा
न्यतराभावस्ययावदंतर्गतस्यप्रतियोगितायान्यूनवृत्तिभिन्नावच्छेदकाप्रसिद्धावपिनक्षतिः॥ वन्ह्याद्यभावीयप्रतियोगितायाप्रमेयसा
मान्यवृत्तित्वेत्वाह॥ अथवेति॥ स्वव्यापकतत्कान्यत्वेति॥ स्वनिरूपकत्वस्वाश्रयसमानाधिकरणभेदप्रतियोगितावच्छे
दकत्वस्वाश्रयसामानाधिकरण्यैतात्त्रितयसंबंधेनावच्छेदकताविशिष्टान्यप्रतियोगितावच्छेदकमेवतादृशोभयाभाववत्तत्प्रति
योगितावच्छेदकमित्यनेनविवक्षणीयमितिनाननुगमादिर्दोषः॥ एतत्कल्पेव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि
निरुक्तत्रितयसंबंधेनावच्छेदकताविशिष्टान्यत्वंदेयंतेनवन्हित्वेनमहानसीयवन्हिघटान्यतराभावीयतादृशावच्छेदकत्वस्या
प्रसिद्धावपिनाव्याप्तिः॥ अत्रस्वव्यापकत्वशरीरेस्वाधिकरणत्वस्यप्रतियोगितावच्छेदकताघटकसंबंधेनैवविवक्षणीयतया
यादृशाभावप्रतियोगितावच्छेदकताघटकःकालिकसंबंधोविषयितासंबंधोवातदभावीयतादृशप्रतियोगितावच्छेदकत्वस्य
स्वव्यापकतत्कान्यत्वाप्रसिद्ध्याऽप्रसिद्धिरतआह॥ स्वन्यूनवृत्तिभिन्नायाःप्रतियोगितायाइति॥ अवच्छिन्नत्वसामाना

धिकरण्यसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसंबंधेन धर्मविशिष्टान्यायाइत्यर्थस्तननानानुगमः ॥ एतत्कल्पेव्यापक
तावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि निरुक्तत्रितयसंबंधेन धर्मविशिष्टान्यत्वंदेयंतेननवह्नित्वेनमहानसीयवह्निघटान्यतरा
भावीयप्रतियोगितायास्तादृशत्वविरहेप्यव्याप्तिः ॥ निरुक्तकल्पत्रयेपिभाव रूपप्रतियोगिसामानाधिकरण्यनिवेशावश्यकतयागौरवादा
ह ॥ तत्प्रतियोगितासमानाधिकरणेति ॥ एतत्कल्पेप्रतियोगिनिभावत्वनिवेशः प्रयोजनाभावाद्धेयः ॥ असंभवइति ॥ हेतुसा
मानाधिकरण्यांशेस्वरूपसंबंधनिवेशपर्यवसित भावभिन्नत्वनिवेशाभिप्रायेण ॥ अव्याप्तिर्वेति व्यापकतावच्छेदकरूपेभाववृत्तित्व
निवेशकल्पाभिप्रायेण ॥ तत्कल्पेभावभिन्नत्वानिवेशात् ॥ प्रमेयसाध्यकस्थलेति ॥ नन्वेतत्कल्पेधूमसाध्यकेकालिकसंबंधेन धू
माभावप्रतियोगितावच्छेदकविशिष्टवह्निसामानाधिकरण्यमादायातिव्याप्तिवारणायप्रतियोगितावच्छेदकताघटकसंबंधेनप्रति
योगितावच्छेदकवैशिष्ट्यं निवेशनीयंतथाचवह्निसाध्यकसद्धेतौविषयितयावह्नित्वविशिष्टाभावस्य प्रतियोगितावच्छेदकताघटक
विषयितयाप्रतियोगितावच्छेदकविशिष्टज्ञानादिनापर्वतादौसामानाधिकरण्याभावादव्याप्तिवारणायसाध्यतावच्छेदकनिष्ठावच्छेदक

तायांसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वनिवेशावश्यकतयाकथंसंयोगादिसंबंधावच्छिन्नप्रमेयत्वनिष्ठावच्छेदकताकाभा
वमादायलक्षणसमन्वयइतिचेन्न ॥ अतिव्याप्तिवारणायसाध्यतावच्छेदकताघटकसंबधेनैवप्रतियोगितावच्छेदकवैशिष्ट्यस्यनि
वेश्यत्वात्साध्यतावच्छेदकनिष्ठावच्छेदकतायांतत्संबंधावच्छिन्नत्वानिवेशात् ॥ लघुरूपसमनियतेति ॥ प्रमेयवन्हित्वाद्यवच्छिन्न
साध्यकइत्यर्थः ॥ यद्यपिगुरुधर्मस्यावच्छेदकत्वंसिद्धांतेआवश्यकमन्यथासाध्यवन्निष्ठगोत्वाभावीयप्रतियोगितायांलाघवेनगो
समवेतत्वस्यैवावच्छेदकतयाताद्भिन्नगवेतरासमवेतत्वसकलगोवृत्तित्वाभ्यांगोत्वभिन्नाभावस्ययावदंतर्गतस्यगोत्वरूपप्रतियोगि
सामानाधिकरण्याभावादसंभवापत्तेस्तथापितत्समनियताभावांतरमादायतस्यापिप्रतियोगिसामानाधिकरण्यान्नासंभवइ
तितदनावश्यकं ॥ ननुप्रमेयवन्हिसाध्यकेविषयितयाप्रमेयवन्हित्वविशिष्टाभावस्यैवप्रसिद्धेर्नाव्याप्तिः ॥ नहिवन्हित्वस्यैवताद
शाभावप्रतियोगितावच्छेदकत्वंसंभवतिप्रमेयवह्न्यविषयकवह्निविषयकज्ञानवतिताद्दशाभावासत्वप्रसंगात् ॥ नचसंयोगेन
प्रमेयवन्हिसाध्यकेविषयितयाप्रमेयवन्हित्वविशिष्टस्यसंयोगेनयो भावस्तस्यकेवलान्वयितयावन्हित्वस्यावच्छेदकत्वेपिसंयो

गेनविषयितयावन्हित्वविशिष्टस्यासत्वादेवनातिप्रसंगइति **वाच्यं** ॥ प्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वस्यप्रयोजना भावेनानिवेशात्समवायेनतादृशाभावप्रसिद्धेः ॥ **नच** प्रमेयत्वविशिष्टात्मत्वसाध्यकईश्वरत्वहेतुकेविषयितयासाध्यतावच्छेदकविशि ष्टाभावस्यहेतुसामानाधिकरण्याभावेनव्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धेरव्याप्तिरिति **वाच्यं** ॥ आत्मत्वमात्रविषयकज्ञा नप्रमेयत्वमात्रविषयकज्ञानान्यतरत्वविशिष्टस्यसाध्यतावच्छेदकरूपेणाभावस्यैवप्रसिद्धेरिति **चेन्न** ॥ प्रमेयत्वविशिष्टेश्वरा वृत्तिसाध्यकईश्वरत्वहेतुकेविषयितयासाध्यतावच्छेदकविशिष्टाभावस्यहेतुसामानाधिकरण्यविरहेणव्यधिकरणधर्मावच्छिन्ना भावमादायातिव्याप्तेः साध्यतावच्छेदकनिष्ठावच्छेदकतायांविषयितासंबंधानवच्छिन्नत्वनिवेशस्यावश्यकतयोक्तगुरुधर्माव च्छिन्नसाध्यकेतादृशावच्छेदकताकाभावाप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात् ॥ **पूर्वोक्तदीशातिव्याप्तेरिति** ॥ पूर्वक्षणवृत्तित्वविशि ष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेरित्यर्थः ॥ **ननु** पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वेतत्प्रतियोगितासमा नाधिकरणतत्प्रतियोगितानिरूपकाभाववद्वृत्तितावच्छेदकान्यतत्प्रतियोगितावच्छेदकत्वाभावान्नोक्तातिव्याप्तिरिति **चेन्न** ॥ तादृशावि

वक्षाकल्पेवन्हिसाध्यकेयावदंतर्गतवन्हित्वेनमहानसीयवन्हिघटान्यतराभावस्यतादृशप्रतियोगितावच्छेदकाप्रसिद्ध्याऽव्याप्तिवा
रणायसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपिस्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितावच्छेदकधर्मावच्छि
न्नायायाप्रतियोगितातत्तदन्यत्वनिवेशावश्यकतयासंयोगेनद्रव्यस्याव्याप्यवृत्तित्वमतेधूमाभावस्यलक्षणघटकत्वानुपपत्याव्यधि
करणधर्मावच्छिन्नाभावमादायातिव्याप्तेर्वारणायप्रतियोगितायाअनतिरिक्तवृत्तिसद्यदवच्छेदकमित्येतादृशविवक्षणस्यैवादरणी
यत्वेनपूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वेतादृशावच्छेदकत्वाक्षतेरतिव्याप्तेर्दुर्वारत्वात्॥ नचतादृशप्रतियोगितावच्छेदकावच्छिन्नभा
वसामानाधिकरण्यनिवेशान्नातिव्याप्तिःसिद्धांतेपिप्रतियोगितावच्छेदकावच्छिन्नेभावत्वनिवेशस्यावश्यकतयामन्मतेतन्निवेशेगौरवविर
हादितिवाच्यं॥ सिद्धांतेतत्प्रतियोगितासमानाधिकरणेत्यादिकल्पस्यैवादरणीयतयापूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वरूपप्र
तियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादायातिव्याप्त्यप्रसक्तेस्तदनावश्यकत्वात्॥ किंचैतन्मतेसंयोगेनद्रव्यस्याव्या
प्यवृत्तित्वमतेसंयोगेनवह्न्यादिसाध्यकेसाध्यतावच्छेदकसंबंधघटितव्यापकताप्रसिध्यर्थंसाध्यवन्निष्ठाभावेप्रतियोगिवैय्यधि

करण्यनिवेशावश्यकतयावाच्यत्वसाध्यकेपिदर्शितविशिष्टाभावमादायलक्षणसमन्वयसंभवेप्रतियोग्यवृत्तिश्चेतिग्रंथानुत्थिति
गौरवंच ॥ **नप्रतियोगितावच्छेदकसंबधघटितव्यापकतावच्छेदकमिति** ॥ **अत्रयद्यपि** सिद्धांतेपिव्यधिकरणधर्माव
च्छिन्नाभावसंग्रहोनसंभवतिसंयोगेनवाच्यत्वाभावस्यापिपूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठायास्वप्रतियोगितातदवच्छेदक
स्वरूपसंबंधघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेनलक्षणघटकतयातस्यचतादृशस्वरूपसंबंधेनवाच्य
त्वत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादायसर्वत्रलक्षणसमन्वयात् ॥ नचसंयोगेनवाच्यत्वाभावीयप्रतियो
गितायाः स्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितावच्छेदकवाच्यत्वत्वावच्छिन्नत्वेनतदन्यत्वविरहात्तादृशाभावस्यनलक्षण
घटकतेतिवाच्यं ॥ स्वनिरूपकाभाववद्वृत्तित्वांशेस्वावच्छेदकसंबंधावच्छिन्नत्वनिवेशावश्यकत्वेनतादृशसंयोगेनवाच्यत्वादेरवृत्तेर्वा
च्यत्वत्वस्यतादृशवृत्तितावच्छेदकत्वविरहात् ॥ नचैवंतादृशाभावस्यलक्षणघटकत्वेपितत्प्रतियोगितासमानाधिकरणेत्याद्यवच्छे
दकत्वस्यवाच्यत्वत्वेऽसंभवेननतदवच्छिन्नसामानाधिकरण्यमादायलक्षणयोगइतिवाच्यं ॥ तत्रापिस्वनिरूपकाभाववद्वृत्तित्वां

शोस्वावच्छेदकसंबंधावच्छिन्नत्वविवक्षायाआवश्यकत्वेनवाच्यत्वेतादृशावच्छेदकत्वानपायात्॥ नचस्वनिरूपकाभाववद्वृ
त्तित्वांशेस्वावच्छेदकसंबंधावच्छिन्नत्वनिवेशेवह्न्यादिसाध्यकेसत्तासामान्याभावस्यापिलक्षणघटकतयायावदंतर्गततादृशाभावी
यप्रतियोगितानिरूपकाभाववत्तिसामान्यादौस्वावच्छेदकसमवायसंबंधेनवृत्तेरप्रसिद्ध्यातत्प्रतियोगितासमानाधिकरणेत्या
द्यवच्छेदकाप्रसिद्ध्याऽव्याप्तिरितिवाच्यं॥ सत्ताभावस्यस्वरूपसंबंधेनहेतुसामानाधिकरण्याभावेनलक्षणघटकत्वविरहादिति
पूर्वपक्षोवतरतितथापिव्यधिकरणधर्मावच्छिन्नाभावास्वीकारेतत्प्रतियोगितावच्छेदकसंग्रहायोपात्ततत्प्रतियोगितासमाना
धिकरणेतिविशेषणवैयर्थ्यंस्यादितितदावश्यकताद्वितीयचक्रवर्तिलक्षणवदितिबोध्यं॥ एवंवन्हित्वेनधूमकालावच्छिन्नधूम
वद्वृत्तित्वविशिष्टाभावस्यधूमाभावसमनियतत्वयातदवच्छेदकवन्हित्वावच्छिन्नसामानाधिकरण्यमादायातिव्याप्तिवारणायप्र
तियोगितावच्छेदकतापर्याप्त्यधिकरणमेवतदवच्छेदकेत्यनेनविवक्षणीयंतथाचमहानसीयवह्न्यभावस्यात्तथात्वादव्याप्तिरतोव्या
पकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यैवविवक्षणीयतयानसर्वत्रविशिष्टाभावमादायलक्षणसत्वशंके

तिध्येयं ॥ पूर्वोक्तदिशेति ॥ सत्तावान्जातेरित्यादौकालिकसंबंधेनहेतुसमानाधिकरणसत्ताभावमादायेत्यर्थः ॥ ननुभावभिन्ना भावनिवेशेवन्हिसाध्यकेघटवृत्तिरूपध्वंसवदन्यत्वाभावस्यकालिकसंबंधेनहेतुसमानाधिकरणस्यभावरूपप्रतियोगिसामानाधिक रण्याभावादव्याप्तिरतआह ॥ अस्तुवेति ॥ संयोगध्वंसेनेति ॥ तत्प्रतियोगितासमानाधिकरणेत्यादिप्रतियोगितावच्छेद कनिवेशाभिप्रायेणेदंतत्कल्पेप्रतियोगिनिभावत्वत्यागस्योक्तत्वात् ॥ अयोगोलकनाशजन्यसंयोगनाशसंभवस्थलानुरोधेनाह ॥ अ नुयोगितेति ॥ वन्हिप्रकारकप्रमाविषयत्वादेः कालत्वसंदेहात्कालिकसंबंधपरित्यागः ॥ प्रतियोगिवृत्तयइति ॥ प्रतियोगिता वच्छेदकसमानाधिकरणा इत्यर्थस्तेनायोगोलकान्यत्वप्रकारकप्रमाविषयत्वाभावस्यतादृशाविषयत्वत्वादिनाप्रमेयाभावाभिन्नत्वेनप्र मेयमात्रस्यतत्प्रतियोगित्वेनतादृशाभावस्यप्रमेयरूपप्रतियोगिवृत्तित्वेपिनातिव्याप्तिरितिबोध्यं ॥ ॥ इतिद्वितीयस्वलक्ष णं ॥ ॥ निरवच्छिन्नवृत्तिकत्वविशिष्टस्यकपिसंयोगाभावस्यशुद्धविशेष्यानतिरिक्ततयाऽव्याप्तितादवस्थ्यमतआह ॥ द्वे त्विति ॥ आधेयतायाआधेयस्वरूपत्वेआधेयतावच्छेदकरूपत्वेवाकपिसंयोगाभावरूपायाः कपिसंयोगाभावत्वरूपायावानि

रवच्छिन्नाधेयताया हेत्वधिकरणनिरूपितत्वानपायादव्याप्तितादवस्थ्यमत आह॥ हेत्वधिकरणनिष्ठेति॥ हेत्वधिकरणीभूतेति
॥ संयोगीसत्वादित्यादौ संयोगाभावनिष्ठतद्व्यक्तित्वस्य हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वविरहाद्व्यधिकरणधर्मावच्छिन्ना
भावमादायातिव्याप्तिरतो यत्किंचिदिति॥ तथा च संयोगाभावनिष्ठतद्व्यक्तित्वादेर्यत्किंचिद्धेत्वधिकरणगुणनिष्ठाभावप्रतियोगि
तानवच्छेदकत्वान्नातिव्याप्तिः॥ नन्वतिव्याप्तिर्नामासल्लिंगकानुमितिजनकपरामर्शस्य प्रमात्वापत्तिस्तन्न च गुणनिष्ठाभावप्रति
योगितानवच्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तादृशाभावप्रतियोगितानवच्छेदकत्वावगाहिज्ञानस्य प्रमात्वविरहेपि द्रव्यस्यापि हेत्व
धिकरणत्वात्तन्निष्ठाभावप्रतियोगितायां सामानाधिकरण्येनानवच्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तादृशाभावप्रतियोगितान
वच्छेदकं साध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुमानिति परामर्शस्य प्रमात्वानपायात्ततो गुणः संयोगवानित्यभ्रांतस्या
नुमितिर्दुर्वारा मैवं॥ स्वनिष्ठाभावीयप्रतियोगिताविशिष्टतद्व्यक्तित्ववत्वसंबंधेन हेत्वधिकरणविशिष्टाभावप्रतियोगितावच्छेदक
त्वसामान्याभावावगाहिज्ञानस्यैव कारणतयोक्तापत्तेरभावात्॥ प्रतियोगितावैशिष्ट्यं च सामानाधिकरण्यावच्छेदकत्वोभ

याभाववत्वसंबंधेनबोध्यं ॥ व्यधिकरणधर्मावच्छिन्नाभावनिष्ठतद्व्यक्तित्वस्यापिहेत्वधिकरणनिष्ठव्यधिकरणधर्मावच्छिन्नाभाव
प्रतियोगितावच्छेदकत्वात्तादृशाभावाप्रसिद्धिरतःसामानाधिकरण्येनेति ॥ अत्रचहेत्वधिकरणवृत्तित्वांशेसंबंधविशेषानिवे
शेसंयोगीजन्यसत्वादित्यादौसंयोगात्मकाभावस्यापिकालिकसंबंधेनहेत्वधिकरणवृत्तित्वात्संयोगाभावस्यलक्षणाघटकत्वेनव्यधि
करणधर्मावच्छिन्नाभावमादायातिव्याप्तिःस्यादतःस्वीययादृशनिरूपकताश्रयवत्ताज्ञानंप्रतियेनसंबंधेनस्वाश्रयवत्ताज्ञानंविरोधिते
नसंबधेनसाध्यतावच्छेदकसंबंधेनवातन्निवेशनीयंतथाचद्रव्यत्वसाध्यकेद्रव्यध्वंसान्यतरत्वादावतिव्याप्तिर्हेतुमतिध्वंसेतादृशसमवाय
संबंधेनवृत्यप्रसिद्धेः  द्रव्येचद्रव्यत्वस्यतेनसंबंधेनवृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्यैवलक्षणघटकत्वादित्यस्वरसआहुरि
त्यनेनसूचितः ॥ परेत्वित्यादिमतेऽधिकाधिकरणतास्वीकारोऽस्वरसः ॥ भावानांदैशिकविशेषणतास्वीकारेत्वाहैवमिति ॥
बाधकविरहादिति ॥ द्रव्यान्यत्वविशिष्टसत्ताभावसाध्यकेसत्तायाःसाध्याभावरूपत्वेगुणादौतादृशाभावोनास्तीतिव्यवहार
स्यतादृशप्रतीतौविशिष्टाधिकरणतायानियामकत्वमंगीकृत्यवारणेपिवक्ष्यमाणप्रतियोगिमत्ताग्रहविरोधितानियामकसमवायसं

बंधेनतस्याहेतुमद्वृत्तितया॰व्याप्तिरितिविशिष्टाधिकरणतायाएवविशिष्टाभावाभावत्वमभ्युपगतंतथेहनबाधकमस्तीतिभावः॥
स्वीयंयादृशप्रतियोगिताश्रयवत्ताज्ञानंप्रतीति॥ अत्रप्रतियोगितायांस्वीयत्वविशेषणंव्यर्थं॥ प्रतियोगितावच्छेदकरू
पेणा———प्रतियोगिमत्तावगाहिज्ञानस्यापिप्रतिबध्यत्वात्प्रतियोगिप्रकारकत्वनिवेशोव्यर्थइतितंपरित्यजति॥ एवंचेति॥प्र
योजनाभावादिति॥ अथप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानसामान्यंप्रतीत्यवश्यंवक्तव्यमन्यथाआकाशा
भावप्रतियोगितावच्छेदकाकाशाभावाभावत्वावच्छिन्नप्रकारकाकाशत्वावच्छिन्नप्रकारकसमूहालंबनंप्रतिदैशिकविशेषणता
संबंधेनाकाशाभाववत्ताज्ञानस्यप्रतिबंधकतयादैशिकविशेषणतायानिरुक्तसाध्यकेसंग्रहोदुर्वारस्तथाचतादृशसामान्यां
तर्गतघटत्वादिनावह्न्याद्यभावप्रतियोगितावच्छेदकघटत्वादिनाघटावगाहिज्ञानंप्रतिघटत्वादिनावह्न्यभावाद्यवगाहिज्ञानस्या
प्रतिबंधकतयातादृशाभावासंग्रहइतियादृशप्रतियोगिताश्रयप्रकारकत्वमावश्यकमितिचेन्न॥ प्रतियोगिप्रकारकत्वनिवेशे
पिवह्नित्वाविषयकस्यघटत्वेनवह्निमत्ताज्ञानस्यापितादृशज्ञानसामान्यांतर्गततयातद्दोषवारणासंभवाद्दर्शितसमूहालंबन

मादायदर्शितदोषवारणंतुयादृशप्रतियोगितावच्छेदकयादृशप्रतियोगितासंबंधावच्छिन्नप्रकारतावच्छेदकैतदुभयातिरिक्तध
र्मावच्छिन्नप्रकारताशून्यज्ञानंप्रतीतिविवक्षयाकर्तव्यं॥साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तेति॥अथै
वंविवक्षणेवन्हित्वेनघटाभाववत्ताज्ञानस्यवन्हित्वेनघटवत्ताज्ञानंप्रत्येवप्रतिबंधकतयातादृशज्ञानस्यचसाध्यतावच्छेदकप्रकृतप्रति
योगितावच्छेदकातिरिक्तघटत्वानवच्छिन्नप्रकारताकत्वविरहेणवन्हित्वेनघटाभावस्यलक्षणाघटकतयैवाव्याप्त्यप्रसक्तेस्तद्वारणायो
पात्तसाध्याभावपदवैय्यर्थ्यमितिच्चेन्न॥विषयितयावन्हित्ववतोवन्हित्वेनाभावमादायवन्हिसाध्यकेऽव्याप्तिवारणायतदावश्यक
त्वात्॥साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वस्यतदर्थत्वाच्चनज्ञानवानात्मत्वादित्यौकालिकेनज्ञानत्ववतोज्ञानत्वेनाभावमादा
याव्याप्तिः॥इदमत्रचिंत्यं॥एवंरीत्यासाध्याभावांशसार्थक्येपिसर्वत्रद्वित्वावच्छिन्नाभावमादायलक्षणसमन्वयप्रदर्शनमसंगतंस्या
त्तस्यसाध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वविरहात्॥नचतद्वृत्तित्वविशिष्टसाध्यतदन्यवृत्तित्वविशिष्टसाध्योभयाभावमादायै
वलक्षणसमन्वयोविवक्षितइतिवाच्यं॥एकमात्रवृत्तिसाध्यकेतादृशाभावाप्रसिद्धेः क्षणविशेषविशिष्टसाध्याभावस्यहेत्वधिकरणे

व्याप्यवृत्तित्वविरहात्तत्रव्यधिकरणधर्मावच्छिन्नाभावस्यावश्यकत्वादिति ।। यद्विचस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वंप्रतियोगितायांनि
वेश्यसाध्यतावच्छेदकव्याप्यत्वविशेषणवारणीयाव्याप्तिवारणंसर्वत्रेतिग्रंथसंगमनंच भवतिन्यूनवृत्तित्वस्यप्रतियोग्यवृत्तित्वविशि
षितभेदघटितत्वादित्युच्यतेतदान्यूनवृत्तित्वस्यविरुद्धव्यावृत्तस्यनिवेशेप्रयोजनाभावेनवन्हित्वेनघटाभावीयप्रतियोगितायास्तादृशत्व
विरहाद्वक्ष्यमाणसमनियतनानाधर्मावच्छिन्नप्रतियोगिताभेदमताभिप्रायेणापितत्सार्थक्यासंभवादिति ।। सर्वत्रवह्नित्वावच्छि
न्नप्रतियोगिताकसाध्याभावमादायेति ।। ननु वन्हिसाध्यकेवन्हिघटोभयाभावीयप्रतियोगितावच्छेदकतायाः साध्यता
वच्छेदकताघटकसंबंधावच्छिन्नायाअप्रसिद्ध्यानतादृशाभावमादायलक्षणसमन्वयः एवमेतद्रूपवानेतद्रसादित्यादावपितत्र
विशिष्टाभावस्यहेत्वधिकरणेव्याप्यवृत्तित्वविरहादुभयाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबंधाव
च्छिन्नत्वविरहाच्च ।। एतेनवन्हिसाध्यकेमहानसीयवह्न्यभावमादायलक्षणसमन्वयेपिनक्षतिः ।। अत्रकेचितु ।। महानसवृत्ति
वह्न्यभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसमवायसंबंधावच्छिन्नावच्छेदकतापर्याप्तेर्वन्हित्वएवसत्वाद्वन्हिसा

ध्यके ऽव्याप्तिवारणायसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकताकायाहेतुसमानाधिकरणाभावीयप्रतियोगितातदवच्छेदकताला
वच्छिन्नपर्याप्तिशून्यत्वस्यैवानवच्छेदकपदेनविवक्षणीयतयैतद्रूपतद्रूपोभयाभावीयप्रतियोगितायामवतरणग्रंथोक्तरीत्यैतद्रूपत्व
तद्रूपत्वद्वित्वैतत्त्रितयस्यावच्छेदकत्वावश्यकत्वात्तादृशोभयाभावीयप्रतियोगिताया अपिसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नै
तद्रूपत्वतद्रूपत्वनिष्ठावच्छेदकताकत्वाक्षतेरित्याहुः॥ परेतुप्रतियोगितायांसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वदानेपिका
लिकेनमहानसीयत्वविशिष्टस्यसमवायेनवन्हित्वविशिष्टस्यसाध्यतायांसद्धेतौसमवायेनमहानसीयत्वविशिष्टस्यकालिकेनव
न्हित्वविशिष्टस्याभावमादायाव्याप्तिवारणायस्वानवच्छेदकसंबंधावच्छिन्नत्वस्वसमानाधिकरण्यैतदुभयसंबंधेनसाध्यतावच्छे
दकताविशिष्टान्यत्वस्यहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतायामवश्यंनिवेशनीयतयागुणवान्द्रव्यत्वादित्यादौविष
यितयागुणत्वविशिष्टाभावीयप्रतियोगितावच्छेदकतायांतादृशोभयसंबंधेनसाध्यतावच्छेदकताविशिष्टान्यत्वविरहेणाव्याप्त्यप्रस
क्तेः प्रतियोगितावच्छेदकतायांसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वस्यानिवेशनीयतयानोक्तपूर्वपक्षावसरइतिवदंति॥

**ननु** द्वितीयलक्षणेव्यधिकरणधर्मावच्छिन्नाभावास्वीकारेवन्हित्वादिनाघटाभावमादायाव्याप्तिवारणायोपात्तसामानाधिकरण्येनेत्य
स्यवैयर्थ्यंस्यादितितदावश्यकत्वंदर्शयिष्यतेतद्वदिहापिव्यधिकरणधर्मावच्छिन्नाभावास्वीकारेवन्हित्वादिनाघटाद्यभावमादायाव्या
प्तिवारणायोपात्तस्यसाध्याभावस्येत्यस्यवैयर्थ्यंस्यादितितदावश्यकतासंभवतीति**चेन्न** ॥ अखंडाभावघटकतासंपादकत्वेनसाध्याभावां
शस्यात्रसार्थक्यसंभवात् ॥ नहिद्वितीयलक्षणेप्येवंसंभवतिव्यधिकरणधर्मावच्छिन्नाभावास्वीकारेहेतुसमानाधिकरणाभावीयप्रति
योगितावच्छेदकत्वतादृशाभावीयप्रतियोगितायांसामानाधिकरण्येनावच्छेदकत्वयोःसमनैयत्येनसमनियतनानाधर्मावच्छिन्नप्र
तियोगितानामभेदस्यान्यत्रोक्तत्वेनाभावभेदप्रयोजकप्रतियोगिताभेदविरहात् ॥ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक
त्वतादृशसाध्याभावप्रतियोगितावच्छेदकत्वयोःसमनैयत्यविरहेणतदवच्छिन्नाभावयोर्भेदस्यावश्यंवक्तव्यत्वात् ॥ **यादृशप्रति
योगितावच्छेदकविशिष्टेति** ॥ यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वयादृशप्रतियोगिताश्रयाधिकरणत्वोभयाभ
ववत्वमेवोभयानधिकरणत्वंतेनविशिष्टसत्तावान्जातेरित्यादौनातिव्याप्तिः ॥ **वन्हिभिन्नेऽसंभाविततयेति** ॥ वन्हिभिन्नत्वेन

वह्न्यभाववन्हिभिन्नत्वेनवन्हितदन्योभयाभावयोः समनैयत्येनावच्छेदकैक्येनचतदीयप्रतियोगितयोरप्यैक्यमितितादृशाभावी
यप्रतियोगितायावन्हिभिन्नेपिसंभवस्तुनाशंक्यः ॥ वन्हिभिन्नत्वेनवन्हितदन्योभयाभावीयप्रतियोगितायाआस्तांवेत्यवतरणग्रंथो
क्तरीत्याव्यासज्यवृत्तित्वेनवन्हिभिन्नत्वेनवह्न्यभावीयप्रतियोगितातोविलक्षणत्वेनतत्पर्याप्त्याश्रयानधिकरणत्वस्यहेतुमतिवन्हिशून्ये
ऽक्षतत्वात् ॥ अथवावक्ष्यमाणरीत्येति ॥ चैत्रान्यत्वविशिष्टैतद्दंडसाध्यकएतद्दंडसंयोगहेतुकेव्यभिचारिण्येतद्दंडसंयोगसा
मान्येविशिष्टाभावप्रतियोग्येतद्दंडप्रतियोगिकत्वचैत्रानुयोगिकत्वोभयसत्वेनविशिष्टाभावस्यलक्षणघटकत्वानुपपत्तिरतोयादृश
प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वनिवेशः ॥ धूमसंयोगेधूमत्वविशिष्टप्रतियोगिकत्व धूमप्रतियोगिकत्वयोर्द्वयोःसत्वे
नधूमसाध्यकेव्यभिचारिणि धूमाभावस्यलक्षणघटकात्वार्थंहेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वनिवेशः ॥ तत्रैवधूमसंयो
गेवन्हिमदनुयोगिकत्वस्यापिसत्वेनधूमाभावस्यलक्षणघटकत्वानुपपत्तिरतोयत्किंचिदिति ॥ वन्हित्वेनघटाभावसंग्रहाययया
दृशप्रतियोगिताश्रयप्रतियोगिकत्वनिवेशः ॥ लाघवादाह ॥ अथवेति ॥ साध्यनिष्ठतादृशप्रतियोगित्वाप्रसिद्ध्या

नपूर्वोक्तलक्षणेप्रतियोगिव्यधिकरणत्वंनिवेशितमिति ॥ अथघटत्वेनैतद्रूपंनास्तीतिप्रतीतौघटत्वस्यस्वावच्छिन्न
प्रतियोगिताकत्वसंबंधेनाभावांशेस्वातंत्र्येणभानस्याभ्युपगतत्वेनघटत्वावच्छिन्नैतद्रूपनिष्ठप्रतियोगित्वसंबंधावच्छिन्नायाघ
टत्वनिष्ठप्रकारतातदवच्छेदकघटत्वत्वावच्छिन्नानधिकरणत्वस्यहेतुमतिसत्वाद्घटत्वावच्छिन्नैतद्रूपनिष्ठप्रतियोगितैवतादृशो
प्रसिद्धेतिचेन्न ॥ घटत्वेनैतद्रूपाभावप्रतीतौघटत्वादेःस्वावच्छिन्नप्रतियोगिताकत्वसंबंधेनभानेपितादृशसंबंधस्यपरंपरासं
बधत्वेनघटत्वनिष्ठप्रकारतायाविशेष्यीभूप्रतियोगित्वसंबंधनिष्ठसांसर्गिकविषयतानिरूपितत्वरूपस्यतादृशप्रतियोगि
त्वसंबंधावच्छिन्नत्वस्यविरहात् ॥ अस्तुवाविशिष्टस्यैवतादृशप्रतियोगिताकत्वस्यसंबंधतातथापिरूपत्वेनरूपंनास्तीतिप्रती
तिसिद्धाभावीयप्रतियोगित्वसंबंधावच्छिन्नरूपत्वनिष्ठप्रकारतावच्छेदकरूपत्वत्वावच्छिन्नानधिकरणत्वमादायरूपवान्पृथि
वीत्वादित्यादावव्याप्तिवारणायप्रकारतायांप्रतियोगिनिष्ठत्वनिवेशस्यावश्यकत्वान्नदोषः ॥ नचैवमपिरूपघटोभयाभावी
यप्रतियोगितामेतद्रूपतद्रूपान्यतरतद्रसोभयाभावीयप्रतियोगितांचादायतादृशप्रतियोगित्वप्रसिद्धिःसंभवतीतिवाच्यं ॥

वन्हित्वेनमहानसीयवन्हिघटान्यतराभावीयप्रतियोगितामादायाव्याप्तिवारणायप्रकारतायांसाध्यतावच्छेदकव्याप्यत्वस्यैवनि
वेश्यत्वाद्दर्शितप्रतियोगित्वयोरतादृशत्वात् ॥ प्रतियोगितावच्छेदकतयेति ॥ स्वप्रतियोगितावच्छेदकतयेत्यर्थस्तेनवन्हि
त्वादेरभावांतरप्रतियोगितावच्छेदकत्वेपिननियमभंगः॥ तेजस्त्वादिनिर्विकल्पकानंतरमंधकारादेरिदमितिप्रतीतिनिर्वाहाया
भावेप्रतियोगिविशेषितेतिविशेषणंदेयं॥ प्रत्ययस्यापीति ॥ शुद्धप्रतियोगितासंबंधेनविशेष्येविशेषणमितिरीत्यावन्हिर्ना
स्तीतिप्रत्ययस्येत्यर्थः॥ सामानाधिकरण्येनावच्छेदकतयाऽव्याप्तिरिति ॥ अत्रासंभवएवसंभवति॥ नचगुरुधर्मस्या
नवच्छेदकत्वेतदवच्छिन्नसाध्यकेलक्षणसमन्वयइतिवाच्यं ॥ तन्मतेपारिभाषिकावच्छेदकत्वस्यैवनिवेश्यत्वादितिध्येयं॥ न
न्वेवंसामानाधिकरण्येनेत्यस्यवैय्यर्थ्यमतआह॥ तदपीति ॥ नन्वेवंप्रतियोग्यवृत्तिश्चेत्यादिग्रंथावतारकत्वानुपपत्तिरितिचे
न्न॥ व्यधिकरणधर्मावच्छिन्नाभावास्वीकारेप्रतियोगितावच्छेदकतावैलक्ष्यण्यस्यप्रतियोगिवैय्यधिकरण्येसामानाधिकरण्यांश
स्यव्यर्थतायामेवतद्ग्रंथतात्पर्यात् ॥ अव्ययीभावेति ॥ यद्यप्यव्ययीभावोत्तरंमत्वर्थइनिप्रत्ययोनभवतिनकर्मधारयान्म

 

त्वथश्र्यइत्यनुशासनविरोधात् ॥ तथापिव्यभिचारस्याभावोयत्रेतिव्यधिकरणबहुव्रीहावनुशासनाभावेननास्तिव्यभिचारोयत्रेतिब
हुव्रीहौनञ्पदलाक्षणिकत्वापत्यातादृशानुशासनेबहुव्रीहपदंयथाश्रुतमेवप्रकृतप्रयोगवशाच्चनञ्समासान्यसमासपरंवेत्यभिप्रा
यः ॥ अव्यभिचारिसंबंधइत्यत्राव्यभिचारिणःसंबंधइतिव्युत्पत्तिमभिप्रेत्यशंकते ॥ नचेति ॥ **अव्यभिचारीति** ॥ नचाव्यभिचा
रनिरूपकार्थकतत्पदान्वयस्थलएवायंनियमोऽन्यत्रतुहेतुसमानाधिकरणेत्यादिक्रमेणैवेतिनायंदोषइतिवाच्यं ॥ प्रथमदोष
एवनिर्भरात् ॥ अव्यभिचारिणिसंबंधइतिव्युत्पत्तिमभिप्रेत्याथेतिपूर्वपक्षंसमाधत्ते ॥ **नेति** ॥ **नचयद्रूपावच्छिन्नस्येति** ॥ यद्रू
पंहेतुव्यापकसाध्यसामानाधिकरण्यत्वंतदन्यद्रूपमव्यभिचारिहेतुनिष्ठसाध्यसामानाधिकरण्यत्वं ॥ अव्यभिचारिसंबंधरूपतोप
पत्तेरिति ॥ साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यत्वेनतत्पदप्रतिपाद्यतासंभवादित्यर्थः ॥ **उक्तलक्षणेपीति** ॥
यत्समानाधिकरणाइत्यादिदीधितिकारीयलक्षणेपीत्यर्थः ॥ **प्रतियोगीति** ॥ यावदभावकत्वस्यहेतुनिष्ठाधेयत्वरूपत्वात्तस्योक्त
रीत्याअव्यभिचारसंबंधरूपता ॥ स्वविशिष्टहेत्वधिकरणावच्छिन्नत्वस्वप्रतियोगिनिरूपितत्वोभयसंबंधेनाभावविशिष्टसामा २०४

नाधिकरण्यव्याप्यंयत्साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वविशिष्टसामानाधिकरण्यंनिरूपकतासंबंधेनतद्वत्वस्यतादृशलक्षणवा
क्यपर्यवसितार्थरूपस्योक्तरीत्याऽव्यभिचारिसंबधरूपतासंभवाच्च ॥ तथाचपारिभाषिकमेवाव्यभिचरितत्वमित्यनेनतस्यपारिभाषिक
त्वप्रतिपादनासंगतिरितिभावः ॥ अवच्छेदकत्वमित्यस्यावच्छेदकत्वपदार्थइतिनार्थोऽवच्छेदकत्वपदाभावादतोव्याचष्टे ॥ **अनवच्छेद
कमित्यत्रेति** ॥ अवच्छेदकपदस्यपर्याप्तिसंबंधेनावच्छेदकताविशिष्टतात्पर्यकत्वात्पर्याप्तिसंबंधेनावच्छेदकत्वंतात्पर्यविषयताव
च्छेदकमितिभावः ॥ **स्वविशिष्टसंबंधीति** ॥ अत्रहेतुसमानाधिकरणाभावीयप्रतियोगितायाः स्वविशिष्टसंबंधिनिष्ठाभावीयप्र
तियोगितायाश्चसामानाधिकरण्येनावच्छेदकत्वंनिवेश्यंतेनस्वविशिष्टसंबधिनिष्ठाभावप्रतियोगितानवच्छेदकवन्हित्वादेर्हेतुसमा
नाधिकरणवन्हित्वेनघटाभावप्रतियोगितावच्छेदकत्वेपिनाव्याप्तिः ॥ नवाअवच्छेदकतयाऽभिमतस्यस्वविशिष्टसंबंधिनिष्ठव्याधि
करणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेपिपारिभाषिकावच्छेदकाप्रसिद्धिः ॥ एवंसतिवन्हित्वेनघटाभावमादायप्रथमल
क्षणेसाध्याभावपदसार्थक्यासंभवेपिवन्हित्वेनतद्वन्हिघटान्यतराभावमादायाव्याप्तिवारणायसाध्यतावच्छेदकव्याप्यप्रतियोगिता

काभावपरतत्पदसार्थक्यमवसेयमिति दिक् ॥ ॥ इति चक्रवर्तिलक्षणानि ॥ ॥ विशिष्टाभावइत्यादि ॥ द्वित्वावच्छिन्नसाध्यकेव्यभिचारिणिव्यभिचारनिरूपकाधिकरणावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तेर्निरासः ॥ अथैवं विशिष्टसत्तावाञ्जातेरित्यादौविशिष्टसत्ताभावस्यसाध्यप्रतियोगिकत्वविरहेणसत्ताभावस्यसाध्यप्रतियोगिकत्वेपिहेतुसामानाधिकरण्यविरहेणव्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः ॥ नचगुणावृत्तित्वावच्छिन्नाभावस्यसाध्यप्रतियोगिकत्वेनतमादायातिव्याप्तिवारणं शंक्यं ॥ विशेष्येसतोगुणवृत्तित्वस्यविशिष्टेऽभावानुपगमादन्यथाघटवृत्तित्वविशिष्टवाच्यत्वेपटावृत्तित्वसत्वेनतदवच्छिन्नाभावस्यापिसाध्यप्रतियोगिकत्वेनतमादायवाच्यंज्ञेयत्वादित्यादौलक्षणसमन्वयसंभवेनव्यधिकरणधर्मावच्छिन्नाभावस्यानावश्यकत्वप्रसंगात् ॥ मैवं द्रव्यत्वत्वेनद्रव्यत्वसत्तान्यतराभावमादायैवविशिष्टसत्तासाध्यकेऽतिव्याप्तेर्वारणात् ॥ नच ताद्दशाभावस्यद्रव्यत्वाभावसमनियतत्वेनद्रव्यत्वप्रतियोगिकत्वमेवस्वीक्रियतइति वाच्यं ॥ सत्तायाअपिताद्दशप्रतीतावुल्लेखात्तत्प्रतियोगिकत्वावश्यकत्वमित्यभिप्रायात् ॥ अथैवमप्येतद्रूपान्यत्वविशिष्टसत्तावाञ्जातेरित्यादावतिव्याप्तिः कथंवार्यतेविशिष्टाभावस्यलक्षणघटकत्वा

भावात्॥ द्रव्यत्वत्वेन द्रव्यत्वसत्तान्यतराभावादेः साध्यसामानाधिकरण्यात्॥ नचैतद्रूपभेदत्वेनैतद्रूपभेदसत्तान्यतराभावस्यसा
ध्यप्रतियोगिकस्यसाध्यसामानाधिकरण्यविरहेणैवतत्रातिव्याप्तिवारणमिति वाच्यं॥ तादृशान्यतराभावस्यसमवायसंबंधावच्छि
न्नप्रतियोगिताकस्यहेतुसमानाधिकरणस्यसाध्यसामानाधिकरण्यात्स्वरूपसंबंधावच्छिन्नप्रतियोगिताकस्यतस्यसर्वत्रव्याधिकरण
संबंधावच्छिन्नप्रतियोगिताकसाध्याभावमादायलक्षणसमन्वयाद्व्यधिकरणधर्मावच्छिन्नाभावस्यानावश्यकत्ववारणायविवक्षणी
यसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकत्वविरहात्॥ नचव्यधिकरणसंबंधावच्छिन्नाभाववारणायप्रतियोगितायांसाध्य
तावच्छेदकसंबंधावच्छिन्नत्वंविहायावच्छिन्नत्वप्रतियोगिवृत्तित्वोभयसंबंधेन संसर्गविशिष्टत्वस्यैवनिवेशेनव्यधिकरणसंबंधावच्छि
न्नाभाववारणस्यनिरुक्तान्यतराभावस्यचसंग्रहः संभवतीति वाच्यं॥ एवमपिवाच्यत्वस्यकालिकसंबंधेनाभावमादायलक्षण
समन्वयाद्व्यधिकरणधर्मावच्छिन्नाभावानावश्यकत्वस्यदुर्वारत्वादितिचेन्न॥ विशिष्टसाध्यकेवैशिष्ट्यस्यैवपरंपरासंबंधेनसाध्य
त्वमित्यभिप्रायेणप्रथमकल्पकरणात्॥ नचैवंविशिष्टसत्तासाध्यकेसाध्यतावच्छेदकविशिष्टत्वनिवेशाव्यारत्यसंगतिरिति वाच्यं॥

**अथवेति** द्वितीयकल्पाभिप्रायेणतत्संगतेः॥ **यथोक्तधर्मयोरिति**॥ यत्समानाधिकरणसाध्याभावत्वसाध्यसामानाधिकरण्ययोरि
त्यर्थः॥ **तादृशेति**॥ स्वरूपसंबंधरूपेत्यर्थः॥ **मानाभावादिति**॥ भूतलंप्रमेयमित्यादौप्रमेयत्वादौभूतलाधेयतावच्छेदकत्वावगाहि
प्रत्ययो ऽतिप्रसक्तप्रमेयत्वादौस्वरूपसंबंधरूपावच्छेदकत्वंविषयीकरोत्यतिप्रसक्तसाधारणतादृशावच्छेदकत्वनिवेशेसत्ताभावाभा
वोद्रव्यत्ववतीतिप्रतीतिसिद्धतादृशावच्छेदकत्वमादायसत्ताभावद्रव्यत्वोभयवान्द्रव्यत्वादित्यादावतिव्याप्तिरतो ऽतिप्रसक्तव्यावृत्त
तादृशावच्छेदकत्वमेवनिवेश्यंतथाचतादृशावच्छेदकत्वावगाहियत्समानाधिकरणसाध्याभावःसाध्यवतीत्यादिप्रत्ययाभावादसंभ
वइतिभावः॥ **व्यभिचारिणीति**॥संयोगीसत्वादित्यादौगुणावृत्त्यभावमादायातिव्याप्तिवारणंबोध्यं॥ **वह्न्यादिसामाना
धिकरण्यविरहेपीति**॥ संयोगेनद्रव्यस्याव्याप्यवृत्तित्वमतेतदावश्यकत्वेपिविषयतयाज्ञानाधिकरणेवर्तमानात्मत्वसामान्या
भावस्यसाध्यसामानाधिकरण्यविरहादात्माज्ञानादित्यादावव्याप्तिवारणंतत्प्रयोजनंबोध्यं॥ **वृत्तिद्वयं**॥ साध्यसामानाधिकरण्यघट
कंहेतुसामानाधिकरण्यघटकंचेत्यर्थः॥ **एकसंबंधेन**दैशिकविशेषणतारूपैकसंबंधावच्छिन्नंप्रथमेप्रयोजनमाह॥ **तेनेति**॥ 

द्वितीयेसत्तावान्द्रव्यत्वादित्यादौकालिकसंबंधेनहेतुसमानाधिकरणस्यसत्ताभावस्यदैशिकविशेषणतयासाध्यसामानाधिकरण्य
विरहाद्व्याप्तिवारणंप्रयोजनंबोध्यं॥ तत्प्रयोजनंस्फुटमेवेति॥ धूमसमवायिनिष्ठवह्न्यभावविषयकप्रमायांसाध्यवत्ताज्ञान
प्रतिबंधकत्वाभावासत्वाद्व्याप्तिवारणरूपमित्यर्थः॥ स्वाधिकरणवृत्तित्वंनिरवच्छिन्नंग्राह्यमिति॥ अथैवंविवक्षणेवह्नि
मान्धूमात्सत्तावान्जातेरित्यादौकालिकंविषयित्वादिसंबंधेनहेतुसमानाधिकरणसाध्याभावप्रमायांसाध्यवत्ताज्ञानप्रतिबंधक
त्वाभावासत्वाद्व्याप्तिवारणायहेतुमद्वृत्तित्वांशेस्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधित्वानियामकसंबंधस्यैवविवक्ष
णीयतयाकालिकसंबंधावच्छिन्नप्रतियोगिताकेघटत्वाभावाभावेसाध्येघटासमानकालीनक्रियादौव्यभिचारिणिप्रमेयत्वादौसा
ध्याभावस्यव्यतिरेकिमात्रस्यकालिकेनाव्याप्यवृत्तित्वप्रवादानुरोधादिहेदानींघटत्वाभावइतिप्रत्ययाच्चघटान्यदेशावच्छेदेनैवकाल
वृत्तितयाहेत्वधिकरणकालेनिरवच्छिन्नवृत्तिकत्वविरहेणव्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः॥ नचहेत्वधिकरणवृत्ति
त्वंदैशिकविशेषणतयैवनिवेशनीयंभावाभावसाधारणीदैशिकविशेषणतास्वीक्रियतइतिनाभावसाध्यकेव्यभिचारिण्यतिव्याप्तिः

प्रकृतस्थलेतेनसंबंधेनघटत्वाभावादेर्दैशिकविशेषणतयानिरवच्छिन्नवृत्तिकतयाकालिकसंबंधेनतद्वत्ताज्ञानस्यतादृशसा
ध्यवत्ताज्ञानविरोधित्वान्नातिव्याप्तिरितिवाच्यं॥ एवंसतितत्साध्यकेआत्मत्वहेतावव्याप्तेर्घटात्वाभावरूपस्यसाध्याभावस्यदैशि
कविशेषणतयातेनसंबंधेनात्मनिवृत्तेः॥ मैवंस्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधितानियामकसंबंधेनैवहेत्वधि
करणवृत्तित्वंविवक्षितमभाववत्ताग्रहेअभावाभाववत्ताज्ञानस्यदैशिकविशेषणतयापिविरोधित्वमितिकूटघटितग्रंथकृद्दर्शनीय
मतस्यैवावलंबनादुक्तस्थलेदैशिकविशेषणतासंबंधमादायातिव्याप्तिवारणं॥ एवंचभावाभावसाधारणदैशिकविशेषणतायाअ
स्वीकारेपिनक्षतिरभावसाध्यकेव्यभिचारिणिसमवायादेरपितथात्वात्॥ दर्शितसाध्यकेआत्मत्वादिहेतुकेऽव्याप्तिवारणंतुतादृश
संबंधेनहेतुमद्वृत्तितावच्छेदकसाध्याभावत्वविशिष्टविषयकप्रमासामान्यइतिविवक्षयाकर्तव्यं॥ वस्तुतस्तुकालिकसंबंधावच्छिन्नप्र
तियोगिताकघटात्वाभावाभावरूपसाध्याभावस्यघटत्वाभावरूपस्यघटासमानकालीनक्रियादोव्याप्यवृत्तित्वमेव॥ नचतत्रसाध्यात्म
कप्रतियोग्यनधिकरणस्यदेशस्यावच्छेदकत्वंयुज्यतेप्रतियोग्यभावयोरेकत्रवृत्तौविरोधभंजनार्थमेवावच्छेदकापेक्षणात्व्यतिरेकि

मात्रस्य कालिकेनाव्याप्यवृत्तित्वप्रवादस्य इहेदानीं घटत्वाभाव इति प्रत्ययस्य च महाकाले तस्याव्याप्यवृत्तित्वेनैवोपपत्तेरिति ध्येयमिति दिक्॥
तत्सामान्यपरमिति॥ ननु साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारतानिरूपितप्रकारित्वावच्छिन्नप्रतिबध्यतानिवेशादेवोपप
त्तौ सामान्यपदं व्यर्थमिति चेन्न॥ विशिष्टसाध्यतावच्छेदककस्थले तादृशप्रकारकत्वावच्छिन्नप्रतिबध्यताया अप्रसिद्धेः॥ प्रतिबध्यता
याश्च मसाधारण्याय निरूप्यनिरूपकभावापन्नप्रकारकत्वस्यैव तदवच्छेदकत्वस्य वक्तव्यतया विशिष्टसाध्यतावच्छेदकपर्याप्तावच्छेदकता
कप्रकारकत्वस्यान्तथात्वात् तादृशप्रकारकत्वविशिष्टज्ञानत्वव्यापकप्रतिबध्यतायानिवेशनावश्यकत्वेन व्यापकत्वतात्पर्यकतत्पदावश्य
कत्वात्॥ ज्ञानं चेति॥ ननु सधर्मितावच्छेदककयद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावविषयकप्रमासान्ये स्वसमानधर्मिताव
च्छेदककसाध्यवत्ताज्ञानसामान्यविरोधित्वाभावस्तत्त्वं पर्यवसन्नं॥ निर्धर्मितावच्छेदककसाध्याभावप्रमायाः स्वसमानधर्मितावच्छेदक
कसाध्यवत्ताज्ञानाप्रासिद्धिरतः सधर्मितावच्छेदककत्वस्य तादृशप्रमायां निवेशः॥ तत्र स्वपदं प्रमासामान्यपरं॥ तत्प्रमापरं वा॥ आद्ये॥ ता
दृशप्रमासमानधर्मितावच्छेदककसाध्यवत्ताज्ञानत्वव्यापकप्रतिबध्यतायाः कामिनीजिज्ञासानिरूपिताया एव प्रसिद्धेरतिव्याप्तिः॥ अंत्ये॥

घटत्वेनवह्न्यभाववान्ह्रदश्चवह्न्यभाववानितिप्रमायाःस्वसमानधर्मितावच्छेदककह्रदत्वावच्छिन्नविशेष्यकवन्हिमत्ताज्ञानसामान्यविरोधित्वादव्याप्तिरितिचेन्न ॥ हेतुसमानाधिकरणसाध्याभावांशेसधर्मितावच्छेदकिकायायाप्रमाप्रत्येकंस्वीयहेतुसमानाधिकरणसाध्याभावनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितायास्वविषयीभूताभावीयप्रतियोगितावच्छेदकसंबंधावच्छिन्नासाध्यतावच्छेदकावच्छिन्नप्रकारतातच्छाल्यनाहार्यज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकत्वाभावस्तत्वमित्यस्यचिवक्षितत्वान्नदोषः॥ एवंयत्समानाधिकरणसाध्याभावप्रमात्वव्यापकःसाध्यवत्ताज्ञानप्रतिबंधकत्वाभावस्तत्वमित्येतादृशार्थकत्वइति ॥अत्रेदंचिंत्यं॥ पूर्वोक्तयुक्त्यालक्षणपरिष्कारावश्यकतयाताद्दशप्रमात्वव्यापकत्वघटितपरिष्कारोऽसंभवदुक्तिकइति॥ ॥ इतिप्रगल्भलक्षणद्वयं॥ ॥ यन्निष्ठत्वानुपादानइति ॥ यल्लिंगकत्वस्यानुमितिविशेषणत्वेव्याप्तेर्हेतुनिष्ठत्व लाभः॥ असंभवोऽव्याप्तिर्वेति॥ साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबंधेनाभावांशेसाध्यप्रकारकव्यभिचारज्ञानस्यैवप्रतिबंधकतयासंसर्गतावच्छेदककोटौभ्रमत्वांगीकारेकेवलान्वयिन्यपिताद्दशज्ञा

नप्रसिद्ध्यासंभवः ॥ तदस्वीकारेऽव्याप्तिः ॥ **वस्तुगत्येति** ॥ तत्समानाधिकरणविषयतानिरूपितत्वमेववस्तुगत्या तद्विशिष्टनिरूपितत्वमि
त्यर्थः ॥ यन्निष्ठसाध्याभाववद्वृत्तित्वविशिष्टविषयितेत्यत्रतादृशवृत्तित्वत्वस्यतादृशवृत्तित्वोपलक्षणत्वविवक्षायांगुणकर्मान्यत्वोप
लक्षितसत्तयागुणादेरिवसमानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेनपदार्थांतरेणवातादृशवृत्तित्वावगाहिज्ञानीयविषयिता
याव्यावृत्तिर्नसंभवतियतोगुणाद्यन्यत्वस्योपलक्षणत्वविवक्षायांसत्तायागुणेसमवायेनविशेषणत्वंसत्तायांचगुणान्यत्वस्यसामानाधिकर
ण्यसंबंधेनेतिवत्तादृशवृत्तित्वत्वस्योपलक्षणत्वविवक्षायांविषयित्वांशेतादृशवृत्तित्वस्यनिरूपितत्वसंबंधेनविशेषणत्वंतादृशवृत्ति
त्वत्वंचतादृशवृत्तित्वेआश्रयतासंबंधेनविशेषणमित्यस्यैववक्तव्यत्वेनतादृशज्ञानीयविषयितेनिरूपितत्वसंबंधेनतादृशवृत्ति
त्वस्यतादृशवृत्तित्वेआश्रयतासंबंधेनतादृशवृत्तित्वत्वस्यचाबाधात् ॥ गुणाद्यन्यत्वस्यविशेषणत्वविवक्षायांतस्यस्वावच्छि
न्ननिरूपितत्वसंबंधेनधर्मिपारतंत्र्येणान्वयात्तेनसंबंधेनतस्यगुणादौबाधात्तद्विशिष्टसत्तयागुणादेरिवयन्निष्ठसाध्याभाववद्वृत्ति
त्वत्वस्यतादृशवृत्तित्वेविशेषणत्वविवक्षणेतस्यस्वावच्छिन्नसंबंधिताकत्वसंबंधेनधर्मिपारतंत्र्येणान्वयेनवृत्तित्वस्यापिनिरूपि

तत्वसंबंधेनान्वयेनतादृशवृत्तित्वत्वावच्छिन्नसंबंधिताकविषयितैवयन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टविषयितेतिशब्दाद्बोध्यते॥ उक्तभ्रमविषयितायांचस्वावच्छिन्नसंबंधिताकत्वसंबंधेनयन्निष्ठसाध्याभाववद्वृत्तित्वत्वस्यबाधात्तद्व्यावृत्तिः॥ तादृशवृत्तित्वत्वावच्छिन्नसंबंधिताचतादृशवृत्तित्वत्वावच्छिन्नतादृशवृत्तित्वनिष्ठनिरूपकतैवेत्यभिप्रायेणाह॥ विशेषणीभूतेति॥ विशेषणांतरमित्यनेनविशेषणविशेषणमपिधर्मिपारतंत्र्येणान्वेतीतिसूचितं॥ व्यावर्त्यमानस्य॥ विशेषितस्य॥ विशेष्यसंबंधितावच्छेदकत्वभानात्॥ विशेष्यांशेस्वावच्छिन्नसंबधिताकत्वसंबंधेनविशेषणांशेप्रकारीभूतव्यक्तिभाननियमात्॥ निरूपकीभूयविषयिताव्यावर्तने॥ निरूपितत्वसंबंधेनतादृशवृत्तित्वत्वविशिष्टस्यविषयिताविशेषणत्वे॥ आश्रयतया॥ आश्रयतासंबंधेन॥ व्यावर्तकं॥ विशेषणं॥ तस्यापि॥ तादृशवृत्तित्वत्वस्यापि॥ निरूपकतावच्छेदकीभूयविषयिताव्यावर्तकत्वात्॥ स्वावच्छिन्नस्वसमानाधिकरणनिरूपकताकत्वसंबंधेनविषयिताविशेषणत्वादित्यर्थः॥ वृत्तिविशेषणेतन्निरूपकाधिकरण इति॥ पर्वतादाविति शेष ॥ वारणासंभवादिति॥ तादृशविषयितायामधिकरणनिरूपितत्वयन्निष्ठत्वाधेयतात्वैतत्त्रितय

विशिष्टनिरूपितत्वाक्षतेरिति भावः ॥ साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबंधेनसाध्यविशिष्टस्यव्यधिक
रणधर्मावच्छिन्नाभावस्याप्रसिद्ध्येति ॥ ननु वन्हित्वावच्छिन्नवन्हिनिष्ठप्रतियोगिताकत्वेनवन्हित्वेनवन्हिघटोभयाभावाव
गाहिभ्रमविषयस्यतादृशसाध्याभावस्यप्रसिद्ध्यातादृशभ्रमीयविषयितामादायाव्याप्तिर्दुर्वारैवेतिच्चेन्न ॥ तादृशाभाववद्वृत्तिर्धूम
इतिज्ञानस्यानुमितिप्रतिबंधकत्वाभावेनप्रतिबंधकत्वस्यतद्व्यावृत्त्यर्थंतादृशाभावीयप्रतियोगितावच्छेदकत्वस्योभयत्वसाधारण्य
मंगीकृत्यसाध्यतावच्छेदकमात्रावच्छिन्नसाध्यनिष्ठप्रतियोगिताकत्वसंबंधेनसाध्यतावच्छेदकावच्छिन्नसाध्यमात्रनिष्ठप्रतियोगि
ताकत्वसंबंधेनवाऽभावांशेसाध्यप्रकारकव्यभिचारज्ञानस्यैवप्रतिबंधकत्वोपगमस्यावश्यकतयातेनसंबंधेनसाध्यविशिष्टस्यता
दृशभ्रमविषयसाध्याभावस्याप्रसिद्धत्वादव्याप्त्यनवकाशात् ॥ वन्हित्वादिनोभयाभावस्तादृशोभयत्वाभावएवेतितस्यसाध्यप्र
तियोगिकत्वमेवनास्तीति केचित् ॥ प्रतिबंधकतावच्छेदककोटयप्रवेशादिति ॥ साध्याभाववद्वृत्तित्वनिष्ठविषयताकत्वे
नप्रतिबंधकत्वएवविषयताविशेषणतयातादृशवृत्तित्वस्यावच्छेदकत्वंसंभवति ॥ तदेवनप्रतिबंधकत्वस्यतादृशवृत्तित्वत्वेनघया

वगाहिज्ञानसाधारण्यायतादृशवृत्तित्वनिष्ठत्वंविहायसाध्याभाववद्वृत्तित्वत्वावच्छिन्नविषयताकत्वेनप्रतिबंधकतायावक्तव्यत्वा
त्तदवच्छेदककोटौतादृशवृत्तित्वस्याप्रवेशादितिभावः॥ विषयतापर्याप्त्यभावविवक्षणइति॥ अनुमितिप्रतिबंधकतावच्छे
दिकायाःसमानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेनहेतुनिष्ठसाध्याभाववद्वृत्तित्वावगाहिज्ञानीयविषयतायाहेतुनिष्ठ
साध्याभाववद्वृत्तित्वत्वविशिष्टेसत्वाद्व्याप्तिरतःपर्याप्तिनिवेशस्तथाचप्रतिबंधकतावच्छेदकविषयतायाःसमानाधिकरणधर्माव
च्छिन्नसाध्याभाववद्वृत्तित्वत्वहेतुनिष्ठसाध्याभाववद्वृत्तित्वोभयस्मिन्नेवपर्याप्ततयानाव्याप्तिः॥ नचसमानाधिकरणधर्मावच्छिन्न
साध्याभाववद्वृत्तित्वत्वेप्रतिबंधकतावच्छेदिकायातादृशभ्रमीयविषयतातदवच्छेदकत्वमेवेतिपर्याप्तिविवक्षणेपितद्दोषतादव
स्थ्यमितिवाच्यं॥ विशिष्टविषयकज्ञानेविशिष्टघटकपदार्थेषुविशेषणविशेष्यभावापन्नेषुसर्वेषुतज्ज्ञानीयविषयतात्वेनविष
यतापर्याप्तिरस्तीतिमतानुसरणात्॥ नचतस्यनिर्युक्तिकत्वंशंक्यं॥उपलक्षितवत्ताज्ञानविशिष्टवत्ताज्ञानयोर्वैलक्षण्याय
उपलक्षितवत्ताज्ञानीयप्रकारतायाःकेवलविशेष्यपर्याप्तत्वस्यविशिष्टवत्ताज्ञानीयप्रकारतायाविशेषणविशेष्योभयपर्याप्त

त्वस्यावश्यंवक्तव्यत्वात् ॥ प्रकृतानुमितिसामान्यपरमिति ॥ नन्वनुमितौसाध्याभाववद्वृत्तित्व विषयताशून्यत्वविवक्षयैवोक्तस
मूहालंबनवारणात्सामान्यपदंव्यर्थं॥ नचघटत्वेनवह्न्यभाववद्वृत्तिधूमकालीनपर्वतोवन्हिमानित्यनुमितिनिरूपितायातादृशपर्वतोवह्न्य
भाववानितिबाधज्ञाननिष्ठप्रतिबंधकतातदवच्छेदकत्वस्यहेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयित्वेसत्वादव्याप्तिरतःसामान्यपदोपादान
मावश्यकमितिवाच्यं॥ साध्याभाववद्वृत्तित्वविषयत्वपूर्वोक्तविषयत्वान्यतरशून्यत्वस्यैवविवक्षितत्वात् ॥ यत्तुयादृशस्थलेतादृशा
न्यतरविषयताकैवानुमितिर्नान्यातत्रतादृशानुमित्यप्रसिद्धेस्तथानिवेशासंभवइतितन्न ॥ तादृशस्थलस्वीकारेसिद्धांतेप्यव्याप्तेर्दु
र्वारत्वात्तादृशस्थलापलापस्यैवकर्तव्यत्वात् ॥ अत्रकेचित् ॥ यत्रवन्हिसामान्याभाववद्वृत्तित्वेनधूमावगाह्येवानुमितिःप्रसिद्धा
तत्रतादृशान्यतरविषयिताशून्यानुमित्यप्रसिद्ध्यातन्मतेऽव्याप्तिःसिद्धांतेहेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयितायांतादृशानुमि
तिप्रतिबंधकतावच्छेदकत्वाभावेनलक्षणसमन्वयइतिविशेषइतिसामान्यपदमेवजायइतिवदंति॥ वस्तुतस्तु॥ अनुमितिनिष्ठ
प्रतिबध्यतायांतादृशान्यतरविषयितानवच्छिन्नत्वदानेनसकलदोषवारणेसामान्यपदंव्यर्थमितिप्रतिभाति॥ स्वरूपासिद्ध्यादी

ति ॥ अथधूमाभाववान्पर्वतइत्यादिस्वरूपासिद्धिज्ञाननिष्ठप्रतिबंधकतानिरूपितप्रतिबध्यतायास्तल्लिंगकतत्साध्यकतत्संसर्गकानु
मितित्वव्यापकत्वंनसंभवतितादृशानुमितित्वस्यद्रव्यंवन्हिमत्प्रमेयंवन्हिमदित्याद्यनुमितिसाधारण्यात्तत्रचनिरुक्तस्वरूपासिद्धि
ज्ञान प्रतिबध्यतायाअभावात् ॥ नचतल्लिंगकत्वंप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकपरामर्शविशिष्टत्वमितिवाच्यं ॥ साध्यव्या
प्यहेतुविषयकपरामर्शत्वस्यव्यभिचारज्ञानप्रतिबध्यतावच्छेदकत्वेनैवोपपत्तौलक्षणेतन्निवेशेप्रयोजनाभावात् ॥ धूमाभाववान्
पर्वतइतिज्ञानानंतरमपिवन्हिव्याप्यधूमवद्द्रव्यमित्यादिपरामर्शाद्द्रव्यंवन्हिमदित्याद्यनुमित्युत्पत्त्यातादृशपरामर्शत्वस्यस्वरूपा
सिद्धिज्ञानप्रतिबध्यतावच्छेदकत्वाभावादितिचेदत्रकेचित् ॥ स्वरूपासिद्धिज्ञानस्यलाघवेनधर्मितावच्छेदकप्रत्यासत्त्यैवप्रतिबंध
कत्वकल्पनात्तत्प्रतिबध्यतावच्छेदककोटौतल्लिंगकत्वमात्रस्यनिवेशेनप्रतिबध्यताया व्यापकत्वभंगविरहात् ॥ नचव्यभिचार
ज्ञानप्रतिबध्यतावच्छेदकस्यहेत्वाभासप्रथमलक्षणोक्तरीत्याहेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वरूपस्यैववक्तव्यत्वेनस्वरू
पासिद्धिज्ञानप्रतिबध्यतावच्छेदकस्यततोऽन्यत्वेनचव्यापकत्वभंगोदुर्वारइतिवाच्यं ॥ केवलान्वयिनिव्यभिचारस्याप्रसिद्ध्याप्र

क्तलक्षणेतल्लिंगविषयकपरामर्शविशिष्टत्वरूपस्यैवतल्लिंगकत्वस्यनिवेशनीयत्वात्॥ तन्मात्रविषयकत्वस्यैवतदर्थत्वाच्चनव्यभिचा
रज्ञानानंतरलिंगद्वयावगाहिपरामर्शजन्यानुमितौव्यापकत्वभंगः॥ इत्थंचधूमाभाववान्पर्वतइतिस्वरूपासिद्धिज्ञानानंतरंधूममात्रलिंग
कानुमित्यनुत्पत्त्यातल्लिंगकानुमितित्वव्यापकत्वस्यस्वरूपासिद्धिज्ञानप्रतिबंधकतायांसत्वादसंभवइतिग्रंथकृदभिप्रायइत्याहुः॥ भ्रम
स्याप्रामाणिकत्वादिति॥ द्वित्वेनसंसर्गतानभ्युपगमात्तादृशज्ञानस्याननुभूतत्वाद्वाप्रत्येकरूपेणभानेप्रकारताभेदादितिभावः॥ त
दभ्युपगमेत्वाहसंसर्गीयविषयताद्वयानिरूपकत्वेनेति॥ स्वनिरूपकत्वस्वनिरूपकतावच्छेदकप्रकारतात्वावच्छिन्ननिरूप
कताकस्वभिन्नसंसर्गतानिरूपकत्वैतदुभयसंबंधेनयत्किंचित्संसर्गताविशिष्टान्यत्वंतादृशविषयताद्वयानिरूपकत्वं॥ उपलक्षणी
भूतेनकेनचिदिति॥ अवच्छेदकत्वप्रमेयत्वादिनेत्यर्थः॥ अत्रयद्यपिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरण
धर्मावच्छिन्नप्रतियोगिताकत्वान्यतरसंबंधेनसाध्यवैशिष्ट्यनिवेशशंकासंभवति॥ तथापिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिता
कत्वस्यव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्यचैकस्यानुगतस्याभावाद्यावंतःस्वसमानासमानाधिकरणधर्मावच्छिन्नप्रतियोगि

ताकाभावास्तावदन्यतमान्यतमान्यतरत्वेनैवसंबंधविवक्षणंकर्तव्यं॥ तत्रचवक्ष्यमाणस्वनिरूपकहेतुसमानाधिकरणेत्यादिविवक्षा
पेक्षयाअथवसाध्यप्रतियोगिकोहेतुसमानाधिकरणाभावानुयोगिकइत्यादिविवक्षापेक्षयागौरवमितितत्त्यागइतिध्येयं॥ निवेशोनसं
भवतीति॥ हेतुसमानाधिकरणसाध्यतावच्छेदकविशिष्टनिरूपितविषयितायामनुमितिप्रतिबंधकतावच्छेदकत्वाभावस्यैवव्याप्तित
यातज्ज्ञानस्यचप्रतियोग्यविषयकसाध्यतावच्छेदकविशिष्टाभावविषयकतयाप्रतियोग्यविषयकप्रतियोगितावच्छेदकविषयकाभा
वबुद्धेरप्रसिद्धेस्तादृशव्याप्तिज्ञानंनसंभवतीतिभावः॥ **स्वनिरूपकहेतुसमानाधिकरणेति**॥ स्वप्रतियोगिसाध्यनिष्ठस्वावच्छिन्नावच्छेद
कतानिरूपितत्वस्वानुयोगिहेतुसमानाधिकरणाभाववनिष्ठत्वैतदुभयसंबंधेनसाध्यनिष्ठप्रतियोगिताकत्वविशिष्टविषयतानिरूपितत्वेना
नुगमोबोध्यः॥अग्रिमपरिष्कारेयत्किंचिद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसाध्यप्रतियोगिकसंबंधवद्विषयतानिरूपितत्वेन॥ता
दृशसंबंधवत्वंचस्वप्रतियोगिनिष्ठावच्छेदकताकत्वस्वानुयोगिहेतुसमानाधिकरणाभाववनिष्ठत्वोभयसंबंधेनतेनवन्हित्वावच्छिन्न
प्रतियोगिताकत्वत्वस्यवन्हित्वावच्छिन्नघटवन्हिनिष्ठप्रतियोगिताकत्वसाधारण्यात्तद्विशिष्टेसाध्यप्रतियोगिकत्वहेतुसमानाधिक

रणाभावानुयोगिकत्वयोःसत्वेनवन्हित्वावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टस्यतादृशातयातेनसंबंधेनहेतुसमानाधिकरणाभावांशेसाध्य
स्यभ्रममादायाव्याप्तिरितिशंकानिरासः ॥ साध्यप्रतियोगिकतादृशासंबंधव्यक्त्योर्भेदात् ॥ निरुक्तभ्रमविषयितायांनिरुक्तोभयसंबंधेनतादृ
शासंबंधवद्विषयतानिरूपितत्वविरहात् ॥ एतन्मतेनिरुक्तविषयित्वनिष्ठानुमितिप्रतिबंधकतावच्छेदकत्वाभावघटितस्यैवा
नुमितिजनकज्ञानविषयत्वादिति ॥ अयंचाभ्युपगमवादः ॥ वस्तुतस्तु ॥ अनुमित्यविरोधित्वज्ञानस्यानुमितिहेतुत्वमेवन
संभवति ॥ तथाहि ॥ अनुमित्यविरोधित्वंतल्लिंगकतत्साध्यकतत्संसर्गकानुमित्यविरोधित्वंतादृशानुमितिजनकज्ञानाविरोधित्वंवा ॥ तत्र
तल्लिंगकत्वंनतावद्व्याप्तिपक्षधर्मताविशिष्टतल्लिंगविषयकज्ञानजन्यत्वंव्याप्तेरनिरूपणात् ॥ नापिपक्षधर्मताविषयकज्ञानजन्यत्वंक्र
मिकाभ्यांभिन्नलिंगपरामर्शाभ्यांयत्रैकस्यसाध्यस्यानुमितिस्तत्रतल्लिंगकतत्साध्यकानुमितिसामान्यविरोधित्वस्यतादृशानुमितिजनक
ज्ञानसामान्यविरोधित्वस्यवाकस्मिन्नपिव्यभिचारेऽसत्वेनव्यभिचारिण्यतिव्याप्तेः ॥ अथतल्लिंगधर्मिकपक्षधर्मताज्ञानाव्यवहितोत्तरत्ववि
शिष्टतत्साध्यकतत्संसर्गकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकताश्रयज्ञानसामान्याविरोधित्वंवक्तव्यंतादृशजनकताश्रयत्वंचन

 

लिंगांतरमात्रपरामर्शस्येतिचेत्तर्ह्यात्माश्रयप्रसंगः ॥ यतस्तादृशीजनकताव्याप्तिनिश्चयत्वावच्छिन्नैवेतितादृशजनकताज्ञानार्थं जन
कतावच्छेदकघटकव्याप्तिज्ञानमपेक्षितंव्याप्तिश्चेन्निरुक्तरूपात दातादृशव्याप्तिज्ञानेतादृशज्ञानमपेक्षितमितिविभावनीयंसुधी
भिः ॥ ॥ इतिविशारदलक्षणं ॥ ॥ दीधितौ यावंतःसाध्याभावाः प्रत्येकंतत्तत्सजातीयाइति ॥ अत्रप्रांच एवं
व्याचक्रुः ॥ प्रत्येकमितिषष्ठीबहुवचनांततथाचैकैकेषांसाध्याभावानामित्यर्थः निपातोत्तरमेवभेदार्थकविभक्तेरकल्पनात्तेनतत्त
दभावानांप्रातिस्विकरूपेणसाजात्यनिरूपकत्वलाभः ॥ तत्तत्सजातीयाइत्यत्रतेतेचतेसजातीयाइतिकर्मधारयाश्रयणात्तत्तदधि
करणवृत्तित्वाभावानांप्रातिस्विकरूपेण साजात्यानुयोगित्वलाभ इति ॥ तन्नतत्पदस्यपूर्वतनयत्पदोपस्थापितार्थबोधकतायाः स्वरस
सिद्धायाभंगप्रसंगइतिपूर्वतनपदोपस्थापितसाध्याभावार्थकवीप्सितत्वच्छेदेनसजातीयपदस्यषष्ठीतत्पुरुषाश्रयणेनसाध्याभावा
नांप्रातिस्विकरूपेणसाजात्येप्रतियोगितयाऽन्वयएवयुक्तः ॥ नचैवमपिसाध्याभावानांयच्छब्दोपस्थापितत्वाभावेनोक्तस्वरसभं
गस्तुल्यइतिवाच्यं ॥ यावंतइत्यत्रयेयेइतिशब्दकल्पनयातद्भंगाभावात् ॥ पूर्वोपस्थितबोधकत्वस्वरस्यभंगाभावाच्च ॥ प्रत्येकमितिप्र २१३

थमाबहुवचनांतंतत्तदधिकरणवृत्तित्वाभावाइत्यस्यविशेषणमतस्तेषांप्रातिस्विकरूपेणसाजात्यानुयोगितालाभः॥ **नचप्रत्येक**
**मित्यव्ययीभावसमासस्याव्ययतयातदुत्तरंप्रथमैकवचनमेवसाधुत्वार्थंप्रयोगार्हमितिकथंतदुत्तरंबहुवचनमिति वाच्यं**॥ नामार्थयो
रभेदान्वयेसमानवचनत्वस्यतंत्रत्वानुरोधेनैवबहुवचनकल्पनादित्यभिप्रायेणतथैवव्याचष्टे **यावत्साध्याभाववत्वेनेत्यादि**॥ **विशे
षणमित्यंतेन**॥ **कूटाधिकरणतायाः क्वचिदप्यसत्वेनेति**॥ नन्वस्मिन्लक्षणेसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियो
गिताकस्यैवसाध्याभावस्यनिवेशनीयतयावन्हिसाध्यकेतादृशसंयोगसंबंधावच्छिन्नतत्तद्ध्रदावृत्तित्वावच्छिन्नप्रतियोगिताका
भावकूटाधिकरणतायागुणादावेवप्रसिद्धिःसंभवतितत्रहेतुतावच्छेदकसंयोगसंबंधेनवृत्तेरप्रसिद्ध्या व्याप्तिसत्वेपिकूटाधिक
रणाप्रसिद्धिकथनंनिरभिप्रायमेवेतिचेदत्र **केचित्**॥ वन्हिपदस्यवन्हिमत्वप्रकारकप्रमाविषयत्वपरत्वेनस्वरूपसंबंधावच्छिन्न
प्रतियोगिताकतादृशकूटाधिकरणाप्रसिद्धावेवतात्पर्यं॥ **तथापीति**॥ **यद्यपि**निरुक्तकूटरूपंव्यधिकरणधर्मावच्छिन्नप्रतियोगि
ताकत्वंनसंभवदुक्तिकंसर्वस्यैवव्यधिकरणधर्मावच्छिन्नाभावस्यकिंचिद्विशिष्टस्वाभावत्वरूपसमानाधिकरणधर्मावच्छिन्नप्रति

योगिताकत्वेनतदन्यत्वस्यकस्मिन्नपिव्यधिकरणधर्मावच्छिन्नाभावेऽसंभवात्॥ तथापिचक्रवर्तिलक्षणोक्तरीत्याविशिष्टाभावो
विशिष्टाधिकरणत्वाभावरूप एवेतिमतानुरोधेनेयमुक्तिरितिध्येयं॥ वस्तुतस्तु॥साध्यव्यापकतावच्छेदकरूपावच्छिन्नायावत्यःप्र
तियोगिताःप्रत्येकंतत्तत्सजातीयानांतत्तन्निरूपकीभूताभावाधिकरणवृत्तित्वनिष्ठतत्तत्प्रतियोगितानांनिरूपकीभूतायेऽभावास्तद्वत्वं
व्याप्तिस्तत्रसाजात्यघटकसमानाधिकरणधर्मावच्छिन्नत्वंस्वासमानाधिकरणधर्मावच्छिन्नायायाप्रतियोगितातत्तदन्यत्वंव्यधिकरणधर्मा
वच्छिन्नत्वंतुस्वसमानाधिकरणधर्मावच्छिन्नायायाप्रतियोगितातत्तदन्यत्वरूपंवक्तव्यमितितात्पर्यं॥ समनियताभावानाम
नैक्यमतेसमव्याप्तितयाप्रमेयत्ववद्भेदस्यनिरुक्तव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वविरहेपिव्यधिकरणधर्मावच्छिन्नप्रतियोगि
ताकत्वशरीरनिविष्टसमानाधिकरणधर्मावच्छिन्नेत्यस्यव्यधिकरणधर्मानवच्छिन्नस्वसमानाधिकरणधर्मनिष्ठावच्छेदकताकेत्यर्थवि
वक्षयातन्निर्वाहोज्ञेयः॥ नोपादेयइति॥ एकैकमतसाधारणस्यतद्विशेषणाघटितलक्षणस्यसंभवेपिमतद्वयसाधारण्येनतन्निवेश
नंभवानंदनांसम्यगेवेतिकेचित्॥ धूमाभावीयप्रतियोगितायाः प्रमेयमात्रवृत्तित्वेन्यूनवृत्तिधर्मानवच्छिन्नाव्यधिकरणधर्मावच्छिन्ना

भावीयप्रतियोगितैवेतितादृशाभावमादायातिव्याप्तिराह ॥ अतिरिक्तवृत्तीति ॥ विरुद्धव्यावृत्तमिति ॥ सामानाधिकरण्यघटितमि त्यर्थः ॥ व्यापकताचेति ॥ साध्यवन्निष्ठाभावीयप्रतियोगितेत्यर्थः ॥ समवायेनद्रव्यत्वसाध्यकइति ॥ वन्हिसाध्यकेविषयतयात द्व्यापकस्यज्ञानस्यसाध्यतावच्छेदकसंयोगेनाभावस्यकेवलान्वयितयासमनियताभावैक्यमतेगगनाभावत्वेनतत्सजातीयंतदधिकरण वृत्तित्वस्यव्यधिकरणधर्मावच्छिन्नाभावमादायलक्षणसमन्वयःसंभवतीतितत्साध्यकस्थलत्यागः ॥ वन्हिमानिति ॥ अत्राप्युक्तयुक्तेरे वगुणसाध्यकस्थलांतरानुसरणं ॥ व्यापकतावच्छेदकताघटकसंबंधावच्छिन्नेति ॥ यद्यपिसाध्यतावच्छेदकताघटकसंबंधाव च्छिन्नत्वस्यप्रतियोगितावच्छेदकतायांनिवेशेपिदर्शिताभावव्यावर्तनंसंभवतितथापिपार्थिवत्वादिविशेषितस्येतिदीधित्यनुरोधात्तत्या गः ॥ तन्निवेशेःयोगोलकावृत्तित्वावच्छिन्नाभावस्यलक्षणाघटकत्वात्साध्याभाववद्व्यक्तिविशेषवृत्तित्वाभावमादायैवातिव्याप्तेःप्रतियो गितायांवृत्तित्वव्यापकत्वनिवेशप्रयोजनसंपत्तौपार्थिवत्वादिविशेषितनिर्धूमवृत्तित्वाभावानुसरणस्यनिर्बीजत्वापत्तेः ॥ तादृ शाभावस्यप्रामाणिकत्वेपिलक्षणघटकत्वासंभवादिति ॥ अथेदमनुपपन्नंप्रमेयत्वेसंयोगसंबंधघटितव्यापकतावच्छे

दकत्वंसाध्याधिकरणनिरूपितनिरवच्छिन्नाधेयतावदभावीयप्रतियोगिताधिकरणेसंयोगेनविद्यमानंसद्यदवच्छेदकंतदन्यत्वरू
पंसंयोगेनयद्धर्मविशिष्टाधिकरणंसाध्यवत्तदन्यत्वरूपंसाध्यवद्यात्किंचिद्धात्नयसंबन्द्धसंयोगेनस्वविशिष्टसामान्यकान्यत्वरूपंवा
वक्तव्यमन्यस्यदुर्वचत्वात्तत्तुत्रिविधमपिप्रमेयत्वेऽक्षतंप्रमेयत्वंनकस्याअपिप्रतियोगितायाअधिकरणेसंयोगेनविद्यमानंसदव
च्छेदकंनवासंयोगेनप्रमेयत्वविशिष्टंप्रसिध्यतीतिन्चेन्न॥दर्शितद्वितीयविधायांवन्हिमान्धूमादित्यादौवन्हिद्रव्यत्वोभयत्वावच्छिन्नस्य
संयोगेव्यापकतापत्तिस्तादृशोभयत्वविशिष्टस्यसंयोगेनाधिकरणाप्रसिद्धेरितितत्संबंधावच्छिन्नाभावमादायाव्याप्तिवारणायनिरुक्तत
द्भिन्नत्वेसतितत्संबंधावच्छिन्नाधेयतावच्छेदकत्वंवक्तव्यं॥आधेयतावच्छेदकतावव्यापकतावच्छेदकताघटकसंबंधावच्छिन्नाग्राह्याअ
न्यथादर्शितोभयत्वस्यकालिकसंबंधावच्छिन्नाधेयतावच्छेदकत्वेनतद्दोषतादवस्थ्यात्तथाचसंयोगेनप्रमेयत्वस्यव्यापकतावच्छेदक
त्वंनसंभवतितस्यसंयोगसंबंधावच्छिन्नाधेयतावच्छेदकत्वाभावात्॥ **नच** पूर्वमतेसमवायितयाप्रमेयत्ववद्भेदस्यैवैतन्मतेदर्शितद्वि
त्वावच्छिन्नाभावस्यसमनियताभावैक्यमतेगगनाभावत्वेननाव्याप्तिरिति **वाच्यं** ॥तदनैक्यमतएवलक्षणाघटकत्वाभिधानात्॥अनै

क्यमतेसमवायितयाप्रमेयत्ववद्भेदस्यव्यधिकरणधर्मावच्छिन्नत्वस्योपपादितत्वाच्च॥ **वस्तुतस्तु** ॥ दर्शितत्रिविधविधासुप्रथमविधायांसा
ध्यवद्वृत्त्यभावीयप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वनिवेशावश्यकतयाद्वितीयविधायांसाध्यतावच्छेदकसंबंधेनयद्धर्मवि
शिष्टानधिकरणत्वनिवेशावश्यकतयातृतीयविधायांसाध्यतावच्छेदकसंबंधेनसाध्यवद्यत्किंचिद्व्यक्त्यसंबद्धत्वनिवेशावश्यकतयावि
षयितासंबंधेनसर्वसाध्यकनित्यज्ञानत्वहेतुकेविषयितासंबंधघटितत्रिविधस्यापिव्यापकतावच्छेदकत्वस्याप्रसिद्ध्यासाध्यवन्निष्ठाभा
वीयप्रतियोगितासामान्येयद्धर्मसामानाधिकरण्यविशिष्टयद्धर्मावच्छिन्नत्वसाध्यतावच्छेदकसंबंधावच्छिन्नत्वोभयाभावस्तत्त्वरूपमेव
साध्यव्यापकतावच्छेदकत्वंवक्तव्यंयद्धर्मसामानाधिकरण्यघटकयद्धर्माधिकरणत्वंव्यापकतावच्छेदकताघटकसंबंधेनतथाचैतादृशा
संयोगसंबंधेनव्यापकतावच्छेदकत्वंनप्रमेयत्वस्येत्यवधेयं ॥ **लक्षणघटकतयेति** ॥ कपिसंयोगाभावस्यकेवलान्वयित्वेपिनत
स्यसमनियताभावैक्यमतेगगनाभावत्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वंप्रतियोगिवैयधिकरण्याघटितसमनैयत्यघट
कव्यापकत्वाक्रांतयोरैक्यादित्यवधेयं ॥ सत्तासाध्यकाव्याप्तिवारणायोपात्तेहेतुतावच्छेदकसंबंधेनकस्यचिदधिकरणेवर्तमानत्वमिति

विशेषणेस्वरूपसंबंधेनवर्तमानत्वविवक्षणेत्वाह ॥ **कपिसंयोगाधिकरणत्वाभावेति** ॥ **आत्मत्वहेतावव्याप्तिरिति** ॥ साध्या
भाववत्तायांदैशिकविशेषणतासंबंधावच्छिन्नत्वनिवेशाभिप्रायेणेदंयदिसाध्याभावत्वविशिष्टाधिकरणत्वंनिवेश्यतेस्वप्रतियोगिताव
च्छेदकविशिष्टस्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधेनवातदधिकरणत्वंनिवेश्यतेतदानायंदोषः ॥ रूपान्यत्वविशिष्टगुणत्वसा
ध्यकेयावत्साध्याभावांतःपातिरूपासमवेतत्वावच्छिन्नाभावस्यरूपेप्रतियोगिवैय्यधिकरण्यसंभवान्नातिव्याप्तिरत एतद्रूपान्यत्वेति ॥ **आ
काशत्वाभावाभावेसाध्यइति** ॥ आकाशाभावस्यकालिकसंबंधेनव्याप्यवृत्तित्वात्तेनसंबंधेनतदभावस्यकालेकिमवच्छेदेनाप्य
सत्वान्नप्रतियोगिवैय्यधिकरण्यनिरूपकाप्रसिद्धिरितिकालिकसंबंधावच्छिन्नाकाशाभावाभावसाध्यकस्थलपरित्यागः ॥ **आका
शावच्छेदेनेति** ॥ आकाशस्यापिस्वरूपसंबंधेनमहाकालवृत्तित्वादवच्छेद्याधिकरणसंबंधित्वमाकाशस्याक्षतमिति **ध्येयं** ॥ **जन्य
ज्ञानविषयत्वसाध्यकइति** ॥ **यद्यपि**विषयतयाजन्यज्ञानसाध्यकेप्यव्याप्तिःसंभवतितथापिसाध्यतावच्छेदकसंबंधावच्छिन्नाभा
वस्यैतन्मतेनिवेशाद्विषयतायावृत्त्यनियामकतामतेतत्संबंधावच्छिन्नाभावाप्रसिद्धेस्तेनसंबंधेनसाध्यतानभ्युपगमाभिप्रायेणतत्यागः ॥

**एतद्रूपान्यत्वविशिष्टसत्तावानिति** ॥ अत्रापि रूपान्यत्वप्रयोजनं पूर्ववदेव ॥ **प्रतियोग्यप्रसिद्ध्येति** ॥ **यद्यपि** समनियताभावै
क्यमते तत्प्रसिद्धिः संभवति तथापि तदनधिकरणाप्रसिद्धिर्दुर्वारा ॥ **अथवा** यादृशप्रतियोगितेति विवक्षणावश्यकत्वान्नासंगतिः ॥ **स्व
प्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिसमानाधिकरणाइति** ॥ व्यधिकरणधर्मावच्छिन्नाभावस्य स्वप्रतियोगितावच्छेद
कावच्छिन्नसमानाधिकरणत्वात्तत्संग्रहाय स्वप्रतियोगीति ॥ तादृशसामानाधिकरण्यमव्याप्यवृत्तिसंयोगाभावादौ प्रसिद्धमिति स्वपदेन तं गृ
हीत्वा तदन्यत्वं लक्षणघटकाभावे उपपादनीयं ॥ भवानंदोक्तदूषणमाशंक्य निराकुरुते ॥ **नचतथाप्येतदभावभिन्नमिति** ॥ सा
ध्यप्रतियोगिनः स्वप्रमपदार्थत्वस्फोरणायैतदिति **केचित्** ॥ **असंभवस्यैवप्रसंगादिति** ॥ **अत्रकेचि**द्वह्निमान् गगनादित्यत्रत्ति हे
तोर्लक्ष्यत्वमताभिप्रायेण दीधितिकारीयाव्याप्त्यभिधानसंगतिमाहुः ॥ **तथाचेति** ॥ **अथायं** निष्कर्षो न संभवति तादात्म्यसंबंधेन प्रमे
यसाध्यके लक्षणघटकत्वेनाभिमतस्य समवायित्ववाच्यत्वत्वादिना प्रमेयत्ववद्भेदस्य प्रतियोगितावच्छेदकतावच्छेदके समवायित्ववाच्य
त्वत्वादौ साध्यतावच्छेदकतादात्म्यसंबंधघटितव्यापकतावच्छेदकत्वाभावादत्र ब्रूमः ॥ समवायित्वावच्छिन्नायाः प्रमेयत्वनिष्ठावच्छेदक

तातन्निरूपितायाप्रमेयत्वनिष्ठावच्छेदकतातन्निरूपितप्रतियोगिताकभेदस्याप्यभ्युपगमात्तादृशभेदप्रतियोगितावच्छेदकतावच्छेदकप्र
मेयत्वादौसाध्यव्यापकतावच्छेदकत्वसत्वात्तादृशभेदमादायैवलक्षणसमन्वयः॥ नन्वतादृशभेदस्वीकारेकपिसंयोगाभाववान्मेयत्वादित्या
दौघटत्वावच्छिन्नायाकपिसंयोगाभावत्वनिष्ठावच्छेदकतातन्निरूपककपिसंयोगाभावत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदमादायद्रव्यस्या
पिकपिसंयोगात्मकाभावनिष्ठप्रतियोगिवैय्यधिकरण्यनिरूपकतापत्यातत्रहेतोर्वृत्तेरव्याप्तिरितिवाच्यं॥ व्यधिकरणधर्मावच्छिन्नत्वव्यतिरे
किनिष्ठत्वोभयाभाववतीयास्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकतातदाश्रयस्यैवसाध्यव्यापकतावच्छेदकत्वविवक्षणात्॥ वह्न्यादि
साध्यकेवह्नित्वादिनाघटवद्भेदीयतादृशप्रतियोगितावच्छेदकतावच्छेदकतामादायैववह्नित्वादिनाघटाभावादेर्लक्षणघटकत्वमुपपादनीयं॥ व्य
धिकरणधर्मावच्छिन्नावच्छेदकताकभेदानभ्युपगमेतुसाध्यसाधनभेदेनव्याप्तिभेदमभ्युपगम्यसाध्यतावच्छेदकव्यापकधर्मावच्छिन्नप्रतियो
गिताकाभावेप्रतियोगितावैय्यधिकरण्यघटितमेवलक्षणं॥ साध्यतावच्छेदकव्यापकत्वंव्यासज्यवृत्तिधर्मव्यावृत्तंयत्किंचित्साध्यव्यक्त्यसंबंधभि
न्नत्वरूपंग्राह्यंतेननद्वित्वादिनासाध्यभेदमादायाव्याप्तिः॥ प्रतियोगितावैय्यधिकरण्यंचप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताश्रयवृ

त्तिप्रतियोगिताकभेदवद्वृत्तित्वरूपंग्राह्यमितिनानुपपत्तिलेशोपि ॥ साध्यवत्येतद्रूपतद्रूपोभयत्वावच्छिन्नाभावसत्वेनेति ॥ इदंच
समनियताभावानैक्याभिप्रायेण तेनतादृशाभावस्यकेवलान्वयितयागगनाभावत्वेनतत्सजातीयंतद्वद्वृत्तित्वस्यव्यधिकरणधर्मावच्छिन्नाभाव
मादायलक्षणसमन्वयेपिनक्षतिः ॥ व्यासज्यवृत्तीति ॥ ननुतथाप्येतद्रूपभिन्नत्वेनैतद्रूपतद्रूपान्यतराभावमादायाव्याप्तिरित्यतआह ॥
स्वव्यापकेति ॥ अव्याप्तिरितिलेखनंनयुज्यतइति ॥ अत्रेदंचिंत्यं तादात्म्यसंबंधेनसाध्यतायांलक्षणसमन्वयादव्याप्तिलेखनंयु
ज्यतएवनहितत्रलक्षणविशेषवृत्तित्वविशिष्टसाध्यभेदस्याव्याप्यवृत्तित्वंशक्यतेवक्तुंतथासतिसाध्यव्यापकत्वादौभेदघटितप्रतियोगिवैय्यधिकर
ण्यस्याकिंचित्करत्वापत्तेर्भेदस्यव्याप्यवृत्तित्वाभिप्रायेणदीधितिकारीयाव्याप्तिलेखनस्यसंगमयितुंशक्यत्वाच्चेति ॥ हेतुवृत्तितानवच्छेदके
ति ॥ हृदवृत्तित्वत्वादिरित्यर्थः ॥ लाघवान्निवेशयितुमुचितमिति ॥ ननुवन्हिमान्धूमादित्यादौवन्हित्वादिनाघटाभावसजातीयस्य
तादृशाभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नतादृशवृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्याप्रसिद्ध्याऽसंभवएववक्तुमुचितः ॥ नन्चतादृशवृ
त्तित्वत्वेनतादृशवृत्तित्वघटान्यतराभावस्यैवप्रसिद्धिरितिवाच्यं ॥ तस्यस्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेनतदन्यत्वरूपव्य

धिकरणधर्मावच्छिन्नप्रतियोगिताकत्वविरहात् ॥ नन्वसमनियताभावैक्यमतेतस्यगगनाभावत्वेनसाध्याभावसाजात्यंसंभवतीतिवा
च्यं ॥ तथापितदनैक्यमतेऽसंभवस्यदुर्वारत्वादितिचेन्न ॥ वृत्तित्वत्वव्यापकधर्मावच्छिन्नेत्यनेनसाध्याभाववद्वृत्तित्वत्वविशिष्टव्याप
कतावच्छेदकधर्मावच्छिन्नत्वस्यविवक्षणाद्वाच्यत्वत्वेनसाध्याभाववद्वृत्तित्वाभावप्रसिद्धेर्हित्वावच्छिन्नाभाववारणस्यचसंभवात् ॥
अतएवगौरवोक्तिरपियथाश्रुतेस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपव्यासज्यवृत्तित्वाश्रयधर्मानवच्छिन्नत्वतादृशवृ
त्तित्वत्वव्यापकत्वयोर्वृत्तित्वत्वव्यापकधर्मावच्छिन्नत्वतादृशवृत्तित्वत्वव्यापकत्वयोः साम्येनतदसंगतेरिति ध्येयं ॥ हेतुतावच्छेदकसं
बंधानुयोगितानिवेशेतत्संबंधनिवेशाद्गौरवमतोऽ **नुयोगितेति** ॥ दीधित्यनुसारेणाहाथवेति ॥ **विशेषणविशेष्यसंबंधस्य** ॥
गुणकर्मान्यत्वसामानाधिकरण्यस्य ॥ **परंपरासंबंधेन** ॥ स्वाश्रयाश्रयत्वसंबंधेन ॥ **यदिचसत्तादेरेवेति** ॥ हेतुतावच्छेदकेवृत्ति
तावच्छेदकत्वाभावनिवेशेविशिष्टहेतुतावच्छेदककस्थलेऽव्याप्तिरतोऽधिकरणताघटितपरिष्कारानुधावनं ॥ ॥ **इतिमिश्र
प्रथमलक्षणं** ॥ ॥ **व्यापकतासाध्यतावच्छेदकसंबंधघटिताग्राह्येति** ॥ अत्रयद्यपिप्रतियोगितावच्छेदकसंबंध

घटितव्यापकत्वनिवेशासंभवस्तथापिसाध्याभावव्यापकत्वविशेषणवैयर्थ्यापत्तेस्तदुपेक्षा ॥ तदनिवेशेसाध्याभावसामानाधिकरण्यमात्रनि
वेशेधूमाभावसमानाधिकरण: वह्न्यभावमादायधूमवान्वन्हेरित्यादावतिप्रसंगोवाच्य: सचनसंभवतिप्रतियोगितावच्छेदकसंबंधेनव्याप
कत्वकल्पेऽयोगोलकान्यत्वाभावस्यापिलक्षणघटकत्वात् ॥ साध्यतावच्छेदकसंबंधेनतन्निवेशेचतस्यातथात्वादयोगोलकावृत्तेरभावस्य
लक्षणघटकत्वेपिसंयोगसंबंधावच्छिन्नप्रतियोगिताकतादृशाभावस्यगुणादावपिसत्वात्तदंतर्भावेणैववह्न्यभावस्यधूमाभावसामाना
धिकरण्यंसंभवतीतिध्येयं ॥ अनवच्छिन्नदैशिकविशेषणतासंबंधेनव्यापकत्वलाभायैवेति ॥ इदमत्रचिंत्यमेवंसतिद्र
व्यत्वादौसाध्येप्रमेयमित्याकारकजन्यज्ञानस्यहेतुतायांतादृशाहेत्वभावस्यव्यापकत्वापत्तिस्तदीयनिरवच्छिन्नदैशिकविशेषणताया
अप्रसिद्ध्यायत्पदेनतस्योपादानासंभवान्निरवच्छिन्नदैशिकविशेषणतासंबंधसामान्येयत्प्रतियोगिकत्वसाध्याभाववद्यत्किंचिद्व्यक्त्यनु
योगिकत्वोभयाभावस्तदन्यत्वमेवनिरवच्छिन्नदैशिकविशेषणतासंबंधेनसाध्याभावव्यापकत्वमितिविवक्षणावश्यकतयाऽभावस्ये
तिभावभिन्नस्येत्यर्थकमित्यनेनविवक्षितंभावभिन्नत्वंव्यर्थं॥नचयदीयदैशिकविशेषणतासंबंधसामान्येनिरवच्छिन्नत्वसाध्याभाववद्य

किंचिद्व्यक्त्यनुयोगिकत्वोभावस्तदन्यत्वरूपमेवनिरवच्छिन्नदैशिकविशेषणतासंबंधेनव्यापकत्वंविषयतयाप्रमेयमित्याकारकजन्यज्ञानाभावस्यव्यापकत्ववारणायविवक्षणीयंतथाचतत्सार्थक्यमितिशंक्यं॥ निरवच्छिन्नदैशिकविशेषणतासंबंधसामान्येउक्तोभयाघटितव्यापकत्वविवक्षयैवस्वरसतःभावाभावसाधारणानुयोगिताविशेषरूपाभावत्वनिवेशपरस्य व्यापकीभूताभावस्येतिमूलस्यसंगमनेदैशिकविशेषणतासंबंधसामान्येउक्तोभयाभावघटितव्यापकत्वविवक्षयातादृशमूलस्यास्वारसिकभावभिन्नत्वनिवेशपरत्वेनलापनस्यप्रक्षालनाद्धीतिन्यायेनानुचितत्वात् यदिभावभिन्नत्वविशेषणंमूलोक्तंस्याद्भवेत्तदोक्तरीत्यातदभिप्रायवर्णनंनतूक्तं अन्यलक्षणेष्विवभावाभावसाधारणाभावत्वनिवेशएवाभावस्येतिमूलोक्तेःस्वारस्यादिति॥ क्रियामात्रस्यैवकालोपाधित्वमतेधूमवान्वह्नेरित्यादावतिव्याप्त्यभावान्महाकालभिन्नःकालत्वादितिः॥ स्वयमूह्यमिति॥ ज्ञानवान्द्रव्यत्वादित्यादौविषयितयाद्रव्यत्वत्ववज्ज्ञानाभावस्यसाध्याभावव्यापकतयातमादायातिव्याप्तेर्वारणायप्रतियोगितावच्छेदकतायांहेतुतावच्छेदकताघटकसंबंधावच्छिन्नत्वमयमात्माज्ञानादित्यादौविषयतयाहेतौसाध्याभावव्यापकात्मत्वाभावप्रतियोगितावच्छेदकात्मत्वत्वस्यविषयितासंबंधेनहेतुव्यापकतावच्छेदकत्वादतिव्याप्तेर्वारणायव्यापकतावच्छेदकतायांहेतुतावच्छेदक

ताघटकसंबंधावच्छिन्नत्वंनिवेशनीयं ॥ एवंयद्रूपवत्त्वंहेतुतावच्छेदकताघटकसंबंधेनयद्रूपावच्छिन्नवत्त्वंहेतुतावच्छेदकसंबंधेननिवेशनीयं
तत्प्रयोजनंस्फुटमेवेत्येवमित्यर्थः ॥ हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्धेति ॥ विषयितासंबंधस्याभावप्रतियोगितानवच्छेदकत्वाभि
प्रायेणेदं ॥ अन्यथाविषयितासंबंधावच्छिन्नप्रतियोगितायांतदवच्छिन्नत्वसत्वादप्रसिद्ध्यसंगतंस्यात् ॥ विषयितासंबंधस्याभावप्रतियो
गितावच्छेदकत्वेतुव्यापकीभूताभावप्रतियोगितायामुभयसत्वेनगुरुधर्मावच्छिन्नहेतुकस्थलेऽव्याप्तिर्द्रष्टव्या ॥ अप्रतीकारादिति ॥ न
नु हेतुतावच्छेदकानवच्छिन्नत्वमित्यनेनहेतुतावच्छेदकव्यापकधर्मानवच्छिन्नत्वनिवेशेनकंबुग्रीवादिमत्त्वावच्छिन्नहेतुकाव्याप्तिप्रतीका
रःसंभवतीतिचेन्न ॥ तथासतिद्रव्यंसत्वादित्यादावतिव्याप्तेः ॥ द्रव्यत्वाभावव्यापकविशिष्टसत्ताभावप्रतियोगितायांसत्तात्वव्यापकविशिष्ट
सत्तात्वावच्छिन्नत्वसत्वेनोभयाभावसत्वात् ॥ यदिचहेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वमेवनिवेश्यंविशिष्टसत्ता
त्वस्यसत्तात्वावच्छिन्नव्यापकतावच्छेदकत्वाभावान्नातिव्याप्तिरित्युच्यतेतदासिद्धांतएवपर्यवसानमितिध्येयं ॥ ॥ इतिमिश्रल
क्षणानि ॥ ॥ वृत्तिमद्वृत्तयइत्यत्रहेतुतावच्छेदकसंबंधेनवृत्तित्वनिवेशमात्रस्यप्रयोजनंदीधितिकृतादर्शितंनतुवृत्तिमद्वृत्ति

त्वविशेषणस्येत्यतःस्वयंतत्प्रयोजनंदर्शयति॥ वृत्तिमद्वृत्तित्वानुपादानइति॥ जगत्संबद्धत्वस्येति॥स्वयंवृत्तिपदस्यसंबद्धत्व मित्यर्थकरणात्तदनुरोधेनेयमुक्तिः॥ नानाव्यक्तिसाध्यकइति॥ नन्वेकव्यक्तिसाध्यकेएतद्रूपवानेतद्रसादित्यादावप्येतद्रूपभिन्नत्वे नैतद्रूपतद्रूपान्यतराभावमादायाव्याप्तिसंभवेनानाव्यक्तीत्यसंगतमितिचेन्न॥ वन्हित्वेनवन्हिघटान्यतराभावमादायाव्याप्तेर्वारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्यप्रतियोगिताविशेषणत्वावश्यकत्वेनतादृशाभावस्यलक्षणाघटकत्वात्॥ यद्वा साध्यमात्रप्रतियोगि ताकाभावनिवेशेनैकव्यक्तिसाध्यकेऽव्याप्तिरितिनानाव्यक्तीत्युक्तिः॥अतएवरूपघटोभयाभावमादायतत्रातिव्याप्तिसत्वेपिनक्षतिः॥त र्णातार्णदहनोभयाभावमादायेति॥ यद्यपिसाध्यसमानाधिकरणसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्यसाध्याभाव विशेषणत्वेनाप्ययंदोषोवारयितुंशक्यते॥ एवंचैतल्लक्षणस्यकूटघटितलक्षणाक्षेपकत्वमपिसाधुसंगच्छतेऽन्यथासर्वलक्षणानाम प्याक्षेपकत्वापत्तेस्तस्मात्कूटातिरिक्तसकलविशेषणसत्वएवाक्षेपकतायावाच्यत्वात्तथापितादृशविशेषणोपादानेगौरवंस्यात्॥कू टघटितलक्षणाक्षेपकत्वंत्वितरलक्षणापेक्षयाप्रचुरसजातीयविशेषणघटितत्वादेवसर्वांशेसाजात्यस्यकथमपिवक्तुमशक्यत्वात्॥

यदि च साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशापेक्ष एव लाघवं ॥ तथाहि साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावनिवे
शे वह्निसाध्यके वह्नित्वेन तद्वह्निघटान्यतराभावमादायाव्याप्तिवारणाय प्रतियोगितायां स्वन्यूनवृत्ति धर्मानवच्छिन्नत्वं देयमथ च द्रव्यत्व
त्ववाच्यत्वत्वादीनामपि साध्यव्यापकतावच्छेदकतया तत्तदवच्छिन्नाभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावकूटमेव व्याप्तिशरीरे
निवेशनीयमित्युच्यते तदापि साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशे प्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्व
स्यैव निवेशनीयतया वृत्त्यनियामकसंबंधेन साध्यतायां तत्संबंधावच्छिन्नप्रतियोगिताया अप्रसिद्ध्या ऽव्याप्त्यापत्तेर्लाघवमकिंचित्करं ॥ न च
लक्षणलाघवानुरोधेन वृत्त्यनियामकसंबंधस्याभावप्रतियोगितावच्छेदकत्वाभ्युपगमस्तेन संबंधेन साध्यतानभ्युपगमो वान्याय्यस्त
थासति व्याप्तेः पदार्थांतरत्वस्यैव युक्तत्वात् ॥ व्याप्यवृत्तिरिति ॥ नन्वत्राव्याप्यवृत्तित्वनिवेशो विफलः प्रतियोगिवैय्यधिकरण्या
घटितसाध्यव्यापकताया एव निवेशे न कपिसंयोगाभावस्य लक्षणाघटकत्वादिति चेन्न ॥ स्वलक्षणोक्तरीत्या लाघवेन प्रतियोगि
वैय्यधिकरण्यघटितव्यापकताया निवेशनीयत्वात् ॥ हेतुवृत्तितावच्छेदकीभूतयत्किंचिद्धर्मेति ॥ तादृशधर्म आलोका

वृत्तित्वादिस्तत्र हेतुवृत्तितावच्छेदकत्वकथनं तदवच्छिन्नाभावस्य हेत्ववृत्तित्वसूचनायेति ध्येयं ॥ **तत्तदभाववद्वृत्तित्वत्वघटके**
ति ॥ अत्र घटकत्वं स्वाविषयकप्रतीतिवृत्तितत्तदभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वरूपं ज्ञेयं ॥ **वह्न्याद्यभावव्य**
**क्तेरिति** ॥ निष्ठत्वं षष्ठ्यर्थस्तस्य तदभावत्वेऽन्वयः ॥ **तदवच्छिन्नाभावस्यापि** ॥ वह्न्यभावत्वावच्छिन्नाभावस्यापीत्यर्थः ॥ **तादृश**
**तया** ॥ तदभाववद्वृत्तित्वत्वघटकधर्मावच्छिन्नप्रतियोगिताकतया ॥ **यद्यपि** वृत्तिमद्वृत्तिरित्यत्र वृत्तित्वस्य स्वरूपसंबंधेनैव ग्राह्यत्वाद्व
ह्न्यात्मकाभावस्य वृत्तिमद्वृत्तित्वमेव न संभवति ॥ तथापि भावानामपि स्वरूपसंबंधोस्तीत्यभिप्रायेणेदं ॥ यद्वा वह्न्यधिकरणत्वात्मकाभावस्य
स्वरूपसंबंधेन वृत्तिमत्वाद्वह्न्यधिकरणत्वाभाववह्न्यभावयोः समनैयत्याद्वह्न्यधिकरणत्वमपि वह्न्यभावाभाव इत्यभिप्रायः ॥ **घटवृत्ति**
**त्वत्वावच्छिन्नसाध्यके तादात्म्येन घटत्वव्यापकादिहेताविति** ॥ घटत्वव्यापकत्वं परिचायकं तत्परिचितप्रमेयत्ववाच्यत्वा
दिकं तादात्म्येन हेतुः स्वरूपसंबंधावच्छिन्नघटवृत्तित्वं साध्यं ॥ समवायसंबंधावच्छिन्नघटवृत्तित्वस्य साध्यत्वे घटनिरूपितस्वरू
पसंबंधावच्छिन्नवृत्तित्वाभावरूपघटावृत्तित्वावच्छिन्नाभावस्य लक्षणघटकत्वासंभवात्तादृशघटावृत्तित्वस्य घटासमवेतवृत्तित्वत्व

रूपसाध्याभाववद्वृत्तित्वघटकत्वासंभवात्॥ घटासमवेतत्वस्यतद्घटकत्वेपिस्वरूपसंबंधावच्छिन्नप्रतियोगिताकस्यैववृत्तित्वाभावस्य
निवेशनीयतयावाच्यत्वादिसाधारणतदवच्छिन्नस्यस्वरूपसंबंधेनाभावाप्रसिद्धेः॥ अथवृत्तित्ववत्त्वीत्यत्रसाध्याभाववन्निरूपितहेतु
तावच्छेदकसंबंधावच्छिन्नयावदाधेयतावृत्तित्वविवक्षणात्स्वरूपसंबंधावच्छिन्नघटवृत्तित्वसाध्यकेपिनाव्याप्तिस्तादृशसाध्याभाव
वद्घटनिरूपिततादात्म्यसंबंधावच्छिन्नवृत्तित्वेघटतादात्म्यरूपेघटावृत्तित्वस्याभावात्॥ मैवंघटनिरूपिततादात्म्यस्वरूपान्यतरसं
बंधावच्छिन्नवृत्तित्वस्यैवसाध्यत्वाद्घटस्यतादृशसाध्याभाववत्वाभावात्॥ अथसाध्याभाववद्वृत्तित्वमात्रनिष्ठत्वेनधर्मविशेषणत्वेनायंदो
षः घटावृत्तित्वस्यतन्मात्रनिष्ठत्वाभावात्॥ तादृशावृत्तित्वमात्रनिष्ठत्वंचतादृशावृत्तित्वत्वव्याप्यत्वंनतुतदितरावृत्तित्वंविषयितासंबंधे
नहेतुकेनत्संबंधावच्छिन्नवृत्तित्वस्यविषयतारूपतयाविषयतायाश्चविषयरूपत्वेनतदितराप्रसिद्धेरितिचेन्न॥ तत्रसाध्याभाववद्वृ
त्तित्वत्वसमनियतत्वंधर्मेनिवेश्यतदवच्छिन्नत्वस्यप्रतियोगितायांनिवेशापेक्षयाप्रतियोगितायांतत्तत्साध्याभाववद्वृत्तित्वत्वसमनैय्य
त्यनिवेशस्योचितत्वात्॥ विषयितासंबंधेनहेतुतायांसाध्याभाववद्वृत्तित्वत्वस्यजगद्विषयतात्वरूपतयाविषयतायाविषयस्वरूपत्वेनतस

मनियतधर्मावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेश्च ॥ एतेन ह्रदवृत्तित्वत्वेन निर्धूमवृत्तित्वसामान्याभावीयप्रतियोगितायां निर्धूमवृत्तित्वसामान्ये स्वीकारे धर्मे समनैयत्यनिवेश एवोचितो ऽन्यथा तादृशाभावमादायातिव्याप्तेर्दुर्वारतेति निरस्तं ॥ अनेनैव दोषेण कल्पांतरस्यावतरणीयत्वाच्च ॥ साध्याभावव्यावृत्तेति ॥ स्वनिष्ठमुख्यविशेष्यताशून्यप्रतीतिवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वरूपेत्यर्थः ॥ तत्तदिति ॥ यद्यपि तत्तद्व्यक्तित्वेनाभावनिवेशे संयोगादिसंबंधावच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावसाध्यके गगनाद्यात्मकसाध्याभावाधिकरणमप्रसिद्धं ॥ तथापि साध्याभावत्वरूपा यावत्यो ऽनुयोगिताः प्रसिद्धास्तत्तदवच्छिन्नाधिकरणवृत्तित्वाभावा यावंत इति निवेशान्न दोषः ॥ अनुयोगित्वप्रतियोगित्वयोरनुयोगिप्रतियोगिस्वरूपत्वमते तु व्यापकतावच्छेदकांतस्य परिचायकतया तत्परिचिततत्तद्धर्मावच्छिन्नतत्तन्निष्ठतत्तत्संबंधावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधिकरणवृत्तित्वाभावा एव निवेश्याः ॥ नानाविपक्षके ऽप्रसिद्धिरिति ॥ नन्वेकविपक्षकेपि तद्घटभिन्नं पटत्वादित्यादौ तद्घटवृत्तित्वाभावीयप्रतियोगितायास्तत्तत्साध्याभाववद्वृत्तित्वत्वव्याप्यत्वेपि तत्तत्साध्याभावांतःपातिव्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वत्वव्यापकत्वविरहा २२२

त्समनैय्यत्वाप्रसिद्धिरस्तीतिनानाविपक्षकेत्यव्यावर्तकमितिचेन्न ॥ व्याप्यत्वाप्रसिद्धिप्रयोज्यायाःसमनैय्यत्वाप्रसिद्धेरेवविवक्षित
त्वात् ॥ अतएवव्याप्यैकप्रतियोगितायाअप्रसिद्धिरितिग्रंथकृदुक्तिः ॥ नचैवमप्येकविपक्षकेव्यापकत्वाप्रसिद्धिप्रयोज्यसमनैय्यत्वाप्रसि
द्ध्यनभिधानेनन्यूनतादुर्वारेतिवाच्यं ॥ यत्किंचित्साध्याभाववद्वृत्तित्वत्वव्यापकत्वनिवेशेनाप्रसिद्धिरित्यभिप्रायात् ॥ यत्किंचित्प्रति
योगितेति ॥ व्यधिकरणधर्मावच्छिन्नप्रतियोगितेत्यर्थः ॥ अतिव्यापकतयेति ॥ व्यभिचारिहेतुसाधारणतयेत्यर्थस्तथाचातिव्या
प्तिरितिभावः ॥ घटभेदादीति ॥ नन्वत्रघटवृत्तित्वत्वावच्छिन्नाभावस्यलक्षणाघटकत्वेपिनातिव्याप्तिर्व्यधिकरणधर्मावच्छिन्नसा
ध्याभाववद्वृत्तित्वाभावस्यापिलक्षणाघटकत्वात् ॥ व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेद
कत्वापेक्षयावृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्यैवलघुत्वेनतदवच्छिन्नभेदरूपव्यापकत्वस्यतादृशाभावीयप्रतियो
गितायामसंभवात् ॥ नचघटभेदसाध्यकेतादृशाभावाप्रसिद्ध्याऽव्याप्तिरेवविवक्षितेतिवाच्यं ॥ केवलान्वयिनिवह्निमान्धूमादित्या
दौचसर्वत्राप्रसिद्धिसंभवेतदुपेक्षायानिर्बीजत्वात् ॥ अत्रकेचित् ॥ वृत्तित्वांशेव्यधिकरणधर्मावच्छिन्नाभाववन्निरूपितत्वस्योप

लक्षणतयाघटत्वेनजगद्वृत्तित्वाभावमादायसद्धेतौसर्वत्रलक्षणसमन्वयेनघटभेदसाध्यकेऽतिव्याप्तिरेवविवक्षितेत्याहुः॥ **तद्वच्छिन्नैकभेदनिवेशासंभवादिति**॥ **अथैवमपि**विषयितासंबंधेनहेतुतायामव्याप्तिस्तत्रव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितत्वस्यतादृशाभाववद्वृत्तित्वनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगिताव्यापकत्वासंभवात्॥ **तथाहि**तादृशप्रतियोगित्वविषयतात्वयोःसमनैय्यत्येनविषयतानिष्ठभेदप्रतियोगितावच्छेदकत्वापेक्षयाप्रतियोगितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्यगुरुत्वेनप्रतियोगितानवच्छेदकतयातद्वच्छिन्नभेदरूपव्यापकत्वाप्रसिद्धेः॥ **नच**तत्रापिप्रतियोगितासमानाधिकरणभेदप्रतियोगितावच्छेदकभेदकूटमेवनिवेश्यमिति**वाच्यं**॥ तथासतिवह्निमान्धूमाद्वाच्यंज्ञेयत्वादित्यादौधूमज्ञेयत्वनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्यतद्व्यक्तित्वेनयोऽभावस्तदीयप्रतियोगितायास्तादृशवृत्तित्वनिष्ठतद्व्यक्तित्वापेक्षयागुरुत्वेनतादृशसाध्याभाववद्वृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकंयद्यत्तद्भिन्नत्वेनतादृशसाध्याभाववद्वृत्तित्वत्वेतादृशभेदकूटात्मकतद्व्यापकत्वसत्वेनचतादृशप्रतियोगिताकाभावस्यापिलक्षणघटकतयाऽसंभवापत्तेः॥ **नच**भेदप्रतियोगितावच्छेदकत्वमपिप्रतियोगिताविशेषणंदातुंशक्यंतथासतिविषयिता

संबंधेन हेतुतायां जगद्विषयतात्वरूपव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगितायास्तादृशाविषयत्वनि
ष्ठायाविषयतायाविषयस्वरूपत्वमतेकेवलान्वयितयाभेदप्रतियोगितावच्छेदकत्वाभावेनतादृशप्रतियोगितायाअप्रसिद्ध्याऽव्याप्त्या
पत्तेरितिचेन्न ॥ प्रतियोगितायाअखंडत्वमतेनैतदभिधानात्तन्मतेतस्याः स्वरूपतएवावच्छेदकत्वान्नोक्तदोषः ॥ यद्विचाभावधर्मो
विशेषणविधयाननिवेश्यतेऽपित्वभावप्रभृतिरेवेति ॥ अयमर्थः ॥ प्रकृतनिरुक्तौसाध्यव्यापकतावच्छेदकरूपावच्छिन्न
प्रतियोगिताकाभावत्वनिष्ठावच्छेदकतानिरूपकीभूतायाअभावनिष्ठावच्छेदकतातन्निरूपकीभूतायाअधिकरणनिष्ठावच्छेदकतातन्नि
रूपकीभूतायानिरूपितत्वनिष्ठावच्छेदकतातन्निरूपकीभूता यावृत्तित्वत्वनिष्ठनिरूपकतातन्निरूपितस्यनिरूप्यत्वस्ययोऽभावस्तत्वे
ननत्तत्साध्याभाववद्वृत्तित्वत्वनिरूपितत्वाभावस्यनप्रवेशः ॥ अपितुसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावनिष्ठाव
च्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकेत्यादिक्रमेणैव ॥ एवंचघटवृत्तित्वनिरूपितत्वंनास्तीतिधीसिद्धाभावस्यनिरुक्तवि
शेषणाक्रांतस्यघटवृत्तित्वत्वावच्छिन्नप्रतियोगितायामसत्वान्नतादृशाभावस्यलक्षणघटकत्वानुपपत्तिः ॥ तत्रचाभावनिष्ठावच्छेदकता

यांकिंचिन्निष्ठावच्छेदकत्वानिरूपितत्वरूपमनवच्छिन्नत्वंनानिवेश्यंतयेनानिधूमवृत्तित्वत्वनिरूपितत्वंनास्तीतिधासिद्धाभाव
स्यनिरुक्तविशेषणाक्रांतत्वंनस्यात्॥ तत्तदभाववद्वृत्तित्वत्वनिरूपितत्वत्वपर्याप्तावच्छेदकताकाभावस्यैवनिवेशानी
यत्वादिति॥अथात्रतदभावत्वस्योपलक्षणत्वंविशेषणत्वंवाविवक्षितं॥ आद्ये धूमाद्यभावनिष्ठावच्छेदकतानिरूपकाधिकरण
निष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकताकवृत्तित्वत्वनिष्ठनिरूपकताकत्वत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावत्वे
नैवनिवेशइतिपर्यवसितंतथाचधूमाभावत्वावच्छिन्नत्वविशेषितावच्छेदकताघटितंयद्धूमाभावत्वविशिष्टाधिकरणवृत्तित्वत्व
निरूपितत्वत्वंतत्पर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यसंग्रहोदुर्घटः॥ यदिच तस्यासंग्रहेपिनक्षतिधूमाभावनिष्ठावच्छेद
कताघटितंयद्धूमाभावत्वोपलक्षिताधिकरणनिरूपित वृत्तित्वत्वनिरूपितत्वत्वंतत्पर्याप्तप्रतियोगितावच्छेदकताकाभावमादायैवनि
र्धूमवृत्तित्वाभावस्यलक्षणघटकत्वोपपत्तिरित्युच्यते॥ तदातत्तदभावत्वेन निवेशोव्यर्थोगौरवग्रस्तश्च॥ साध्यव्यापकतावच्छेदक
रूपावच्छिन्नप्रतियोगिताकाभावत्वेनानुगतेनोपलक्षणीभूतेननिवेशासंभवात्तथानिवेशेधूमाभावत्वेनधूमाभावघटितविशिष्टनिरू

पितत्वत्वावच्छिन्नाभावस्यासंग्रहेपिधूमव्यापकतावच्छेदकरूपावच्छिन्नाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरू
पकनिरूपितत्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वत्वनिष्ठनिरूपकताकत्वंनास्तीतिधीविषयाभावमादायैवनिर्धूमवृत्तित्वाभावघटवृत्ति
त्वाभावादेर्लक्षणघटकत्वसंभवात्॥अंत्येघटभिन्नंमेयत्वादित्यादावतिव्याप्तिरितिचेन्न॥साध्यव्यापकतावच्छेदकरूपावच्छिन्ना
भावत्वेनोपलक्षणेनसाध्याभावनिवेशनएवग्रंथकृत्तात्पर्यकल्पनात्॥ तादृशानियमेमानाभावादिति॥गोत्वादिप्रकारिताप्र
कारकज्ञानानुव्यवसायेप्रकारितांशेस्वरूपतएवगोत्वादेःप्रकारतयातादृशानियमेव्यभिचारात्समवायनिरूपितत्वाभ्यामतिरिक्तसं
बंधेनजातेःस्वरूपतोनभानमित्येवंरूपनियमस्यैवस्वीकारात्समवायेनैवेत्यादिनियमेमानाभावादितिभावः॥ जातिसाधारणे
ति॥घटत्वत्वपटत्वत्वहेतोर्घटत्वपटत्वादिवृत्तित्वाभावाभावात्॥साधारणपदोपादानेनेदंवाच्यंज्ञेयत्वादित्यादावपि॥जातेःसमवा
येनैवेत्यादिनियमांगीकर्तृमतेपूर्वोक्तसकलदोषोद्धारादभावप्रभृतिविशेषणत्वविवक्षाकल्पेदोषमाहैवमिति॥ ध्वंसाधिकरण
हेत्विति॥कपालंघटादित्यादावित्यर्थः॥संयोगेनवृत्तिमनितादृशध्वंसवत्वनियमेनतादृशाभावस्यवृत्तिमद्वृत्तित्वाभावादतःसंयोगेन

धूमस्यहेतुत्वपरित्यागः॥ **अव्यापकतया**॥अवृत्तितया॥ तथाचतादृशाभावस्यसमवायेनवृत्तिमतिरूपादावसत्वादव्याप्तिरिति भावः॥ **स्वस्मिन्नेव**॥जात्यादावेव॥ **एतेन**जातेर्घटादौसमवायेनसत्वात्समवायावच्छिन्नविषयत्वाभावस्यघटवृत्तित्वेकथंतानिरस्ता॥ **कालेति**कालपदंक्रियापरंतथाचवन्हिमान्क्रियातः आत्माज्ञानादित्यादावित्यर्थः॥ गगनभेदसाध्यकेघटत्वहेतौलक्षणसमन्वयान्नासंभवः॥ **येनसंबंधेनयद्वर्तते इति**॥ साध्याभाववद्वृत्तित्वत्वनिष्ठस्वरूपसंबंधावच्छिन्नावच्छेदकताभिन्नसमानाधिकरणसंबंधावच्छिन्नावच्छेदकत्वानिरूपकत्वंप्रतियोगितायांपर्यवसितं॥ **तदर्थश्चस्वाविषयकप्रतीतिवृत्तीति**॥ **इदमत्रविचार्यं**॥ स्वाविषयकप्रतीतिवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वरूपाघटकत्वद्वारीरिसाध्याभावानांकेनरूपेणानिवेशः॥ नतावत्तत्तद्व्यक्तित्वेनसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितानिरूपितायाअनुयोगिताव्यक्त्य प्रत्येकंतत्तद्व्यक्तिपुरस्कारेणवाभूतत्व मूर्तत्वोभयाभाववान्भूतत्वविशिष्टमूर्तत्वाभाववान्वामनस्त्वादित्यादौनतत्तद्व्यक्तित्वेनतादृशोभयाभावादिनिष्ठप्रतियोगितानिरूपितानुयोगिताविशेषेणवाविशेषिततत्तत्साध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयितायाः स्वरूपतोमूर्तत्वरूपजातिघ

टितमूर्त्तवृत्तित्वत्वाविषयकप्रतीतिवृत्तित्वविरहेणस्वपदेनतादृशमूर्त्तवृत्तित्वत्वस्योपादानासंभवेनतस्याघटकत्वाभावादघटकध
र्मानवच्छिन्नप्रतियोगिताकमूर्त्तवृत्तित्वत्वावच्छिन्नाभावस्यगगनपरिमाणादौवृत्तिमद्वृत्तेर्मनस्त्वरूपहेतावभावेनाव्याप्तेः॥अथतादृ
शानुयोगिताव्यक्त्यवच्छिन्ननिरूपकताकाधिकरणवृत्तित्वत्वाघटकत्वमेवनिवेशनीयमतःस्वरूपतोमूर्त्तत्वघटितमूर्त्तवृत्तित्वत्व
स्यतादृशवृत्तित्वत्वाघटकत्वनिर्वाहात्तदवच्छिन्नाभावस्यलक्षणाघटकत्वेनोक्ताव्याप्त्यनवकाशइतिचेत्तर्हिभूतत्वमूर्त्तत्वोभयाभावसा
ध्यकेघटभेदसाध्यकेचमेयत्वादावतिव्याप्त्यापत्तिर्दुर्वारास्पर्शवद्वृत्तित्वत्वघटवृत्तित्वत्वादेस्तादृशानुयोगिताव्यक्त्यवच्छिन्ननिरूपक
ताकाधिकरणवृत्तित्वत्वाघटकत्वेनतादृशवृत्तित्वत्वस्यस्पर्शवद्वृत्तित्वत्वापेक्षयागुरुत्वेनाभावप्रतियोगितानवच्छेदकतयाव्यधिकरण
धर्मावच्छिन्नाभावस्यैवलक्षणघटकत्वादितिः॥ किंतुतदन्यदोषाणामेवात्रानवकाशइति॥ अत्रकेचित्पूर्वपक्षयंति॥अ
स्मिन्लक्षणेपिसाध्याभावेयावत्त्वस्यपूर्वमुक्तत्वात्सत्तावान्जातेरित्यादौयावदंतर्गतसत्तासामान्याभाववन्निरूपितसमवायेनवृत्त्यप्र
सिद्ध्याव्याप्तेःकूटघटितलक्षणइवात्रापिसत्वेनतदन्यदोषाणामत्रानवकाशइत्यसंगतं॥ अत्रेदंसमाधानंबोध्य ॥ तन्नत्साध्याभा

ववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशकल्पे साध्याभावेयावत्वविशेषणावश्यकत्वेपि यद्विचाभावधर्मोविशेषणतयान 
निवेश्यतइति प्रतिपादितपूर्वकल्पे तत्तत्साध्याभाववद्वृत्तित्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावनिवेशाप
क्षीयेयेनसंबंधेनयद्वृत्तंतइति निष्कृष्टार्थे साध्याभावेयावत्वानिवेशोपिक्षतिविरहात्ताहशपक्षाभिप्रायेण तदन्यदोषाणामत्रानवकाशइ
त्युक्तिः संगमनीयेति॥ ॥ इतिकूटाघटितलक्षणं॥ ॥ शेषदलइति॥ साध्याभावसमुदायवद्वृत्तित्वत्वव्यापकत्वदल
इत्यर्थः॥ तथाचेति॥ पूर्वदलानुपादानेचेत्यर्थः॥ अतिव्याप्तिरित्याशयेनेति॥ ननु पूर्वदलानुपादानेपिनातिव्याप्तिसंभवः
धूमभेदजगत्संयुक्तत्वोभयाभावस्यशेषदलाक्रांतस्यधूमादौवृत्तिमद्वृत्तेर्वन्ह्यावभावात्॥ नचघटवृत्तित्वघटान्यवृत्तित्वोभयाभावमादा
यवाच्यंज्ञेयत्वादित्यादावव्याप्तिवारणायप्रतियोगितायांव्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणस्यावश्यकतयानतस्यलक्षणघटक
त्वमितिवाच्यं॥ एवमपिवन्हिवृत्तितात्वेनजगद्वृत्तित्वाभावस्याताहशस्यहेतावसत्वादतिव्याप्तेरनवकाशात्॥ नचतुल्ययुक्त्याहेतु
निष्ठवृत्तित्वत्वेनजगद्वृत्तित्वाभावमादायसद्धेतावपिलक्षणायोगवारणायप्रतियोगितायांस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविशेषण 

स्यविशेषरूपेणसामान्याभावीयप्रतियोगित्वस्यविशेषमात्रनिष्ठत्वाभ्युपगमस्यवाऽवश्यकत्वेनतादृशाभावनिरासइतिवाच्यं॥ एव
मपिवन्हिजगद्वृत्तित्वान्यतरत्वेनवन्हिजगत्संयुक्तत्वोभयाभावमादायातिव्याप्तेर्निरासइतिचेन्न॥ दर्शितान्यतरत्वेनोभयाभावस्यवन्हित्वे
नतार्णातार्णदहनोभयाभाववदनंगीकारात्॥ अन्यथातुल्ययुक्त्याहेतुवृत्तित्वजगद्वृत्तित्वान्यतरत्वेनतादृशोभयाभावमादायसद्धेतौ
लक्षणायोगस्यदुर्वारत्वात्॥ यद्वातादृशाभावस्वीकारेपितमादायाव्याप्तिवारणायपूर्वदलंदेयं॥ नन्वतथासतिपूर्वदलमेवनोपादे
यमितिग्रंथासंगतिरितिवाच्यं॥ अव्याप्तिसंपादकदर्शिताभावव्यावर्तनायस्वव्यापकवृत्तित्वत्वकत्वस्यपूर्वदलघटकस्यैवग्राह्यत्वात्॥
नोपादेयमित्यस्यविशिष्टदलानुपादानएवतात्पर्यकल्पनात्॥ तादृशविशिष्टदलस्यातिव्याप्तिवारणप्रयोजनकत्वसंभवेपितद्वार
णायशेषदलेसमुदायनिवेशस्यैवलघुत्वमितितदनुपादानतोक्तिरिति विभावनीयं॥ अत्रशेषदलेसमुदायपदोपादानेपूर्वद
लोपादानमावश्यकमित्यसंगतंसमुदायरहितोत्तरदलसहितपूर्वदलोपादानेवन्हिमान्धूमादित्यादौप्रसक्ताव्याप्तिवारणस्यशेष
दलेसमुदायप्रवेशप्रयोजनस्यसत्वात्तद्वर्णनमेवसम्यगितिकेचिदित्यनेनास्वरसः सूचितः॥ अविरोधादिति॥ प्रतियोगितासंस

र्गकाभावज्ञानएवप्रतियोगितावच्छेदकांशेउपलक्षणतयाभानस्यानुभवविरुद्धत्वादितिभावः ॥ प्रतियोगितासंसर्गकव्याप्तिज्ञानस्यैव लाघवेनानुमितिहेतुत्वमित्यभिप्रायेणाह ॥ वस्तुतस्त्विति ॥ भेदकूटमेवनिवेश्यमिति ॥ स्वव्यापकसाध्याभावसमुदायाधिकरण वृत्तित्वत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तित्वपरिचितधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्वसंबंधेन स्वविशिष्टप्रतियोगितैवनिवेश्यातेननतादृशकूटस्यदुर्ज्ञेयत्वेपिनव्याप्तिज्ञानानुपपत्तिः संबंधज्ञानस्यविशिष्टबुद्धावहेतुत्वस्यान्यत्रो क्तत्वात्कूटस्यसंबंधत्वेतज्ज्ञानानपेक्षणात् ॥ वृत्तिपदस्यसंबंधित्वार्थकत्वमावश्यकमिति ॥ नन्वेवंसतिसमवायेनवन्हेःसा ध्यत्वेसंयोगेनधूमस्यहेतुत्वेतिव्याप्तिः धूमाद्यभावाधिकरणगगनसंबंधित्वस्यव्यधिकरणधर्मावच्छिन्नाभावस्यैववृत्तिमद्वृत्तित्वादि तिचेन्न ॥ महाकालान्योघटादित्याद्यावित्यादिपदसंग्राह्यत्वात्तादृशातिव्याप्तेः ॥ नचैवंप्रसिद्धसाध्यकस्थलत्यागानौचित्यंशंक्यं ॥ वृत्तिपदस्ययथाश्रुतार्थपरत्वाभिप्रायेणतत्यागात् ॥ वस्तुतस्तुसाध्यवदनुयोगिकत्वहेतुप्रतियोगिकत्वोभयाभाववृत्तिवृत्तित्वैत दुभयाभावव्याप्यंयत्साध्याभाववन्निरूपितहेतुतावच्छेदकसंबंधेनसंबंधित्वंतदभावएवनिवेश्यः निरुक्तस्थलेगगनान्यसाध्याभा

वत्त्वसंबंधित्वमेवतथेतितादृशाभावस्यवृत्तिमद्वृत्तेर्हेतावसत्वान्नातिव्याप्तिरित्येवध्येयं ॥ एतेनवृत्तिपदस्यसंबंधार्थतानालोचनंकथंवक्तुंश क्यंतादात्म्यसंबंधेनहेतावव्याप्तेरग्रिमदूषणानंतर्गतत्वात्तदालोचनेकथंसाध्यतावच्छेदकसंबंधनिवेशेपितद्दोषानालोचनमितिशंकान वकाशः ॥ प्रथमदोषस्यमतद्वयसाधारण्याभावेनतदनुद्भावनात्साध्यतावच्छेदकसंबंधविवक्षायांचोक्तविवक्षयातिव्याप्तेरपिवारणात् ॥ तेनाप्यतिव्याप्तिर्वारयितुंशक्यतइति ॥ अत्रेदंविचार्यंसाध्यसामानाधिकरण्यविशेषणेनतद्वन्हिमान्तद्द्व्यवयववत्वादित्या दावतिव्याप्तिवारणसंभवेपिसामान्यतःसंयोगेनवन्हिमान्वह्न्यवयववत्वादित्यत्रातिव्याप्तिर्दुर्वारैवस्वावयवेस्वसंयोगासंभवेपिस्वा तिरिक्तवन्हिसंयोगोत्पत्तौबाधकाभावादन्यथैतद्धूमावयवेधूमांतरसंयोगसत्वस्यसार्वभौमनिरुक्तौस्वयमुक्तस्यानुपपत्तिरिति ॥ ना नाविपक्षकेति ॥ वन्हिमत्वप्रकारकप्रमाविषयोधूमादित्यादावित्यादिः ॥ तेनसंयोगेनवन्हिसाध्यकेसंयोगसंबंधावच्छिन्नप्रति योगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटाधिकरणस्यगुणादेःप्रसिद्धत्वेपिनक्षतिः ॥ समव्यापकतावच्छेदकेति ॥ साध्यताव च्छेदकव्यापकत्वेसतितद्व्याप्यतावच्छेदकधर्मावच्छिन्नेत्यर्थः ॥ तद्व्याप्यतावच्छेदकत्वंचस्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदक

कत्वं ॥ अव्याप्त्यनवकाशादिति ॥ ननुसाधनसमानाधिकरणत्वस्यसाध्याभावविशेषणत्वपक्षेवह्न्यभावघटितकूटस्यलक्षणाघटकत्वात्तार्णातार्णदहनोभयाभावघटितकूटमादायाव्याप्तिरस्त्येवेतिचेन्न ॥ साधनसामानाधिकरण्यविशेषणपक्षेसाध्याभावेसाध्यसमानाधिकरणसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वविशेषणस्यवक्ष्यमाणत्वाद्दर्शितोभयाभावस्यतादृशविशेषणानाक्रांततयातद्घटितकूटस्यलक्षणघटकत्वविरहात् ॥ वाच्यत्वभिन्नेति ॥ साध्यतावच्छेदकसंबंधेनवृत्तिमतीत्यादि ॥ तेनवाच्यत्वभिन्नत्वेनवाच्यत्वगगनान्यतराभावस्यवाच्यत्वभिन्नत्वेनवाच्यत्वाभावसमनियतत्वेनतद्भिन्नतयातदीयप्रतियोगितायांवाच्यत्वान्यगगनवृत्तित्वसंभवेपिनक्षतिः ॥ साध्यतावच्छेदकसंबंधावच्छिन्नाधेयताविशिष्टप्रतियोगितात्वेनसमनैयत्यविवक्षणाच्चनसमनैयत्यभंगइत्यवधेयं ॥ यद्यप्येवंरीत्यालक्षणसंगमनेपिधूमत्वेनप्रमेयाभावीयप्रतियोगितायाःप्रमेयसामान्यवृत्तितयाधूमाभावोनलक्षणघटकइतिधूमभिन्नत्वेनधूमाभावमादायातिव्याप्तिस्तथापिवह्नित्वेनप्रमेयसामान्याभावपरित्यागावसरेतादृशप्रतियोगितायावह्निमात्रनिष्ठत्वव्यवस्थापनान्नदोषः ॥ समवायितयावाच्यत्वाभावस्यलक्षणाघटकत्वेः अथेत्यादिग्रंथस्यैतल्लक्ष

णाभिप्रायकत्वमनुपपन्नमित्याशयेन तस्य लक्षणघटकत्वार्थमाह ॥ वस्तुतस्त्विति ॥ यत्तु वाच्यत्वभिन्नत्वेन वाच्यत्वाभावस्य लक्षणाघट
कत्वेपि कूटाप्रसिद्ध्याऽव्याप्तिशंकया तदवतरणं तन्न सम्यक् ॥ समनियताभावैक्यमते सिद्धांतेपि कूटाप्रसिद्धेरव्यासज्यवृत्त्यनेकवृत्ति
धर्मभिन्नधर्मावच्छिन्नाधिकरणस्यैव समुदायाधिकरणमित्यनेन विवक्षणीयतयाऽदोषात् ॥ ज्ञानानपेक्षापत्तेरिति ॥ यदि च ज्ञाना
पेक्षा नास्त्येवेत्युच्यते तदा चक्रवर्तिलक्षणोक्तरीत्या तत्सिद्धिर्बोध्या ॥ अथैवमिति ॥ मिश्रलक्षणे पर्याप्तिनिवेश आवश्यकोऽन्यथा
साध्यव्यापकतावच्छेदकवन्हित्वावच्छिन्नप्रतियोगिताकमहानसीयवन्ह्यभाववद्वृत्तित्वाभावस्य हेतावसत्वादव्याप्तेः ॥ यद्यपि वन्हित्वे
न घटाभावस्य तल्लक्षणाघटकत्वेपि वन्हिसामान्याभावमादाय लक्षणसमन्वयः संभवति तथापि तल्लक्षणे हेतुतावच्छेदकसंबंधेन कस्यचि
दधिकरणे वर्तमानत्वविशेषणावश्यकतया तदाक्रांतयावदभावाप्रसिद्धिर्द्रव्यसामान्याभावादेरत्वथात्वादिति वन्हित्वेन घटाद्यभावस्य
लक्षणघटकत्वमावश्यकं तन्न संभवतीति शंकातात्पर्यं ॥ व्यापकतानवच्छेदकावृत्तीति ॥ इदमत्र चिंत्यं साध्यतावच्छेदकसंबंधेने
व व्यापकतानवच्छेदकत्वस्य विवक्षणीयतया संयोगेन द्रव्यप्रमेयादिसाध्यके तादृशाव्याप्तिरपरिहार्यैवास्मिन्कल्प इति ॥ एवं चेति ॥

घटत्वसमवायित्वादिनावाच्यत्वाभावस्यापिलक्षणघटकत्वेचेत्यर्थः ॥ पूर्वकल्पेसमवायितयावाच्यत्वाभावस्यलक्षणाघटकत्वादुपष्टंभ
संगतिः ॥ द्रव्यत्वप्रकारकप्रमाविषयत्वादिति ॥ द्रव्यत्वस्यसमवायेनहेतुत्वेजातित्वावच्छिन्नाभावघटितकूटवतिसमवायेनद्र
त्यप्रसिद्ध्यानातिव्याप्तिरतस्तावत्पर्यंतानुधावनं ॥ स्वप्रतियोगिसामानाधिकरण्याभावविशिष्टाभावघटितायाइति ॥
स्वाधिकरणावच्छेदेनस्वप्रतियोगिसामानाधिकरण्याभाववदभावघटितायाइत्यर्थस्तेनकेवलोभयत्वाभावादेस्तादृशविशिष्टाभावा
नतिरेकेपिनक्षतिःस्वंप्रतियोगिता ॥ जलत्वादेस्तत्सामानाधिकरण्याभावविशिष्टतदभाववत्वेन ॥ तादृशोभयत्वाभावे
जलत्वावच्छेदेनप्रतियोगिसामानाधिकरण्याभाववत्वेन ॥ निवेशासंभवादिति ॥ ननुप्रतियोग्यसामानाधिकरण्यघटकप्रति
योग्यधिकरणत्वंसाध्यतावच्छेदकताघटकसंबंधेनैववक्तव्यंतथाचकालिकसंबंधेनसर्वंयत्तस्तादात्म्यसंबंधेनसाध्यतायांसर्ववृ
त्तीयप्रतियोगित्वाधिकरणमहाकालावच्छेदेनप्रतियोगिसामानाधिकरण्याभावविशिष्टाभावाप्रसिद्धिरितिचेन्न ॥ स्वाधिकरणा
वच्छेदेनप्रतियोगितावच्छेदकसंबंधेनप्रतियोगिसामानाधिकरण्याभाववदभावीयप्रतियोगितासामान्येयन्निष्ठत्वसाध्यतावच्छेदक

नाघटकसंबंधावच्छिन्नत्वोभयाभावस्तत्वस्याविवक्षितत्वात्॥ सामानाधिकरण्यस्यव्याप्यवृत्तित्वेन्वाह॥ अथवायन्निरूपितेति॥ सा
मान्यपदानुपादानेसंयोगेनवन्हिमतस्तादात्म्येनसाध्यतायांसाध्यतावच्छेदकताघटकपर्वतानुयोगिकवन्हिसंयोगेप्रतियोगित्वाधिकरण
यत्किंचिन्महानसानुयोगिकत्वाभावसत्वेनवन्हिमद्भेदीयप्रतियोगिताव्यापकत्वस्यवन्हिरूपसाध्यतावच्छेदकेऽनुपपत्तिरतस्तदुपादानं
पृथिवीत्वघटत्वपर्याप्तौजातिसामान्याभावीयप्रतियोगिताधिकरणानुयोगिकत्वसामान्याभावासत्वेनतादृशोभयत्वस्यापितादृश
प्रतियोगिताव्यापकत्वापत्तिरतोयत्किंचिदिति॥ समवायैक्यमतेतुयन्निरूपितसाध्यतावच्छेदकताघटकसंबंधानुयोगितासामान्ये
प्रतियोगित्वाधिकरणयत्किंचिन्निष्ठत्वाभावस्तदन्यत्वमेवविवक्षणीयं॥ नन्वत्रापिकालिकसंबंधेनसर्वत्रतत्तादात्म्यसंबंधेनसाध्य
तायांतादृशसाध्यवद्भेदीयप्रतियोगिताव्यापकत्वंसाध्यतावच्छेदकेदुरुपपादंवृत्तिमन्मात्रस्ययत्पदेनोपादानेतन्निरूपितसाध्यता
वच्छेदकताघटककालिकसंबंधेतादृशप्रतियोगित्वाधिकरणानुयोगिकत्वस्यैवसत्वात्तदभावोनसंभवत्यवृत्तेरुपादानेतन्निरूपि
ततादृशसंबंधस्यैवाप्रसिद्धेः॥ मैवंगगनादीनामवृत्तित्वमतेतादृशसंबंधसामान्येयत्प्रतियोगिकत्वप्रतियोगित्वाधिकरणयत्किंचि

व्यत्त्यनुयोगिकत्वोभयाभावस्तदन्यत्वस्यैवप्रतियोगिताव्यापकत्वरूपत्वात्तत्रगगनादेरेवयत्पदेनोपादानसंभवात्॥ नचयत्पदेनगग
नस्योपादानसंभवेपितद्भिन्नत्वस्यसर्वत्वावच्छिन्नेऽसत्वात्सर्वत्वावच्छिन्नस्यव्यापकत्वानुपपत्तिरितिवाच्यं॥ यत्प्रतियोगिकत्वस्थाने
यद्धर्मावच्छिन्नप्रतियोगिकत्वंनिवेश्यतदवच्छिन्नापर्याप्तिकविषयतापर्याप्त्याश्रयत्वस्यविवक्षितत्वात्॥ गगनादीनांवृत्तित्वमतेतु
स्वाधिकरणयत्किंचिन्निष्ठाभावप्रतियोग्यनुयोगितासामान्येयत्प्रतियोगिकसाध्यतावच्छेदकताघटकसंबंधनिरूपितत्वाभावस्तत्व
मेवप्रतियोगिताव्यापकत्वंस्वंप्रतियोगिता॥ ननुमहानसीयवन्हिसाध्यकेव्यभिचारिणिवन्हिसामान्याभावीयप्रतियोगितायाअपि
साध्यतावच्छेदकताश्रयीभूतवन्हित्वव्याप्यत्वाव्यापकत्वाच्चतन्निरूपकाभावमादायातिव्याप्तिः॥ नन्वसाध्यतावच्छेदकतापर्याप्त्यधि
करणव्याप्यत्वंविवक्षणीयमितिवाच्यं॥उभयत्वावच्छिन्नसाध्यकेउभयाभावीयप्रतियोगितायास्तद्व्याप्यत्वानुपपत्तिस्तत्रोभयत्वध
र्मितावच्छेदकस्यापिसाध्यतावच्छेदकतापर्याप्त्यधिकरणत्वान्नैवं॥ तत्रद्वित्वस्यैवसाध्यतावच्छेदकत्वात्तद्धर्मितावच्छेदकस्यापितत्वे
चसाध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रमीयप्रकारताव्याप्यत्वस्यैवविवक्षणान्नानुपपत्तिः॥जन्यरूपत्वा २३०

णाभिप्रायकत्वमनुपपन्नमित्याशयेनतस्यलक्षणघटकत्वार्थमाह ॥ वस्तुतस्त्विति ॥ यत्तुवाच्यत्वभिन्नत्वेनवाच्यत्वाभावस्यलक्षणाघट
कत्वेपिकूटाप्रसिद्ध्याऽव्याप्तिशंकयातदवतरणंतन्नसम्यक् ॥ समनियताभावैक्यमतेसिद्धांतेपिकूटाप्रसिद्धेरव्यासज्यवृत्त्यनेकवृत्ति
धर्मभिन्नधर्मावच्छिन्नाधिकरणस्यैवसमुदायाधिकरणमित्यनेनविवक्षणीयतयाऽदोषात् ॥ ज्ञानानपेक्षापत्तेरिति ॥ यदिचज्ञाना
पेक्षानास्त्येवेत्युच्यतेतदाचक्रवर्तिलक्षणोक्तरीत्यातत्सिद्धिर्बोध्या ॥ अथैवमिति ॥ मिश्रलक्षणेपर्याप्तिनिवेशआवश्यकोऽन्यथा
साध्यव्यापकतावच्छेदकवह्नित्वावच्छिन्नप्रतियोगिताकमहानसीयवह्न्यभाववद्वृत्तित्वाभावस्यहेतावसत्वादव्याप्तेः ॥ यद्यपिवह्नित्वे
नघटाभावस्यतल्लक्षणाघटकत्वेपिवह्निसामान्याभावमादायलक्षणसमन्वयःसंभवतितथापितल्लक्षणेहेतुतावच्छेदकसंबंधेनकस्यचि
दधिकरणेवर्तमानत्वविशेषणावश्यकतयातदाक्रांतयावदभावाप्रसिद्धिर्द्रव्यसामान्याभावादेरतथात्वादितिवह्नित्वेनघटाद्यभावस्य
लक्षणघटकत्वमावश्यकंतन्नसंभवतीतिशंकातात्पर्यं ॥ व्यापकतानवच्छेदकावृत्तीति ॥ इदमत्रचिंत्यंसाध्यतावच्छेदकसंबंधेनै
वव्यापकतानवच्छेदकत्वस्यविवक्षणीयतयासंयोगेनद्रव्यप्रमेयादिसाध्यकेतादृशाव्याप्तिरपरिहार्यैवास्मिन्कल्पइति ॥ एवंचेति ॥

**वच्छिन्नाभावेति** ॥ यद्यपि जन्यजलेपटादौ च रूपध्वंसो नास्ती तिप्रतीतेर्जन्यरूपाभावेपि रूपध्वंसत्वावच्छिन्नप्रतियोगिताकत्वमसं
भवदुक्तिकं॥ तथापि जन्यत्वस्य पाकजन्येत्यर्थ इति **ध्येयं** ॥ **तत्कूटाधिकरणत्वेनेति** ॥ स्वनिरूपकजन्यरूपाभावरूपसंबंधे
नरूपध्वंसत्वावच्छिन्नप्रतियोगितायाजलपरमाणौसत्वादितिभावः॥ **स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगितात्वेन**
**समनैय्यत्यविवक्षणादिति** ॥ यद्यपि वह्न्यादिसाध्यकेसाध्याभावीयप्रतियोगितायाः किंचिद्विशिष्टस्वाभावेपिसत्वेनतदभावी
यप्रतियोगितात्वेनतस्याः साध्यतावच्छेदकव्याप्यत्वासंभवा द्व्याप्यदिशिस्वावच्छेदकावच्छिन्नत्वविशेषणमर्थवद्व्यापकदिशिनव्यर्थ
मेवत। तथापिस्वावच्छेदकावच्छिन्नाचतदभावीयाचस्वावच्छेदकावच्छिन्नतदभावीयेतेचतेप्रतियोगितेचस्वावच्छेदकावच्छिन्नतद
भावीयप्रतियोगितेतयोर्भावस्तादृशप्रतियोगितात्वंतेनतादृशप्रतियोगितात्वेनेतिव्युत्पत्यास्वावच्छेदकावच्छिन्नत्वतदभावीयप्रति
योगितात्वयोर्लाभः वच्छिन्नत्वं तृतीयार्थः समनैय्यत्यशब्दार्थः व्याप्यत्वं व्यापकत्वंच ॥ स्वावच्छेदकावच्छिन्नत्वान्वितावच्छिन्नत्वस्य
व्याप्यत्वेऽन्वयस्तदभावीयप्रतियोगितात्वान्वितावच्छिन्नत्वस्यव्यापकत्वेऽन्वयः व्याप्यत्वव्यापकत्वयोः ससंबंधिकत्वेनविशिष्टघटकै

कदेशान्वयेपिनासामर्थ्यंतथाचस्वावच्छेदकावच्छिन्नत्वेनव्याप्यतातद्भावीयप्रतियोगितात्वेनव्यापकतानिवेशनीयेतिलभ्यतेएवंसति व्यापकतायाःसामान्यरूपावच्छिन्नायाव्याप्यतायाश्चविशेषरूपावच्छिन्नायाएवनिवेशादित्यवतरणग्रंथोक्तिरपिसंगच्छते॥ नन्वव्याप्यदिशितद्भावीयप्रतियोगितात्वस्योक्तशब्दादलाभेऽतत्तद्भावीयत्वंप्रतियोगिताविशेषणमितितद्व्यावृत्तिकथनपरग्रंथविरोधइतिशंक्यं॥ तादृशग्रंथस्यदेयमितिपदपूरणेनशब्दलभ्यविशेषणातिरिक्तविशेषणदानप्रयोजनपरत्वात्॥ **तत्तदधिकरणावृत्तिशून्यत्वमिति॥** तत्तदधिकरणवृत्तित्वाभावकूटसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटवत्त्वमित्यर्थः॥ उभयावृत्तित्वपर्यंतंपरिचायकं॥ **एतेन** तत्तद्वृत्तिनिष्ठप्रतियोगिताकाभाववत्त्वविवक्षणेव्यभिचारिसामान्येऽतिव्याप्तिस्तादृशगगनाभाववत्त्वस्यजगत्येवसत्वात्॥ तत्तद्वृत्तित्वावच्छिन्नप्रतियोगिताकाभावश्चगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वमतेविवक्षितुमशक्यःकेवलान्वयिन्यवृत्तित्वमात्रस्यतत्प्रतियोगितावच्छेदकत्वसंभवेनतादृशाभावाप्रसिद्धेरितिशंकानिरस्ता॥ **जातिमतामेवेति॥** **अथ**जातिप्रतियोगिकाभाववान्मेयत्वादित्यादौसत्ताविशिष्टजातिप्रतियोगिताकाभावाभावीयप्रतियोगितायाअपिसाध्यतावच्छेदकसमनियतत्वेनतादृश

प्रतियोगिताकाभावघटितकूटाधिकरणंसामान्यादिचतुष्टयमितिजगतएवतादृशान्यतमाधिकरणत्वमितिनाव्याप्तिः॥ नचातिप्र
संगानापादकलघुधर्मस्यावच्छेदकत्वेतादृशाभावीयप्रतियोगितायांसत्तावैशिष्ट्यस्यैवावच्छेदकत्वसंभवात्तादृशविशिष्टाभावाप्रसिद्धेः
सत्तावैशिष्ट्यावच्छिन्नाभावीयप्रतियोगितायाश्चसाध्यतावच्छेदकव्याप्यत्वविरहाद्घटत्वपटत्वादिरूपाभावानामेवलक्षणघटकतया
जातिमतामेवतादृशाधिकरणान्यतमत्वमितिवाच्यं॥ तथासतिविशिष्टसत्तावान्जातेरित्यादौसाध्याभावस्योक्तयुक्त्यालक्षणाघट
कत्वेनवैशिष्ट्यावच्छिन्नाभावीयप्रतियोगितायाःसाध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वविरहेणघटत्वादिमासत्ताभावमादायाति
व्याप्तेः॥ पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद्द्रव्यत्वादित्यादौद्रव्यत्वत्वावच्छिन्नाभावमादायातिव्याप्तिदानासंगतेश्च तत्रापिद्रव्येतरासमवेतत्व
विशिष्टसकलद्रव्यसमवेतत्वरूपद्रव्यत्वत्वापेक्षयाद्रव्येतरासमवेतत्वस्यैवलघोरतिप्रसंगानापादकस्यावच्छेदकत्वसंभवेनतादृशाभावा
प्रसिद्धेस्तस्माल्लघुसमनियतगुरोरेवानवच्छेदकत्वमितिसिद्धांतानुसरणंप्रकृतेयुक्तंतथासतिसत्ताविशिष्टजातिप्रतियोगिकाभावाभा
वस्यापिलक्षणघटकत्वंदुर्वारमितिचेन्न॥ तादृशाभावस्यविवक्षणीयसाध्यसमानाधिकरणसमानाधिकरणधर्मावच्छिन्नप्रतियो

गिताकाभावान्यत्वविरहेणलक्षणाघटकत्वात्॥ नन्वेवतथासतिघटत्वपटत्वादिरूपाणामप्यभावानांसाध्यसमानाधिकरणत्वात्समाना
धिकरणधर्मावच्छिन्नप्रतियोगिताकत्वाच्चलक्षणाघटकत्वेनाव्याप्त्यभावेन साध्यतावच्छेदकव्याप्यत्वविशेषणवैयर्थ्यमिति वाच्यं॥ समनि
यताभावैक्यमतेसाध्यसमानाधिकरणसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाकाशाभावभिन्नत्वस्यक्वापिव्यधिकरणधर्मावच्छिन्ना
भावेऽसत्वाद्घान्यत्वसाध्यकेतादृशाभावाप्रसिद्ध्याऽव्याप्तिवारणायसमानाधिकरणधर्मेसाध्यतावच्छेदकव्यापकत्वस्य विवक्षणीयत्वाद्घ
टत्वाभावत्वादौतद्विरहाद्घटत्वाद्यात्मकाभावानांलक्षणघटक त्वाक्षतेः॥ नन्वेवमपिसत्ताभावसाधारणजातिप्रतियोगिताकाभावत्व
रूपसाध्यतावच्छेदकव्यापकत्वस्यसत्ताविशिष्टजातिप्रतियोगिताकाभावत्वेऽसत्वात्तदवच्छिन्नाभावस्यलक्षणघटकत्वंदुर्वारमिति वाच्यं
॥ सत्तान्यजातिप्रतियोगिताकाभावस्यैवसाध्यत्वेनानुपपत्त्यभावात्॥ वस्तुतस्तद्विशिष्टस्यातिरिक्तत्वमिति सार्वभौममतानुसारेणैवजा
तिप्रतियोगिकाभाववानित्यत्राव्याप्तिकथनं॥ एतेनसत्तान्यजातिप्रतियोगिकाभावस्यसाध्यत्वेपिसामान्यघटान्यतरवृत्तित्वविशिष्टजाति
प्रतियोगिकाभावत्वादेर्घटत्वाभावादिसाधारणनिरुक्तसाध्यतावच्छेदकव्यापकत्वाभावात्तदवच्छिन्नाभावादेरपिलक्षणघटकतयानद्घटित

कूटाधिकरणं सामान्यविशेषादिकमपीति जगत एव तादृशान्यतमाधिकरणत्वान्नाव्याप्तिरिति शंकानवकाश इति दिक्॥ **किंचिद्विशि**
**ष्टसाध्यस्येति**॥ **यद्यपि** सार्वभौममते विशिष्टस्यातिरिक्तत्वान्न दोषस्तथापि तस्यानतिरिक्तत्वाभिप्रायेणेदं॥ **दैशिकविशेषणता**
**वगाहिबोधजनकत्वस्यैव नञ्पदव्युत्पन्नत्वादिति**॥ ननूपस्थाप्याभावविशेष्यकदैशिकविशेषणतासंबंधावच्छिन्नाधे
यताप्रकारकशाब्दबोधं प्रति प्रतियोगिवाचकपदसमभिव्याहृतनञ्पदज्ञानत्वेन कारणतायाः सर्वसिद्धत्वादित्यर्थः॥ **सर्वानुभव**
**सिद्धस्योच्छेदापत्तेरिति**॥ **यद्यपि** दैशिकविशेषणतासंबंधावच्छिन्नप्रतियोगिताकाभावे दैशिकविशेषणतासंबंधावच्छिन्नप्र
तियोगिताकत्वसंशयदशायामयमभावो नास्तीति वाक्यादेतदभावाभावस्य दैशिकविशेषणतया निश्चयात्तेन संबंधेन तत्संशयो
च्छेदः सिद्धांतेपि तुल्यस्तथापि कालिकसंबंधावच्छिन्नप्रतियोगिताकात्मत्वाभावे समवायसंबंधावच्छिन्नप्रतियोगिताकत्वभ्रमवतो
ऽयमभावो नास्तीति वाक्यात्कालिकसंबंधानवगाहनस्य सर्वानुभवसिद्धतयोक्तनियमभंग इत्यत्रैव तात्पर्यं॥ **अत्र केचित्**॥ व
दंतीत्यनेनास्वरसः सच रूपाभावसाध्यके रूपाणामनंतत्वेपि दैशिकविशेषणतासंबंधावच्छिन्नरूपाभावाभावत्वावच्छिन्नाधिकरणत्व

स्यप्रसिद्धत्वादग्रिमग्रंथविरोधः पूर्वमतेयदिचेत्यादिरीतावनिर्भरात्साध्याभावत्वस्याधिकरणतानिरूपकतावच्छेदकतयानप्रवेशः
प्रयोजनाभावात् ॥ किंचप्रतिबंधकत्वमेवकालेएकत्रावर्तमानत्वं ॥ ईश्वरीयव्यधिकरणधर्मावच्छिन्नाभावज्ञानमादायैवतन्निर्वाह इत्या
हुः ॥ तदसत् ॥ अवच्छिन्नदैशिकविशेषणतासंबंधावच्छिन्नाधिकरणतासंबंधेनसाध्यतावच्छेदकसमनियत प्रतियोगितानिरू
पितानुयोगिताकूटस्यैवनिवेशेनानुयोगितायाश्चानुयोगिभेदेनभिन्नत्वात्कुत्राधिकरणत्वप्रसिद्ध्यभावेनाग्रिमग्रंथविरोधविरहात् ॥ अ
पिचप्रतिबंधकतायाः पूर्वोक्तरूपत्वेयादृशस्थलेव्यधिकरणधर्मविशिष्टसाध्यवत्ताज्ञानंनाभवत्तत्रदोषोनवारयितुंशक्यः ॥ अपिचवन्हि
साध्यकेकालिकसंबंधस्यापिलक्षणघटकत्वापत्तिः कालिकसंबंधावगाहियादृशवह्न्यभावज्ञानकालेवन्हिमत्ताज्ञानंनाजनिष्टतादृशाका
लिकसंबंधावगाहिवह्न्यभावज्ञानस्यप्रतिबंधकत्वापातइतिनकिंचिदेतत् ॥ व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वेति ॥ अथैव
मपिसत्ताद्रव्यत्वपृथिवीत्वैतत्त्रित्वावच्छिन्नसाध्यकेद्रव्यत्वादौव्यभिचारिणिसत्तापृथिवीत्वैतदन्यतरद्रव्यत्वोभयत्वावच्छिन्नाभावी
यप्रतियोगितायाअपिसाध्यतावच्छेदकसमनियतत्वेनव्यासज्यवृत्तित्वेनसाध्यतावच्छेदकसजातीयधर्मावच्छिन्नत्वेनचतादृशा

भावस्यापिलक्षणघटकतया तद्घटितकूटाधिकरणंगुणादिरेवेत्यतिव्याप्तिर्दुर्वारेतिचेदत्रकेचित् ॥ स्वधर्मितावच्छेदकत्वेनभासमानयावद्ध
र्मघटितत्वेसतिपर्याप्तिसंबंधेनवृत्तिमत्वरूपस्वनिष्ठव्यासज्यवृत्तित्वेनसाजात्यंविवक्षणीयं ॥ नचैवमपिनिरुक्तनित्यरूपसाध्यतावच्छेद
कधर्मितावच्छेदकत्वेनभासमानद्रव्यत्वसत्तात्वयोरपिनिरुक्तद्वित्वशरीरेऽन्यतरत्वघटकभेदप्रतियोगिनिविशेषणतात्तद्घटितत्वस्यनि
रुक्तद्वित्वेक्षततान्नोक्तातिव्याप्तिवारणसंभवइतिवाच्यं ॥ तद्घटितत्वस्यतदवच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वरूपस्यैवविव
वक्षिततत्वात्तस्यचतादृशद्वित्वेऽभावादित्याहुः ॥ परेतुस्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वेनैवसाजात्यंविवक्षणीयंतथाचनिरुक्त
नित्यपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्यनिरुक्तद्वित्वेऽसत्वान्नतदवच्छिन्नाभावमादायातिव्याप्तिः ॥ नचैवंसतिपर्याप्तिश्चायमे
कइमौद्वावित्यादावयमेकइतिलेखनस्वारस्येनाव्यासज्यवृत्तिधर्माणामपिपर्याप्तिस्वीकारेणवाच्यत्वत्वपर्याप्त्यवच्छेदकवाच्यत्वनिष्ठ
तद्व्यक्तित्वावच्छिन्नपर्याप्तिकत्वस्यवाच्यत्वत्वेसत्वेपिसमवायित्वेऽभावात्तादृशसजातीयधर्मावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या
वाच्यंज्ञेयत्वादित्यादावव्याप्तिरितिवाच्यं ॥ व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायांसमानाधिकरणधर्मस्याप्यवच्छेदकत्वव्यव

स्थापनेनतादृशानिरुक्तरूपेणवाच्यत्वत्वसजातीयवाच्यत्वत्वावच्छिन्नत्वस्यतादृशाभावीयप्रतियोगितायामक्षतत्वात् ॥ सजातीयधर्माव
च्छिन्नेत्यत्र तन्मात्रावच्छिन्नत्वानिवेशादितिवदंति ॥ साध्यतावच्छेदकस्यप्रतियोगिताव्यापकत्वस्थाने प्रतियोगित्वावच्छि
न्नस्यव्यापकतावच्छेदकत्वनिवेशोति ॥ अथैवंविशिष्टसाध्यकेविशिष्टाभावस्यलक्षणघटकत्वानुपपत्तिस्तादृशाभावीयप्रति
योगित्वावच्छिन्नशुद्धव्यापकतावच्छेदकत्वस्य साध्यतावच्छेदकऽभावात् ॥ नचविशिष्टाभावीयप्रतियोगितायास्तादृशाभा
वस्योपलक्षिनाभाववैलक्षण्यनिर्वाहायविशेषणांतर्भावेणपर्याप्तत्वस्यवक्तव्यत्वात्तदवच्छिन्नव्यापकतावच्छेदकत्वंसाध्यतावच्छेद
केऽक्षतमिति वाच्यं ॥ तथापिसाध्यतावच्छेदकसंबंधेनैवस्वावच्छिन्नाधिकरणत्वस्यवक्तव्यत्वात्तादृशसमवायेनगुणाद्यन्यत्वद्र
व्यत्वोभयत्वावच्छिन्नाधिकरणत्वस्यैवतादृशप्रतियोगित्वावच्छिन्नस्यसमवायेनाधिकरणत्वस्याप्रसिद्धतया तादृशप्रतियोगितायाः
स्वपदेनोपादानासंभवादितिचेदत्रकेचित् ॥ विशिष्टाभावस्योपलक्षिताभावाद्वैलक्षण्यायविशिष्टाभावीयप्रतियोगितायांविशिष्ट
प्रतियोगिकसंबंधस्यैवावच्छेदकत्वं ॥ एवंचविशिष्टसत्तावानितिज्ञानस्यप्रतियोग्यभावान्वयोतुल्ययोगक्षेमावितिन्यायेनविशिष्टप्र

तियोगिकसंबंधावगाहित्वेसिद्धेऽनुमितिविधेयतावच्छेदकत्वमपितस्यैवेतिसाध्यतावच्छेदकविशिष्टप्रतियोगिकसंबंधेनविशिष्टाभावीयप्रति
योगित्वावच्छिन्नव्यापकत्वस्यसाध्यतावच्छेदकेप्रतियोगितायाविशेष्यमात्रनिष्ठत्वेप्यक्षतत्वात्॥नचविशिष्टप्रतियोगिकसंबंधस्यविशिष्टा
भावप्रतियोगितावच्छेदकत्वंविचारासहमितिवाच्यं॥तादृशाभावीयप्रतियोगितायाविशेषणांतर्भावेनपर्याप्तत्वस्यापिप्रतियोगितावच्छे
दकसंबंधेनप्रतियोगितावच्छेदकविशिष्टप्रतियोगितापर्याप्त्यधिकरणतयासाकमभावस्यविरोधांगिकर्तृव्यधिकरणधर्मावच्छिन्नाभावव
दिमतेविचारासहत्वात्॥यादृशादंडद्वयंपरस्पराश्रयस्तादृशान्यतरविशिष्टान्यतराभावस्यतादृशान्यतरोपलक्षितान्यतराभाववैलक्ष
ण्यस्यविशिष्टाभावीयप्रतियोगितायाविशेषणांतर्भावेणपर्याप्तत्वस्वीकारेप्यनिर्वाहाच्च॥दर्शितस्थलेविशेषणविशेष्ययोरैक्यात्तस्मा
त्कचिद्विशिष्टाभावीयप्रतियोगितायाविशेषणविशेष्यपर्याप्तत्वंकचित्तस्यांविशिष्टप्रतियोगिकसंबंधस्यैवावच्छेदकत्वमित्येवंविशिष्टाभा
वभेदेनव्यवस्था॥प्रकृतेगुणान्यत्वविशिष्टप्रतियोगिकसंबंधस्यतादृशविशिष्टाभावप्रतियोगितावच्छेदकत्वेबाधकविरहात्तदभिप्रायको
ऽयंग्रंथः यद्वास्वावच्छिन्नव्यापकतावच्छेदकत्वस्थानेस्वावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वमेवनिवेश्यंतथाचनकोपिदोषइतिवदंति॥व

स्तु तस्तु घटत्वेपटत्वोभयस्यसमवायेनैकत्रासत्वेपिघटपटोभयवदितिप्रतीतिबलाद्घटत्वपटत्वद्वित्वेतन्निरूपितपर्याप्तविलक्षणाव
च्छेदकताकनिरूपकताकाधिकरणताभूतलादौस्वीक्रियतेतथासमवायेनविशिष्टाभावप्रतियोग्यधिकरणमितिप्रतीतिबलाद्व्यास
ज्यवृत्तितादृशप्रतियोगितावच्छिन्नसमवायसंबंधावच्छिन्नाधिकरणतापिविशिष्टाधिकरणेस्वीक्रियतइतिपरमतात्पर्यार्थः॥ नच
स्वसमानाधिकरणेति॥ ननु संयोगीसत्वादित्यादावतिव्याप्तिःसंयोगाभावस्यस्वसमानाधिकरणाभावप्रतियोगित्वेनव्यधिकर
णधर्मावच्छिन्नाभावस्यैवलक्षणघटकत्वादितिच्चेन्न॥ स्वाधिकरणेयत्किंचित्वस्यविवक्षितत्वात्॥लाघवादाहानवच्छिन्नवृत्ति
त्वंवेति॥ पृथिवीवृत्तिगुणशून्यमित्यत्रगुणपदव्यावृत्तिंदर्शयति॥ पृथिवीसमवेतत्वावच्छिन्नाभावइत्यादिना॥ अ
प्रसिद्धइति॥ वायुत्वहेतोर्व्यभिचारित्वनिर्वाहायपृथिवीसमवेतत्वोपलक्षिताभावस्यैवसाध्यतयासमवेतत्वमात्रस्यतादृशा
भावप्रतियोगितावच्छेदकत्वेपिक्षतिविरहादितिभावः॥ विशिष्टाभावस्यसाध्यत्वमित्यभिप्रायेणशंकते॥नचेति॥ उपलक्षिताभा
वस्यसाध्यत्वाभिप्रायेणसमाधत्ते॥ समवेतत्वेति॥ गुणपदोपादानमिति॥ अत्रयद्यपिविशिष्टाभावस्यसाध्यत्वेवायुत्व

स्य सद्धेतुत्वापत्त्योपलक्षिताभावस्यैवसाध्यत्वंवक्तव्यंतस्यचगुणसामान्याभावसमनियनतयागुणत्वस्यैवावच्छेदकत्वंसंभवतीतिपूर्वंनो
त्यमितिशंकासंभवति॥ तथापियादृशजलेपृथिवीवृत्तिगुणःकदापिनोत्पन्नस्तादृशजलमस्तीत्यभिप्रायकल्पनान्नदोषस्तथासतिगु
णसामान्याभावस्यतादृशाभावसमनैय्यत्यासंभवात्॥ अत्रपृथिवीपदंपृथिवीसामान्यपरमेवेति॥ अत्रेदंचिंत्यंपूर्वानुमा
नएतदतिव्याप्तिवारणानुरोधेनैतद्रूपात्यंताभाववान्मेयत्वादित्यादावतिव्याप्तिवारणानुरोधेनचात्यंताभावघटितस्यैवव्याप्यवृत्तित्वस्य
विवक्षावश्यकतांप्रदर्श्यघटतद्वायुद्वित्वपटतद्वायुद्वित्वात्मकाभावानांव्याप्यवृत्तित्वमुपपाद्यपृथिवीपदस्यैतत्पृथिवीपरत्वंयथोपपादि
तंतथाद्वितीयानुमानेपिसंभवतितथाहिसाध्याभावेव्याप्यवृत्तित्वंस्वसमानाधिकरणात्यंताभावप्रतियोगितानवच्छेदकसाध्याभावत्वव
त्वंनिरवच्छिन्नाधेयतावच्छेदकसाध्याभावत्ववत्वंवैतदतिव्याप्तिवारणानुरोधेनैवनिवेशनीयं॥ ननुस्वसमानाधिकरणात्यंताभावप्रति
योगितायांसामानाधिकरण्येनावच्छेदकंयदभावनिष्ठंतद्व्यक्तित्वंतत्वंनिरवच्छिन्नवृत्तित्वंतत्वावच्छेदकंयदभावनिष्ठंतद्व्यक्तित्वंतत्वंवा
दर्शितद्वित्वानांतत्तद्व्यक्तित्वेनाव्याप्यवृत्तित्वादेतदतिव्याप्तेःकालिकसंबंधावच्छिन्नप्रतियोगिताकव्यतिरेकित्वावच्छिन्नाभावेसाध्येमे

यत्वादावतिव्याप्तिश्चसाध्याभावानांव्यतिरेकिणांसर्वेषामेवतत्तद्व्यक्तित्वेनकालिकाव्याप्यवृत्तित्वान्निरुक्तव्याप्यवृत्तित्वविरहेणअधिकरणधर्मा
वच्छिन्नाभावस्यैवलक्षणघटकत्वात् ॥ अपिचसाध्याभावत्वघटितव्याप्यवृत्तित्वाप्रवेशेवृक्षत्वसंयोगोभयाभावसाध्यकेवृक्षत्वादावव्याप्तिर
पिवृक्षत्वस्यदर्शितोभयाभावाभावत्वेनाव्याप्यवृत्तित्वेपितद्व्यक्तित्वेनव्याप्यवृत्तित्वेनतद्घटितकूटाधिकरणेहेतोर्वृत्तेरेवंचघटत्ववायुत्वपट
त्ववायुत्वात्मकाभावानामप्यवश्यंविवक्षणीयसाध्याभावत्वघटितव्याप्यवृत्तित्वेनलक्षणघटकतयातद्घटितकूटाधिकरणवायौहेतोर्वृत्तेरति
व्याप्तिविरहाद्वितीयानुमानेपिपृथिवीपदस्यैतत्पृथिवीपरत्वंयुक्तमिति ॥ ननुसत्तान्यपृथिवीसमवेतशून्यत्वसाध्यकेवायुत्वादावतिव्या
प्तिविरहेपिविभुसमवेतपृथिवीसमवेतशून्यत्वसाध्यकेऽतिव्याप्तिरस्त्येवेत्याशंकांनिरस्यति ॥ विभ्विति ॥ मूर्त्तत्वस्यजातिरूपत्वमित्यभि
प्रायेणेदमन्यथानव्यमतेतादृशाभावस्योत्पत्त्यादिकालावच्छेदेनवायौसत्वाद्वायुत्वस्यव्यभिचारित्वानुपपत्तेः ॥ सकालेतिअत्रसाकल्य
विशेषणसत्वेप्यतिव्याप्तेर्वक्ष्यमाणत्वादुपादानंतत्सत्वेप्यतिव्याप्तिर्नहीयतइत्येवंप्रदर्शनार्थमितिध्येयं ॥ रूपसामान्याभाववान्वायु
त्वादित्यादौस्वपदेनतत्तद्घटादेरेवोपादेयतयातत्रयद्यदर्थाप्रसिद्धिस्तत्साध्यकेवीप्सानुपादानेतत्साध्यकेव्यभिचारिण्यतिव्याप्तिरतआ

ह ॥ अथवेति स्ववृत्तिसाध्याभाववत्वव्यापकाधेयतानिरूपकाधिकरणवृत्तिसाध्याभाववत्वव्यापकस्ववृत्तिताकमधिकरणं यावतामित्यादेरर्थ
इत्यथवेतिकल्पाभिप्रायः ॥ शेषमिति ॥ तादृशान्यदवृत्तित्वाभावमादायातिव्याप्तिवारणाय तादृशांयद्यत्त्वं तावदन्यतमवृत्तित्वत्वसमनि
यतप्रतियोगिताकत्वविवक्षणमित्यर्थः ॥ यद्यत्त्वमिति विशेषे दुर्ज्ञेयत्वं गौरवं चेत्यत आह ॥ अथवेति ॥ धर्मो विशेषणीय इति ॥ तथा
चाधेयतावच्छेदकसाध्याभावमात्रवृत्तिर्व्यासज्यवृत्तिर्यो धर्मस्तन्न्यूनवृत्तितद्व्याप्यं यत्तदन्यो यः साध्याभावमात्रवृत्तिव्यासज्यवृत्तिधर्मस्त
दवच्छिन्नाधिकरणतावद्वृत्तित्वाभाववत्त्वं व्याप्तिरिति निष्कर्षः ॥ न्यूनवृत्तित्वं सामानाधिकरण्य घटितं ॥ व्याप्यत्वं च सामानाधिकरण्यमात्र
मिति विवक्षितं ॥ प्रतियोगितावच्छेदककोटौ मात्रपदानुपादाने व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तिसमुदायत्वेन तादृशाभावो
दासीनसाधारणसमुदायत्वन्यूनवृत्तित्वव्याप्यत्वयोः सत्वेन तद्भिन्नसाध्याभावमात्रवृत्तिव्यासज्यवृत्तिधर्माप्रसिद्ध्यावाच्यत्वसाध्यकेऽ
व्याप्तिरतस्तन्निवेशः ॥ व्यासज्यवृत्तित्वानिवेशे रूपाभावसाध्यके एकरूपव्यधिकरणधर्मावच्छिन्नसाध्याभाववृत्तिसमुदायत्वस्य सक
लरूपव्यधिकरणधर्मावच्छिन्नसाध्याभावसाधारणो यः साध्याभाववत्वरूपो धर्मस्तन्न्यूनवृत्तितया तद्व्याप्यतया च तद्भिन्नतादृशधर्माप्र

सिद्धिरतस्तन्निवेशः ॥ आधेयतावच्छेदकत्वविशेषणप्रयोजनंग्रंथकृद्दर्शितंज्ञेयं ॥ घटत्वाद्युदासीनधर्माणांभेदनिवेशेगौरवमतोऽव्या 
प्यत्वनिवेशः स्वस्यापिस्वव्याप्यत्वात्तद्भिन्नतादृशधर्माप्रसिद्धिरतोन्यूनवृत्तित्वनिवेशः ॥ अनुयोगिकोटौमात्रपदानुपादानेवान्यत्वसाध्य
केव्यधिकरणधर्मावच्छिन्नसाध्याभाववघटाधिकरणत्वेतद्वित्वरूपतादृशधर्मावच्छिन्नाधिकरणेहेतोर्वृत्त्याऽव्याप्तिरतस्तन्निवेशः ॥ व्यभि
चारिणितादृशसाध्याभाववत्त्वरूपधर्ममादायतदवच्छिन्नाधिकरणत्वंजगतएवस्यादतोव्यासज्यवृत्तीति ॥ समनियताभावैक्यमतेनताद
शधर्मंन्यूनवृत्तितादृशधर्मव्याप्यधर्माप्रसिद्ध्यातद्भिन्नतादृशधर्माप्रसिद्धिस्तन्न्यूनवृत्तित्वतद्व्याप्यत्वोभयाभावंनिवेश्यवारणीया ॥ सत्तात्व
स्यसाध्यतावच्छेदकेऽप्यनिवेशेत्वाह ॥ द्रव्यत्वविशिष्टेति ॥ एतद्रूपान्यत्वविशिष्टेति ॥ स्वरूपसमवायोभयसंबंधघटितसा
मानाधिकरण्यरूपंवैशिष्ट्यंतस्यचैतद्रूपेपिसत्वात्तादृशवैशिष्ट्यावच्छिन्नप्रतियोगितायाः समवेतमात्रनिष्ठत्वंबोध्यं ॥ उक्तपूर्वपक्षेकेषां
चित्समाधानमाह ॥ एवमिति ॥ प्रमेयसाध्यकेति ॥ अथसाध्याभावेसाधनसामानाधिकरण्यघटितास्मिन्कल्पेसद्धेतुमात्रए
वव्यधिकरणधर्मावच्छिन्नाभावस्यैवलक्षणघटकतयातस्यचसाध्यसमानाधिकरणेत्यादिविशेषणाक्रांतगगनाभावभिन्नत्वासंभवेनासं 

भवस्यैव प्रसक्तेः प्रमेयसाध्यकेत्यनुपपन्नं ॥ नन्वसमानाधिकरणधर्मेसाध्यवृत्तित्वदानेवन्हिसाध्यकेगगनाभावमादायनाप्रसिद्धिः संभव
तीत्याभिप्रायेणेदमितिवाच्यं ॥ वन्हिसाध्यकेपिव्यधिकरणस्वरूपसंबंधावच्छिन्नाभावमादायाप्रसिद्धेर्दुर्वारत्वात् ॥ नन्वस्वरूपादिव्यधिकर
णसंबंधावच्छिन्नाभावानांनविवक्षणीयसमानाधिकरणसंबंधावच्छिन्नप्रतियोगिताकत्वमिति वाच्यं ॥ स्वरूपसंबंधेनवन्हित्वेनप्रमे
यसामान्याभावस्यताद्दशत्वयानमादायैवाप्रसिद्धेः संभवात् ॥ नन्वसमानाधिकरणसंबंधावच्छिन्नत्वमित्यस्यस्वावच्छेदकसंबंधावच्छिन्नाधे
यतावच्छेदकधर्मावच्छिन्नत्वमर्थोवन्हित्वस्यताद्दशाधेयतानवच्छेदकतयानताद्दशाभावमादायाप्रसिद्धिरिति वाच्यं ॥ तथासतिगगत्वे
नप्रमेयसामान्याभावस्याताद्दशतयातमादायाप्रसिद्धिवारणायधर्मेसाध्यतावच्छेदकव्यापकत्वविशेषणप्रयोजनकथनासंगतेः ॥ नन्व
साध्यवद्वृत्त्यभावेसमानाधिकरणसंबंधावच्छिन्नप्रतियोगिताकत्वंपरित्यज्यसाध्यतावच्छेदकसंबधावच्छिन्नप्रतियोगिताकत्वनिवेशकल्पे
वन्ह्यादिसाध्यकेऽप्रसिद्ध्यभावइति वाच्यं ॥ एकत्वप्रागभावविशिष्टवन्हेः संयोगेनयोऽभावस्तमादायाप्रसिद्धेस्तत्कल्पेपिदुर्वारत्वात् ॥ अत्रे
दं समाधानं स्वरूपसंबंधेनवन्ह्यभावेकत्वप्रागभावविशिष्टवन्ह्यभावादीनादायवन्हिसाध्यकेऽप्रसिद्धिसंभवेपिसमानाधिकरणधर्मेसाध्यता

वच्छेदकव्यापकत्वविशेषणेपि तादृशाप्रसिद्धेर्वारणासंभवात्तद्विशेषणप्रयोजनतयानैषाऽप्रसिद्धिरुद्भावयितुंशक्यतइतिप्रमेयसाध्यकस्थलानु धावनमिति ॥ नचैकत्वप्रागभावस्याव्याप्यवृत्तितयानप्रतियोगिवैय्यधिकरण्याघटितसाध्यतावच्छेदकव्यापकत्वमितितादृशाभावस्यनसाध्य वद्वृत्तीत्यादिविशेषणाक्रांतत्वमितिवाच्यं ॥ साध्यवद्वृत्तितादृशाभावश्चोभयत्वादिनासाध्याभावएवप्रसिद्धइत्युक्तेः प्रतियोगिवैय्यधिकर ण्यघटितसाध्यतावच्छेदकव्यापकत्वस्यैवग्रंथकृदभिप्रेतत्वात् ॥ यापुरुषव्यक्तिरेतद्दंडविशिष्टाऽस्मिन्नेवाधिकरणेऽपरदंडविशिष्टान्य स्मिन्नेवाधिकरणेवर्तते तादृशदंडविशिष्टव्यक्तौसाध्यायांस्वाश्रयदंडतद्व्यक्तित्वोभयावच्छिन्ननिरूपकताकाधिकरणत्वसंबंधेनप्रमेय त्वस्यहेतुतायामेतद्दंडविशिष्टतद्व्यक्त्यभावतद्दंडविशिष्टतद्व्यक्त्यभावयोर्भिन्नभिन्नव्यक्त्यंतर्भावेणसाधनसमानाधिकरणयोरुक्तविशे षणाक्रांतत्वेनचतद्घटितकूटाधिकरणेहेतुतावच्छेदकसंबंधेनवृत्त्यप्रसिद्ध्याऽव्याप्तिवारणायप्रतियोगिवैय्यधिकरण्यघटितसाध्यता वच्छेदकव्यापकत्वस्यसमानाधिकरणधर्मेऽवश्यंनिवेशनीयत्वाच्च ॥ प्रतियोगितायांसमानाधिकरणसंबंधावच्छिन्नत्वनिवेशेसाध्याभा वीयप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वंव्यर्थमित्यतस्तत्परित्यज्यसाध्यतावच्छेदकसंबंधावच्छिन्नत्वंनिवेशयति ॥ स

मानेति ॥ उभयत्वादिनासाध्याभाव एवेति ॥ यद्यपिसाध्यवद्वृत्तीत्यादिविशेषणाक्रांतोयःवह्निगगनोभयत्वावच्छिन्नाभावस्तद्भिन्नसा
ध्याभावाप्रसिद्ध्यासंभवोदुर्वारएव ॥ तथापिसमानाधिकरणधर्मसाध्यवद्वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मभिन्नत्वनिवेशान्नासंभवः ॥
अत्रेदंचिंत्यंसमानाधिकरणधर्मसाध्यतावच्छेदकव्यापकत्वोपादानेपिज्ञेयत्वान्यप्रमेयवान्वाच्यत्वादित्यादौसाध्यवद्वृत्तिस्तथाविधेयो
ज्ञेयत्वान्यप्रमेयत्वेनज्ञेयत्वगगनान्यतराभावस्तस्यकेवलान्वयितयातदन्यसाध्याभावाप्रसिद्ध्याऽव्याप्तिवारणायसाध्यवद्वृत्त्यभावेस्वन्यूनवृ
त्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविशेषणस्यावश्यकतयातेनैवगगनत्वेनप्रमेयसामान्याभाववारणेसमानाधिकरणधर्मेसाध्यतावच्छेदक
व्यापकत्वविशेषणंव्यर्थं ॥ न्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वमनिवेश्यावच्छिन्नत्वव्यापकत्वोभयसंबंधेनधर्मविशिष्टप्रतियोगि
ताकत्वविशेषणेनतादृशान्यतराभावव्यावर्तनंतुनसम्यक् तादृशाभावप्रतियोगितायांज्ञेयत्वान्यप्रमेयत्वस्यैवप्रतियोगिविशेषणान्यत
रत्वस्याप्यवच्छेदकतायाग्रंथकृदभिप्रेततयातस्यतथात्वाक्षतेः ॥ नचोक्तोभयसंबंधेनसाध्यतावच्छेदकव्यापकधर्मविशिष्टत्वमेवविवक्षणीय
मितिशंक्यंतथापिज्ञेयत्वान्यप्रमेयत्वेनज्ञेयत्वज्ञेयत्वान्यप्रमेयोभयाभावस्योक्तोभयसंबंधेनतादृशोभयत्वरूपधर्मविशिष्टतयातदव्याव

तेनेन तदन्यसाध्याभावाप्रसिद्धेर्दुर्वारत्वात्तद्व्यावर्तनाय यथोक्तविशेषणस्यैवावश्यकत्वात्॥ यत्तु साध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्न प्रतियोगिताकस्य घटवृत्तित्वविशिष्टाकाशाभावाभावस्य घटवृत्तित्वविशिष्टाकाशाभावात्मनः शुद्धाकाशाभावानतिरिक्ततया तदन्यसाध्याभावाप्रसिद्धिर्न्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविवक्षणेपि दुर्वारैववाच्यत्वादिसाध्यकेइति समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणमावश्यकमिति तत्तु जातिप्रतियोगिकाभाववान्मेयत्वादित्यादौ ग्रंथकृदुक्तायाः साध्याभावप्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषणव्यावृत्तेर्विशिष्टातिरिक्तत्वाभिप्रायेणैवाधस्तादुपवर्णनेन साध्यवद्वृत्तीत्यादिपरिष्कारोपसंहारे पृथिव्यन्यद्रव्यत्ववद्द्रव्यत्वादित्यादावतिव्याप्तेर्वारणस्य विशिष्टारिक्ततापक्षमवलंब्यैव ग्रंथकृता प्रदर्शितत्वाच्चानुपादेयं॥ यदपि साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकत्वनिवेशकल्पे स्वरूपसंबंधेन प्रमेयसाध्यके यथोक्तविशेषणाक्रांतस्वरूपसंबंधावच्छिन्नप्रतियोगिताकीयगगनाभावस्तदन्यसाध्याभावाप्रसिद्धिवारणाय समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणमावश्यकमिति तदपि मंदं॥ तद्विशेषणदानेपि वन्हिसाध्यके एकत्र प्रागभावविशिष्टवन्हेः संयोगेन योऽभावस्तस्यापि यथोक्तविशेषणाक्रांततया तदन्यसाधनसमानाधिकरणसाध्या

भावाप्रसिद्धिवारणायसमानाधिकरणधर्मेसाध्यतावच्छेदकसंबंधावच्छिन्नाधेयतावच्छेदकत्वविशेषणावश्यकतयातेनैवस्वरूपसंबंधाव
च्छिन्नप्रतियोगिताकगगनाभाववारणेसमानाधिकरणधर्मेसाध्यतावच्छेदकव्यापकत्वविशेषणानावश्यकत्वादेकत्वप्रागभावविशिष्टवन्हित्व
स्यावश्यंविवक्षणीयंप्रतियोगिवैय्यधिकरण्यघटितसाध्यतावच्छेदकव्यापकत्वमनुपदमेवोक्तमितिप्रतियोगितायांसाध्यतावच्छेदकव्याप
कत्वविशेषणवैय्यर्थ्यंदुर्वारमेव ॥ नच स्वन्यूनवृत्तित्वंस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वंतत्रभेदेप्रतियोग्यवृत्तित्वमवश्यंनिवे
शनीयमन्यथासाध्यवद्वृत्यभावप्रतियोगितावच्छेदकघटत्वादेःस्वसमानाधिकरणव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकंव्यधिकरणध
र्मावच्छिन्नावच्छेदकताकप्रतियोगिताकंवाभेदमादायतत्प्रतियोगितावच्छेदकतापत्यास्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगितायाअप्रसि
द्ध्यापत्तेस्तथाचसाध्यगगनोभयाभावस्यापितादृशतयानाद्भिन्नसाध्याभावाप्रसिद्धिःसद्धेतावस्त्येवेतिवाच्यं ॥ व्यासज्यवृत्तिधर्मसाधार
णस्यपर्याप्त्यतिरिक्तसंबंधावच्छिन्नतादृशभेदप्रतियोगितावच्छेदकत्वरूपन्यूनवृत्तित्वस्यनिवेशेनोक्तदोषाभावात् ॥ किंचसत्तासाध्यके
द्रव्यगुणाद्यन्यत्वविशिष्टसत्ताभावानांयत्किंचित्समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावभिन्नत्वेनलक्षणघटकत्वंदुर्वारमेव

समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्यानुगतस्यैकस्याभावान्तादृशाभावभेदकूटमेवनिवेशनीयंतदपेक्षयासाध्यवद्वृत्यभावगगनाभावभिन्नत्वमेवलाघवादृयंतेनैवप्रमयत्वेनगगनाभाववारणाद्यर्थंप्रतियोगितायांसाध्यतावच्छेदकव्यापकत्वमिति॥ घटवृत्तित्ववि शिष्टेति॥ यद्यपि घटवृत्तित्वविशिष्टाकाशाभावाभावसाध्यसाध्यवद्वृत्तीत्यादिविशेषणाक्रांतगगनाभावभिन्नाभावाप्रसिद्ध्यैवनातिव्याप्तिस्तथापि तुल्ययुक्त्यातत्साध्यकेसद्धेतौतादृशाभावाप्रसिद्ध्याऽव्याप्तिवारणायसमानाधिकरणधर्मावच्छिन्नाभावत्वेनसाध्यवद्वृत्तिर्विवक्षणीयातथाचैयमतिव्याप्तिरितिध्येयं॥ साधनाधिकरणेयेषांपरस्परमैकाधिकरण्यमिति॥ यद्यप्येवंविवक्षायांवह्निमान्पर्वतवह्न्यवयवसंयोगादित्यत्रसंबंधद्वयावच्छिन्नप्रतियोगिताकसाध्याभावसमुदायस्यसाधनाधिकरणेऽसत्वान्नतत्रातिव्याप्तिवारणप्रयोजनकत्वंप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वविशेषणस्यसंभवति॥ तथापिसाध्यतावच्छेदकसंबंधातिरिक्तसंबंधावच्छिन्नप्रतियोगिताकतादृशसाध्याभावसमुदायमादायासंभववारणप्रयोजनंतद्विशेषणस्यबोध्यं॥ त्याज्यमेवेति॥ पृथिवीद्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौजलासमवेतत्वतेजोऽसमवेतत्वाद्यवच्छिन्नाभावघटितकूटस्यसाधनाधिकरणेऽसत्वादतिव्याप्त्यभा

वादितिभावः॥ ॥ इतिकूटघटितलक्षणं॥ ॥ उक्तविशेषणनिवेशइति॥ साध्यवद्वृत्तिसमानाधिकरणधर्माव
च्छिन्नाभावान्यत्वनिवेशइत्यर्थः॥ साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावनिवेशेपिपृथिवीद्रव्यत्वप्रकारकप्रमाविषयत्वादित्यत्र
जलासमवेतत्वतेजोऽसमवेतत्वाद्यवच्छिन्नाभावकूटमादायातिव्याप्तिवारणायसाध्यतावच्छेदकव्याप्यत्वस्यप्रतियोगितायामावश्यक
तया गौरवमितिशंकांनिरस्यति॥ विशिष्टस्येति॥अनतिरिक्ततयेति॥ इदंचप्रतियोगितायांसाध्यतावच्छेदकव्याप्यत्वनिवेश
कल्पेपिपृथिव्यन्यद्रव्यत्ववद्द्रव्यत्वादित्यादावतिव्याप्तेरावश्यकत्वसूचनायैव॥ तथाचतद्धारकदर्शितविवक्षायामतद्व्यावश्यकत्वे
नतयैवपृथिवीद्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौजलाद्यसमवेताभावमादायातिव्याप्तिवारणेप्रतियोगितायांसाध्यतावच्छेदक
व्याप्यत्वंनदेयमितिनगौरवंपुच्छलक्षणइतिभावः॥ नलक्षणघटकताप्रसक्तिरिति॥ तथाचतद्धारकसाध्यवद्वृत्तीत्यादिविशेषणा
नावश्यकतयानकूटघटितलक्षणेगौरवमित्याशयः॥ वक्ष्यमाणत्वादिति॥तत्पंक्तिव्याख्यानावसरइत्यादिः॥ व्याख्यांतरमुपन्यस्य
ति॥ साधनवतीति॥ हेतुतावच्छेदकसंबंधेनकिंचित्पदार्थाधिकरणवृत्तयइत्ति॥अत्रसाध्याभावकूटाधिकरणनिरूपि

तद्वृत्तित्वांशे हेतुतावच्छेदकसंबंधावच्छिन्नत्वानिवेशे।पिताद्दशाद्वृत्तित्वनिरूपकत्वस्यसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्ययाव
दंतर्गतस्यहेत्वधिकरणत्वावच्छेदेनासत्वादतिव्याप्तिविरहेणहेतुतावच्छेदकसंबंधेनयत्किंचित्पदार्थाधिकरणवृत्तित्वमितिविशेषणमफलंस
द्वेतीताद्दशवृत्तित्वनिरूपकत्वस्यव्यधिकरणधर्मावच्छिन्नाभावस्यैवप्रसिद्धेः॥परंतुहेतुतावच्छेदकसंबंधेनवृत्तिमद्वृत्तयोयावंतस्ताद्दशसा
ध्याभावकूटाधिकरणवृत्तित्वाभावाइतिलक्षणघटकविशेषणापरित्यागेनैवसामानाधिकरण्यस्यव्याप्यवृत्तित्वकल्पेलक्षणपरिष्कारःसं
भवतीतिज्ञापयितुंसाध्याभावकूटाधिकरणवृत्तित्वांशेहेतुतावच्छेदकसंबंधावच्छिन्नत्वघटितमेवलक्षणमभिप्रेतंतथाचनतद्वैय्यर्थ्यंवृ
त्तित्वांशेहेतुतावच्छेदकसंबंधावच्छिन्नत्वविशेषणस्यत्वखंडाभावसंपादकतयैवसार्थक्यमितिबोध्यं॥ ॥इतिपुच्छलक्षणं
॥ ॥विदुषांकंठभूषायैरघुनाथेननिर्मिते॥संन्यायरत्नेसंपूर्तिमगमन्मनुलक्षणी॥ ॥इतिमीमांसान्यायपंचास्यश्री
मद्राघवाचार्यशिष्यस्यपर्वतेइत्युपनामकरघुनाथस्यकृतौगदधरीपंचवादटिप्पण्यांन्यायरत्नाभिधायांचतु
र्दशलक्षणीसमाप्ता॥ ॥अथसिद्धांतलक्षणं॥ ॥यथाश्रुतमूलादिति॥ननुनञ्पदसमभिव्याहृतप्रथ

मोच्चारितपदार्थेननञर्थभेदात्तुयोगित्वबोधस्यघटःपटोनेत्यादौदृष्टत्वात्प्रतियोगितावच्छेदकावच्छिन्नंयन्नभवतीतिमूलान्नयत्पदार्थेप्रतियो-
गितावच्छेदकावच्छिन्नभेदोनञाबोधयितुंशक्यतेऽपितुपूर्वपदार्थेप्रतियोगितावच्छेदकावच्छिन्नएवयत्पदार्थभेदइतियथाश्रुतमूलाद्यत्पदा-
र्थेसाध्येप्रतियोगितावच्छेदकावच्छिन्नभेदःप्रतीयतइत्यसंभवि॥नचयत्पदस्यपूर्वयोजनयाग्रंथसामंजस्यमितिवाच्यं॥तथासति
यथाश्रुतमूलप्रतिपाद्यत्वोक्तेरसंगत्यापत्तेरितिचेन्न॥यथाश्रुतत्वंहिनश्रूयमाणवर्णानुपूर्वीकत्वंयेनोक्तदोषःस्यादपितुनिरूढलक्षणे-
तरलक्षणाधीनार्थप्रतिपत्त्यतात्पर्यकत्वंतच्चयत्पदस्यपूर्वयोजनायामप्यक्षतमितिनोक्तासंगतिः॥नचतर्हीदंयथाश्रुतत्वंनञव्यत्या-
सपक्षेप्यक्षतमितिवाच्यं॥नञव्यत्यासोहिनोत्तरत्रोच्चारितनञःपूर्वत्रयोजनानञःसमासाघटकत्वेनतस्यप्रतियोगितावच्छेदकावच्छिन्ने-
तिसमासघटकीभूतप्रतियोगितावच्छेदकपदोत्तरंयोजनायाअसंभवादपितुप्रतियोगितावच्छेदकावच्छिन्नेतिसमस्तपदघटकीभूतप्रति-
योगितावच्छेदकपदस्यप्रतियोगितानवच्छेदकरूपार्थेलक्षणातात्पर्यकत्वमेवनञस्तथाचस्वारसिकलक्षणयाप्रतियोगितानवच्छेदकरूपा-
र्थोपस्थापकत्वेनोक्तयथाश्रुतत्वस्यासंभवादिति॥अथप्रतियोगितावच्छेदकावच्छिन्नेयत्पदार्थभेदनिवेशनेप्यदोषाद्यत्पदस्यपूर्वयोज

नयाविपरीतभेदबोधनंविफलमितिचेन्नैवं ॥ तथासतिव्यभिचारिण्युदासीनपदार्थेसाध्यभेदसत्वेनातिव्याप्त्यापत्त्याप्रतियोगितावच्छे
दकावच्छिन्नपदस्यवीप्साकरणप्रसंगेनतस्याव्यापकत्वेतात्पर्येणच्चगौरवापत्तेः॥ नन्वयत्पदार्थभेदनिवेशेपिप्रतियोगितावच्छेदकावच्छि
न्नोदासीनपदार्थभेदमादायव्यभिचारिण्यतिव्याप्त्यापत्त्यावीप्सायाभवतोप्यावश्यकत्वेनसाम्यमेवेतिवाच्यं॥ प्रतियोगितावच्छेदकावच्छि
न्नंयन्नभवतीतिमूलेनहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नंनेत्याकारप्रतीतिसाक्षिकस्यप्रतियोगितावच्छेदकता
वच्छिन्नावच्छेदकताकप्रतियोगिताकस्यैवानुगतैकभेदस्यसाध्येनिवेश्यत्वेनातिव्याप्तेर्निरासात्॥ यद्यपिन्यूनवृत्तेर्धर्मस्यैवभेदानुयोगि
तावच्छेदकत्वनियमेनप्रतियोगितावच्छेदकतावच्छिन्नानुयोगितावच्छेदकताकस्यसाध्यभेदस्यैकस्यानुगतस्यनिवेशेपिनयथाश्रुतमणि
वाक्यार्थेऽतिव्याप्तिःसंभवति॥ तथापिप्रतियोगितावच्छेदकत्वावच्छिन्नानुयोगितावच्छेदकताकभेदप्रतियोगित्वस्यसाध्येनिवेशे
साध्योदासीनपदार्थोभयत्वावच्छिन्नभेदमादायव्यभिचारिण्यतिव्याप्त्यानतथाविधवाक्यार्थआदृतइतिध्येयं॥ यत्तुप्रतियोगि
तावच्छेदकावच्छिन्नेत्यत्रप्रतियोगितावच्छेदकपदंप्रतियोगितावच्छेदकत्वपरमवच्छिन्नपदंचावच्छिन्नप्रतियोगिताकपरमवच्छिन्न

पदार्थैकदेशोऽवच्छिन्नत्वेनिरूपकत्वसंबंधेनावच्छेदकपदार्थस्यान्वयोऽवच्छिन्नपदार्थस्यचाभेदेननञर्थेऽन्वयस्तथाचप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदस्यसाध्यतावच्छेदकेलाभान्नावच्छिन्नपदवैयर्थ्यंनवासामान्यभेदनिवेशात्प्रतियोगितावच्छेदकोदासीनपदार्थतावच्छेदकभेदमादायव्यभिचारिण्यतिव्याप्तिरितिव्याख्यानंतल्लक्षणाद्यापत्यानञःस्वसमभिव्याहृतप्रतियोगिवाचकपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदबोधेनिरूढतयाततएवावच्छेदकत्वावच्छिन्नभेदबोधेपुनरवच्छिन्नपदस्यलक्षणयातादृशभेदबोधनवैयर्थ्येनावच्छेदकपदार्थैस्यैकदेशेऽन्वयेननिपातार्थेसुबर्थस्याभेदेनान्वयादर्शनेनचहेयं॥ **महानसीयवह्न्यभावमादायदोषोदुर्वारइति॥** हेतुसमानाधिकरणाभावाप्रतियोगीत्यादिपूर्वपक्षलक्षणोक्तासंभवःस्थिरइतिभावः॥ **नन्व**संभवोनसंभवतिनानाधिकरणसाध्यकेविशिष्टाभावोभयाभावाद्यादायलक्षणागमनेप्येकाधिकरणसाध्यकेएतद्रूपवानेतस्मादित्यादौलक्षणगमनात्॥ तत्रविशिष्टाभावोभयाभावयोःप्रतियोगिवैयधिकरण्यासंभवेनलक्षणाघटकत्वादितिचेन्न॥ सर्वत्रप्रमेयसाध्यवद्वृत्तिपदार्थोभयाभावस्यप्रतियोगिवैयधिकरण्यसंभवेनतमादायासंभवसत्वात्॥ **नचो**भयाभावस्यलक्षणघटकत्वेपितत्प्रतियोगितावच्छेदकोभयत्वावच्छिन्नभेदःप्रत्येकमक्षतएवेतिना

संभव इतिवाच्यं ॥ उभयत्वस्योभयत्वत्वेनव्यासज्यवृत्तित्वादुभयत्वावच्छिन्नभेदस्यप्रत्येकंसत्वेपिप्रतियोगितावच्छेदकत्वावच्छिन्नावच्छेदकता
कप्रतियोगिताकभेदस्यैवलक्षणेनिवेशेनप्रतियोगितावच्छेदकत्वेनोभयत्वस्याव्यासज्यवृत्तित्वान्नतदवच्छिन्नावच्छेदकताकभेदः साध्येसंभवती
ति ॥ ननुतत्तद्व्यक्तित्वावच्छिन्नाभावमादायदोषसंभवेमहानसीयवह्न्यभावपर्यंतानुधावनंव्यर्थमितिचेन्न ॥ रूपवान्पृथिवीत्वादित्यादौविषयि
तासंबंधेनरूपत्वविशिष्टज्ञानाभावमादायाव्याप्तिवारणायहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतायांसाध्यतावच्छेदकताघटकसंबं
धावच्छिन्नत्वस्यनिवेश्यत्वेनतद्व्यक्तित्वनिष्ठावच्छेदकतायाःसमवायानवच्छिन्नत्वात्तद्व्यक्तित्वावच्छिन्नाभावमादायदोषासंभवेनमहानसीय
वह्न्यभावपर्यंतानुधावनात् ॥ नचैवंमहानसीयवह्न्यभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकताया
वह्नित्वएवपर्याप्ततयानञोव्यत्यासेप्यव्याप्तिवारणंनसंभवतीतिवाच्यं ॥ निरुक्ताभावीयप्रतियोगितायामेवसाध्यतावच्छेदकताघटकसं
बंधावच्छिन्नावच्छेदकताकत्वंनिवेश्यतादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनधिकरणत्वस्यसाध्यतावच्छेदकेनिवेशनीयतया
दोषाभावात् ॥ **यद्यपिकालिकेनमहानसीयत्वविशिष्टवह्निसाध्यकेधूमहेतुकेसमवायसंबंधावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकका**

लिकसंबंधावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकाभावमादायाव्याप्तिर्नञ्व्यत्यासेप्यस्ति ॥ ननुतादृशाभावस्यस्वप्रतियोगितावच्छेदकताघटक
कालिकसंबंधावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपकताकतादृशसमवायसंबंधावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपकताकाधि
करणतावन्निवर्तमानतयाप्रतियोगिवैय्यधिकरण्यमितिशंक्यं ॥ समवायेनमहानसीयत्वविशिष्टस्यकालिकेनवह्नित्वविशिष्टस्यसाध्यता
यांव्यभिचारिणिसमवायावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताककालिकसंबंधावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकाभावस्याप्युक्तरीत्या
प्रतियोगिवैय्यधिकरण्याभावेनान्याभावमादायातिव्याप्तिवारणाययद्यत्संबंधावच्छिन्नायद्यद्धर्मनिष्ठास्वप्रतियोगितावच्छेदकतातत्त
त्संबंधेनतत्तद्धर्मविशिष्टानधिकरणवृत्तित्वस्यैवप्रतियोगिवैय्यधिकरण्यपदार्थत्वावश्यकतयानिरुक्ताभावस्यापितथात्वात्तद्वारणायस्व
नवच्छेदकसंबंधावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबंधेनसाध्यतावच्छेदकताविशिष्टान्यायाहेतुसमानाधिकरणाभावीयप्रतियो
गितावच्छेदकतातस्पर्याप्त्यनधिकरणत्वस्यसाध्यतावच्छेदकेनिवेश्यतयातेनैवरूपवान्पृथिवीत्वादित्यादौदोषवारणेऽवच्छेदकतायां
साध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वस्यनैरर्थक्येनतद्व्यक्तित्वावच्छिन्नाभावमादायापिदोषः संभवति ॥ तथापितादृशपरिका

रानुसंधाने ऽननुसंधाने वोभयथापि दोषदानार्थं महानसीयवह्न्यभावानुधावनमिति ध्येयं ॥ भेदकूटेनेति ॥ तृतीयार्थो निरूपकताकत्वं
तस्य सामानाधिकरण्ये ऽन्वयः ॥ ननु तादृशभेदकूटाधिकरणाप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिरत आह ॥ प्रत्येकमिति ॥ प्रत्येकभेद
मात्रवृत्तिधर्मावच्छिन्नेति तदर्थस्तस्य निरूपकत्वे ऽन्वयस्तथा च प्रतियोगितावच्छेदकावच्छिन्नभेदसामानाधिकरण्यकूटवत्त्वं साध्यतावच्छेद
कपर्यवसितं तस्य वह्नित्वादावबाधान्नाव्याप्तिः ॥ एकव्यक्तिकसत्तादिसाध्यकइति ॥ नन्वेतत्परिष्कारे वह्निमान्धूमादित्यादावपिव
ह्निघटोभयाभावमादायाव्याप्तिसंभवादेकव्यक्तिसत्तादिसाध्यकपर्यंतानुधावनं निर्बीजमेव ॥ न च तादृशाभावप्रतियोगितावच्छेदकोभ
यत्वावच्छिन्नभेदसामानाधिकरण्यं वह्नित्वादावक्षतमेव वह्निधूमोभयवान्वह्नेरित्यादावतिव्याप्तिवारणाय पर्याप्तिघटितसामानाधिक
रण्यस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नभेदानुयोगितावच्छेदकावच्छिन्नपर्याप्तिकत्वरूपस्य निवेशावश्यकत्वेपि
वह्निघटोभयत्वावच्छिन्नभेदानुयोगितावच्छेदकवह्निनिष्ठतद्व्यक्तित्वावच्छिन्नपर्याप्तिकत्वस्यापि वह्नित्वे ऽक्षतत्वात्काव्याप्तिरिति वाच्यं॥
धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकमहानसीयवह्नित्वनाणा तार्णयत्न्युभयत्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकतद्व्यक्तित्वाव २४४

च्छिन्नपर्याप्तिकत्वस्य वन्हिधूमोभयत्वादावसत्वेन वन्हिधूमोभयवान्धूमादित्यादावव्याप्त्यापत्त्या पर्याप्तिघटितसामानाधिकरण्यनिवेशासंभ
वात्॥ तस्मादुभयसाध्यकव्यभिचारिण्यतिव्याप्तिवारणाय सामानाधिकरण्यघटकीभूतभेदाधिकरणतायां निरवच्छिन्नत्वं निवेश्यं न तथा चोभय
साध्यकव्यभिचारिण्युभयाभावस्यापि लक्षणघटकतया तत्प्रतियोगितावच्छेदकोभयत्वावच्छिन्नभेदाधिकरणतायाः प्रत्येकं प्रतियोगिविशि
ष्टव्यक्तित्वावच्छेदेनैवसत्वेन निरवच्छिन्नत्वासंभवान्न तादृशभेदसामानाधिकरण्यमुभयत्वादेरिति नातिव्याप्तिः॥ इत्थं च वन्हिमान्धूमादित्या
दौ वन्हिघटोभयाभावस्यापि लक्षणघटकतयोभयत्वावच्छिन्नभेदनिरूपितनिरवच्छिन्नाधिकरणताया वन्ह्यादावसत्वेनाव्याप्तेर्दुर्वारत्वात्॥ भेद
मुभयत्वावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तिवारणाय निरवच्छिन्नाधिकरणताघटितसामानाधिकरण्यं न निवेश्यमपि तु यावत्साध्यतावच्छे
दकेषु तादृशभेदसामानाधिकरण्यं निवेश्यं तथा च वन्हिधूमोभयवान्वन्हेरित्यादौ वन्हित्वधूमत्वोभयत्वेतत्त्रितयस्य साध्यतावच्छेदकतया तदं
तःपातिधूमत्वादौ लक्षणघटकधूमाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नभेदसामानाधिकरण्याभावान्नातिव्याप्तिः॥ इत्थं च वन्हिसाध्यके व
न्हिघटोभयाभावस्य लक्षणघटकत्वेपि तत्प्रतियोगितावच्छेदकोभयत्वावच्छिन्नभेदसामानाधिकरण्यस्य वन्हित्वादावसत्वान्नाव्याप्तिः॥ अथै

वमपिपर्वतान्यवृत्तित्वविशिष्टवह्न्यभावस्यापिलक्षणघटकतयातत्प्रतियोगितावच्छेदकीभूतपर्वतान्यवृत्तित्वविशिष्टवह्नित्वावच्छिन्नभेदसामानाधिकरण्यंवह्नित्वस्यनसंभवतिपर्वतवृत्तिवह्नेरपिपर्वतावयवगगनादिवृत्तित्वेनपर्वतान्यवृत्तित्वाक्रांतत्वादित्यव्याप्तिर्वह्निसाध्यकेपिसंभवतीत्येकव्यक्तिसत्तादिसाध्यकपर्यंतानुधावनंव्यर्थं॥ अत्रवदंतिस्फुटतरप्रतिपत्त्यर्थंतावत्पर्यंतानुधावनमिति॥ वस्तुतस्तुसत्ताद्रव्यत्वोभयवान्द्रव्यत्वादित्यादिनानाव्यक्तिसाध्यकेपिघटवृत्तित्वविशिष्टत्वावच्छिन्नाभावमादायदोषसंभवादेकव्यक्तिसाध्यकेप्येतद्रूपवानेतद्रसादित्यादावव्याप्त्यसंभवादेकव्यक्तिसत्तादिसाध्यकेत्यसंगतमत एकव्यक्तिसत्तादीत्यादिनानानाधिकरणवृत्तिसाध्यकेतिविवक्षितं॥ एकव्यक्तिपदमपिसाध्यीभूतैकव्यक्तौनानाधिकरणवृत्तित्वलाभार्थंनतुभिन्नव्यक्तिलाभार्थंसत्ताद्रव्यत्वादिव्यक्तिश्चनानाधिकरणवृत्तिर्भवतीतिनतत्राव्याप्तिरिष्टैव॥ एतद्रूपादिव्यक्तिश्चननानाधिकरणवृत्तिरितितत्साध्यकेलक्षणसमन्वयेप्यक्षतिरत एवनासंभवोऽभिहितः॥ इत्थंचवह्न्यादेरपिनानाधिकरणवृत्तित्वेनोक्तस्थलाक्रांतत्वादिष्वनएवतत्राव्याप्तिः॥ यद्रूपावच्छिन्नंप्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषयइति॥ यद्रूपंतादृशप्रतीतिविषयतावच्छेदकमित्यर्थः॥ प्रतियोगितावच्छेदकाश्रयाविषयकत्वस्यप्रतीतौनिवेशेविशिष्टसत्तात्वाश्रयाविषयकत्वस्यसत्ताप्रतीतावसं

भवेनसत्तावान्जातेरित्यादौ विशिष्टसत्ताभावमादायाव्याप्तिरतः प्रतियोगितावच्छेदकावच्छिन्नाविषयकेति ॥ प्रमेयत्वादिनासाध्यविषयकप्र
तीतेः प्रतियोगितावच्छेदकावच्छिन्नाविषयकत्वाद्व्यभिचारिण्यतिव्याप्तिरतोयद्रूपेनादृशप्रतीतिविषयतावच्छेदकत्वनिवेशः ॥ यद्रूपेतादृशप्रतीतिविष
यतात्तित्वानिवेशेसएवदोषइत्यवच्छेदकत्वनिवेशः ॥ प्रतियोगितावच्छेदकावच्छिन्नाविषयकत्वनेनप्रतियोगितावच्छेदकावच्छिन्नमुख्यविशेषताशून्यत्वंविवक्षितं ॥
तेनघटकालीनवन्हिमान्धूमादित्यादौसाध्यविषयकप्रतीतौ प्रतियोगितावच्छेदकघटत्वावच्छिन्नाविषयकत्वासंभवेपिनाव्याप्तिः ॥ एवंप्रतीति
विषयतावच्छेदकेत्यनेन प्रतीतिमुख्यविशेष्यतावच्छेदकत्वंयद्रूपेविवक्षितं ॥ तेनव्यभिचारिणिसाध्यप्रकारकप्रतीतौ प्रतियोगितावच्छेदकी
भूतसाध्यतावच्छेदकावच्छिन्नमुख्यविशेष्यताशून्यत्वेपिनातिव्याप्तिरितिध्येयं ॥ अवच्छेदकतायाव्यासज्यवृत्तित्वाभिप्रायेणेदं ॥ तथाच
महानसीयवन्ह्यभावमादायाव्याप्तिवारणायप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकमुख्य
विशेष्यताशून्यप्रतीतीयमुख्यविशेष्यतावच्छेदकतापर्याप्त्यवच्छेदकसाध्यतावच्छेदकतापर्याप्त्यवच्छेदकविशिष्टसाध्यतावच्छेदकावच्छि
न्नसामानाधिकरण्यंविवक्षणीयं ॥ यद्रूपंप्रतियोगितावच्छेदकभिन्नमिति ॥ अवच्छेदकतायाव्यासज्यवृत्तित्वमितिसिद्धांतानुसारेणेदं ॥

अव्याप्यवृत्तित्वे पक्षांतरमाह ॥ प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयोवेति ॥ नन्वेवमपि वन्हित्वस्य महानसीयवह्न्य
भावीयप्रतियोगितावच्छेदकत्वाद्वन्हित्वाविषयकप्रतीतिविषयत्वं न वन्हित्वस्येत्यव्याप्तिर्दुर्वारैव ॥ नन्वप्रतियोगितावच्छेदका ये ये धर्मास्तत्त
द्विषयत्वकूटाभाववत्वं प्रतीतौ निवेश्यं तथा च यावद्धर्मांतर्गतमहानसीयत्वविषयताघटितकूटाभावस्य वन्हित्वविषयकप्रतीतौ सत्वेन ना
व्याप्तिरिति वाच्यं ॥ तथा सति व्यभिचारिणि प्रतियोगितावच्छेदकोदासीनपदार्थतावच्छेदकविषयताघटितकूटस्य साध्यतावच्छेदकवि
षयकप्रतीतावसत्वेन तदभावस्याक्षततया तिव्याप्त्यापत्तेरतः प्रतियोगितावच्छेदकविषयताकूटाभावं परित्यज्य तादृशधर्मविषयत्वाभाव
कूटमेव प्रतीतौ निवेश्यं तथा च प्रतियोगितावच्छेदकीभूतसाध्यतावच्छेदकविषयत्वाभावस्य कूटांतर्गतस्य साध्यतावच्छेदकविषयकप्रतीता
वसत्वेनाऽतिव्याप्तेर्निरासेप्युक्तप्रकारेणाव्याप्तिर्दुर्वारैवेति चेन्न ॥ हेतुसमानाधिकरणाभावीयैकधर्मावच्छिन्नायायावत्यः प्रतियोगितास्तत्तत्प्र
तियोगितावच्छेदकविषयकत्वाभावकूटवत्वे सति हेतुसमानाधिकरणाभावीयानेकधर्मावच्छिन्नायावत्यः प्रतियोगितास्तत्तत्प्रतियोगितावच्छेदकैकध
र्मविषयकत्वविशिष्टतादृशापरधर्मविषयकत्वाभावकूटवत्वमित्येवंरीत्या निवेशानीयं तथा च वन्हिमान्धूमादित्यादौ महानसीयवह्न्यभावस्य लक्षणघ

टकत्वेपितत्प्रतियोगितावच्छेदकीभूतमहानसीयत्वविषयकत्वविशिष्टवन्हित्वविषयकत्वाभावस्यवन्हित्वविषयकप्रतीतौसत्वेनलक्षण
संगतिः॥ **अथवा** प्रतियोगितावच्छेदकाविषयकेत्यनेनप्रतियोगितावच्छेदकत्वाव्यापकत्वंविवक्षितं॥ अव्यापकत्वंचनव्यापकभिन्नत्वंत
थासतिव्यापकत्वकुक्षौव्यापकत्वनिवेशेनानवस्थापत्तेः॥ **किंत्व** वच्छेदकत्वसमानाधिकरणभेदप्रतियोगितानिरूपितविषयतासंबंधावच्छि
न्नावच्छेदकत्वं॥ एवंचवन्हिमान्धूमादित्यादौमहानसीयवन्ह्यभावीयप्रतियोगितावच्छेदकत्वस्यमहानसीयत्वेपिसत्वेनतत्रवन्हित्वविषय
कप्रतीतिमद्भेदसत्वाल्लक्षणसंगतिः॥ **नच** धूमवान्वन्हेरित्यादावतिव्याप्तिः॥ धूमत्वविषयकप्रतीतेरपिहेतुसमानाधिकरणाभावप्रति
योगितावच्छेदकीभूतघटत्वनिष्ठभेदप्रतियोगितावच्छेदकत्वादितिवाच्यं॥ हेतुसमानाधिकरणाभावीयायायाप्रतियोगितातत्तन्निरूपि
तावच्छेदकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्यसाध्यतावच्छेदकविषयकप्रतीतौविवक्षितत्वात्॥ **नच** तत्तद्व्यक्तित्वेनप्रतियो
गितानिवेशोदुर्ज्ञेयतेतिवाच्यं॥ स्वावच्छेदकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबंधेनहेतुसमानाधिकरणाभावीययावत्प्रतियो
गितावैशिष्ट्यस्यैवप्रतीतौविवक्षणात्॥ यावत्वंचनापेक्षाबुद्धिविशेषविषयत्वंतत्रापिपुनःप्रतियोगितानांतत्तद्व्यक्तित्वेननिवेशापत्यादुर्ज्ञेयत्व

तादवस्थ्यात् ॥ किंतुहेतुसमानाधिकरणाभावीयप्रतियोगितात्वव्यापकव्यासज्यवृत्तिधर्मावच्छिन्नत्वं ॥ उक्तसंबंधेनतादृशव्यासज्यवृत्तिध
र्मावच्छिन्नत्वंप्रतीतौविवक्षितमितिनकश्चिद्दोषः ॥ नन्वेवमुक्तावपिमहानसीयवन्हिभिन्नवन्हिमान्धूमादित्यादावतिव्याप्तिर्महानसीय
वन्हिभिन्नत्वस्यवन्हित्वस्यचप्रत्येकंधूमसमानाधिकरणाभावप्रतियोगिकतानवच्छेदकत्वेनप्रत्येकविषयकतत्प्रतीत्योः स्वावच्छेदकत्वसमा
नाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबंधेनहेतुसमानाधिकरणाभावीययावत्प्रतियोगितावैशिष्ट्यस्याक्षतेरितिचेन्न ॥ यद्रूपाविष
यकप्रतीतौयत्किंचित्साध्यतावच्छेदकाविषयकप्रतीतिभिन्नत्वस्यविवक्षणीयत्वात्तथाचोक्तप्रतीत्योर्नतादृशभेदवत्त्वंमहानसीयव
न्हिभिन्नत्ववन्हित्वोभयविषयकैकप्रतीतिस्तादृशभेदवत्त्वेपिनोक्तसंबंधेनयावत्प्रतियोगितावैशिष्ट्यंसंभवतियावत्प्रतियोगितांत
र्गतमहानसीयवन्हिभिन्नवन्ह्यभावीयप्रतियोगितावैशिष्ट्यस्योक्तसंबंधेनासत्वादतोनातिव्याप्त्यवसरः ॥ ननुप्रतीतौयत्किंचित्सा
ध्यतावच्छेदकाविषयकभिन्नत्वनिवेशेप्रमेयवान्वाच्यत्वादित्यादावव्याप्तिस्तत्रसाध्यतावच्छेदकीभूतप्रमेयसामान्यविषयकप्रतीतेर्नि
रुक्तावच्छेदकत्वाव्यापकत्वासंभवाद्वाच्यत्वरूपयत्किंचित्साध्यतावच्छेदकविषयकप्रतीतेरुक्तावच्छेदकत्वाव्यापकत्वेपियत्किंचित्साध्य

तावच्छेदकाविषयकभिन्नत्वस्यासंभवात् ॥ नच दंडिसाध्यकेपरंपरया दंडत्वस्यैव प्रमेयत्वसाध्यकेपि परंपरया प्रमेयत्वस्यैव साध्यतावच्छेदकत्व
मस्त्विति वाच्यं ॥ यत्रैकापि साध्यतावच्छेदकव्यक्तिर्नसकलहेतुमद्वृत्तितावच्छेदिकेत्यग्रिमग्रंथस्वरसेन दंडिसाध्यकएव परंपरया दंडत्वस्या
ऽवच्छेदकत्वं ॥ प्रमेयत्वावच्छिन्नसाध्यकेतु वाच्यत्वरूपकेवलान्वयिप्रमेयस्य सकलहेतुमद्वृत्तितावच्छेदकत्वेन यत्रैकापीत्यादिग्रंथोक्तस्थ
लानाक्रांतत्वादिति चेन्न ॥ तादृशग्रंथस्य सिद्धांतानुरुद्धतयैतत्परिष्कारस्य च पूर्वपक्षीयतया संदर्भविरोधाभावेन परंपरया प्रमेयत्वस्य
साध्यतावच्छेदकत्वोपगमात् ॥ अथैवमपि महानसीयत्वविशिष्टवन्हित्ववत्वान्धूमादित्यादावतिव्याप्तिर्वन्हित्वस्यैव साध्यतावच्छेदक
त्वेन तद्विषयकप्रतीतेर्गुरुधर्मस्य प्रतियोगितावच्छेदकत्वपक्षे हेतुसमानाधिकरणमहानसीयत्वविशिष्टवन्हित्ववदभावीयप्रतियोगि
तावच्छेदकमहानसीयत्वनिष्ठावच्छेदकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वात् ॥ अवच्छेदककुक्षिप्रविष्टानामवच्छेदकत्वप
क्षे महानसीयत्वस्यापि हेतुसमानाधिकरणमहानसीयत्वविशिष्टवदभावीयप्रतियोगितावच्छेदकत्वात् ॥ महानसीयत्वस्य विधेयतानव
च्छेदकत्वाद्वन्हित्वस्यैव विधेयतावच्छेदकत्वेन तद्विषयकप्रतीतेर्यत्किंचित्साध्यतावच्छेदकाविषयकभिन्नत्वस्याक्षततात्वादिति चेन्न ॥ महान

सीयत्वविशिष्टवन्हित्वप्रतियोगिकसमवायस्यैवतादृशाभावप्रतियोगितावच्छेदकतावच्छेदकत्वाभ्युपगमाद्नतिप्रसंगेनमहानसीय
त्वस्यतादृशाभावप्रतियोगितावच्छेदकत्वानभ्युपगमादिति दिक् ॥ इदंपुनरिहावधेयं ॥ व्यभिचारिणिसाध्यतावच्छेदकस्यतादृशप्रतियो
गितावच्छेदकत्वेपितन्निष्ठसाध्यतावच्छेदकविषयकप्रतीतिघटोभयवद्भेदप्रतियोगितावच्छेदकत्वस्यसाध्यतावच्छेदकप्रतीतौसंभवाद
तिव्याप्तिर्दुर्वारा ॥ भेदप्रतियोगितायांव्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशेनत्रापिव्यासज्यवृत्तिधर्मावच्छिन्नत्वघटोभयाभावमादा
यदोषतादवस्थ्यमेव ॥ भेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्यप्रतीतौविवक्षणेप्यवच्छेदकताया अव्यासज्यवृत्तित्वाभि
प्रायेणैवैतत्परिष्कारस्य कृत त्वेनप्रतीतिघटोभयवद्भेदप्रतियोगितावच्छेदकत्वपर्याप्तेरपिप्रतीतावक्षतत्वात् ॥ साध्यतावच्छेदकविष
यकप्रतीत्यवच्छिन्नप्रतियोगितासंबंधेनतादृशप्रतीतिमद्भेद इत्युक्तावप्युभयवद्भेदेतथात्वाभावस्यशाफथैकगम्यत्वेनतादृशशाफथस्या
ग्रहमूलकत्वेनाश्रद्धेयत्वादिति ॥ एवंस्वरूपसंबंधावच्छिन्नत्वविवक्षयेति ॥ अत्रकेचित् ॥ यद्रूपावच्छिन्नंप्रकारत्वंप्रतियो
गितावच्छेदकावच्छिन्नप्रकारतान्यदितिप्रकारताधर्मिकभेदघटितपरिष्कारएवमिश्रसमंतः प्रतियोगिताधर्मिकभेदघटितपरिष्कारकरणे

गुरुधर्मस्यप्रतियोगितानवच्छेदकत्वमतेगुरुधर्मावच्छिन्नसाध्यकसद्धेतौतद्धर्मावच्छिन्नप्रतियोगिताप्रसिद्ध्या अव्याप्त्यापत्तेः ॥ पारिभाषि
कावच्छेदकत्वनिवेशेगौरवात् ॥ एवंप्रतियोगितायाः प्रतियोगिस्वरूपत्वमतेवह्न्यादिनानाव्यक्तिसाध्यकेसाध्यतावच्छेदकीभूतवह्नित्वाद्य
वच्छिन्नतत्तद्व्यक्त्यात्मकप्रतियोगितायाहेतुसमानाधिकरणतत्तद्व्यक्त्यभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वेनतद्भिन्नत्वासंभवेनाव्याप्ते
श्च ॥ नन्वप्रतियोगितायाःप्रतियोगिस्वरूपत्वमतेतुल्ययुक्त्याविषयतायाअपिविषयस्वरूपत्वौचित्येनभवन्मतेप्युक्तयुक्त्याअव्याप्त्याप
त्यातौल्यमितिवाच्यं ॥ प्रतियोगितायाः प्रतियोगिस्वरूपत्वस्यकंठरवेणैवमिश्रैरुक्तत्वात् ॥ विषयतायाअपिविषयस्वरूपत्वेमिश्रपरिष्का
रस्यासंभवापत्त्यातदन्यथानुपपत्त्यामिश्रमतेविषयतातिरिक्तत्वस्यैवकल्पनादितिवदंति ॥तन्नमनोरमं ॥ गुरुधर्मस्यप्रतियोगि
तानवच्छेदकत्वेविषयताधर्मिकभेदघटितपरिष्कारकरणेपिगुरुधर्मावच्छिन्नसाध्यकव्यभिचारिणितादृशधर्मस्यप्रतियोगितानवच्छेदक
तयातद्धर्मावच्छिन्नविषयतायांहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकावच्छिन्नविषयताभेदसत्वेनातिव्याप्त्यापत्त्याभवता
मपिपारिभाषिकावच्छेदकत्वविवक्षणवत्प्रतियोगिताधर्मिकभेदनिवेशोपितद्धर्मावच्छिन्नंप्रतियोगित्वमित्यत्रपारिभाषिकावच्छेदकत्व

स्यनिवेशेन गुरुधर्मावच्छिन्नसाध्यकाव्याप्त्यभावात् ॥ एवं प्रतियोगितायाः प्रतियोगिस्वरूपत्वं विषयतायाश्चातिरिक्तत्वमित्यस्य शाकथैकया
ह्यत्वेन विषयताया अतिरिक्तत्वे प्रतियोगिताया अपि तत्वस्य युक्तत्वान्नवह्न्यादिनानाव्यक्तिसाध्यकस्थलेप्युक्तरीत्याव्याप्त्यापत्तिरिति प्रतियो
गिताधर्मिकभेदघटितपरिष्कारेपि न कश्चिद्दोषः ॥ इदमत्र चिंत्यं ॥ यद्रूपावच्छिन्नप्रतियोगित्वकारणत्वकार्यताधिकरणत्वादिसाधारण
यद्रूपनिष्ठावच्छेदकतानिरूपकत्वरूपयद्रूपावच्छिन्नत्वावच्छिन्न एव प्रतियोगितावच्छेदकावच्छिन्नभेदनिवेशनेप्यनुपपत्त्यभावाद्यद्रूपा
वच्छिन्नप्रतियोगितात्वेन निवेशनं व्यर्थं ॥ न चेष्टापत्तिः ॥ परंतु प्रतियोगित्वादिनिष्ठयद्रूपावच्छिन्नत्वावच्छिन्न एव भेदनिवेशार्थं तदु
ल्लेखः ॥ अत एव स्वरूपसंबंधरूपावच्छेदकत्वविवक्षयेत्युक्तिरिति वाच्यं ॥ प्रतियोगितात्वेन निवेशे ग्रंथकर्तुरभिनिवेशाभावे प्रति
योगितावच्छेदकावच्छिन्नपदस्य व्यावृत्तिप्रदर्शनसमये धूमवान्वन्हेरित्यादावपि धूमत्वाद्यवच्छिन्नाधिकरणतायां प्रतियोगिताभेदस
त्वेनातिव्याप्तिसंभवादप्रसिद्धघटादिसाध्यकस्थलपर्यंतानुधावने प्रयोजनाभावप्रसंगात् ॥ तस्मात्प्रतियोगितात्वेन निवेशो ग्रंथकर्तुः
संमतस्तत्प्रयोजनं त्वदृष्टमेव ॥ इदमत्राकूतं ॥ प्रतियोगितावच्छेदकानवच्छिन्नेत्यनेन प्रतियोगितावच्छेदकतापर्याप्त्यनुयोगिता २४९

वच्छेदकधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकत्वावच्छिन्नसामान्यभेदनिवेशावश्यकतयाप्रतियोगितावच्छेदकतातिरिक्तावच्छेदकतायाः पर्याप्त्यस्वीकारेवन्हित्वावच्छिन्नप्रकारत्वादौपर्याप्तिघटिनतादृशसामान्यभेदसत्वाद्वन्हिसाध्यकेऽव्याप्तिरितियद्रूपावच्छिन्नप्रतियोगितात्वे ननिवेशः॥ नन्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मानवच्छिन्नत्वमेवनिवेश्यंकिंपर्याप्तिघटितसामान्यभेदनिवेशेनेति वाच्यं॥ एकत्रासन उभयत्रपर्याप्त्ययोगेनवन्हित्वस्यापिमहानसीयवन्हित्वावच्छिन्नाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणतयाऽव्याप्तेःपर्याप्तिघटितदर्शितसामान्यभेदनिवेशावश्यकत्वात्॥ समवायेनघटादौसाध्येसंयोगेनघटादावतिव्याप्तिरिति॥ ननुकालिकसंबंधावच्छिन्नप्रतियोगिताकधूमाभावस्यप्रतियोगिवैयधिकरण्याभावेनकालिकसंबंधावच्छिन्नधूमत्वावच्छिन्नप्रतियोगित्वेप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभेदसत्वाद्धूमवान्वन्हेरित्यत्रैवातिव्याप्तिसंभवेघटसाध्यकपर्यंतानुधावने किंबीजमितिचेज्जन्यमात्रस्यकालत्वाभावेकालिकसंबंधेनधूमाभावस्यप्रतियोगिवैयधिकरण्यसंभवएवेत्यवेहि॥ नचतथापिस्वरूपसंबंधावच्छिन्नप्रतियोगिताकधूमाभावस्यतेनसंबंधेनधूमाधिकरणाप्रसिद्ध्याप्रतियोगितावच्छेदकस्वरूपसंबंधेनप्रतियोगिवैय्य

धिकरण्याभावेनस्वरूपसंबंधावच्छिन्नधूमत्वावच्छिन्नप्रतियोगित्वेतादृशप्रतियोगिताभेदसत्वेनसंभवत्येवधूमसाध्यकेऽतिव्याप्तिरितिवा
च्यं॥ स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणयत्किंचिद्वृत्त्यनुयोगिकत्वोभयाभाववत्स्वप्रतियोगितावच्छेदकसंबंधसा
मान्यकत्वरूपवक्ष्यमाणप्रतियोगिवैयधिकरण्यस्यस्वरूपसंबंधेनधूमाभावेऽक्षतत्वात्॥ अतएवहेतुसमानाधिकरणाभावीयप्रतियोगि
तायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वनिवेशप्रयोजकंवाच्यंज्ञेयत्वादित्यादावग्रिमाव्याप्तिकथनंसंगच्छतेव्यधिकरणसंबंधावच्छिन्न
वाच्यत्वाभावस्यापिदर्शितोभयाभावघटितवक्ष्यमाणप्रतियोगिवैयधिकरण्यसंभवात्॥ एतेनव्यधिकरणसंबंधावच्छिन्नवाच्यत्वाभा
वस्यप्रतियोगितावच्छेदकसंबंधघटितप्रतियोगिवैयधिकरण्याभावेनाव्याप्त्यभावमाशंक्यादिपदग्रस्वतादात्म्यसंबंधेनवाच्यसाध्यक
स्थलेऽव्याप्तितात्पर्यकल्पनंकेषांचिदनादेयमेव॥ कालिकसंबंधेनवाच्यत्वाभावस्यात्मादौप्रतियोगिवैयधिकरण्यसंभवाच्च॥ अथप्रति
योगितावच्छेदकानवच्छिन्नमित्यस्यप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकावच्छिन्नपर्याप्तिकावच्छेदकताकत्वावच्छिन्नभे
दवदित्यर्थकत्वावश्यकत्वेनतदपेक्षयायद्रूपावच्छिन्नप्रतियोगितासामान्येहेतुसमानाधिकरणाभावीयप्रतियोगितात्वावच्छिन्नभेद

निवेशेऽपिव्यभिचारिणिसाध्यतावच्छेदकसंबंधावच्छिन्नयद्रूपावच्छिन्नप्रतियोगितायांसामान्यांतर्गतायांतादृशप्रतियोगिताभेदासत्वे
नातिव्याप्तिवारणात्प्रतियोगितावच्छेदकावच्छिन्नभेदानिवेशोव्यर्थइतिचेन्न॥ सामान्यपदेनतादृशप्रतियोगितात्वव्यापकत्वस्यैवबोध
नात्तदपेक्षयातादृशप्रतियोगितावच्छेदकानवच्छिन्नत्वविवक्षणएवलाघवात्॥ यत्तुयद्रूपावच्छिन्नप्रतियोगितासामान्य इत्यनेनतादृश
प्रतियोगितात्वावच्छिन्नानुयोगिताकत्वमेवविवक्षणीयमित्थंचनातिव्याप्तिर्लाघवंचाक्षतमिति॥ तदसत्॥ अधिकरणतातिरिक्तानु
योगितायांमानाभावेनाधिकरणतातिप्रसक्तधर्मस्याप्यधिकरणतावच्छेदकत्वेनयद्रूपावच्छिन्नयत्किंचित्प्रतियोगिताद्यन्निहेतुसमानाधि
करणाभावीयप्रतियोगिताभेदस्ययद्रूपावच्छिन्नप्रतियोगितात्वावच्छिन्नानुयोगिताकत्वानपायादतिव्याप्त्यवारणात्तादृशप्रतियोगितात्व
व्यापकत्वविवक्षावश्यकत्वेनतत्पक्षेगौरवादित्यभिप्रायात्॥ इतिमिश्ररीत्यापरिष्कारेगौरवमिति॥ कालिकसंबंधेनगग
नादेर्वृत्तित्वकल्पेकालोघटवान्कालपरिमाणादित्यादावव्याप्तिर्न अव्यत्यासपक्षेपिसत्वेनयश्चोभयोःसमोदोषःसनैकतरेणोद्भावनीयइ
तिन्यायादेतत्कल्पेतदनुद्भावनं॥ अथवागुरुधर्मावच्छिन्नसाध्यकेयद्रूपावच्छिन्नप्रतियोगित्वाप्रसिद्ध्यापारिभाषिकमेवच्छेदकत्वंनिवेश्यं

तथाचयद्रूपावच्छिन्नवन्हिष्ठात्यंताभावीययद्यत्संबंधावच्छिन्नास्वरूपसंबंधावच्छिन्नावायाप्रतियोगितातदनवच्छेदकरूपावच्छिन्नंप्रतियोगित्वं
हेतुमन्निष्ठाभावीयतत्तत्संबंधावच्छिन्नास्वरूपसंबंधावच्छिन्नावायाप्रतियोगितातदवच्छेदकावच्छिन्नभिन्नमितिविवक्षणीयंगुरुधर्मावच्छि
न्नसाध्यकेगुरुसमनियतलघुधर्मावच्छिन्नप्रकारकप्रमाविशेष्यतात्वावच्छिन्नप्रतियोगित्वमेवयद्रूपनिष्ठपारिभाषिकावच्छेदकतानिरूपकंप्र
सिध्यति॥ व्यभिचारिणिसाध्यप्रकारकप्रमाविशेष्यत्वाभावस्यापिलक्षणघटकतयातत्प्रतियोगिताभिन्नंसाध्यतावच्छेदकनिष्ठपारिभाषिका
वच्छेदकतानिरूपकंप्रतियोगित्वंनभवतीतिनातिव्याप्तिः॥ इत्थंचकालोघटवानित्यादौकालिकावच्छिन्नघटप्रकारकप्रमाविषयतात्वाव
च्छिन्नंप्रतियोगित्वंलक्षणघटकसमवायावच्छिन्नघटत्वपटत्वाद्यवच्छिन्नप्रकारताकप्रमाविशेष्यतात्वावच्छिन्नाभावीयप्रतिताभिन्न
मितिलक्षणसमन्वयः॥ पारिभाषिकावच्छेदकत्वशरीरनिविष्टप्रतियोगित्वयोरेकसंबंधावच्छिन्नत्वविवक्षायांप्रतियोगिवैय्यधिकरण्य
त्यागस्यग्रंथकृतावक्ष्यमाणत्वान्नक्षतिः॥ अथयद्रूपावच्छिन्नेप्रतियोगितावच्छेदकावच्छिन्नभेदनिवेशेमहानसीयवन्ह्यभावमादाया
व्याप्तिवारणायहेतुसमानाधिकरणाभावेस्वावच्छिन्नसामानाधिकरण्यस्वाश्रयप्रतियोगिकत्वोभयसंबंधेनसाध्यतावच्छेदकविशिष्टा-

न्यत्वंविशेषणंदेयं॥ सद्धेतौहेतुसमानाधिकरणस्यसर्वस्याप्यभावस्यसाध्यसमानाधिकरणतयातदन्याभावाप्रसिद्धिरतःस्वाश्रयप्रति
योगिकत्वस्यनिवेशः॥ व्यभिचारिणिसाध्याभावसंग्रहायस्वावच्छिन्नसामानाधिकरण्यनिवेशः॥ विशिष्टसत्तावान्जातेरित्यादौविशिष्टस
त्ताभावसंग्रहायसामानाधिकरण्यघटकाधिकरणतायाःस्वावच्छिन्ननिरूपकताकत्वनिवेशः॥ अथैवंकपिसंयोग्येतद्वृक्षत्वादित्यादौक
पिसंयोगाभावस्यलक्षणाघटकत्वात्प्रतियोगिवैय्यधिकरण्यस्यनैरर्थक्यापत्तिः॥ नचसंयोगीसत्वादित्यादौसाध्याभावस्यलक्षणाघटक
तयाऽतिव्याप्तिवारणायसामानाधिकरण्यस्यानिरवच्छिन्नवृत्तित्वघटितस्यैवनिवेश्यतयासद्धेतौसंयोगाभावस्यलक्षणघटकतयाऽव्याप्ति
वारणायप्रतियोगिवैय्यधिकरण्यस्यावश्यकतेतिवाच्यं॥ संयोगसाध्यकव्यभिचारिणिगुणाद्यवृत्तित्वावच्छिन्नाभावस्यलक्षणघटकत
यासंयोगस्यापितत्प्रतियोगितावच्छेदकावच्छिन्नत्वादतिव्याप्तिवारणसंभवेनसामानाधिकरण्यघटकवृत्तित्वेनिरवच्छिन्नत्वानिवेशादिति
चेन्न॥ संयोगेनद्रव्यस्याव्याप्यवृत्तित्वेधूमवान्वन्हेरित्यादौधूमाभावस्यायोगोलकासंयुक्तपदार्थाभावस्यचधूमवतिस्वरूपसंबंधेनसत्वाल्लक्ष
णाघटकत्वेनातिव्याप्त्यापत्त्यासामानाधिकरण्यघटकवृत्तित्वेनिरवच्छिन्नत्वस्यावश्यकत्वेनकपिसंयोगसाध्यकेकपिसंयोगाभावस्यापिलक्ष

णघटकतयाऽव्याप्तेर्वारणायप्रतियोगिवैय्यधिकरण्यस्यावश्यकत्वान्नशून्यत्वासपक्षावलंबनमसंगतमितिचेन्न॥ एवंसतिप्रमेयवा
न्वाच्यत्वादित्यादौसर्वेषामेवाभावानामुक्तोभयसंबंधेनसाध्यविशिष्टतयातदन्याभावाप्रसिद्ध्याऽव्याप्त्यापत्तिः॥ नच कालपक्षकव्यभिचा
रिणिसाध्याभावस्यव्यभिचारनिरूपकाधिकरणावृत्तित्वावच्छिन्नाभावस्यचकालिकसंबंधेनसाध्यसमानाधिकरणतयालक्षणाघटकत्वेना
न्याभावमादायातिव्याप्तिवारणायसामानाधिकरण्यघटकवृत्तिःस्वरूपसंबंधेनविवक्षणीयातथाचप्रमेयसाध्यकेघटात्मकाभावस्यैवप्र
सिद्धानाप्रसिद्धिनिबंधनाव्याप्तिरितिवाच्यं॥ देशेवृत्तौकालस्यावच्छेदकत्वेनकालपक्षकव्यभिचारिणिसाध्याभावस्यनिरवच्छिन्नवृ
त्तित्वघटितसाध्यसामानाधिकरण्यासंभवेनोक्तोभयसंबंधेनसाध्यतावच्छेदकविशिष्टान्यत्वसंभवेनातिव्याप्तेरभावात् सामानाधिकर
ण्यघटकवृत्तौसंबंधविशेषानिवेशेनप्रमेयसाध्यकेघटात्मकाभावस्यापिसमवायादिनासाध्यसमानाधिकरणतयातदन्याप्रसिद्धेर्दुर्वारत्वा
त्॥ यद्यपिविषयितासंबंधावच्छिन्नावृत्तिनिष्ठप्रतियोगिताकाभावेसाध्येसद्धेतौतत्तद्वृत्त्यात्मकस्यसाध्याभावस्यवृत्त्यनियाम
कविषयित्वादिसंबंधेनसाध्यवत्यवृत्तितयानिरुक्तोभयसंबंधेनसाध्यतावच्छेदकविशिष्टान्यत्वादव्याप्तेर्वारणायसामानाधिकरण्यकुक्षौ

वृत्तित्वंपरित्यज्यसंबंधित्वंनिवेश्यंतथाचसत्तावान्मेयत्वादित्यादौव्यभिचारिणिसत्ताभावस्यव्यभिचारनिरूपकाधिकरणावृत्त्यभावस्यचसाध्या
धिकरणेज्ञानादौविषयितासंबंधेनसंबध्दतयातदन्यत्वासंभवादुदासीनपदार्थाभावमादायातिव्याप्तिवारणायसामानाधिकरण्यघटकसंब
न्धत्वंदैशिकविशेषणतयावाच्यंतथाचप्रमेयसाध्यकेभावात्मकाभावस्यलक्षणघटकत्वंसुलभं॥तथापिरूपप्रतियोगिकाभाववान्मेयत्वादित्या
दौतत्तद्रूपात्मकानांसाध्याभावानांस्वरूपसंबंधेनसाध्यवत्यवृत्तितयासाध्यतावच्छेदकविशिष्टान्यत्वेनहेतुसमानाधिकरणतयाचलक्षण
घटकत्वेनाव्याप्तिप्रसक्त्यास्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधेनैवसाध्यसामानाधिकरण्यस्यवाच्यतयाप्रमेयसाध्यकेचतथावि
धभावात्मकाभावस्यसमवायसंबंधेनसाध्यसमानाधिकरणतयासाध्यतावच्छेदकविशिष्टान्याभावाप्रसिद्धेर्दुर्वारत्वात्॥नन्वेवंरूपप्रति
योगिकाभावसाध्यकेऽव्याप्तिवारणायसाध्यवत्ताग्रहविरोधितानियामकसंबंधेनैवसाध्यसामानाधिकरण्यंविवक्षणीयंतथाचप्रमेयसा
ध्यकेस्वरूपसंबंधस्यैवतथात्वेनघटात्मकाभावस्यप्रसिद्धिःसुलभैवेतिवाच्यं॥सत्ताभाववान्जात्यभावात्कालिकसंबंधावच्छिन्नप्रति
योगिताकाकाशाभावाभाववानात्मत्वादित्यादौसाध्यवत्ताग्रहविरोधितानियामकीभूतसमवायकालिकविशेषणतादिसंबंधेनसा

ध्याधिकरणवृत्तित्वस्याप्रसिद्ध्याऽव्याप्त्यापत्त्या प्रतियोगिमत्ताग्रहविरोधितानियामकसंबंधेनैववृत्तित्वस्यविवक्षणीयत्वादितिदिक् ॥
**संबंधादीति** ॥ समवायस्वरूपादिसंबंधादीत्यर्थः ॥ आदिनास्त्वावच्छिन्नत्वनिरवच्छिन्नत्वयोःसंग्रहः ॥ **एवंसतीति** ॥ **नन्वत्र**मह
नसीयवन्हिमान्धूमादित्यत्रवन्हित्वादिरूपसाध्यतावच्छेदकस्योक्ताभावप्रतियोगितानवच्छेदकत्वेनातिव्याप्तिसंभवेमहानसीयवन्हि
भिन्नवन्हिसाध्यकानुधावनंव्यर्थं ॥ **नच**साध्यतावच्छेदकसामान्येऽनवच्छेदकत्वनिवेशेनोक्तदोषःसाध्यतावच्छेदकसामान्यांतर्गत
स्यमहानसीयत्वस्यानवच्छेदकत्वविरहेणमहानसीयवन्हिसाध्यकस्थलेऽतिव्याप्त्यसंभवइति**वाच्यं** ॥ **तथासति**प्रमेयसाध्यताव
च्छेदककेऽव्याप्तिःसाध्यतावच्छेदकसामान्यांतर्गतस्यघटत्वादेरनवच्छेदकत्वासंभवात् ॥ **तत्र**परंपरासंबंधेनप्रमेयत्वस्यसाध्यतावच्छे
दकत्वमित्यपिनसंभवतियत्नैकार्पीत्यग्रिमग्रंथेनसाध्यतावच्छेदकसकलव्यक्तीनांतादृशाभावप्रतियोगितावच्छेदकत्वएवपरंपरासंबं
धेनानुगतधर्मस्यसाध्यतावच्छेदकत्वस्योक्तत्वेनप्रमेयसाध्यतावच्छेदककस्थलेसाध्यतावच्छेदकसामान्यांतर्गतस्यगगनाभावादेस्ता
दृशाभावप्रतियोगितावच्छेदकत्वविरहेणतत्रपरंपरासंबंधेनप्रमेयत्वादेःसाध्यतावच्छेदकत्वस्यग्रंथकारानुमतत्वात् ॥ एकैकसाध्य

तावच्छेदकव्यक्तिरितिपाठकल्पनंप्रामादिकंप्रमेयसाध्यतावच्छेदककस्थलेगगनाभावादेस्तादृशाभावप्रतियोगितानवच्छेदकत्वेनपरंपरा
संबंधेनप्रमेयत्वस्यसाध्यतावच्छेदकत्वाभ्युपगमस्यनिरर्थकत्वादितिचेन्न ॥ चक्रवर्तिलक्षणेवस्तुतस्त्वित्यादिप्रतियोगिवैय्यधिकरण्य
निष्कर्षप्रमेयसाध्यतावच्छेदककस्थलेप्रमेयत्वस्यपरंपरयासाध्यतावच्छेदकत्वस्यग्रंथकृतोक्तत्वेनतन्मताभिप्रायकत्वात् ॥ वस्तुतस्तु
साध्यतावच्छेदकस्यसाध्यतावच्छेदकत्वेननप्रवेशोऽभिप्रेतःयोधर्मइत्यादिनाविशिष्यनिवेशस्याभिप्रेतत्वान्महानसीयवह्निसाध्यकव्य
भिचारिणियोधर्मइत्यादिनाविशिष्योपादेयमहानसीयत्ववह्नित्वयोर्मध्येमहानसीयत्वस्यावच्छेदकत्वान्नातिव्याप्तिः ॥ प्रमेयसाध्यता
वच्छेदककस्थलेविशिष्योपादेयप्रमेयगगनाभावरूपसाध्यतावच्छेदकेऽनवच्छेदकत्वसत्वान्नाव्याप्तिः ॥ योधर्मइत्यादिनावह्नित्वमात्रो
पादानेवह्नित्वावच्छिन्ननिरूपितैवव्याप्तिः ॥ ननुमहानसीयवह्निनिरूपितेत्युक्तदोषासंभवेनमहानसीयवह्निभिन्नवह्निसाध्यकानुसरणं ॥
तेनरूपेणानवच्छेदकत्वग्रहादिति ॥ साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नविशेष्यकानवच्छेदकत्वप्रकारकव्याप्तिज्ञा
नस्यकारणताभ्युपगमेवह्नित्वत्वावच्छिन्नविशेष्यकधूमसमानाधिकरणात्यंताभावप्रतियोगितानवच्छेदकत्वप्रकारकस्यधूमसमा

नाधिकरणात्यंताभावप्रतियोगितानवच्छेदकवन्हित्ववद्वन्हिसमानाधिकरणधूमवानितिज्ञानस्यैववन्हित्ववत्तानित्यनुमितौसरूपतोवन्हित्वा
वगाहिन्यावन्हिमानित्याद्यनुमितौचकारणत्वंकल्पनीयंतथाचकदाचिद्वन्हिमान्कदाचिद्वन्हित्ववद्वानित्यनुमितिर्नस्यादित्यनुपपत्तिःकेव
लान्वयिग्रंथेउच्यतइतिप्रघट्टकार्थः॥अनवच्छेदकत्वेनवन्हित्वादिभानेति॥समानविषयकत्वेनप्रतिबंधकतामतेद्रव्यत्वादौव्यापकता
नवच्छेदकत्वभानस्यतत्रानिर्धर्मितावच्छेदककव्यापकतावच्छेदकत्वग्रहप्रतिबंधकत्वंसंभवतीतिप्रायशइति॥शाब्दजन्यज्ञानेनास्यै
स्यनियामकत्वादनवच्छेदकत्वेनवन्हित्वबोधतात्पर्येनद्रव्यत्वभानमितिप्रायशइतिकेचित्॥नन्वनवच्छेदकधर्मितावच्छेदकतयाय
स्यभानंतस्यैवविधेयतावच्छेदकतयाभाननियमइतिनैषदोषइत्यतोदोषांतरमाहैवमिति॥वह्निव्यभिचारितयेतिप्रकारत्वंतृतीयार्थस्त
स्यहेतुज्ञानेऽन्वयः॥नचहेत्वाभासलक्षणघटकसमूहालंबनानुमितौकिंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितानवच्छेदकत्वप्रकारताक
त्वमेवव्यभिचारस्यहेत्वाभासत्वोपपत्तयेनिवेश्यंनत्वनुमितिकरणतावच्छेदककोटौवन्हित्वत्वाद्यवच्छिन्नेऽनवच्छेदकत्वावगाहित्वंनिवे
श्यतेप्रयोजनाभावादितिवाच्यं॥तथासतिव्याप्तिज्ञानप्रतिबंधकतयाव्यभिचारस्यकथायामुपन्यासोनस्यात्॥केवलान्वयिग्रंथोक्तंक

दाचिद्वन्हिमानित्यनुमितिः कदाचिद्वन्हित्ववत्वानित्यनुमितिरित्यनियमरूपदोषमुद्धर्तुंस्वयंतत्रनियामकमाह ॥ यत्रेति ॥ यादृशान्यायप्रयोग
इत्यर्थः ॥ तेनतेनरूपेण ॥ वन्हित्वत्वादिना ॥ तत्तद्धर्माणां ॥ वन्हित्वादीनां ॥ व्याप्तिघटकत्वं ॥ व्याप्तिकुक्षिप्रविष्टानवच्छेदकत्वधर्मितावच्छेदककु
क्षिप्रविष्टभेदप्रतियोगितानिरूपिततत्तद्धर्मावच्छिन्नावच्छेदकत्वं ॥ प्रवेशः ॥ निरुक्तभेदप्रतियोगितानिरूपितानवच्छिन्नावच्छेदकत्वरूपंव्या
प्तिघटकत्वं ॥ इत्थंचवन्हित्वत्वंद्विविधंवन्हित्ववदितरावृत्तित्वरूपंवन्हीनरावृत्तित्वरूपंचेति ॥ तत्रप्रथमवन्हित्वत्वावच्छिन्नेऽनवच्छेदकत्वाव
गाहिधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकंयद्वन्हित्ववदितरावृत्तितदवच्छिन्नसमानाधिकरणधूमवानितिज्ञानंवन्हित्ववत्वानित्यनु
मितौकारणंद्वितीयवन्हित्वत्वावच्छिन्नेऽनवच्छेदकत्वावगाहिधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकंयद्वन्हीतरावृत्तितदवच्छिन्नस
मानाधिकरणधूमवानितिज्ञानंवन्हिमानित्यनुमितौकारणमितिनियामकभेदान्नदर्शितद्विविधानुमित्यनियमइतिभावः ॥ इदंचगुरुध
र्मस्याप्यवच्छेदकत्वमंगीकृत्यतेनवन्हित्ववदितरावृत्तित्वस्यवन्हीतरवृत्तित्वत्वस्यैवावच्छेदकत्वेनाप्रसिद्धत्वेपिनक्षतिः ॥ ननुवन्हीतरावृत्ति
त्वस्यवन्हित्वभिन्नवन्हिगतरूपादावपिसत्वात्सकलवन्हिवृत्तित्वमपिद्विविधवन्हित्वत्वशरीरेनिवेशनीयमित्यतआह ॥ वन्हीतराव

त्तित्वस्येति ॥ सकलवन्हिवृत्तित्वविषयतानिवेशाइति ॥ कारणतावच्छेदककोटावित्यादिः ॥ ननुतर्हिसकलवन्हिवृत्तित्वरूपवन्हित्वत्ववि
षयतैवकारणतावच्छेदककोटौनिवेश्यानतुवन्हीतरावृत्तित्वविषयताविनिगमकाभावादित्यतोविनिगमकमाह ॥ सकलवह्न्यादिवृत्ति
त्वस्येति ॥ वन्हिनिष्ठभेदप्रतियोगितानवच्छेदकत्वंसकलवन्हिवृत्तित्वं ॥ अनुमितिप्रसंगादिति ॥ वन्हित्वावच्छिन्नानुमितिजनक
स्येंधनसमानाधिकरणाभावप्रतियोगितानवच्छेदकंयत्सकलवन्हिवृत्तितदवच्छिन्नसमानाधिकरणेंधनवानितिपरामर्शस्यप्रमात्वप्रसंग
इत्यर्थः ॥ यत्तुप्रकृतानुमितिविधेयतावच्छेदकतायावन्हित्वत्वावच्छिन्नएवपर्याप्ततयादर्शितपरामर्शस्यतदवच्छिन्नेऽनवच्छेदकत्वावगा
हित्वाभावान्नोक्तप्रसंगइतिपूर्वपक्षयित्वोभयत्वावच्छिन्नसाध्यतावच्छेदककस्थलेएवप्रकृतानुमितिविधेयतावच्छेदकतायादृशधर्मावच्छि
न्नेपर्याप्तातदवच्छिन्नेत्यादिविवक्षणंनतुसर्वत्रेतिसमाधानं ॥ तद् सत्प्रकृतानुमितिविधेयतावच्छेदकतावच्छेदकवन्हित्वत्वघटकवन्हीतरावृत्ति
त्वविषयतायाएवकारणतावच्छेदकत्वंलाघवादुक्तंनत्रविनिगमनाविरहेणतद्घटकसकलवन्हिवृत्तित्वविषयतायाएवकारणतावच्छेदकत्वं
नतुवन्हीतरावृत्तित्वविषयतायाइतिशंकायामतिप्रसंगदानात् ॥ येनरूपेणोपस्थितेवन्हित्वादाविति ॥ अत्रतृतीयायाः प्रका

रिताररूपंवैशिष्ट्यमर्थः ।।उपस्थितइत्यत्रविशेष्यतावत्कप्रत्ययार्थौवन्हित्वविशेषणंवन्हित्वादावित्यत्रसंशयान्वयिविशेष्यत्वंसप्तम्यर्थः।
इतरसाधारण्यसंशयः ।। इतरवृत्तित्वप्रकारकसंशयस्तथान्वयद्रूपप्रकारकोपस्थितिविशेष्यीभूतवन्हित्वादिविशेष्यकेतरवृत्तित्वप्रका
रकसंशयउत्पत्त्याश्रयत्वाभाववानित्यर्थः ।।अत्रयद्यपिधर्मिप्रसिद्ध्यप्रसिद्धिभ्यांनिषेधानुपपत्तिः ।। नचानाहार्यःसन्निति शेषेणानाहा
र्यत्वविशिष्टोत्पत्तौनिषिद्धायांविशेष्यवतिविशिष्टाभावस्यविशेषणाभावपर्यवसन्नत्वादाहार्यत्वनियमलाभः ।। तथाचोक्तसंशयस्याहा
र्यत्वनियमान्नोक्तदोषइतिवाच्यं ।। एवमपिवन्हीतरावृत्तित्वप्रकारकनिर्धर्मितावच्छेदककज्ञानसत्वेपिजातित्वादिनेतरसाधार
ण्यसंशयस्यानाहार्यस्यसंभवेनव्यभिचारस्यदुर्वारत्वात् ।। तथापिस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितयदि
तरवृत्तित्वत्वावच्छिन्नप्रकारताकत्वैकक्षणावच्छिन्नैकात्मवृत्तित्वोभयसंबंधेनयद्धर्मावच्छिन्नप्रकारताविशिष्टसंशयस्याहार्यत्वनिय
मस्तद्रूपावच्छिन्नविशेष्यताकानवच्छेदकत्वप्रकारकज्ञानस्यानुमितिजनकत्वमित्यभिप्रायात् ।। यद्वायद्धर्मावच्छिन्नविशेष्यकेतरवृत्तित्वप्र
कारकज्ञानसामान्यस्याहार्यत्वमित्यर्थान्नदोषः ।। नचैवंसंशयपदवैयर्थ्यंशंक्यंसंशयपदस्यप्रतिबध्यज्ञानपरतयाप्रतिबध्यज्ञानंनजाय

तेऽपित्वप्रतिबध्याहार्यमेवजायतइत्युक्तार्थलाभोपयोगित्वात् ॥ **वस्तुतस्तु**पस्थितेत्यस्यभावत्कांततयोपस्थितौसत्यामित्यर्थः ॥ वह्नित्वाद
विति शेषः ॥ नजायतइतिप्रतिबध्यप्रतिबंधकभावलाभार्थंसंशयपदंप्रतिबध्यत्वलाभार्थं ॥ तथाचयत्किंचिद्धर्मावच्छिन्नविशेष्यकयद्धर्मप्रका
रकज्ञानंस्वसमानधर्मितावच्छेदककेतरवृत्तित्वप्रकारकसंशयप्रतिबंधकंप्रतिबध्यंचतेनरूपेणानवच्छेदकत्वप्रकारकज्ञानंकारणमित्य
र्थः ॥ प्रतिबध्यंचेत्युक्त्येतरावृत्तित्वव्याप्यवत्वस्यव्यावृत्तिः ॥ **अथ**साध्येतरावृत्तित्वावच्छिन्नेऽनवच्छेदकत्वावगाहिज्ञानस्यानुमितिकार
णत्वेवह्निधूमोभयवान्धूमादित्यादौवह्निधूमोभयरूपसाध्यभिन्नप्रत्येकवह्न्याद्यवृत्तित्वस्यतादृशोभयत्वेऽसत्वादनुमितिकारणत्वेनाभि
मतज्ञानस्यप्रमात्वानुपपत्तिः ॥ **नन्व**साध्यभेदानुयोगितावच्छेदकंयद्रूपंतदवच्छिन्नापर्याप्तिकत्वमेवसाध्येतरावृत्तित्वंविवक्षितंनिरुक्तोभ
यभिन्नत्वस्यप्रत्येकंसत्वेपितादृशभेदानुयोगितावच्छेदकप्रत्येकमात्रवृत्तिधर्मावच्छिन्नापर्याप्तिकत्वस्यतादृशोभयत्वेसत्वान्नोक्तदोषइतिवा
च्यं ॥ **तथापि**प्रमेयसाध्यकेसाध्यभिन्नाप्रसिद्धेरुक्तदोषस्यदुर्वारत्वादिति**चेन्न** ॥ **यत्र**साध्यतावच्छेदकस्यस्वरूपतःकिंचिद्रूपेणवेतिद्वे
धानुमितौभानंप्रसक्तंतत्रैवतादृशानुमित्योःकदाचित्कत्वनिर्वाहायसाध्येतरावृत्तित्वसाध्यतावच्छेदकवदितरावृत्तित्वरूपावच्छिन्नेऽनवच्छे

दकत्वावगाहिज्ञानस्यकारणत्वकल्पनात् ॥ तत्तद्व्यक्तिगमकताप्रयोजकमिति ॥ तत्तद्व्यक्तिविधेयताकानुमितिजनकज्ञानीयमुख्यप्रका
रताप्रयोजकमित्यर्थः ॥ **दंडिसंयोगत्वरूपनानाधिकरणवृत्तितावच्छेदकेति** ॥ नानाधिकरणवृत्तितावच्छेदकहेतुतावच्छेद
कावच्छिन्नहेतुकस्थलेषुसर्वत्रपरंपरासंबंधेनदंडत्वादीनांसाध्यतावच्छेदकत्वंनसंभवति ॥ यत्रएकएवदंडोनानापुरुषेषुवर्ततेतत्रदंडि
मान्तदंडिसंयोगादित्यत्रतद्दंडव्यक्तेरेवहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसंभवेनपरंपरासंबंधेनदंडत्वादीनांसाध्य
तावच्छेदकत्वासंभवादतः स्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवद्वृत्तितावच्छेदकत्वसंबंधेनसकलसाध्यतावच्छेदकविशिष्टहे
तुतावच्छेदकविशिष्टहेतुकस्थलेसर्वत्रपरंपरासंबंधेनदंडत्वादिकंसाध्यतावच्छेदकंतद्दंडिसंयोगहेतुकस्थलेसकलसाध्यतावच्छेदकान
र्गततद्दंडव्यक्तिवैशिष्ट्यंतत्ताविशिष्टदंडिप्रतियोगिकत्वविशिष्टसंयोगत्वेःसत्वात्तत्रपरंपरासंबंधेनदंडत्वादेः साध्यतानवच्छेदकत्वेपि
नक्षतिः ॥ **स्वाश्रयघटितपरंपरासंबंधेनयत्रधर्मेति** ॥ अनवच्छेदकत्वाश्रयधर्मवत्वेसतिसामानाधिकरण्यनिरूपकतावच्छे
दकतयाभासमानत्वंदंडनिष्ठविधेयतावच्छेदकताकानुमितौनंत्रमित्यर्थः ॥ अवच्छेदककुक्षिप्रविष्टानामवच्छेदकत्वाभिप्रायेणशंकते ॥

**अर्थेति** ॥ तत्रोपलक्षितदंड एवेति ॥ प्रतियोगितानवच्छेदकांशेभासमानत्वेसत्यनवच्छेदकत्वमुपलक्षणत्वमत्रविवक्षितं ॥ निरवच्छिन्ना
वच्छेदकतायांतदाश्रयाधिकरणतायाः प्रतियोगितानतिप्रसक्तत्वंनियामकमव्यासज्यवृत्तिसावच्छिन्नावच्छेदकतायांतदवच्छेदकावच्छिन्ना
धिकरणतायाः प्रतियोगितानतिप्रसक्तत्वंनियामकव्यासज्यवृत्त्यवच्छेदकतायांचतदाश्रयैकतरविशिष्टापराधिकरणतायाः प्रतियोगिता
नतिप्रसक्तत्वंनियामकमितिनियममभिप्रेत्यसमाधत्ते ॥ **स्वरूपतोभासमानस्यैवेति** ॥ **उक्तानुशयेनैवेति** ॥ उक्तात्वरसेनैवे
त्यर्थः ॥ **अनवच्छिन्नावच्छेदकत्वमिति** ॥ धर्मानवच्छिन्नावच्छेदकत्वमित्यर्थः ॥ अथगुणवान्द्रव्यत्वादित्यादौविषयितया गुणत्वविष्ट
ज्ञानाभावस्यहेतुसमानाधिकरणस्यप्रतियोगितायांसाध्यतानवच्छेदकस्यावच्छेदकत्वादव्याप्तिरतस्तादृशप्रतियोगितावच्छेदकतायांसा
ध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वस्यनिवेश्यतयादंडिमानित्यादावनवच्छिन्नतादृशसंयोगावच्छिन्नावच्छेदकताया अप्रसिद्धिः ॥
तथाहिसंयोगेनविद्यमानस्यसखंडत्वनियमात्तदवच्छिन्नाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंयोगसंबंधावच्छि
न्नत्वेप्यनवच्छिन्नत्वाभावात् ॥ समवायेनविद्यमानघटत्वाद्यवच्छिन्नाभावीयप्रतियोगितावच्छेदकतायाअनवच्छिन्नत्वेपिसंयोग

संबधावच्छिन्नत्वाभावात् ॥ **नच** पारिभाषिकावच्छेदकत्वघटकानवच्छेदकत्वघटकसंबंधेनतादृशावच्छेदकत्वमभिप्रेतमिति**वाच्यं** ॥
अग्रिमातिव्याप्त्यसंगतेः ॥ व्यभिचारनिरूपकाधिकरणान्यत्वत्वादेःस्वरूपसंबंधावच्छिन्नधर्मानवच्छिन्नावच्छेदकत्वसंभवात् ॥ **नचा**खंडो
पाधौमानाभावाद्व्यभिचारनिरूपकाधिकरणान्यत्वत्वादेःस्वरूपतोऽभानान्नानिष्ठावच्छेदकतायाअनवच्छिन्नत्वाभावान्नासंगति**रिति वाच्यं**
॥ **तथा**प्यखंडोपाधिस्वीकर्तृमतेऽसंगतेर्दुर्वारत्वात् ॥ **अत्र केचित्** ॥ एतत्कल्पेऽवच्छेदकतायांसाध्यतावच्छेदकताघटकसंबंधावच्छि
न्नत्वंनदेयंप्रयोजनाभावात् ॥ **नच** गुणवान्द्रव्यत्वादित्यादौपूर्वोक्तरीत्याव्याप्ति**रिति वाच्यं** ॥ जातेःसमवायेनैवस्वरूपतोऽवच्छेदकत्वा
द्विषयितासंबंधावच्छिन्नगुणत्वनिष्ठावच्छेदकतायाअनवच्छिन्नत्वाभावादनवच्छेदकत्वस्यसाध्यतावच्छेदकेऽक्षतत्वात् ॥ **नच निरूपितत्व**
संबंधेनजातेःस्वरूपतोभानस्याग्रेव्यवस्थापितत्वाद्गुणसाध्यकसद्धेतावच्छेदकतायांसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वानिवे
शेनिरूपितत्वसंबंधेनगुणत्वविशिष्टप्रकारित्वाभावस्यहेतुसमानाधिकरणस्ययाप्रतियोगितातन्निरूपितानवच्छिन्नावच्छेदकतायाःसाध्य
तावच्छेदकेसत्वादव्याप्तिरिति**वाच्यं** ॥ गुणत्वविशिष्टप्रकारित्वाभावस्यप्रतियोगिवैय्यधिकरण्यमेवनसंभवति ॥ **तथा**हितादृशाभावोय

दिसमवायेनतदाप्रतियोगितावच्छेदकसमवायसंबंधेनप्रकारित्वस्याधिकरणाप्रसिद्धेः ॥ यदिस्वरूपसंबंधेनतदातदीयप्रतियोगितानसा
ध्यतावच्छेदकसंबंधावच्छिन्नेतिनदोषइत्याहुः ॥ तदसत् ॥ समवायेनैवतदभावमादायाव्याप्तिस्तस्मिन्यथाश्रुतप्रतियोगिवैयधिकर
ण्याभावेपिप्रतियोगितावच्छेदकसंबंधादिधर्मिकोभयाभावघटितस्यतस्याक्षतत्वात् ॥ अपरेतुनिरुक्तावच्छेदकभेदोनसाध्यतावच्छेदके
निवेश्यतेऽपितुसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकत्वीयपर्याप्तिसंबंधावच्छिन्ननिरवच्छिन्नावच्छेदकत्वाभावएवेत्यभि
प्रायेणशंकासंगतिरितिवदंति ॥ प्रसिद्धानुमानाव्याप्तिंपरिहर्तुमाहैवंचेति ॥ तथाचगुणवान्द्रव्यत्वादित्यादावव्याप्तिवारणायविवक्ष
णीयसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकताशून्यत्वस्यवह्नित्वरूपसाध्यतावच्छेदकेसत्वान्नाव्याप्तिरितिभावः ॥ विशिष्टवि
शेषणकबुद्धावेवविशेषणविशिष्टप्रतियोगिकसंबंधावगाहित्वानुभवात्तत्रैवविशेषरूपेणसंसर्गतानान्यत्रतेनवह्नित्वप्रतियोगिकसम
वायादेर्यत्रसाध्यतावच्छेदकताघटकसंबंधत्वंतत्रहेतुसमानाधिकरणाभावप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसंबंधावच्छि
न्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिरितिशंकानवतारः ॥ यद्वातत्पक्षेसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकत्वीयस्वरूपसंबंधे

नैवहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्यनिवेशनीयत्वान्नदोषः॥साध्यतावच्छेदकताघटकेति॥ **यद्यपिगुणवा**
न्द्रव्यत्वादित्यादौविषयितयागुणत्वविशिष्टाभावमादायाव्याप्तिवारणायावच्छेदकतायांसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वंदेयंतच्च
व्यर्थं॥ कालिकसंबंधेनघटत्वविशिष्टस्यकालिकसंबंधेनसाध्यतायांकालपरिमाणहेतौतादृशसंबंधेनावच्छेदकत्वाप्रसिद्धेः पारि
भाषिकावच्छेदकताघटकावच्छेदकत्वयोरेकसंबंधावच्छिन्नत्वनिवेशस्यैवस्वरूपसंबंधरूपावच्छेदकतानिवेशपक्षेप्रतियोगितावच्छेदक
ताघटकसंबंधेनप्रतियोगितावच्छेदकविशिष्टावृत्तिसाध्यतावच्छेदकताघटकसंबंधेनस्वविशिष्टवृत्तिविषयताकत्वस्यैवसाध्यतावच्छेद
केनिवेश्यतयोक्ताव्याप्तेरपिवारणंसंभवतितथापितथाविधनिरुक्तिनिर्वाहार्थमेवतदुल्लेखइति॥ **यदुपलक्षितेति**॥ **नन्वेवं**तद्वि
शिष्टधर्मावच्छिन्नप्रतियोगिताकाभावतदुपलक्षितधर्मावच्छिन्नप्रतियोगिताकाभावयोर्वैलक्षण्यसंपादनेतुल्ययुक्त्यायदुपलक्षितनिरू
पितसमवायादेःप्रतियोगिताघटकसंबंधत्वंतस्योपलक्षणतयावच्छेदकत्वंयद्विशिष्टनिरूपितसमवायादेःप्रतियोगिताघटकसंबंधत्वं
तस्यविशेषणविधयावच्छेदकत्वमितितद्विशिष्टाभावतदुपलक्षिताभावयोर्वैलक्षण्यंसंभवतितथाचगुणकर्मान्यत्वविशिष्टाभावस्यस्वप्र

तियोगितावच्छेदकविशिष्टप्रतियोगिकसमवायेनगुणादौप्रतियोग्यसामानाधिकरण्यसंभवाद्दीधितिकृतां प्रतियोगितावच्छेदकविशि
ष्टप्रतियोग्यसामानाधिकरण्यनिवेशव्यावृत्त्यसंगतिरत आह ॥ एकत्वेति ॥ अन्यथैवेति ॥ प्रतियोगितायाविशेषणविशेष्योभयप
र्याप्तत्वंस्वीकृत्येत्यर्थस्तथाच घटाधिकरणेएकत्वप्रागभावघटोभयपर्याप्तप्रतियोगिताविशिष्टस्यासत्वात्तदधिकरणेनैकत्वप्रागभावविशि
ष्टघटोनास्तीतिप्रत्ययइतिभावः ॥ विशेषरूपेणसंसर्गत्वास्वीकारेत्वाह ॥ माभूद्धेति ॥ आद्या ॥ उपलक्षणीभूतधर्मावच्छिन्ना ॥ अं
त्या ॥ विशेषणीभूतधर्मावच्छिन्ना ॥ विशेषणविशेष्यभावापन्नयोरिति ॥ नन्वेवं सतिमहानसीयत्वविशिष्टवन्हित्वावच्छिन्नसा
ध्यकेवन्हित्वस्यैवसाध्यतावच्छेदकतयातत्रहेतुसमानाधिकरणमहानसीयत्वविशिष्टवन्हित्वावच्छिन्नाभावीयप्रतियोगितावच्छेदकतायाम
हानसीयत्वादिरूपविशेषणांतर्भावेनैवपर्याप्ततयातदनधिकरणत्वस्यसत्वादतिव्याप्तिरितिचेन्न ॥ एतन्मतेमहानसीयत्वोपलक्षितव
न्हित्ववत्वान्नतद्विशिष्टवन्हित्ववत्वानितिद्विविधानुमितिविधेयतावच्छेदकतायांवैलक्षण्यानुरोधेनाद्याविशेष्यमात्रेपर्याप्ताअंत्याच्चविशे
षणविशेष्ययोर्द्वयोःपर्याप्तेत्यस्यैवस्वीकरणीयत्वात् ॥ वस्तुतस्त्विति ॥ स्वस्यस्वातिरिक्तवृत्तित्वविरहादिति ॥ अत्रेदंचिंत्यं ॥ यादृशां

साध्यतावच्छेदकंविशिष्टमविशिष्टंवायत्रतत्रतादृशमेवावच्छेदकत्वंनिरुक्तौस्वपदेनग्राह्यमन्यथामहानसीयत्वविशिष्टवन्हित्ववत्वान्धूमादि
त्यादावतिव्याप्तिर्हेतुमद्वृत्यभावीयप्रतियोगितावच्छेदकस्यमहानसीयत्वादिविशिष्टवन्हित्वादेर्वन्हित्वविशिष्टसमानाधिकरणाभावप्रतियो
गितावच्छेदकत्वाद्विशिष्टवन्हित्वस्यस्वपदार्थत्वेन्चमहानसीयत्वादिविशिष्टवन्हित्वादेस्तादृशवन्हित्वविशिष्टसमानाधिकरणाभावप्रतियोगि
तावच्छेदकत्वाभावान्नातिव्याप्तिः॥इत्थंन्चदंडिमानित्यादौदंडत्वादिविशिष्टस्यैवस्वपदेनोपादेयतयाहेतुसमानाधिकरणाभावप्रतियोगिता
वच्छेदकंयत्तद्दंडादिनस्यदंडत्वादिविशिष्टसंबंधिनिष्ठाभावप्रतियोगितावच्छेदकत्वाद्दंडत्वादिविशिष्टस्यतद्दतिरिक्तवृत्तित्वंसंभवतीति॥य
त्तुविशिष्टोपलक्षितसाध्यतावच्छेदककयोर्नैकाव्याप्तिस्तथाचहेतुमद्वृत्यभावप्रतियोगितावच्छेदकंयावत्स्वविशिष्टसंबंधिनिष्ठाभावप्रतियो
गितावच्छेदकमितिप्रकृतलक्षणेविशिष्टसाध्यतावच्छेदककेस्वपदेनविशिष्टोपादानेप्युपलक्षितसाध्यतावच्छेदककस्थलेस्वपदंतत्तद्व्यक्ति
परमेवेतिहेतुमद्वृत्यभावप्रतियोगितावच्छेदकतद्व्यक्तेस्तद्व्यक्त्यतिरिक्तवृत्तित्वंनसंभवतीतितन्न॥यत्रैकापिसाध्यतावच्छेदकव्यक्तिर्नस
कलहेतुमद्वृत्तितावच्छेदकेतिग्रंथेनतादृशविशिष्टसाध्यतावच्छेदकत्वस्थलेपिपरंपरासंबंधेनदंडत्वादेःसाध्यतावच्छेदकत्वस्यस्वरसतोल

ब्धस्य भंगापत्तेः॥ यद्रूपावच्छिन्नमनवच्छेदकमिति॥ यदिचैकमात्रपर्याप्तिकमवच्छेदकत्वंनाव्याप्यवृत्तितदा तत्तावच्छेदेन पर्याप्ताव
च्छेदकत्वस्य दंडत्वावच्छेदेनाभावोनघटतइत्युच्यतेतदाप्याह यद्रूपंवेति॥ दंडत्वपृथिवीत्वव्याप्यजातित्वविशिष्टावच्छेद्यत्वाभा
वस्याव्याहतत्वादिति॥ अथावच्छेदकविशेषणस्यावच्छेदकतावच्छेदकत्वमात्रमितिमतेयद्धर्मावच्छिन्नत्वपदस्ययादृशविशेषणविशिष्ट
स्ययस्यसाध्यतावच्छेदकत्वंतन्निष्ठावच्छेदकत्वनिरूपिततन्निष्ठावच्छेदकतानिरूपितावच्छेद्यत्वमेवार्थोनत्ववच्छेदकतायांविशेषणावच्छे
द्यत्वघटितःएकोक्तिभंगापत्तेरवच्छेदककोटिप्रविष्टानामवच्छेदकत्वमतेपियादृशधर्मपरत्वंयच्छब्दस्य तन्निष्ठावच्छेदकत्वनिरूपकत्वमेवतद
र्थस्तत्राद्येतत्तद्दंडावच्छिन्नप्रतियोगितायां दंडनिष्ठावच्छेदकताकत्वस्याव्याहतत्वादव्याप्तिर्दुर्वारैवद्वितीयेपिविशिष्टस्यशुद्धविशेष्यानतिरेकि
तयोक्तरीत्यैवाव्याप्तिरितिकथमेकोक्तौदोषाभावप्रदर्शनमितिचेन्न॥ प्रथमेतादृशयद्धर्माघटकधर्मानवच्छिन्नयद्धर्मनिष्ठावच्छेदकतानि
रूपितावच्छेद्यत्वमेवयद्धर्मावच्छिन्नत्वपदार्थः॥ द्वितीयेयद्धर्मपर्याप्तावच्छेदकताकत्वंतादृशयद्धर्माघटकावृत्तित्वेसतितादृशयद्धर्मघ
टकसामान्यनिष्ठावच्छेदकताकत्वंवातदर्थः॥ पृथिवीत्वव्याप्यजातिमत्वानित्यत्राव्याप्तिवारणायसामान्यपदं॥ प्रमेयसाध्यतावच्छेदककस्थ

लंप्रमेयत्वस्यैवसाध्यतावच्छेदकत्वोपगमान्नाघटकाप्रसिद्धिशंका ॥ परंतुप्रथमेपृथिवीत्वव्याप्यजातिमत्वानित्यादावव्याप्तिवारणंचिंत्यमे
व ॥ **सादृश्यहेतुकानुमितिरिति** ॥ गोभेदसामानाधिकरण्यविशिष्टायोगोवृत्तित्वोपलक्षितोधर्मःसास्नादिस्तद्वत्ताज्ञानजन्याऽयंगवयइ
त्याकारकानुमितिरित्यर्थः ॥ सादृश्यघटकगोभेदसामानाधिकरण्यस्योपलक्षणत्वेसाधनाप्रसिद्धिवारणायगोवृत्तित्वस्योपलक्षणतायाआ
वश्यकत्वेनगविव्यभिचारइतितस्याविशेषणत्वमेवतथाचयत्किंचिद्धेतुतावच्छेदकविशिष्टयत्किंचिद्धेतुतावच्छेदकोपलक्षितहेतुसामाना
धिकरण्यगर्भव्याप्त्यंतरमप्यावश्यकमितिभावः ॥ विशिष्टहेतुकेविशिष्टहेतुमत्तावगाहिज्ञानस्यैवकारणतयातस्यचविशेष्येविशेषणंत
त्रचविशेषणांतरमितिरीत्याज्ञानेवैलक्षण्यांयविशिष्टप्रतियोगिकसंबंधेनविशेषणावगाहित्वमेवस्वीक्रियतइत्येकंमतंविशेषणस्यकेव
लसंबंधेनैवभानंविशेषणविशेषणंतुस्वावच्छिन्ननिरूपितसंबंधेनाधिकरणांशेभासतइतिस्वीक्रियतइत्यपरंमतंतत्राद्येहेतुताव
च्छेदकसंबंधोविशिष्टप्रतियोगिकसमवायादिरेवानुमितिजनकपरामर्शीयमुख्यप्रकारतावच्छेदकसंबंधस्यैवतत्वात्तथाचविवक्षणी
यहेतुतावच्छेदकसंबंधेनहेतुसामानाधिकरण्यघटितायाविशिष्टहेतुकानुमितिप्रयोजिकायाव्याप्तेर्निर्वाहेहेतुतावच्छेदकविशिष्टत्वनि

 वेशानमफलमित्याशंकते ॥ अथेति ॥ द्वितीयमतेनसमाधानमाह् ॥ नचेति ॥ विशिष्टहेतौसाध्याविरोधग्रहसत्वेति ॥ साध्य 
 वच्छेदेनहेतुमद्भेदकत्वरूपविरोधग्रहसत्वेइत्यर्थः॥ विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावानभ्युपगमाद्विशिष्टहेतुकेसाध्यासामानाधिकरण्य
स्यविरोधरूपतायाअसंभवेननिरुक्तरूपस्यैवविरोधस्वरूपत्वात्॥ विशिष्टाधिकरणत्वघटितहेतुसाध्यसामानाधिकरण्यवि
षयकस्यैव ॥ हेतुमद्धर्ह्वेतुव्यापकसाध्यवत्त्वकहेतुमान्पक्षइतिपरामर्शस्यैव ॥ अन्यथा ॥ हेतुव्यापकसाध्यसामानाधिकरण्यवि
शिष्टहेतुमत्तावगाहिज्ञानस्यविशिष्टहेतुकानुमितिकारणत्वे॥ विरोधस्य ॥ दर्शितविरोधस्य॥ तद्ग्रहे ॥ विशिष्टनिरूपितव्यापकताग्र
हे ॥ ननुविशेष्यीभूतसत्तायाः प्रतियोगिप्रकारघटकत्वेपिनतदंतर्भावेणप्रतियोगितावच्छेदकतापर्याप्तिस्तस्याउपलक्षणतयैवभानस्वी
कारात्किंतुविशिष्टत्वबदारभ्येतिविशिष्टव्यापकताग्रहस्यविशेषणव्यापकताग्रहत्वंस्फुघटमित्याशंकांनिरस्यति ॥ अभावप्रतियोगि
प्रकारघटकस्येति ॥ शाब्दार्थानेति ॥ शाब्दबोधरूपेत्यर्थः ॥ अनियमादिति ॥ शाब्दबोधेतात्पर्यस्यनियामकत्वादितिभावः
॥ दंडाद्युपलक्षितेति ॥ तस्यविशेषणत्वेचधर्मिपारतंत्र्येण भानंसंभवतीत्यतउपलक्षितेति ॥ तादृशधर्मिहेतुकानुमितिविलोपेइष्टा 

पत्तौ दूषणांतरमाह ॥ स्वातंत्र्येणेति ॥ यत्रविशेषणस्यपरंपराःस्वाश्रयाश्रयत्वस्वप्रतियोगिकसंयोगानुयोग्याश्रयत्वभेदेनाभिन्नास्तत्र यथापरं
परयास्वातंत्र्येणाधिकरणेविशेषणस्यपरामर्शोनकस्यापिजातोऽपितुधर्मिपारतंत्र्येणैवतत्रानुमितिनिर्वाहाय विशिष्टपदोपादानमित्यावेदनाय
प्रथमसकलपदं ॥ यादृशांकुरविशेषाद्यात्मकविशेषणस्यकेनापिपरंपरासंबंधेनपरामर्शःकस्यापिनजातस्तत्रविशेषणहेतुकानुमितिसाम
ग्र्यादुर्वचत्वेनतत्रविशिष्टहेतुकपरामर्शस्यैवकारणत्वमित्यावेदनायद्वितीयसकलपदं ॥ अधिकरणभेदेन धूमभेदेनचेत्यादिरिति
क्वचित्पाठः ॥ तत्रनानाधिकरणैकधूममभिप्रेत्याधिकरणभेदेनेति ॥ एकाधिकरणकनानाधूमाभिप्रायेणधूमभेदेनेति ॥ भ्रमंविनापी
ति ॥ गंसभोवन्हिव्याप्यइतिव्यवहारातिप्रसंगस्तुनास्तिसमभिव्याहृतपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नव्यापकसामानाधिकर
ण्यस्यैवव्याप्तिपदार्थत्वात् ॥ हेतुविशेषणतयेति ॥ अभेदस्तृतीयार्थस्तथाचहेतुनिष्ठविषयतानिरूपितप्रकारतारूपानुमितिजनक
ज्ञानविषयत्वरूपेत्यर्थः ॥ यदीत्यादि ॥ विरोधस्य ॥ विरोधविशिष्टहेतुज्ञानस्यसाक्षात् ॥ साध्यासामानाधिकरण्यरूपविरोधस्यसाध्याभा
वव्याप्तिरूपत्वात्तद्विशिष्टहेतुज्ञानस्यतदभावव्याप्यवत्ताज्ञानविधया ॥ हेत्वाभासत्वं ॥ यद्विषयकत्वंप्रकृतानुमितिप्रतिबंधकताशून्यपक्ष

धर्मताज्ञानकालीनज्ञानावृत्तितत्वरूपंदोपत्वंविरोधस्येतिशेषः॥**स्वंडनीयतयेति**॥द्रव्यंसत्वादित्यादावतिव्याप्त्येत्यादिः॥अवच्छेदकतयोर्वस्तुनोभेदादित्यादिग्रंथे नानतिरिक्तवृत्तित्वरूपावच्छेदकतावगाहिन्यामनुमितावेवतथाविधावच्छेदकतावगाहिहेतुमत्ताज्ञानस्यकारणत्वोक्तेर्यदीति॥**नतुतदवच्छेद्य त्वमिति॥ सामानाधिकरण्येनैवसाध्यंसिद्ध्यतिनतुतदवच्छेदेनापीत्यपिपाठः**॥पक्षेयदिसाध्यंनस्यात्तदासाधनमपिनस्यादि तिविपयपरिशोधकतर्कएवाविपर्ययानुमानेपक्षेसाध्यसाध्यकःपक्षतावच्छेदकेऽवच्छेदकत्वभासकंनकिमप्यस्तीतिभावः॥**अतींद्रियत्व मिति**॥सामान्याभावप्रत्यक्षेयावत्प्रतियोगियोग्यत्वंतंत्रमित्यभिप्रायः॥**परितइति**॥सर्वावयवावच्छेदेनेत्यर्थः॥**विरोधिज्ञानमुद्रये ति**॥तदभाववत्ताज्ञानत्वेनेत्यर्थः॥**दोषविधयेति**॥मणिमंत्रादिन्यायेनेत्यर्थः॥**संयोगाविषयकमिति**॥संयोगाभावप्रत्यक्षकारण संयोगज्ञानकालेधिकरणांशेलौकिकसन्निकर्षसत्वेसंयोगोपलब्धिरेवस्यादतउपनीतेति॥**यत्तु**संयोगाभावलौकिकप्रत्यक्षसामग्र्याविरो धितयैवनसंयोगोपलब्धिरितितन्न॥तथासतिवृक्षेचतुःसंयोगावश्यकतापत्तेःसिद्धांतेधर्म्यंतरघटितचक्षुःसन्निकर्षादेवसंयोगाभावप्र त्यक्षापादनान्ननत्रचक्षुःसंयोगावश्यकता॥**कथंचिदापत्तिसंभवेपीति**॥द्रव्यसमवेतवृत्त्यभावप्रत्यक्षकारणचक्षुःसंयुक्तमूलसमवेत

वृक्षविशेषणतारूपसन्निकर्षघटितसामग्रीबलादित्यभिप्रायः॥ द्व्यणुकवृत्तित्वेनाभावप्रत्यक्षवारणाययोग्यंयच्चक्षुःसंयुक्तंतत्समवेतविशे
षणतैवतादृशप्रत्यक्षेकारणमितिवक्तव्यंतथाचद्व्यणुकवृत्तित्वेनाभावप्रत्यक्षंनस्यादितिद्व्यान्यद्द्रव्यसमवेतंत्तवृत्तित्वेनाभावप्रत्यक्षत्वस्यैवतादृ
शविशेषणताकार्यतावच्छेदकत्वावश्यकतयावृक्षवृत्तित्वेनसंयोगाभावप्रत्यक्षस्यतदनाक्रांतत्वान्नतद्बलात्तदवच्छिन्नापत्तिरित्यभिप्राये
णकथंचिदित्युक्तं॥ तादात्म्यसंबंधेनद्रव्यत्वेनैवप्रतिबंधकत्वौचित्यादिति॥ अत्रेदंचिंत्यं॥ स्वप्रतियोगिवृत्तित्वस्वसामा
नाधिकरण्योभयसंबंधेनभेदविशिष्टान्यधर्मरूपस्यतादात्म्यस्यस्वविषयसंयोगवत्त्वापेक्षयानलघुशरीरतेति॥ यत्तुद्रव्यतादात्म्यंद्र
व्यत्वमेवतस्यस्वरूपतएवसंसर्गत्वोपगमाल्लाघवमक्षतं॥ नन्वेवंस्वविषयसंयोगवत्त्वादेरपिस्वरूपतःसंसर्गताभ्युपगमःसंभवतीति
तौल्यमितिशंक्यं॥ तथापिपरंपरासंबंधघटकसकलपदार्थसाधारणसांसर्गिकविषयतायाःप्रतिबंधकतावच्छेदकत्वेगौरवंदुर्वा
रमिति॥ तन्न॥ एकमात्रवृत्तिधर्मस्यैवनिरुक्तभेदविशिष्टान्यरूपस्यतादात्म्यरूपतायाव्युत्पत्तिवादेस्वयमुक्तत्वाद्द्रव्यत्वस्यद्रव्यतादा
त्म्यरूपत्वाभावात्॥ प्रतियोगिनोयत्त्वतत्त्वेननिवेशइति॥ यद्वृत्तियद्धर्मव्याप्यधर्मावच्छिन्नाभाववान्यःसतद्वृत्तितद्धर्मावच्छिन्ना

भाववानितिविवक्षणइत्यर्थः ॥ अन्यसंबंधेति ॥ समवायान्यसंबंधेत्यर्थः ॥ तत्संबंधेनि ॥ समवायसंबंधेत्यर्थः ॥संभाव्येत ॥ हेतुघट
कविशेषाभावीयप्रतियोगितायांसंबंधविशेषावच्छिन्नत्वानिवेशेसंयोगसमवायसंबंधावच्छिन्नप्रतियोगिताकघटीयविशेषाभावकूटसाधारण
घटीयविशेषाभावकूटत्वस्यसमवायसंबंधावच्छिन्नघटसामान्याभावव्यभिचारितत्वनदभावसमानाधिकरणत्वात्तत्साधारणधर्मवत्ताज्ञाना
त्तादृशघटीयविशेषाभावकूटेतत्संशयःस्यादित्यर्थइतिकेचित् ॥ तच्चेदंचिंतनीयं ॥ हेतुघटकविशेषाभावीयप्रतियोगितायांसंबंधवि
शेषावच्छिन्नत्वाविवक्षणेतादृशकूटत्वाश्रयस्यहेतुत्वमुततादृशकूटत्वपर्याप्तिविशिष्टस्यवा ॥ नाद्यः ॥ तादृशसमवायसंबंधावच्छिन्नवि
शेषाभावकूटांतःपातियत्किंचित्तादृशविशेषाभावाधिकरणेतादृशसामान्याभावासत्वाद्व्यभिचारः ॥ नद्वितीयः ॥ संयोगसमवायादिसंबं
धावच्छिन्नप्रतियोगिताकघटीयविशेषाभावसाधारणकूटत्वपर्याप्त्यधिकरणस्यनसमवायसंबंधावच्छिन्नप्रतियोगिताकघटकसामान्या
भावव्यभिचारसंभावनापर्याप्तिसंबंधेनतादृशकूटत्वस्यतादृशघटसामान्याभावव्यभिच रितत्वसाधारण्याभावादिति ॥ वस्तुतस्तु ॥
यत्किंचित्संबंधावच्छिन्नविशेषाभावकूटस्यहेतुत्वेयत्किंचित्पदेनसंयोगसंबधग्रहणेतत्संबंधावच्छिन्नविशेषाभावकूटस्ययथासमवा

याबच्छिन्नसामान्याभावव्यभिचारित्वंतथासमवायग्रहणेपिसमवायनानात्वपक्षेसमवायावच्छिन्नविशेषाभावकूटेसमवायावच्छिन्नसामा
न्याभावव्यभिचारित्वसंभावनास्यात्साध्यहेत्वोर्भिन्नसंबंधावच्छिन्नप्रतियोगिताकत्वाविशेषरूपतुल्यन्यायादितिसंबंधैक्यंविवक्षणीयं॥तथा
चतत्संबंधावच्छिन्नविशेषाभावकूटस्यतत्संबंधावच्छिन्नसामान्याभावव्यभिचारित्वाभावेननदोषइतितात्पर्यं॥ अतएव ॥ संबंधैक्य
विवक्षणादेव ॥ तदविवक्षणेकिंचित्संबंधावच्छिन्नप्रतियोगिताकत्वेनस्वसजातीयसंयोगसंबंधावच्छिन्नघटीयविशेषाभावकूटेस्वजाती
यसमवायावच्छिन्नघटसामान्याभावनिरूपितव्याप्त्यग्रहेणंसमवायावच्छिन्नसंयोगसामान्याभावासिद्धिरितिभावः॥ आधेयतासंबंधे
नावच्छेदकमधिकरणमप्रसिद्धमिति॥ अनवच्छेदकमधिकरणमप्रसिद्धमितिपाठःप्रामादिकस्तथासतितदनवच्छेदकत्वरूपहेत्व
प्रसिद्धिरितिग्रंथोनुपयुक्तएवस्यात् ॥ प्रथमपाठेतुप्रतियोग्यप्रसिद्धेरित्यादिः ॥ अत्रेदंचिंत्यं ॥ संयोगविशेषाभावनिष्ठायआधेयता
संबंधेनवृक्षविशिष्टध्वंसभेदस्तत्प्रतियोगितावच्छेदकत्वस्यदृश्येपिसत्वेननावच्छेदकाधिकरणाप्रसिद्धिः ॥ नचतथाप्यनवच्छेदकत्वरू
पहेत्वसिद्धिःशंक्या ॥ आधेयतासंबंधावच्छिन्नावच्छेदकताकतादृशभेदीयप्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नपर्याप्तिश्च

न्यत्वस्यैव हेतुत्वान्निरुक्तभेदीयतादृशप्रतियोगितावच्छेदकतायास्तादृशावच्छेदकतात्वेन वृक्षध्वंसोभयत्वावच्छेदेनैव पर्याप्ततया वृक्षत्वावच्छे
देन तत्पर्याप्तिशून्यत्वात्क्षतेः॥ नन्वेवं संयोगविशेषाभाववन्निष्ठकालिकधेयत्वोभयसंबंधेन वृक्षादिमद्भेदीयाधेयत्वसंबंधावच्छिन्नावच्छेदकत्वस्य
वृक्षे सत्त्वात्स्वरूपासिद्धिवारणायाधेयत्वसंबंधातिरिक्तसंबंधावच्छिन्नावच्छेदकतानिरूपकप्रतियोगिताकत्वेन हेतुघटकभेदविशेषण
त्वावश्यकतया वृक्षविशिष्टध्वंसभेदस्य तथात्वेन तादृशभेदप्रतियोगितावच्छेदकाधिकरणाप्रसिद्धिरस्त्येवेति वाच्यं॥ आधेयतया ता
दृशतत्संयोगाभाववन्निष्ठतत्संयोगाभावान्यत्वविशिष्टवृक्षवद्भेदप्रतियोगितावच्छेदकत्वस्य वृक्षे प्रसिद्धत्वात्॥ नचैवं रीत्या तदभावरूपहे
त्वसिद्धिवारणाय केवलाधेयतासंबंधावच्छिन्नावच्छेदकतैव विवक्षणीया दर्शितभेदीयप्रतियोगितावच्छेदकताघटकसंबंधो विशिष्टप्र
तियोगिकाधेयतैवेति केवलाधेयतासंबंधावच्छिन्नावच्छेदकताश्रयाधिकरणाप्रसिद्धिरव्याहतैवेति वाच्यं॥ आधेयतया तत्संयोगाभावा
न्यमात्रवृत्तितत्संयोगाभावान्यत्वविशिष्टवृक्षोभयवद्भेदमादाय तत्प्रतियोगितावच्छेदकाधिकरणप्रसिद्धेस्तादृशावच्छेदकत्वाभावरूप
हेत्वसिद्धिरपि न शंक्या॥ उभयत्वावच्छेदेन पर्याप्ततादृशावच्छेदकत्वस्य वृक्षत्वावच्छेदेनाभावस्य वृक्षे सत्त्वात्॥ यत्त्ववच्छेदकताया अव्या

स्यवृत्तित्वमतावलंबनेनानवच्छेदकमधिकरणमप्रसिद्धमितिपाठकल्पनयासमाधानंतत्तदनवच्छेदकत्वरूपहेत्वप्रसिद्धिरितिग्रंथा
नुपयुक्तत्वरूपोक्तदूषणेनहेयं॥ **व्यभिचारइति**॥ **ननु** साध्यस्याप्रसिद्धत्वात्कथंव्यभिचारः॥ **नच** साध्याप्रसिद्धिरेवव्यभिचारपदेन
विवक्षितेतिसांप्रतं॥ हेतूपादानवैयर्थ्यात्॥ **मैवं** अवच्छिन्नप्रतियोगिताकत्वसंबंधेनयद्धर्मवत्वमेवसाध्यंतथाचहेतुमतिव्यधिक
रणताद्दशसंबंधेनयद्धर्मवत्वाभावसत्वेनव्यभिचारइतितात्पर्यं॥ **यद्धर्मेत्यनेनेति**॥ **अथ** गुरुधर्मस्याभावप्रतियोगितानवच्छेदक
त्वेसंयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वसमानाधिकरणभेदप्रतियोगितात्वमपिनाभावप्रतियोगि
तावच्छेदकंतदपेक्षयालघोस्तत्संयोगाभावनिष्ठभेदप्रतियोगितात्वस्यैवतत्संभवात्तस्यताद्दशप्रतियोगितात्वन्यूनवृत्तित्वेपियावत्संयो
गाभावविषयकबुद्धिमादायतद्बुद्धिविषयनिष्ठभेदप्रतियोगितात्वस्यैवतत्संभवात्ताद्दशप्रतियोगितात्वावच्छिन्नाभावरूपहेतुरप्यसि
द्धइतिचेत् **दत्रकेचित्**॥ स्ववृत्त्युभयावृत्तिधर्मावच्छिन्नतत्संबंधावच्छिन्नप्रतियोगिताकाभावत्वसमानाधिकरणभेदप्रतियोगितानि
रूपिताधेयतासंबंधावच्छिन्नावच्छेदकतासंबंधावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्यैवहेतुत्वंस्वपदंयद्धर्मावच्छिन्न

परंतद्धर्मावच्छिन्नतत्संबंधावच्छिन्नप्रतियोगिताकाभावस्यैवसाध्यत्वमभिमतमित्याहुः ॥ **व्यर्थमेवेति** ॥ संयोगविशेषाभावेनापिसंयो
गसामान्याभावस्यसाधयितुंशक्यत्वादितिभावः ॥ **कथंचिदिति** ॥ यत्तदर्थघटितसाध्यहेतूनामनुगमाभिमानेन ॥ **अविरोधादिति** ॥
तथाचासिद्धत्वात्किंतत्साधनेनेतिभावः ॥ अव्याप्यवृत्तिजातीयानांव्याप्यवृत्तित्वंसर्वावच्छेदेनवृत्तिमत्वंनत्ववच्छिन्नवृत्तिकान्यत्वमित्याशये
नाह ॥ **व्याप्यवृत्तेरवच्छेदकोपगमेत्विति** ॥ **तत्तन्निष्ठेति** ॥ मूलाग्रादिनिष्ठेत्यर्थः ॥ **नियामकत्वे** ॥ नियमसत्वे ॥ **खंडवृक्ष
स्यापरावयवनाश इति** ॥ असमवायिकारणनाशात्खंडवृक्षनाशोनसंभवतितथासतिखंडवृक्षोत्पत्तिकालेविभागआवश्यकःस
नसंभवतिकर्मवतिकर्मांतरानुदयात् ॥ एकक्रियायागगनसंयोगप्रतिद्वंद्विविभागासमवायिकारणसंयोगप्रतिद्वंद्विविभागयोरुत्पत्ति
र्नसंभवतितथासतिगगनसंयोगनाशक्षणएवावयवसंयोगनाशापत्त्याखंडवृक्षस्यैकक्षणावस्थायित्वप्रसंगादितिसमवायिकारण
नाशाधीनत्वंतस्यदर्शितं ॥ **अत्रेदंबोध्यं** ॥ प्रथमक्षणेखंडवृक्षस्यैकावयवेगगनसंयोगप्रतिद्वंद्विविभागजनकक्रियाद्वितीयक्षणे
ऽपरावयवेसमवायिकारणसंयोगप्रतिद्वंद्विविभागजनकक्रियाएवंचप्रथमक्रियाजन्यविभागजगगनसंयोगनाशकालेद्वितीय

क्रियाजन्यासमवायिकारणसंयोगनाशजन्यखंडवृक्षोत्पत्तिरपिसंभवतीति ॥ **पक्षधर्मताबलादिति** ॥ पक्षधर्मताज्ञानादित्यर्थः ॥ **उपस्थितेति** ॥ फलीभूतानुमित्यव्यवहितप्राक्कालइत्यादिः ॥ **तत्तत्साधने** ॥ तत्कालोपस्थितप्रकृतहेतुसजातीयसाधने ॥ तत्तत्साध्येत्यस्याप्येवमेवार्थः ॥ **गगनाद्यवृत्तीत्यादि** ॥ **निरुक्तेति** ॥ उभयावृत्तीत्यर्थः ॥ अत्रगगनावृत्तित्वविशेषणानुपादानेपक्षेहेत्वसिद्धिः संयोगत्वस्यापिस्वपदेनधर्तुंशक्यत्वात् ॥ यत्किंचित्पदानुपादानेपरिमाणत्वेव्यभिचारः परिमाणत्वसमानाधिकरणोभयावृत्तिघटपरिमाणनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्यगगनावृत्तित्वविरहेणस्वपदेनपरिमाणत्वस्यधर्तुमशक्यत्वात् ॥ तदुपादानेचतादृशगगनपरिमाणनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्यगगनावृत्तित्वसत्वेनस्वपदेनतस्यग्रहणसंभवान्नतदन्यत्वरूपहेतावुक्तांतत्वंतस्येतिनव्यभिचारः ॥ संयोगत्वसमानाधिकरणगगनवृत्ति— संयोगत्वावच्छिन्नाभावस्यगगनावृत्तित्वसंदेहेनसंदिग्धासिद्धिरित्युभयावृत्तित्वंविशेषणं ॥ अत्रगगनावृत्त्यभावप्रतियोगितावच्छेदकोभयावृत्तिधर्मसमानाधिकरणभिन्नत्वस्यैवहेतुत्वसंभवेनतादृशभेदकूटस्यहेतुत्वानुसरणेबीजंचिंत्यमेव ॥ **गुणइति** ॥ गुणनिष्ठमित्यर्थः ॥ एतेनगुणावच्छेदेनोपाधेःसाध्यव्यापकत्वमुक्तं ॥ द्रव्यावच्छेदेनतदाह ॥ **कपिसंयोगवती**

ति ॥ यावत्तदीयविशेषाभावावच्छिन्नत्वैकावच्छेदकानवच्छिन्नत्वोभयाभावविशिष्टोयःप्रत्येकंतन्निरूपिताधिकरणतासमुदायस्तस्योभा
धित्वंपर्यवसितंतत्राव्याप्यवृत्त्यधिकरणतासाधारणसमुदायत्वेनतादृशसमुदायघटकव्याप्यवृत्त्यधिकरणतानामवच्छिन्नत्वमित्येकः प
क्षः ॥ नास्तीत्यपरः ॥ तत्रोपाधेःसाधनाव्यापकत्वरक्षायैप्रथमपक्षस्यैवावलंबनीयतयासाध्योपाध्योःसामान्यव्याप्तिभंगोदुर्वारइत्यभिप्राये
णशंकते ॥ अथेति ॥ नैकावच्छेदकावच्छिन्नत्वंसंभवति ॥ नोभयाभाववत्त्वंसंभवति ॥ कुतइत्यतआह ॥ वृक्षावृत्तीत्यादि।
व्याप्यवृत्तितया ॥ मूलमध्याद्यवच्छिन्नाधिकरणतासाधारणरूपेणाव्याप्यवृत्तित्वेपिविनिगमनाविरहेणमूलमध्याद्यवच्छिन्नत्वावश्य
कतया ॥ अनवच्छिन्नत्वात् ॥ एकावच्छेदकानवच्छिन्नत्वात् ॥ तथाचवृक्षनिष्ठकपिसंयोगव्यक्तीनांयेमूलमध्याद्यवच्छेदेनवृक्षनिष्ठा
भावास्तदधिकरणतानांमूलमध्यादिरूपनानावच्छेदकावच्छिन्नानामेकावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयवत्त्वमिववृक्षावृत्तिकपि
संयोगव्यक्त्यभावाधिकरणतानामप्युक्तरीत्यातादृशोभयवत्त्वेनतद्विशेषाभावाधिकरणतासमुदायेनतादृशोभयाभाववत्त्वमितिभावः ॥ अ
परपक्षाभिप्रायेणशंकते ॥ नन्वेति ॥ उपाधेःसाधनाव्यापकत्वरक्षायैप्रथमपक्षावलंबनमेवकर्तव्यमित्यथेतिशंकितुरभिप्रायंस्पष्टयति। २६८

एवंसतीति॥ **स्वसमानाधिकरणेति**॥ स्वंयात्किंचिदधिकरणतातथात्वावच्छेदकावच्छिन्नत्वसंबंधेनस्वसमानाधिकरणयावत्तद्भावाधि
करणत्वाभावावच्छिन्नत्वोभयाभाववद्यावत्तदीयविशेषाभावाधिकरणताकूटमुपाधिरितिपर्यवसितार्थस्तेनस्वसमानाधिकरणयावत्तद्
भावाधिकरणतावच्छेदकाप्रसिद्धावपिनक्षतिः॥ द्रव्यनिष्ठयावत्संयोगाभावाधिकरणताकूटेद्रव्यनिष्ठयत्किंचिदधिकरणतासमानाधि
करणयावत्संयोगाभावाधिकरणतानामवच्छेदकावच्छिन्नत्वरूपव्यधिकरणसंबंधेनाभावसत्वात्तद्घटककतिपयाधिकरणतास्ववच्छिन्नत्व
सत्वाच्चतादृशाधिकरणताकूटेउभयाभावासत्वेनोपाधेःसाधनाव्यापकत्वं॥ **स्वसमानाधिकरणकिंचिदवच्छिन्नेति**॥ अत्राप्यवच्छेद
कावच्छिन्नत्वसंबंधेनस्वसमानाधिकरणकिंचिदवच्छिन्नयावत्तद्भावाधिकरणत्वाभावावच्छिन्नत्वोभयाभाववद्यावत्तदीयविशेषाभाववत्वकू
टमेवोपाधिरितिपर्यवसितार्थोग्राह्यस्तेनस्वसमानाधिकरणकिंचिदवच्छिन्नयावत्तद्भावाधिकरणतावच्छेदकाप्रसिद्धावपिनक्षति॥ यावद्वि
शेषाभाववत्वमित्यस्ययावद्विशेषाभाववान्वृक्षादिरितिप्रतीतिसिद्धतावन्निष्ठयावत्वावच्छिन्ननिरूपितमेकमधिकरणत्वमेवार्थोनतुतत्तद्विशे
षाभावाधिकरणताकूटमित्यभिप्रायेणाह॥ **अथवेति**॥ साध्योपाध्योःसामान्यव्याप्त्यनिर्वाहपूर्वपक्षेइष्टापत्याप्रकारांतरमवलंबति॥ ब

स्तुतस्त्विति ॥ पर्यवसितेति ॥ पर्यवसानंफलीभूतानुमितिः ॥ सत्प्रतिपक्षोत्थापकत्वमिति ॥ शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरि 
क्तधर्मवान्मेयत्वादित्यादौपर्यवसितसाध्यरूपानित्यत्वव्यापककृतकत्वादेरिवेत्यर्थः ॥ प्रतिरोधइति ॥ उद्देश्यायाःप्रतिवादिसमवेताया अनु
मितेरनुत्पादइत्यर्थस्तेनस्वार्थानुमानेदर्शितोपाधिनिश्चयानियमेपिनक्षतिः ॥ प्रतिवादिनस्तुवास्तवआभिमानिकोवोपाधिनिश्चयोस्त्येवेतिनानु
पपत्तिः ॥ पक्षधर्मावच्छिन्नेति ॥ सामानाधिकरण्यसंबंधेनपक्षधर्मविशिष्टेत्यर्थः ॥ पूर्ववदिति ॥ अव्याप्यवृत्तिसाधारणरूपेणतेषाम
व्याप्यवृत्तित्वंस्वीकृत्येत्यर्थः ॥ एकावच्छेदकावच्छेद्येति ॥ अवच्छिन्नत्वैकावच्छेदकानवच्छेद्यत्वोभयाभाववदित्यर्थः ॥ नतुप्रतियोग्यनव
च्छेदकमात्रस्येति ॥ तथाचप्रमेयत्वस्यप्रतियोगिमत्संबद्धदेशत्वाभावात्तादृशकालत्वाभावाच्चनदोषइतिभावः ॥ निराकृतत्वादिति ॥ इ
दमुपलक्षणं ॥ ध्वंसप्रागभावयोरत्यंताभावविरोधितामतेपिकालविशेषावच्छिन्नप्रागभावादेरेवस्वलक्षणोक्तरीत्यासामान्याभावत्वावश्यक
त्वमित्यवधेयं ॥ जन्यैकत्वहेतुभूतस्येति ॥ इदमत्रचिंत्यं ॥ रूपवतिरूपोत्पत्तिवारणायरूपंप्रतिरूपात्यंताभावस्यैवहेतुत्वंयुक्तंरूप
प्रागभावस्यहेतुत्वेभाविपाकजरूपप्रागभावमादायरूपवतिरूपोत्पादस्याशक्यवारणत्वात् ॥ जन्यैकत्ववतिपुनरेकत्वोत्पादवारणस्यजन्यै 

कत्वंप्रतितत्प्रागभावस्यहेतुतयापिरुकरत्वंनह्येकत्ववतिभाव्येकत्वप्रागभावोस्तितथाचतदा तत्रतदत्यंताभावस्यनावश्यकतेति॥ **अति**
**प्रसंगादिति**॥ खंडकालेगगनेनसंयोगइतिव्यवहारापत्तेरित्यर्थः॥ **तदभावोपपत्तेरिति**॥ ननुसंयोगस्याव्याप्यवृत्तित्वेसंयोगिनोऽव्या
प्यवृत्तित्वस्यैवसंयोगसमवायस्यव्याप्यवृत्तिवृत्तित्वात्संयोगादेरपिव्याप्यवृत्तित्वंस्यादित्याशंकांनिरस्यति॥ **संयोगादेरिति**॥ **तदभावोप**
**पत्तेरिति**॥ व्यापकाभावस्यैवव्याप्याभावप्रयोजकत्वाद्द्रव्येसंयोगाभावसत्वेपितत्समवायोपपत्तेरितिभावः॥ **केचित्विति**॥ उक्तरीत्यैवनि
र्वाहविशेषरूपेणसंसर्गतास्वीकारःसमवायनानात्वमभ्युपगम्यसंयोगसमवायस्याव्याप्यवृत्तित्वस्वीकारोवाऽस्वरसः॥ **प्रतियोगिमतइत्या**
**दि**॥ इदानीमत्रघटोनास्तीत्यादिप्रत्ययेदेशनिष्ठायाःकालविशेषावच्छिन्नायाःकालनिष्ठायादेशविशेषावच्छिन्नायावाअधिकरणतायाविषय
त्वमित्यत्रविनिगमकाभावआधेयत्वावच्छेदकत्वयोरेवाविशेषेणससम्यर्थत्वादितिभावः॥ **व्याप्यवृत्तिसाध्यकत्वंचस्वसमानाधिकर**
**णाभावाप्रतियोगिसाध्यकत्वमिति**॥ अत्रस्वपदंहेतुपरमेवसाध्यपरत्वेसंयोगाभाववान्नित्यगुणत्वादित्यस्याव्याप्यवृत्तिसाध्यकत्वापत्यात
त्रप्रतियोगिवैय्यधिकरण्यनिवेशप्रयोजनाभावादव्याप्यवृत्तिसाध्यकेव्याप्तेःप्रतियोगिवैय्यधिकरण्यघटितनियमस्यस्वयमुक्तस्यासंगत्यापत्तेः॥

दशाभेदमनालोच्चयतांमतमाह॥ **केचित्त्विति**॥ **यथाश्रुतमेव**॥ अवच्छिन्नवृत्तिकान्यसाध्यकत्वरूपमेवेत्यर्थः॥ **यादृशेति**॥ या
दृशप्रतियोगितानिरूपकाभावत्वंहेत्वधिकरणनिरूपितदैशिकविशेषणतासंबंधावच्छिन्नाधेयतावच्छेदकंतादृशप्रतियोगित्वेत्यर्थः॥
एतन्मतेसंयोगाभावसाध्यकनित्यगुणत्वहेतोर्व्याप्यवृत्तिसाध्यकत्वविरहेणतत्रव्याप्तेर्द्वैविध्यलाभस्यव्याप्यवृत्तिसाध्यकस्थलमात्रेसार्वत्रिको
पादानप्रतिक्षेपपरत्वेऽसंभवात्तल्लाभायसर्वथैवेतिग्रंथस्याभिप्रायांतरमाह॥ **अव्याप्येति**॥ **एवंचव्याप्यवृत्तिसाध्यकेति**॥एतन्मतेस्वसमाना
धिकरणाभावाप्रतियोगिसाध्यकत्वमेवव्याप्यवृत्तिसाध्यकत्वं॥ **नतुयथाश्रुतं**॥स्वपदंसाध्यपरंस्वमतेहेतुपरमितिभेदः॥ तथाचात्माज्ञानादि
त्यादावित्यर्थः॥ **साध्यसामानाधिकरण्याप्रसिद्धेति**॥ साध्यतावच्छेदकसंबंधेनयत्साध्याधिकरणंतद्वृत्तित्वाप्रसिद्धेत्यर्थस्तेनकालि
कसंबंधेनात्मत्वाधिकरणकालवृत्तित्वेप्यात्मत्वाभावस्यनक्षतिः॥ **नच**साध्यसामानाधिकरण्यघटकाधिकरणांशेसाध्यतावच्छेदकसंबंधनि
वेशानंकिमर्थमितिवाच्यं॥ तदनिवेशेसंयोगीनित्यान्यत्वविशिष्टसत्वादित्यादौव्यभिचारनिरूपकाधिकरणेपिसंयोगाभावस्यसंयोगसामाना
धिकरण्यवत्वेनतदभाववविशिष्टहेतुमद्वृत्यभावोऽन्यएवेत्यतिव्याप्त्यापत्तेः॥ **अथैतन्मते**व्याप्यवृत्तिसाध्यकत्वंयथाश्रुतमेवकुतोनगृह्यतइ

तिचेन्न ॥ तथासति सत्तावान्द्रव्यत्वादात्मत्वाद्वेत्यादेः साध्याभावे कालिकसंबंधावच्छिन्नसाध्यवद्वृत्तित्वंप्रसिद्ध्यासाध्याभावनिष्ठसाध्य
सामानाधिकरण्याप्रसिद्ध्यभिधानासंगतेः ॥ **नच** सामानाधिकरण्यघटकवृत्तित्वांशे संबंधविशेषावच्छिन्नत्वनिवेशे प्रयोजनमस्ति येन
साध्याभावे तादृशसामानाधिकरण्याप्रसिद्धिः स्यादव्यभिचारिणि साध्यतावच्छेदकसंबंधेन यत्साध्याधिकरणं तन्निरूपितवृत्तित्व सामान्य
निरूपकव्यभिचारनिरूपकाधिकरणावच्छेदेनैव साध्याभावे साध्यसामानाधिकरण्याभाववत्वस्यस्त्वचत्वात् ॥ **साध्यतावच्छेदक
संबंधावच्छिन्नप्रतियोगिताकत्वनिवेशे प्रयोजनाभावादिति ॥ अत्रकेचित्** ॥ तादृशविशेषणस्य प्रयोजनाभावेपिता
दृशविशेषणविशिष्टसाध्याभावनिष्ठसाध्यसामानाधिकरण्याभावरूपाखंडाभावघटकतया सार्थक्यसंभवेनोक्ताशयवर्णनंसम्यगेवेति
वदंति ॥ **पूर्वमुक्तत्वादिति** ॥ एकत्वप्रागभावविशिष्टघटाभावीयप्रतियोगितायामप्रसिद्धतया विशिष्टसंयोगादेरवच्छेदकत्वंनसंभ
वतीत्यादिनेत्यर्थः ॥ **विशेषणांतर्भावेणपर्याप्तेति** ॥ नन्वेवंसति प्रतियोगितापर्याप्त्यधिकरणानधिकरणत्वमेवनिवेशनीयं
किंप्रतियोगितावच्छेदकवैशिष्ट्यनिवेशनेनेतिचेन्न ॥ समवायेनगुणाद्यन्यत्वसत्वोभयपर्याप्तप्रतियोगित्वावच्छिन्नाधिकरणाप्रसिद्धे

विशिष्टसत्तासाध्यकव्यभिचारिणिविशिष्टसत्ताभावस्यलक्षणघटकत्वासंभवेनातिव्याप्तेस्तथाविवक्षितुमशक्यत्वादित्यभिप्रायेणप्रतियोगिता
वच्छेदकवैशिष्ट्यपर्यंतनिवेशात् ॥ **उक्तसाध्यस्य** ॥ गुणकर्मान्यत्वविशिष्टसाध्यस्य ॥ **व्याप्यवृत्तित्वेपि** ॥ आत्मत्वहेतुकव्याप्यवृत्तिकालान्यत्व
विशिष्टसत्तारूपसाध्यसजातीयत्वेपीत्यर्थः ॥ **एतेन**स्वसमानाधिकरणेत्यादिव्याप्यवृत्तिसाध्यकत्वनिरुक्तौपूर्वोक्तयुक्त्यास्वपदस्यहेतुपरत्वावश्यक
त्वेनसाध्यपरत्वेपिस्वाधिकरणेकालेकालिकसंबंधेनगुणकर्मान्यत्वविशिष्टसत्ताभावसत्वेनगुणकर्मान्यत्वविशिष्टसत्तासाध्यकजातिहेतोर्निरुक्तव्या
प्यवृत्तिसाध्यकत्वाप्रसक्तावपिनक्षतिः ॥ सजातीयव्याप्यवृत्तिकालान्यत्वविशिष्टसत्तासाध्यकस्थलीयकृत्स्नानुमितिकारणप्रतियोगिवैय्यधिकरण्य
घटितव्याप्तिज्ञानसजातीयज्ञानप्रमात्वापादानस्यैवात्रातिप्रसंगपदार्थत्वात् ॥ **अत्रहेतुवैशिष्ट्यविरहेपिघटत्वपटत्वयोरुभयत्वस्यप्रत्य
क्षसिद्धत्वादिति** ॥ उभयपदार्थतावच्छेदकमुभयमितिपदसमभिव्याहृतैकपदार्थवैशिष्ट्यभिन्नंविरुद्धस्वसमभिव्याहृतपदार्थद्वयवृत्तित्वादित्यनुमानं
तत्राप्रयोजकत्वशंकानिरासार्थंतस्यप्रत्यक्षसिद्धत्वमुक्तंप्रत्यक्षेविषयस्यकारणतयाविषयबाधेप्रत्यक्षानुपपत्तिसूचनायप्रत्यक्षानुधावनं ॥ **ननुविरुद्ध
द्वयवृत्तित्व**स्योभयपदार्थतावच्छेदकसामानाधिकरण्यनैवसत्वात्साध्यमपिनथैवसिध्येदतआह ॥ **तथाचेति** ॥ लाघवज्ञानसहकृतनादृशहेतुमत्ता

ज्ञानादप्यवच्छेदकावच्छेदेनैवसाध्यसिद्धिरितिभावः॥ **प्रतियोगिसमानाधिकरणत्वनियमादिति** ॥ **नच**भावात्मकाभावस्यैवप्रतियोग्यसामानाधिकरण्यंसंभवतीति**वाच्यं** ॥ तस्यापिस्वसमानाधिकरणाभावांतरभेदभेदस्याधिकरणीभूतस्वस्वरूपतयास्वसमानाधिकरणाभावांतरभेदरूपप्रतियोगिसमानाधिकरणत्वात्॥ **प्रकृतप्रतियोगितावदसामानाधिकरण्यस्यैवनिवेशनीयतयेति** ॥ यादृशप्रतियोगिताश्रयसामानाधिकरण्याभाववान्हेतुसमानाधिकरणाभावस्तदीयतादृशप्रतियोगितानवच्छेदकत्वस्यसाध्यतावच्छेदकेनिवेशनीयतयेत्यर्थः॥ **अस्वरसबीजमेवेति** ॥ **यत्तु**व्याप्यवृत्तिसाध्यकेप्रतियोग्यसामानाधिकरण्यस्यानिवेशात्तत्रैवान्योन्याभावंव्यावर्तयदत्यंतपदंसार्थकमिति॥ **तन्न** ॥ तत्रापिसंबंधांतरावच्छिन्नप्रतियोगिताकात्यंताभावमादायदोषवारणायहेतुसमानाधिकरणात्यंताभावीयप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वनिवेशावश्यकतयातत्राऽत्यंताभावत्वांशनिवेशस्याप्रयोजनकत्वात्॥ **तेनसंबंधेनप्रलयेवर्तमानमत्यंताभावमादायेति** ॥ तस्यगोध्वंसरूपप्रतियोगिसामानाधिकरण्येप्यत्यंताभावत्वनिरूपकप्रतियोगिताश्रयासामानाधिकरण्यंबोध्यं॥ **सत्तावान्द्रव्यत्वादित्यादाविति** ॥ **अत्रेदंचिंत्यं** ॥ पूर्वोक्तस्वसमानाधिकरणेत्यादिव्याप्यवृत्तिसाध्यकत्वाभावादस्याव्याप्यवृत्तिसाध्यकत्वेनतत्रव्याप्तेः प्रतियोगिवैयधिकरण्यघटि

तत्वनियमस्यस्वयमुक्तत्वादिदमसंगतमिति ॥ **द्रव्यवृत्तित्वप्रसंगादिति** ॥ तथाचदैशिकविशेषणतयावृत्तित्वविवक्षणेप्यव्याप्यनिराकरणादितिभावः ननुकेवलान्वयिनिसाध्याभावाप्रसिध्यासाध्यनिरूपितप्रतियोगितावच्छेदकसंबंधेनहेतुमद्वृत्तित्वनिवेशोनसंभवतीत्यत **आह** ॥ **प्रकृतप्रतियोगितेति** ॥ हेतुसमानाधिकरणत्वेनाभिमताभावीयप्रतियोगितेत्यर्थः ॥ **इष्टमेवैतदिति** ॥ व्यभिचारग्रहप्रतिबंधकतावच्छेदकविषयतावत्वेनकारणत्वाभ्युपगमान्नगौरवावकाशः ॥ **उक्तशंकेति** ॥ संसर्गाभावनिवेशपक्षेऽतिव्याप्तिवारणशंकेत्यर्थः ॥ **ध्वंसस्येत्यादि** ॥ **प्रतियोगिवैय्यधिकरण्यमक्षतमेवेति** ॥ **अथ** प्रतियोगितावच्छेदकसंबंधेनप्रतियोगिवैय्यधिकरण्यनिवेशकल्पेप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वविशेषणस्यावश्यकतयाध्वंसप्रतियोगितायाःसाध्यतावच्छेदककालिकसंबंधानवच्छिन्नतयातस्यलक्षणाघटकतयानतमादायातिव्याप्तिवारणसंभवइतिचेन्न ॥ साध्यतावच्छेदकसंबंधावच्छिन्नत्वस्थानेसाध्यतावच्छेदकसंबंधातिरिक्तसंबंधानवच्छिन्नत्वनिवेशेतत्प्रयोजनासंभववारणस्यध्वंसप्रतियोगितायाःसंबंधानवच्छिन्नतयातमादायातिव्याप्तिवारणस्यचसंभवात् ॥ नचैवंसंसर्गाभावत्वविशेषणवैय्यर्थ्यशंक्यंभेदत्वस्याखंडोपाधिरूपतामतेभेदीयप्रतियोगितायाःसंबंधानवच्छिन्नत्वात्तमादायाव्याप्तिवारणायतदावश्यकत्वात् ॥ **द्व्यणुकनाशा**

नुगुणेति ॥ अत्रायंक्रमः ॥ द्व्यणुकनाशार्थंपरमाणौक्रियाततः परमाणुद्वयविभागः ॥ ततः पूर्वसंयोगनाशः ततस्त्र्यणुकरूपोत्तरदेशेपरमाणुसंयोगः द्व्यणुकनाशश्चततः समवायिकारणनाशात्त्र्यणुकनाशः क्रियानाशश्चतत आश्रयनाशाच्चरमसंयोगनाशरूपोमहाप्रलयइति ॥ नचतादृशाच्चरमसंयोगस्यनाशकाभावान्नित्यत्वापत्तिः शंक्या ॥ परमाणुसंयुक्ताश्रयावयविद्रव्यनाशएवकार्यसहभावेनतस्यनाशकइतिकल्पनात् ॥ अविशिष्टधीव्यावृत्तेति ॥ विशिष्टधीनियामकत्वस्यविशेषणविशेष्ययोरपिसत्वाद्विशिष्टधीनियामकत्वस्यव्यावृत्त्यांतंविशेषणं॥ दीधितावेकार्थसमवायेनेति ॥ स्वसमवायिसमवायेनेत्यर्थः ॥ एकार्थसमवायस्यभावपदप्रवृत्तिनिमित्तसत्तानिष्ठयांजात्यादिभावपदार्थनिरूपिताधेयतायामवच्छेदकत्वंप्रामाणिकमितिबौद्धाधिकारेदीधितिकारैः कंठरवेणैवोक्तमितिनसंदर्भविरोधः ॥ सत्वादिव्याप्यत्वप्रसंगइति ॥ साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकरूपव्याप्यत्वप्रसंगस्तदेवोपपादयति ॥ सत्वादीति ॥ पारिभाषिकस्येवेति ॥ स्वविशिष्टाधिकरणवृत्तियावत्साध्यसमानाधिकरणकत्वरूपस्येत्यर्थः ॥ अन्यथेति ॥ तादृशव्याप्तौपारिभाषिकावच्छेदकत्वानिवेशइत्यर्थः ॥ प्रागिति ॥ पंचलक्षण्यांसार्वभौमपरिष्कारइत्यर्थः ॥ स्वाभाववतीतिअत्रकेचित् ॥ स्वनिरूपकानुयोगित्वविशिष्टनि

रूपितत्वस्यावच्छेदकविशिष्टाधिकरणानुयोगिकत्वोभयसंबंधेन प्रतियोगिताविशिष्टान्यहेतुमन्निष्ठाधिकरणतानिरूपकतावच्छेदकानुयोगिता
निरूपितप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यंस्वत्वाघटिता प्रतियोगिवैयधिकरण्यघटिताव्याप्तिस्तथाचद्रव्यत्वा
भाववान्सत्वादित्यादौनातिव्याप्तिरितिवदंति ॥ **तथाविधसंबंधेनेति** ॥ स्वावच्छिन्नत्वसंबंधेनेत्यर्थः ॥ **उदक्षरतायादुर्वारत्वादिति** ॥
यद्यपिस्वमतेपिसकलगोवृत्तित्वविषयतायाःकारणतावच्छेदकप्रवेशाभावेन गोत्वत्वपदेन गवेतरासमवेतत्वग्रहणेपिनायंदोषस्तथापिगोत्वत्व
शब्दार्थतायाःसकलगोवृत्तित्वावच्छेद्यतयासास्नादिसाधारणगोत्वत्वस्योदक्षरत्वंबोध्यं ॥ **यद्यपीति** पूर्वपक्षेकस्यचित्समाधानंनिरस्यति ॥ **गो
त्वत्वपदमिति** ॥ **तद्वृत्तीति** ॥ गोत्वत्ववृत्तीत्यर्थः ॥ तथाच गोत्वत्वस्यविधेयतावच्छेदकत्वयातद्वृत्तिधर्मे धर्मितावच्छेदकीकृत्यैवानवच्छेदक
त्वज्ञानस्यहेतुतयाताद्दशधर्माग्रहकालेनानुमितिनिर्वाहस्तादात्म्यसंबंधेनव्याप्तिस्वीकारेचताद्दशधर्माग्रहकालेप्यनुमितिनिर्वाहइत्युक्तानुमिते
स्तादात्म्यसंबंधेनव्याप्तिसाधकत्वमितिभावः ॥ सत्ताधिकरणेत्यादिनातिप्रसंगइत्यंतग्रंथोनयत्किंचित्पदव्यावृत्तिप्रदर्शनपरः किंतुसंबंधव्यावृ
त्तिप्रदर्शनपरइतिमतमाह ॥ **केचित्विति** ॥ **ननुपरस्परस्थलयोः** परस्परोपलक्षणत्वान्नसंदर्भविरोधइत्यत **आह** ॥ **आदिपदेनेति** ॥ २७१

अल्पाक्षरस्येति ॥ युधिष्ठिरार्जुनावित्यादौत्वभ्यर्हितत्वाद्युधिष्ठिरशब्दस्य पूर्वनिपातोभ्यर्हितंपूर्वमितिन्यायादितिबोध्यं ॥ जातौनकिंचित्स
मवैतीतिनिश्चयदशायामिति ॥ जातिनिरूपितत्वाभाववत्समवायसंबंधावच्छिन्नवृत्तित्ववदितिनिश्चयदशायामित्यर्थः ॥ तस्यैवविषयत्वौ
चित्यादिति ॥ अथैवंसतिभूतलेनघटइत्यादौतात्पर्यवशात्क्वचिद्घटाभावबोधः क्वचिद्भूतलवृत्तित्वाभावबोधइतिनन्दीधितिलेखनासंगतिः किंचोभ
याभावोविशिष्टाभावोवानमनोगुणवृत्तिरितिभ्रमकाले भूतत्वमूर्तत्वोभयंनमनसिविशिष्टसत्तानगुणइत्यादिप्रत्ययस्यसप्तम्यर्थवृत्तित्वाभावविषय
कत्वमावश्यकमितिविशिष्टसत्वादौगुणादिवृत्तित्वाभावसिद्धिर्दुर्वारैवेतिचेदत्रकेचित् ॥ गुणाद्यधिकरणकविशिष्टाभावोभयाभावादेर्योयद्धर्मावच्छि
न्नाधिकरणत्वाभाववान्सतद्धर्मावच्छिन्नाभाववानितिसामान्यव्याप्त्युपष्टंभ्यानुमानरूपप्रमाणांतरसिद्धत्वात्सिद्धविषयबाधग्रहे ऽसिद्धविषयांशेभ्र
मत्वमितिनियमेनविशिष्टाभावोभयाभावादिर्नगुणमनोवृत्तिरितिसिद्धविषयबाधग्रहेविशिष्टसत्तानगुणे भूतत्वमूर्तत्वोभयंनमनसीतिप्रत्ययस्यवि
शिष्टसत्ताद्यधिकरणकगुणादिवृत्तित्वाभावविषयकत्वावश्यकत्वेपितादृशवृत्तित्वाभावरूपासिद्धविषयांशेभ्रमत्वमेवोपगंतव्यमितिनततोविशिष्ट
सत्वादौगुणादिवृत्तित्वाभावसिद्धिरित्याहुः ॥ घटवान्महाकालत्वादित्यादौपुनरवृत्तिगगनादेरभावोलक्षणघटकइति ॥ अ

थैवमपिसंयोगेनदंडविशिष्टस्यकालिकसंबंधेनसाध्यतायांदंडिमान्महाकालत्वादित्यादौप्रतियोगिव्यधिकरणाभावाप्रसिद्धिर्दुर्वारैववन्हिमान्धू
मादित्यादौसंयोगरूपसाध्यतावच्छेदकसंबंधेकालिकसंबंधावच्छिन्नघटत्वादिनिष्ठावच्छेदकताकनिरूपकताकत्वहेत्वधिकरणपर्वताद्यनुयोगिक
त्वोभयस्यैवसत्वेनतादृशोभयाभाववत्साध्यतावच्छेदकसंबंधसामान्यकाभावाप्रसिद्धिवारणाययादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वश
रीरेप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबंधावच्छिन्नायानिवेशावश्यकत्वेनगगनमात्रसंयुक्तपदार्थाप्रसिद्धेर्गगनाभावस्यापिता
दृशोभयाभाववत्साध्यतावच्छेदकसंबंधसामान्यकत्वरूपप्रतियोगिवैय्यधिकरण्यासंभवाल्लक्षणघटकत्वासंभवः॥ नचोभयाभावप्रतियोगिकोटिनिवि
ष्टयोःस्वीययादृशप्रतियोगितावच्छेदकनिष्ठप्रतियोगितावच्छेदकत्वहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वयोरेकसंबंधावच्छिन्नत्वमेव
वह्न्यादिसाध्यकेतादृशाभावाप्रसिद्धिवारणायविवक्षणीयंतथाचनिरुक्तसाध्यकेगगनाभावःप्रतियोगिव्यधिकरणःप्रसिद्ध्यतीतिवाच्यं॥ तथापितादृ
शाभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकत्वाप्रसिद्ध्यातत्राव्याप्तिर्दुर्वारैवेतिचेन्न॥ गुणवान्द्रव्यत्वादित्यादौवि
षयितयागुणत्वादिमतःसमवायेनाभावमादायाव्याप्तिवारणायप्रतियोगितावच्छेदकतायांसाध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वमनिवेश्य २७२

साध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकत्वीयस्वरूपसंबंधेनहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्यैवनिवेश्यत्वेनपूर्वो
क्तयुक्त्यास्वानवच्छेदकसंबंधावच्छिन्नत्वस्वसमानाधिकरणत्वोभयसंबंधेनसाध्यनावच्छेदकताविशिष्टान्यत्वेनहेतुसमानाधिकरणाभावीयप्रति
योगितावच्छेदकतायाविशेषणावश्यकत्वेनवाऽनुपपत्त्यभावात्॥ प्रतियोगित्वस्यसंबंधांतरत्वेप्यनुयोगित्वस्यसंबंधाधिकरणत्वरूपत्वमेवेत्याशये
नशंकते॥ **अथेति**॥ **अन्यविशिष्टधीरिति**॥ घटोजलवानिति धीरित्यर्थः॥ **घटविशिष्टबुद्धीति**॥ घटेजलमितिबुद्धीत्यर्थः॥ संयोग
वच्छिन्नाधेयतायाअपिसंयोगरूपत्वमेवेत्यभिप्रायः॥ नन्वेवंसमवायैक्येपितदनुयोगितायाभिन्नत्वात्तस्यांचद्रव्यत्वप्रतियोगिकसंबंधनिरूपितत्ववि
रहेणतद्धर्मिकनिरुक्तोभयाभावोऽक्षतइतिद्रव्यत्वाभावस्यापिप्रतियोगिवैय्यधिकरण्याक्षतेर्द्रव्यंजातेरित्यादावग्रिमातिव्याप्त्यलग्नकतापत्तिरतआहे
वंचेति॥ **क्वचिदपीति**॥ एकधर्मावच्छिन्नोद्देश्यताकत्वबुद्धावित्यर्थस्तेनधवखदिरौछिन्नत्तीत्यादिवाक्यजन्यधवत्वखदिरत्वादिरूपनाना
धर्मावच्छिन्नोद्देश्यताकत्वबुद्धौकेवलपर्याप्तेःसंसर्गत्वावश्यकत्वेपिनक्षतिः॥ **अनभ्युपगमेनेति**॥ गगनंद्वइत्याकारकवाक्यस्यप्रामाण्यवार
णायेत्यादिः **उक्तस्थलेति**॥ इमेबहवस्त्रित्वादित्यादावित्यर्थः॥ स्वमतेआकाशमाकाशघटोभयस्मादित्यादावतिव्याप्त्यभावेपिबहुत्वसाध्यकेऽव्याप्ति

दुर्घटत्वेत्यालोच्यस्वयंसमाध्यंतरमाह ॥ **तस्मादिति ॥ इदंतुबोध्यमिति ॥ साध्यतेति** ॥ कपिसंयोग्येतत्वादित्यादिसंग्रहायमित्यंतं ॥ प्रमेयवान्वाच्यत्वादित्यादौ साध्याभावनिरूपितसाध्यवन्निष्ठाधिकरणतान्यहेतुमन्निष्ठाधिकरणताया अप्रसिद्धिरतः साध्यतावच्छेदकावच्छिन्नाभावनिवेशः ॥ **उभयाभावघटितप्रतियोगिवैय्यधिकरण्यानुधावनंदीधितिकृतामफलमेवेति ॥ इदमुपलक्षणं** ॥ स्वप्रतियोगितावच्छेदकसंबंधेनस्वप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयप्रतियोगितायांसाध्यतावच्छेदकसंबंधावच्छिन्नत्वमनिवेश्यस्वानवच्छेदकसंबंधावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबंधेनसाध्यताविशिष्टान्यत्वदानेनाप्यसंभववारणसंभवादुभयाभावघटितप्रतियोगिवैय्यधिकरण्यनिर्वचनायासो व्यर्थएवकालोघटवान्महाकालपरिमाणादित्यादौसमवायेनपटाभावीयतादृशप्रतियोगितानवच्छेदकत्वस्यसाध्यतावच्छेदकेसत्वाल्लक्षणसमन्वयः ॥ **नचैवमपिप्रमेयसाध्यकेतादृशप्रतियोगित्वाप्रसिद्धिरिति वाच्यं** ॥ संबंधघटकसामानाधिकरण्यस्थानेस्वव्यापकतावच्छेदकंयत्प्रतियोगितावच्छेदकसंबंधेनप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितात्वंतद्वत्वसंबंधस्यैवनिवेश्यत्वात् ॥ स्वव्यापकत्वंविहायव्यापकतावच्छेदकतादृशप्रतियोगितात्ववत्वनिवेशात्प्रतियोगितायाः प्रतियोगिस्वरूपतामतेवन्हिमान्धूमादित्यादौतादृशसमवायेनवन्ह्यभावीयप्र

तियोगितावच्छेदकत्वेपिसाध्यतावच्छेदकस्याव्याप्तिर्निरुक्तोभयसंबंधेनसाध्यताविशिष्टान्यप्रतियोगिनायां प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयत्व
विशेषणमपितादृशविशेषणस्यसंबंधकोटौनिवेशार्थं॥ यद्यप्येवमपिवन्हिधूमोभयसाध्यकेवन्हित्वधूमत्वोभयत्वानांत्रयाणांसाध्यतावच्छेदकत्वेऽव्या
प्तिर्निरुक्तोभयसंबंधेनसाध्यताविशिष्टान्यसमवायेनवह्न्यभावीयप्रतियोगितावच्छेदकवन्हित्वभिन्नत्वस्यतादृशत्रित्वावच्छेदेनासत्वादितिशंकासंभ
वतितथापितादृशप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नापर्याप्तिकविषयताश्रयस्यतादृशप्रतियोगितानवच्छेदकत्वमनेनविवक्षणा
न्नाव्याप्तिरितिबोध्यं॥ कूटनिवेशनेदुर्ज्ञेयत्वेनेति॥ हेतुमन्निष्ठभेदप्रतियोगितायांस्वावच्छेदकावच्छिन्नवत्वसंबंधेनावच्छेदकायाप्रतियोगि
तानवच्छेदकत्वनिवेशकत्वेपिकूटनिवेशाभावेप्युक्तपरंपरयासंबंधत्वाभावेतथानिवेशोनसंभवतीत्यभिप्रायः॥ द्वित्वावच्छिन्नाभावसत्वा
ल्लक्षणसमन्वयइति॥ ननुसमवायिनःसंयोगेनसाध्यतायांसंयोगिनःसमवायेनाभावीयप्रतियोगितायांतादृशप्रतियोगितासामान्यांतर्गता
यांसमवायावच्छिन्नत्वसंयोगावच्छिन्नत्वयोर्द्वयोरेवसत्वाद्व्याप्तिरितिचेन्न॥ साध्यतावच्छेदकसंबंधावच्छिन्नत्वमित्यनेनसाध्यतावच्छेदकसंबं
धनिष्ठसंबंधविधयावच्छेदकताकत्वस्यैवविवक्षितत्वादेवंयद्धर्मावच्छिन्नत्वमित्यनेनापियद्धर्मनिष्ठप्रकारविधयावच्छेदकतानिरूपकत्वमेव

विवक्षणीयमेतल्लाभायैवधर्मसंबंधयोरुपादानमित्यवधेयं ॥ उभयाभावानुसरणमिति ॥ अथोभयाभावनिवेशेपिहेतुमतिसर्वैरेवसंबं
धैः सर्वाणिवस्तूनिसंबध्नंतीतिभ्रमदशायांस्वप्रतियोगितावच्छेदकसंबंधेनस्वप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयत्वेनप्रतियोगिताज्ञानासं
भवात्तद्धर्मिकनिरुक्तोभयाभावज्ञानासंभवादनुमित्यनुत्पादोदुर्वारस्तत्रेष्टापत्तौनिरुक्तभ्रमकालेपीष्टापत्तिसंभवान्नोक्तरीत्योभयाभावानुसर
णबीजंसंभवतीतिचेन्न ॥ त्वदुपदर्शितभ्रमकालेसर्वथानुमितिकारणज्ञानासंभवेनतदाऽनुमित्यनुत्पादइष्टः ग्रंथकृद्दर्शितभ्रमकालेउभयाभाव
घटितव्याप्तिज्ञानस्यकारणत्वेऽनुमित्युपपत्तिरितिविशेषादुक्तरीत्योभयाभावानुसरणबीजकथनंगम्यमेव ॥ अतिव्याप्तिभयेनेति ॥ वि
षयतानिष्ठसाध्यतावच्छेदकावच्छिन्नत्वस्यप्रतियोगितायामभावादितिभावः ॥ दीधित्युक्तद्वितीयकल्पावतरणबीजंदूषयति ॥ इदंत्वि
ति ॥ दुर्वचमिति ॥ ननुतत्प्रकारकप्रमीयसांसर्गिकविषयताश्रयत्वमेवसाक्षात्परंपरासाधारणंतत्प्रतियोगिकत्वंसुवचमित्यत आह ॥
तादृशास्येति ॥ निरुक्तविषयताश्रयत्वरूपस्येत्यर्थः ॥ किंचिद्रूपेणापीति ॥ स्वसमवायिसंयोगत्वेनापीत्यर्थः ॥ भ्रमत्वानुपपत्तेरि
ति ॥ इदमापाततः ॥ येनरूपेणयस्यप्रतियोगिकत्वंयदनुयोगिकत्वंचतद्रूपविशिष्टसंसर्गकतत्प्रकारकतद्विशेष्यकज्ञानस्यैवप्रमात्वं ॥ किं

च्चित्समवायिनिरूपितत्वविशिष्टसंयोगत्वेनचनलौहित्यप्रतियोगिकत्वमपितुस्वसमवायिघटितरूपेणेतिनोक्तभ्रमत्वानुपपत्तिरिति ॥ स्वयमूह्य
मिति ॥ संयोगेन नरूपसाध्यकेघटादौ विरुद्धे संयोगेनरूपवतोऽप्रसिद्ध्यासंयोगेनरूपाभावस्यप्रतियोगितावच्छेदकसंबंधेनप्रतियोगिवैय्यधिक
रण्याभावेनरूपस्यसंयोगेनहेतुव्यापकत्वेपिसामानाधिकरण्यशरीरेसाध्यतावच्छेदकसंबंधनिवेशादेवपरामर्शस्यभ्रमत्वंतत्रसंबंधानिवेशपक्षेते
नसंबंधेनवृत्तिमत्वमपितत्संबंधघटितव्यापकत्वशरीरेनिवेशनीयमित्यादिकमित्यर्थः ॥ विदुषांकंठभूषायैरघुनाथेननिर्मिते ॥ संन्यायरत्नेसि
द्धांतलक्षणंपूर्णतामगात् ॥ ॥ इतिमीमांसान्यायपंचास्यश्रीमद्राघवाचार्यशिष्यस्यपर्वतेइत्युपनामकरघुनाथस्यकृतौगा
दाधरीपंचवादटिप्पण्यांन्यायरत्नाभिधायांसिद्धांतलक्षणंसंपूर्णं ॥ ॥ अथावयवग्रंथः ॥ ॥ अनुमानंनिरूप्येति
द्वितीयार्थोविशेष्यत्वमाधेयतयाप्रकृत्यर्थलिंगपरामर्शान्वितस्यतस्यलक्षणस्वरूपप्रामाण्यविभागप्रकारकज्ञानानुकूलव्यापाररूपानिपूर्वक
रूपधात्वर्थैकदेशोज्ञानेनिरूपकतासंबंधेनतादृशधात्वर्थस्यचध्वंसाधिकरणकालवृत्तित्वरूपल्यबर्थैकदेशध्वंसेप्रतियोगितयातादृशोत्तरका
लीनत्वस्यलक्षणादिनान्यायनदवयवप्रतिपत्त्यनुकूलव्यापाररूपन्यायनदवयवनिरूपणपदार्थेस्वरूपसंबंधेनतस्यचतदुत्तरद्वितीयार्थेविशेष्य

त्वे आधेयतयातादृशविशेष्यत्वस्य प्रतिजानीत इत्यत्र प्रतिपूर्वकजानात्यर्थोऽव्यवहितोत्तरकालकर्तव्यत्वप्रकारकज्ञानानुकूलव्यापाररूपप्रतिज्ञा
घटकज्ञाननिरूपकतयातादृशप्रतिज्ञायाआख्यातार्थकृतावनुकूलतयातादृशकृतेश्चाख्याताक्षिप्तकर्तरिमणिकारे समवायेनान्वयस्तथाचानुमानविशेष्यक
लक्षणादिप्रकारकज्ञानानुकूलोयोव्यापारस्तदुत्तरकालीनोयोलक्षणादिप्रकारकन्यायादिविशेष्यकज्ञानानुकूलव्यापारस्तद्विशेष्यकाव्यवहितोत्त
रकालकर्तव्यत्वप्रकारकज्ञानानुकूलकृतिमान्मणिकारइति विशिष्टबोधः आद्योव्यापारस्तत्करणमनुमानंतच्चलिंगपरामर्शः अथानुमानंनप्रमाणं
मित्यादिशब्दात्मकः ॥ द्वितीयोव्यापारः अनुमितिचरमकरणेत्यादिशब्दात्मकः॥ विभिन्नकारणजन्यतावच्छेदकत्वात्स्वार्थत्वपरार्थत्वेऽनुमितित्व
व्याप्येजानीतथाचस्वार्थानुमितौस्वार्थानुमानंपरार्थानुमितौपरार्थानुमानंजनकमितिकेचित् ॥ तन्न॥ सामान्यतोऽनुमितित्वपरामर्शत्वाभ्यामेव
कार्यकारणभावात्तादृशजात्यसिद्धेः ॥ नचस्वार्थानुमितावप्रामाण्यज्ञानानास्कंदितपरामर्शोहेतुः परार्थानुमितौत्वप्रामाण्यज्ञानविशिष्टोपीति
तयोर्वैजात्यमावश्यकमिति शंक्यं ॥ तथासतिन्यायजन्यज्ञानस्यैवोपनयार्थव्याप्तिपक्षधर्मताविषयकत्वेनपरामर्शरूपत्वसंभवात्परामर्शांतरानु
स्मरणस्यमूलकृतोव्यर्थत्वादित्यभिप्रेत्यपरार्थपदंव्याचष्टे ॥ विचारदशायामिति ॥ विपरीतोद्भावकपरजिगीषयान्यायप्रयोगोविचारः ॥ पर

स्यार्थः प्रयोजनं यस्मादिति विग्रहः ॥ न्यायसाध्यमित्यत्र साध्यत्वं न जन्यत्वरूपमित्याह वादीति ॥ सविशेषणे हीति न्यायेन विशेषणस्य परामर्श
स्य न्यायप्रयोजत्वमादाय विशिष्टतव्यवहारसमर्थने पि ज्ञायमानहेतोरनुमानत्वे तस्य वास्तवं न्यायप्रयोज्यत्वं मणिकारोक्तमनुपपन्नमत आह ॥
**अथवेति** ॥ केवलान्वयिग्रंथादावनुमानस्यैवानुमितेरपि त्रैविध्योक्तेस्तच्चेत्यस्यानुमित्यर्थकत्वमाह अथवेति केचित् ॥ अनुमीयत इत्यनुमानमिति
व्युत्पत्तौ भावेल्युटि न दर्थकत्वमनुमानपदस्येति बोध्यं ॥ **एतेन** ॥ परार्थानुमानस्य न्यायप्रयोज्यत्वकथनेन ॥ नन्वनुमाननिरूपणानंतरं न्यायादिनि
रूपणे का संगतिरत आह ॥ **कारणत्वमिति** ॥ प्रयोजकत्वमित्यर्थः ॥ संगत्यंतरमपि दर्शयति ॥ **स्मरणेति** ॥ तत्र समस्तरूपेत्यादि मूलस्य पक्ष
सत्वादितत्तद्रूपविशिष्टलिंगविषयकप्रतिपत्तिनिरूपितायाया जनकतानत्तदवच्छेदकीभूतयात्किंचिज्ज्ञानीयविषयतानिरूपकवर्णत्वव्याप
कसमुदायत्वमर्थस्तेन नासंभवः नाप्यतिव्याप्तिर्विवेचयिष्यते चेदमुपरिष्टात् ॥ **उपनयेन पक्षसत्वस्येति** ॥ पक्षसत्वं पक्षसंबंधः ॥ एतच्च धूम
वानयमित्येवोपनयाकार इति प्राचीनमताभिप्रायेण नेनोपनयस्य व्याप्तिबोधकत्वात्तेनैव सपक्षसत्ववक्ष्यमाणविपक्षासत्वयोर्बोधनादुदाहर
णानुधावनमग्रे चोदाहरणादित्रिके ः निव्याप्तिकथनं नासंगतमिति ज्ञेयं ॥ **उदाहरणेनेति** ॥ ननूदाहरणेन व्याप्तेरेव प्रतिपादनात्कथं सपक्षस

त्वविपक्षासत्वयोः प्रतिपादनमिति चेदत्राहुः ॥ उदाहरणजन्यबोधे हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके भाने तदव
च्छिन्नाभाववदसंबद्धत्वस्यापि हेतौ तुल्यवित्तिवेद्यतया भानात्साध्यसामानाधिकरण्यभाने सपक्षसत्वभानसंभवाच्च ॥ यद्वा स्वसमानाधिकरणाभावप्र
तियोगितानवच्छेदकसाध्यतावच्छेदककत्वमेव विपक्षासत्वमिति नानुपपत्तिः ॥ एतेन केवलान्वयिसाध्यकेन्याये लक्षणाव्याप्तिस्तत्र विपक्षाप्रसिद्धे
रिति निरस्तं ॥ नन्वेवमपि तत्र बाधसत्प्रतिपक्षयोरप्रसिद्ध्या लक्षणाव्याप्तिरस्त्येवेति चेन्न ॥ पक्षतावच्छेदकसामानाधिकरण्येन तेन संबंधेन तद्धर्मा
वच्छिन्नस्य साध्यतायां तत्स्थलीयन्यायलक्षणे पक्षनावच्छेदकव्यापकाभावप्रतियोगितासामान्ये यत्संबंधावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभावस्त
द्धर्मावच्छिन्नसाध्यकत्वमबाधितत्वं ॥ अवच्छेदकावच्छेदेन साध्यकस्थलीयन्यायलक्षणे च पक्षनावच्छेदकसमानाधिकरणाभावघटितनिरुक्तरूप
मेवाबाधितत्वं विवक्षणीयं ॥ एवं पक्षावृत्तिस्वसाध्यविरुद्धसामान्यकत्वमसत्प्रतिपक्षितत्वं ॥ पक्षावृत्तित्वं च येन संबंधेन साध्यविरोधस्तेन संबंधेन ॥ नि
रुक्ताबाधितत्वासत्प्रतिपक्षितत्वयोः केवलान्वयिसाध्यकहेतुसाधारण्येन न तत्साध्यकन्यायेव्याप्तिः ॥ यत्तु प्राचां मते साध्यवदन्यावृत्तित्वे सति
साध्यसामानाधिकरण्यस्यैव व्याप्तित्वात्तद्बोधकादुदाहरणात्तल्लाभ इति ॥ तदसत् ॥ केवलान्वयिसाध्यकन्यायेऽव्याप्त्यनिरासात् ॥ उदाहरण

घटकयत्पदोत्तरहेतुबोधकपदेव्याप्तिविशिष्टलक्षणाप्रसंगाच्च ॥ नचभवन्मतेप्युदाहरणघटकसाध्यपदेव्यापकत्वविशिष्टसाध्यलक्षणायाआव
श्यकत्वात्तौल्यमितिवाच्यं ॥ उद्देश्यविधेयभावस्थलेविधेयेउद्देश्यतावच्छेदकव्यापकत्वभानस्यौत्सर्गिकत्वात् ॥ नचैवंयत्तत्पदानर्थक्यंशंक्यं ॥
औत्सर्गिकनियमतात्पर्यग्रहएवोपयोगादग्रेचहेतोरुद्देश्यतावच्छेदकतयालक्षणादगादितिसंक्षेपः ॥ यद्प्युदाहरणादीनांसपक्षसत्वादिबोधकत्व
भावेप्युत्तरकालीनमानसएवतेषांबोधउपेयतेतावतैवतत्प्रतिपत्तिपरत्वसंभवात्तश्चात्रप्रतिपादकत्वमित्यनेनप्रतिपत्तिपरत्वमेवविवक्षितमिति
नकोपिदोषइति ॥ तदप्यसत् ॥ उक्तरीत्यानिर्वाहेमानसबोधकल्पनस्यायुक्तत्वात् ॥ निगमनेनेति ॥ प्रतिज्ञाहेतुभ्यांहेतुज्ञानज्ञाप्यसाध्यवत्वस्य
पक्षेऽवगतत्वान्निगमनघटकतत्पदस्यहेतुमात्रपरत्वेपौनरुक्त्यापत्तेस्तस्याबाधितत्वासत्प्रतिपक्षितत्वविशिष्टलाक्षणिकत्वादितिभावः ॥ केचि
त्तु ॥ अयंहेतुरबाधितत्वादिमान्साध्यान्वितत्वज्ञाप्यत्वबोधकवाक्योत्तरतथाविधज्ञाप्यत्वबोधकवाक्योपस्थितहेतुत्वादित्यनुमानोत्थापकतयै
वनिगमस्योपयोगात्तज्जन्यबोधोत्तरमनुमानेनैवतयोर्निर्णयइत्याहुस्तदसत् ॥ उक्तरीत्यैवनिर्वाहादुक्तहेतोर्बाधितसाधारण्याच्च ॥ नचव्याप्ति
पक्षधर्मताविशिष्टत्वेनहेतुर्विशेषणीयइतिवाच्यं ॥ असंकीर्णबाधितेतावतापिव्यभिचारात् ॥ अत्रचयथाश्रुतेशाब्दज्ञानस्यजनकतामतेऽसं

भवः समस्तरूपोपपन्नलिंगविषयकज्ञानाजनकत्वान्न्यायस्य एवंजनकत्वमात्रोक्तौज्ञायमानशब्दस्यजनकतामतेएकदेशेऽतिव्याप्तिर्जनकसमु
दायत्वोक्तावसंभवः अतः पूर्वोक्त एवतदर्थ आदरणीयः ॥ तत्रन्यायजन्यज्ञानस्यसमस्तरूपावच्छिन्नहेतुविषयकत्वाभावादसंभववारणायतत्त
द्रूपनिवेशः ॥ एकैकन्यायवृत्तिसमुदायत्वस्यलक्षणघटकत्वोपपत्तयेज्ञानेयत्किंचित्वनिवेशः ॥ उदासीनविषयकन्यायविषयकज्ञानमादायतद्घ
टितसमुदायेऽतिव्याप्तिवारणायावच्छेदकविषयतानिवेशः ॥ अव्यवहितोत्तरत्वादिसाधारणसमुदायत्वस्यैवतादृशविषयतानिरूपकत्वव्याप
कत्वादसंभवइतिवर्णत्वनिवेशः ॥ एकदेशवृत्तिसमुदायत्वव्यावृत्तयेयायाजनकतेतिव्यापकत्वनिवेशोपितदर्थमेव ॥ ननुमूलेअत्रेत्यादिनाऽतिव्या
प्तिप्रदर्शनमसंगतमत्रेत्यनेनलक्षणवाक्यस्यसन्निहितस्यपरामर्शात्तस्यचलक्षणपरत्वेनसमस्तरूपोपपन्नलिंगपरत्वाभावात् ॥ अतत्परशुकाद्यु
च्चरितन्यायसमानाकारवाक्यपंचकवारणायतत्परत्वस्यलक्षणेऽवश्यंविवक्षणीयत्वादित्यतआह ॥ समस्तेति ॥ ननुलक्षणवाक्यघटकस
मस्तरूपोपपन्नलिंगेत्यंतेतादृशलिंगप्रतिपत्तितात्पर्यकत्वमावश्यकमन्यथाविशिष्टलक्षणवाक्याद्विशिष्टार्थबोधानुपपत्तिः ॥ अवांतरवाक्या
र्थबोधमजनयित्वाविशिष्टार्थबोधानुपपत्तेः ॥ नचतादृशलिंगपरत्वंतादृशलिंगमुख्यविशेष्यकबोधतात्पर्यकत्वंलक्षणवाक्यघटकसम

त्तरूपोपपन्नालिंगेत्यंतस्यचनलिंगमुख्यविशेष्यकबोधतात्पर्यकत्वंवाक्यमुख्यविशेष्यकबोधे एवतत्तात्पर्यादितिवाच्यं ॥ एवंसत्यसंभवापत्तिर्न्या
यस्यापिलिंगमुख्यविशेष्यकबोधतात्पर्यकत्वाभावात् ॥ नचहेत्ववच्छिन्नविशेष्यकहेतुव्यापकसाध्यप्रकारकःसन्पक्षेहेतुप्रकारकः अबाधितासत्प्रति
पक्षितहेतुज्ञानज्ञाप्यप्रकारकश्चयोबोधस्तज्जनकतावच्छेदकयत्किंचिज्ज्ञानीयविषयतेत्यादिरीत्यानिर्वचनान्नलक्षणवाक्येऽतिव्याप्तिरितिशं
क्यं ॥ समस्तेतिव्याख्यानासंगतेः ॥ नचलिंगविशेष्यकसपक्षसत्वादिबोधएवोदाहरणादितात्पर्यात्ताद्दशबोधतात्पर्यकत्वमुदाहरणादीनामक्ष
तंताद्दशतात्पर्यनिर्वाहश्चोदीच्यमानसबोधेनेति लिंगमुख्यविशेष्यकत्वमेवलक्षणघटकमितिनक्षतिरिति वाच्यं ॥ उपनयेनपक्षसत्वस्यप्रति
पादनादित्याद्यसंगतेरितिचेन्न ॥ विभक्त्यंतवृत्तित्वेनसमुदायत्वविशेषणे लक्षणवाक्यैकदेशेऽतिव्याप्त्यप्रसक्तेरुक्तव्याख्यानसंगतेः ॥ नच
विशिष्टलक्षण वाक्यएवातिव्याप्तिस्तस्यताद्दशबोधपरत्वाद्विभक्त्यंतत्वाच्चेतिवाच्यं ॥ विषयत्वनिष्ठविशेष्यतानिरूपितप्रकारताभिन्नालिं
गविषयताकबोधतात्पर्यकत्वोक्तौनायमतिप्रसंगइतितात्पर्यात् ॥ नन्वयमप्यतिप्रसंगोविभक्त्यंतवृत्तित्वमित्यनेनसाध्यान्वितहेतुत्वप्रति
पादकविभक्त्यंतवृत्तित्वविवक्षायांपूर्वोक्तहेत्ववच्छिन्नविशेष्यकेत्यादिरीत्यालक्षणनिष्कर्षाद्वानसंभवत्यत आहेदमुपलक्षणमिति ॥ इ

दमप्युपलक्षणं ॥ घटमानयेत्याद्युदासीनवाक्यघटितसमुदायेन्यायद्वयसमुदाये चानिव्याप्तिर्द्रष्टव्या ॥ नचतादृशसमुदायत्वनिष्ठन्यूनवृत्ति
त्वानिरूपकत्वनिवेशेनतद्वारणंशंक्यं ॥ तथाविवक्षणेप्रतिज्ञादिवाक्यपंचकसमुदायत्वस्यतादृशोदाहरणादित्रिकसमुदायत्वनिष्ठन्यूनवृत्ति
तानिरूपकत्वेनासंभवापत्तेः ॥ ननु समस्तरूपोपपन्नलिंगविषयकशाब्दबोधप्रयोजकवाक्यपंचकमात्रवृत्तिसमुदायत्वंन्यायत्वमित्युक्तौन
कोपिदोषः मात्रपदनिवेशात्कोवन्हिमानित्यादिवाक्यमादायनदोषइतिचेन्न ॥ लिंगंपक्षवृत्तिसपक्षवृत्तीत्यादिवाक्यपंचके ऽतिव्याप्तेर्दुर्वारत्वात् ॥
प्रतिज्ञात्वादिनावाक्यपंचकनिवेशप्रयोजकांतवैयर्थ्यापत्तिर्द्धांतलक्षणएवपर्यवसानाच्च ॥ उपाध्यायमतमाश्रित्यलघुन्यायलक्षणपरतयामूलं
व्याख्यातुमारभते ॥ अनुमितिचरमकारणेति ॥ अनुमितिजननंस्वोत्तरभाविज्ञानानपेक्षत्वंचरमत्वं ॥ प्रयोजकांतविशेषणपरिचितवैक
ल्पिकैकबोधघटितलक्षणस्यैवमूलस्वरसासिद्धत्वंदर्शयति ॥ अत्रचेति ॥ महावाक्यार्थबोधस्येति ॥ उपनयार्थहेत्वर्थान्वितप्रतिज्ञार्थोदाह
रणार्थयोरुद्देश्यतावच्छेदकतयानिगमनार्थस्यचविधेयतया ऽन्वयादुदाहरणघटकयत्तत्पदयोर्दृष्टांतबोधकस्यचतात्पर्यग्राहकतयोपयोगस्वी
कारात्धूमज्ञानज्ञाप्यवन्हिमत्पर्वताभिन्नधूमवद्धूमव्यापकवन्हिमदभिन्नवन्हिव्याप्यधूमवदभिन्नःपर्वतः आबाधितासत्प्रतिपक्षितधूमज्ञानज्ञा

प्यवह्निमत्पर्वताभिन्नइत्याकारकविशिष्टार्थबोधस्येत्यर्थः ॥ वक्ष्यमाणरीत्येतादृशबोधासंभवमभिप्रेत्याह ॥ तावदर्थेति ॥ परिचायकमात्र
मिति ॥ लक्षणघटकबोधंप्रदर्श्यस्वयंनिवर्ततइतियावत् ॥ ननुतावदर्थविषयकबोधजनकत्वोक्तावसंभवः ॥ वाक्यज्ञानस्यैकजनकत्वात् ॥ न
चतादृशबोधजनकज्ञानविषयत्वंविवक्षितमितिशंक्यं ॥ एकदेशातिव्याप्तेस्तादृशविषयत्वव्यापकत्वोक्तौत्वसंभवइत्यतआह ॥ तादृशेति
प्रतिज्ञादिरूपैकदेशातिव्याप्तिवारणाययादृशायादृशेति ॥ पर्याप्त्यनिवेशास्फोरणायज्ञानत्वेनेति ॥ मनोयोगतात्पर्यज्ञानयोग्यताज्ञानानांव्या
वृत्तयेशाब्दज्ञानस्येतिवक्ष्यमाणार्थकं ॥ तत्तद्धर्मावच्छिन्नैकवाक्याप्रसिद्धेःप्रत्येकमिति ॥ तथाचयादृशयादृशधर्मप्रकारकत्वावच्छिन्नायत्किंचिच्छा
ब्दबोधनिष्ठजन्यतानिरूपितशाब्दज्ञाननिष्ठाजनकतातत्तद्धर्मसमानाधिकरणसमुदायत्वंन्यायत्वंपर्यवसितं ॥ पर्वतोवह्निमानित्यादिप्रतिज्ञादि
ज्ञानस्याव्यवहितोत्तरत्वसंबंधेनतत्तद्वर्णविशिष्टचरमवर्णत्वप्रकारकज्ञानत्वेनहेतुत्वाद्वर्णानुपूर्व्यैवतादृशोधर्मस्तदवच्छिन्नत्वंचरमवर्णस्यैवेति
चरमवर्णपंचकेऽतिव्याप्तिरतआहतादृशेतीतिकेचित् ॥ ननुतादृशशाब्दबोधंप्रतिपूर्वपूर्ववर्णोत्तरत्वविशिष्टोत्तरोत्तरवर्णत्वप्रकारक
ज्ञानस्यैवहेतुतयाऽसंभवस्तत्तदवच्छिन्नमात्रवृत्तित्वस्यन्यायात्मकसमुदायत्वेऽसत्वात् ॥ उदासीनवाक्यांतरसाधारणसमुदायत्वमादायोदासी

नवाक्यघटितसमुदायेऽतिव्याप्तिवारणाय मात्रपदार्थांतर्भावस्यावश्यकत्वादतस्तादृशायत्किंचिच्छाब्दबोधंप्रतिशाब्दज्ञानस्ययादृशायादृशध
र्मप्रकारकज्ञानत्वेनहेतुत्वंतादृशतादृशधर्मप्रकारकज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वमेवविवक्षणीयंतथाचगौरवमतोलघुपर्यवसित
लक्षणमाहतादृशेतीत्यपरे ॥ वस्तुतस्तु पत्वादिनावर्णांतरावगाहिज्ञानस्यापिहेतुत्वानुरोधेनपकारोत्तराकारोत्तरेतिरीत्याविशिष्टानुपूर्वीप्र
कारकज्ञानत्वेनकारणत्वकल्पनाऽसंभवादव्यवहितोत्तरत्वसंबंधावच्छिन्नपत्वावच्छिन्नप्रकारतानिरूपिताव्यवहितोत्तरत्वसंबंधावच्छिन्न
अत्वावच्छिन्नप्रकारतानिरूपितेतिक्रमेणनिरूप्यनिरूपकभावापन्ननत्वावच्छिन्नविषयताकज्ञानत्वादिनैवप्रतिज्ञादिज्ञानस्यकारणताकल्पनमाव
श्यकंतत्रचविनिगमनाविरहेणाव्यवहितपूर्वत्वसंबंधावच्छिन्ननत्वावच्छिन्नविषयतानिरूपितेतिक्रमेणपत्वावच्छिन्नप्रकारताकत्वस्यापिकारणताव
वच्छेदकतयापत्वादिरपितादृशोधर्मइतिनतद्धर्मावच्छिन्नसमुदायत्वंनचरमवर्णपंचकस्येतिनतत्रातिव्याप्तिः परंतुयादृशवर्णस्यानेकधाप्रतिज्ञा
दिघटकत्वंतादृशैकैकवर्णघटितप्रतिज्ञादिसमुदायेऽतिव्याप्तिर्दुर्वारैवेत्यतस्तादृशेतिपर्यवसितपरिष्कारादरइतिध्येयं॥ तत्रघटमानयेत्यादिवाक्य
निरासायतादृशत्वंशाब्दबोधविशेषणं॥ तादृशायत्किंचिज्ज्ञाननिवेशेयत्रपर्वतपदप्रतिपाद्यत्वादिरूपशाब्दघटितहेतुभिःप्रतिज्ञाद्यर्थविषयकानुमि २७९

तिस्तत्तादृशानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयतानिरूपकवर्णत्वव्यापकत्वस्यपरामर्शविषयपर्वतधूमवन्हिपदसमुदायत्वेसत्वा
त्तादृशसमुदायेऽतिव्याप्तिरितिशाब्दबोधनिवेशः॥शाब्दत्वावच्छिन्नत्वस्यानुमित्यवृत्तित्वस्यवाजन्यत्वेनिवेशालाभार्थः॥ नचतादृशायावज्जनकतांत
र्गतविशेषणज्ञानजनकतावच्छेदकविषयताश्रयवर्णाप्रसिद्धैवनातिव्याप्तिरितिवाच्यं॥ तुल्ययुक्त्याऽसंभववारणायतद्व्यावृत्तशाब्दज्ञाननिष्ठ
जनकतायाएवनिवेश्यत्वात्॥ तात्पर्यज्ञाननिष्ठजनकतामादायासंभववारणायशाब्दज्ञाननिष्ठेति॥ यद्विवतात्पर्यज्ञानस्यैतद्वाक्यमीदृशविशि
ष्टार्थतात्पर्यकमित्याकारकत्वात्तत्रचवाक्यस्याविषयत्वान्नासंभवइतिविभाव्यतेतदायोग्यताज्ञानस्यवर्णाविषयकत्वात्तन्निष्ठजनकतामादायासंभ
ववारणायतन्निवेशस्तेनचेच्छाघटितधर्मानवच्छिन्नत्वविशिष्टनिर्णयत्वावच्छिन्नत्वंविवक्षणीयमतोयोग्यताज्ञाननिष्ठजनकत्वस्यशाब्दयोग्यतोभ
यविषयकसमूहालंबनवृत्तितयायथाश्रुतविशेषणेनाव्यावर्तनेपिनक्षतिर्नवासर्वेवर्णाःप्रमेयावर्णत्वादित्यादौयोग्यताज्ञानस्यवर्णविषयकत्वेऽव्य
व्याप्तिस्तन्निष्ठजनकतायानिर्णयत्वावच्छिन्नत्वात्॥ तात्पर्यज्ञानस्यवाक्याविषयकत्वेतन्निष्ठजनकतावारणायेच्छाघटितधर्मानवच्छिन्नत्वंविशेष
णं॥ नचैकवर्णाव्यवहितोत्तरापरवर्णत्वरूपानुपूर्वीप्रकारकनिश्चयत्वावच्छिन्नजनकतायामपीच्छाघटितधर्मानवच्छिन्नत्वासंभवःस्ववृत्तियावध्वं

सविशिष्टत्वरूपक्षणत्वघटिताव्यवहितोत्तरत्वशरीरेस्ववृत्तियावध्वंसविशिष्टत्वेनेच्छायाअपिघटितत्वादितिवाच्यं ॥ इच्छात्वावच्छिन्नघटितधर्मान
वच्छिन्नत्वस्यैवतदर्थत्वात् ॥ प्रतिज्ञाद्यैकैकावयववारणाययायाकारणतेति ॥ तादृशयत्किंचिज्ज्ञानीयविषयतायाःपत्वादावपिसत्वान्न्यायत्वे
तव्द्यापकत्वाभावादसंभवइतिवर्णत्वनिवेशः ॥ तादृशवर्णवृत्तिसमुदायत्वोक्तौप्रतिज्ञाद्येकदेशघटितसमुदायातिव्याप्तिरतोव्यापकत्वनिवेशः ॥
शाब्दबोधज्ञानयोर्यत्किंचित्वविशेषणप्रयोजनंग्रंथकृदुक्तमेवावधेयं ॥ ननुतादृशयत्किंचिच्छाब्दबोधजनकज्ञानविषयतावच्छेदकसमुदायत्वमि
त्येवास्तुकिंव्यापकत्वनिवेशेन ॥ नचानुपूर्व्याविशेषस्यैवतादृशज्ञानविषयतावच्छेदकत्वान्न्यायत्वरूपसमुदायत्वस्यनतथात्वमितिवाच्यं ॥ समुदा
यत्वातिरिक्तानुपूर्व्यादुर्वचत्वात् ॥ यदिचैवंयथाकथंचिद्व्यस्तप्रतिज्ञादिघटकवर्णसमुदायज्ञानादपितादृशशाब्दबोधप्रसंगइतिविभाव्यतेतदाऽ
स्तुक्रमिकवर्णसमुदायज्ञानत्वेनहेतुत्वंतावतापिसमुदायत्वस्यतादृशज्ञानविषयतावच्छेदकत्वाक्षतेरित्यतआह ॥ तादृशधर्मश्चेति ॥ अ
यमभिप्रायः ॥ नतावत्क्रमिकवर्णसमुदायज्ञानत्वेनकारणत्वसंभवःक्रमस्यदुर्निरूपत्वात् ॥ सुनिरूपत्वेतज्ज्ञानमेवास्तुहेतुः किमंतर्गडुनास
मुदायत्वेनेतिनतादृशज्ञानविषयतावच्छेदकसमुदायत्वघटितलक्षणसंभवइति ॥ ननुपर्वतोवन्हिमान्पर्वतोदहनवानित्याद्याकारकसकलप्र

तिज्ञासाधारणैकानुपूर्व्यसंभवात्कथमानुपूर्वीप्रकारकज्ञानस्यहेतुतापरस्परंव्यभिचारादित्यत आह ॥ आनुपूर्वीविशेषइति ॥ तथाच
ननदानुपूर्वीप्रकारकज्ञानाव्यवहितोत्तरतत्तदर्थविषयकशाब्दबोधंप्रतितत्तदानुपूर्वीज्ञानस्यहेतुत्वान्नव्यभिचारइतिभावः॥ एतेनतत्तदा
नुपूर्वीप्रकारकत्वान्यतमवज्ज्ञानत्वेनहेतुत्वान्नव्यभिचारइतिकेषांचिदुक्तिर्गौरवात्परास्ता॥ तृणारणिमणीनामप्यन्यतमत्वेनकारणत्वप्रसंगश्चेत
न्मते॥ तादृशेति ॥ उक्तयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकेत्यर्थः॥ प्रतिज्ञात्वादिनिष्ठन्यूनवृत्तितानिरूपकत्वादसंभववारणाययावत्का
रणतानिवेशः॥ प्रतिज्ञाद्येकदेशनिष्ठसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वादसंभववारणायव्यापकत्वनिवेशः॥ व्युत्क्रमप्रयुक्तप्रतिज्ञा
दीति ॥ तादृशासाध्यवत्पक्षादिबोधकवाक्येत्यर्थस्तेनतत्रप्रतिज्ञाव्यवहाराभावेपिनासंगतिः॥ व्युत्क्रमेति ॥ प्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहे
त्वादिवृत्तिसमुदायत्वान्यत्वेनेत्यर्थः॥ एकैकन्यायघटकेति ॥ अथैकैकन्यायघटकप्रतिज्ञाद्येकैकवाक्यसमुदायत्वस्यतादृशन्यायत्वरूपसमुदा
यत्वनिष्ठन्यूनवृत्तितानिरूपकतयैववारणमितिचेन्न ॥ तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वमित्यनेनस्वाभाववद्वृत्तिस्वसमानाधि
करणभेदप्रतियोगितावच्छेदकतादृशसमुदायत्वकंयद्यत्तत्तद्भेदकूटस्यैवविवक्षितत्वात्तस्यचतादृशसमुदायत्वेऽक्षतत्वादन्यथानानान्यायघट

कप्रतिज्ञादिवृत्तिन्यायांतरवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वस्यतंन्यायत्वेसत्वादसंभवप्रसंगात्॥ स्वाश्रयीभूतयत्किंचिदित्यादि॥ अत्रतादृ
शप्रतिज्ञाव्यवहितोत्तरत्वस्यतदधिकरणक्षणध्वंसाधिकरणक्षणघटितस्यक्रमिकवर्णसमुदायरूपप्रतिज्ञाधिकरणाप्रसिध्याऽसंभवइतितादृशप्रतिज्ञात्वा
श्रयचरमवर्णएवप्रतिज्ञाशब्देनग्राह्यइतिसूचनाययत्किंचिदितीतिकेचित्॥ परेतुएकैकन्यायघटकप्रतिज्ञाद्येकैकवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तित्वनिरूप
कत्वमादायासंभववारणाययज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकत्वंतज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वंविव
क्षणीयमेवंचसतिसमानाकारकप्रतिज्ञाद्वयहेत्वादिचतुष्टयेनत्षट्कसमुदायेऽतिव्याप्तिरतोयात्किंचिदितीतिवदंति॥ अथैवंविवक्षणेनैवव्युत्क्रमप्र
युक्तप्रतिज्ञादिसमुदायवारणाद्व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्तीत्यादिविशेषणंव्यर्थं॥ मैवंतस्यैवस्वाश्रयेत्याधिकंनिवेश्यपरिष्कृतत्वेनतद्व्यर्थ्याभावात्॥
यत्तुयद्यत्समुदायत्वंतत्तद्भेदकूटपर्यवसिततादृशविशेषणशरीरेप्रतियोगिनिव्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्तिसमुदायत्वभेदस्यापिनिविष्टत्वान्नतद्वैय्य
र्थ्यमितितदसत्॥ आश्रयप्रतिज्ञाव्यवहितोत्तरत्वआश्रयप्रतिज्ञानुकूलकृतिसमानाधिकरणकृतिजन्यत्वोभयशून्यवृत्तित्वतादात्म्योभयसंबंधेनस
मुदायत्वविशिष्टान्यत्वेसतिआश्रयहेत्वव्यवहितोत्तरत्वआश्रयहेत्वनुकूलकृतिसमानाधिकरणकृतिजन्यत्वोभयशून्यवृत्तित्वतादात्म्योभयसंबंधेनसमु २८१

दायत्वविशिष्टान्यत्वमितिरीत्यास्ववृत्तित्वस्वाव्यवहितोत्तरत्वस्वानुकूलकृतिसमानाधिकरणकृतिजन्यत्वोभयशून्यहेतुवृत्तित्वोभयसंबंधेनप्रतिज्ञादिवि
शिष्टान्यत्वमितिरीत्यावाऽनुगमभेदचतुष्टयस्यैवनिवेशनीयतया सर्वज्ञदुर्ज्ञेयतापादककूटनिवेशानावश्यकत्वात् ॥ उभयशून्यत्वनिवेशाच्चक्रमेणपं
चभिः पुरुषैः प्रयुक्तप्रतिज्ञादिपंचकसमुदायेऽतिव्याप्तिवारणाय स्वाश्रयप्रयुक्तत्वस्वानाश्रयप्रयुक्तत्वोभयसंबंधेनैकत्ववदन्यत्वरूपैकपुरुषप्रयुक्त
त्वविशेषणंजगदीशानामनुपादेयं ॥ तादृशकूटप्रतियोगिनितादृशसमुदायत्वभेदनिवेशोप्रतियोगिव्यक्तिपरिचायकोक्तिवैयर्थ्याच्च ॥ नन्वेवमप्यसं
भवः हेतुत्वोदाहरणत्वादिनाप्रतिज्ञामात्रावगाहिभ्रमात्मकयात्किंचिज्ज्ञानीयतत्तज्जनकतावच्छेदकविषयताश्रयवर्णत्वव्यापकप्रतिज्ञात्वनिष्ठन्यून
वृत्तित्वनिरूपकत्वान्यायत्वस्येत्यत आह दिगिति ॥ तदर्थश्चयात्किंचिज्ज्ञानेभ्रमान्यत्वविवक्षणान्नासंभवः ॥ एवंविशेष्यदलेपिभ्रमान्यत्वंज्ञानेवि
शेषणंदेयं तेनप्रतिज्ञाद्येकदेशघटमानयेत्यादिवाक्येच नातिप्रसंगः ॥ तथाचायमत्रनिष्कर्षः ॥ तादृशायत्किंचिच्छाब्दबोधनिरूपितेच्छात्वा
वच्छिन्नघटितधर्मानवच्छिन्नत्वविशिष्टनिर्णयत्वावच्छिन्नायायाकारणतातत्तदवच्छेदककोटिप्रविष्टभ्रमान्ययात्किंचिज्ज्ञानीयविषयतानिरूपकवर्ण
त्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकप्रतिज्ञादिविशिष्टान्यतादृशसमुदायत्वंन्यायत्वं ॥ अथात्रव्यापकत्वनिवेशोव्यर्थः विनिगमनाविरहेण

तत्तद्वर्णविषयितानांकारणतावच्छेदकत्वेनयायाकारणतेतिविप्सयातत्तद्वर्णविषयकत्वावच्छिन्नसकलकारणतानामेवलक्षणघटकतयातत्तदवच्छेदक
विषयताश्रयवर्णवृत्तित्वस्यप्रतिज्ञाद्येकदेशसमुदायत्वेऽसत्वेनतत्रातिप्रसंगाभावात् ॥ नचयावत्कारणतांतर्गताया अव्यवहितोत्तरत्वादिसांसर्गिकवि
षयित्वावच्छिन्नकारणतातदवच्छेदकविषयितानिरूपकवर्णाप्रसिद्धिर्व्यापकत्वानिवेशे एकदेशातिव्याप्तिभयेनसाक्षात्तदवच्छेदकत्वस्यैवनिवेशनीय
तयातादृशकारणतायांपरंपरयाऽवच्छेदकविषयितानिरूपकवर्णप्रसिद्धिरितिवक्तुमशक्यमितिवाच्यं ॥ वर्णविषयकत्वावच्छिन्नयावत्कारणता
विवक्षणात् ॥ एवंसतिवर्णत्वनिवेशोव्यर्थइतिनशंक्यं ॥ तस्यतादृशाकारणतानिवेशतात्पर्यकत्वात् ॥ नचैवमसंभवस्तादृशानुपूर्व्यविषयकज्ञानत्वे
नैवहेतुतयाविषयितायाःसाक्षादनवच्छेदकत्वादितिवाच्यं ॥ तथासतिज्ञानत्वप्रवेशेगौरवाज्ज्ञानीयविषयितायाएवकारणतावच्छेदकत्वात् ॥ धर्मध
र्मितावच्छेदकभावापन्नज्ञानत्वविषयित्वयोरेवतदवच्छेदकत्वाभ्युपगमाच्चनोक्तदोषः ॥ यत्तुतत्तद्वर्णविषयितानांविनिगमनाविरहेणनसाक्षादवच्छेदक
त्वंसंभवतिप्रागभावानभ्युपगमपक्षेस्वोत्पत्त्यधिकरणक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपाव्यवहितपूर्वत्वस्योत्पत्तिद्वयघटितत्वेनगुरुतयातद्वर्णाव्य
वहितपूर्वतद्वर्णज्ञानस्यहेतुत्वेगौरवात्तदघटिततत्तद्वर्णाव्यवहितोत्तरतत्तद्वर्णत्वरूपानुपूर्व्यप्रकारकज्ञानस्यैवहेतुत्वादिति ॥ तदसत् ॥ स्वज्ञाने २८२

च्छिन्नमत्वस्ववृत्तिध्वंसप्रतियोगित्वस्वविषयककृतिसमानाधिकरणकृतिविषयत्वैतत्त्रितयसंबंधेन तत्तद्वर्णविशिष्टत्वरूपाव्यवहितपूर्वत्वस्यातिलघुत
यात्संबंधेन तत्तद्वर्णविशिष्टतत्तद्वर्णज्ञानत्वेन कारणतायाद्दूषयितुमशक्यत्वात् ॥ विषयतानांनिरूप्यनिरूपकभावेविनिगमनाविरहेण सकलवर्ण
विषयितानांकारणतावच्छेदकत्वस्यनिष्प्रत्यूहत्वाच्च ॥ अत्र वदंति ॥ यायाकरणतेत्यनेनसकलकारणताउपादायतत्तदवच्छेदकविषयितानिरूप
कवर्णवृत्तिसमुदायत्वस्यन्याय्यत्वेगौरवात्प्रतिज्ञाज्ञानीयैकाहेतुज्ञानीयैकेतिरीत्यापंचकारणतास्तत्तद्घटकचरमवर्णविषयकत्वावच्छिन्ना एवोपा
देयास्तथाचैकदेशावारकतयाव्यापकत्वनिवेशःसार्थकः ॥ नच विनिगमनाविरहः शंक्यः समनियतानांकारणतानामैक्योपगमसंभवात्तच्च कारणता
नामेवलक्षणघटकत्वात् ॥ नचैवंकारणतावच्छेदककोटिप्रविष्टत्वव्यर्थमिति शंक्यं ॥ विषयितामात्रेतदवच्छेदकतापर्याप्तेःपूर्वोक्तरीत्याऽसं
भवेनतन्निवेशेसंभवस्यैवप्रसंगेनपर्याप्त्यनिवेशसूचनायैवतदुपादानात् ॥ नच समनियतकारणतानामैक्योपगमेऽवयवलक्षणेआनुपूर्वी
विशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयितानिरूपकत्वमित्यत्रसमनियतत्वनिवेशवैयर्थ्यप्रसंगस्तादृशानिश्चयत्वाव
च्छिन्नकारणतानिवेशासंभवादितिवाच्यं ॥ समनियतानांकारणतानामैक्यानैक्यपक्षद्वयसाधारण्येनतन्निवेशात् ॥ तासामैक्यपक्षाभिप्राये

णव्यापकत्वोपादानात्॥ ननुपंचानामेवकारणतानांनिवेशोयत्किंचिच्छाब्दबोधनिरूपितेत्यस्यपरिचायकतयाऽनिवेशापत्तिः॥ नचेष्टापत्तिः॥
आनुपूर्व्यभेदभिन्नानांकारणतानांतत्तद्व्यक्तित्वेननिवेशात्॥ पर्वतोवन्हिमान्पर्वतोदहनवा नित्यादिप्रतिज्ञादिघटिततत्साध्यकन्यायाननुगमप्रसं
गात्॥ अवच्छेदकविषयितानिरूपकवर्णवृत्तित्वसंबंधेनतादृशसकलकारणताविशिष्टसमुदायत्वमितिव्यापकत्वाघटितसकलकारणताघटितल
घुतरलक्षणसंभवाच्चेतिचेन्न॥ स्ववृत्तिसाध्यवत्पक्षविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णत्वव्यापकत्वस्व
वृत्तिहेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णत्वव्यापकत्वेत्यादिव्या
पकतापंचकसंबंधेनतादृशशाब्दविशिष्टसमुदायत्वंविवक्षणीयमेतदर्थतात्पर्यग्राहकमेवशाब्देयत्किंचित्वंनतुलक्षणप्रविष्टमननुगमापत्तेरतो
नोक्ताननुगमोलक्षणानंत्यंवेति॥ वस्तुतस्तु तादृशायत्किंचिच्छाब्दबोधनिरूपितानिर्णयत्वावच्छिन्नायायाकारणतास्वावच्छेदककोटिप्रविष्टयत्किं
चिज्ज्ञानीयविषयितानिरूपकवर्णत्वव्यापकतासंबंधेनतादृशसकलकारणताविशिष्टसमुदायत्वंविशेष्यदलपर्यवसितार्थोमतद्वयसाधारणस्त
त्रसमनियतकारणतानामैक्यपक्षेएकदेशसमुदायेऽतिव्याप्तिवारणायव्यापकतानिवेशः अनैक्यपक्षेसकलकारणतांतर्गताव्यवहितोत्तरत्वविशिष्टहेतुत्व... 

पयकत्वावच्छिन्नकारणतावच्छेदकविषयितानिरूपकवर्णाप्रसिद्धाऽसंभववारणायावच्छेदककोटिप्रविष्टानामवच्छेदकत्वसूचनायकोटिप्रविष्टेति तथाचवर्णविषयितानांतदवच्छेदककोटिप्रविष्टत्वान्नाप्रसिद्धिः॥ एतेनपूर्वकल्पेशाब्देयत्किंचित्वशाब्दज्ञाननिष्टत्वकोटिप्रविष्टत्वानांलक्षणेऽनिवे शात्स्वरसतोननत्संगतिरितिनिरस्तं॥ अत्रतेषांनिवेशस्यावश्यकत्वात्॥ अथविषयितायांतादृशजनकताश्रयज्ञानीयत्वमेवानिवेशनीयमुदा सीनसाधारणसमुदायत्वस्यतादृशसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकतयैववारणात्तदवच्छेदकतानिवेशोव्यर्थइतिचेदत्रकेचित्॥ कालिक संबंधेनतादृशजनकताविशिष्टघटमानयेतिवाक्यज्ञानमादायतादृशवाक्येऽतिप्रसंगवारणायस्वरूपसंबंधेनैवजनकतावैशिष्ट्यंवाच्यंतथाचगौर वमतोऽवच्छेदकत्वनिवेशः॥ नन्चकालिकसंबंधेनतत्तज्जनकताविशिष्टघटपदज्ञानमादायतद्विषयिताव्यापकघटपदत्वनिष्ठन्यूनवृत्तित्वानिरूप कत्वविरहेणैवतद्वारणमितिवाच्यं॥ तथासतितादृशप्रतिज्ञात्वमादायासंभववारणायापरदलेस्वरूपसंबंधेनजनकतावैशिष्ट्यस्यावच्छेदकत्वस्यवाऽ वश्यंनिवेशनीयतयोक्तातिव्याप्तेर्दुर्वारत्वात्॥ नचोक्तवाक्यविषयितानामपिकालिकसंबंधेनावच्छेदकताविशिष्टत्वादतिप्रसंगवारणायस्वरूपसंबं धेनावच्छेदकतावैशिष्ट्यस्यानिवेशनीयतयाऽवच्छेदकताप्रवेशोऽधिकइतिवाच्यं॥ अवच्छेदकतासंबंधेनजनकतावैशिष्ट्यस्यैवनिवेशनीयतया

अधिकनिवेशाभावादितिवदंति ॥ वस्तुतस्तुस्वरूपयोग्यज्ञानकन्यायसंग्रहायस्वरूपयोग्यतारूपमेवजनकत्वंनिवेशनीयंतच्चजनकतावच्छेदक
धर्मवत्वमेवतथाचजनकतावच्छेदकधर्मवत्वेनज्ञानंनिवेश्यतदीयत्वेनविषयिताप्रवेशापेक्षयातदवच्छेदकत्वेनविषयितानिवेशएवयुक्तोलाघवादितित
देवनिविष्टमितिध्येयं ॥ विशिष्टवैशिष्ट्यावगाहिबोधात्मकपरामर्शेति ॥ मीयतेअनेनेतिमानमितिव्युत्पत्यालब्धज्ञानकरणघटकज्ञान
रूपक्रियायांविशिष्टवैशिष्ट्यावगाहीत्यभेदेनविशेषणमितिविशिष्टवैशिष्ट्यावगाह्यभिन्नज्ञानकरणंलभ्यतेतच्चकरणमेकंन्यायजन्यबोधात्म
कंमानांतरंमनोरूपमित्यवयवार्थोज्ञेयः ॥ उत्थाप्यतइत्यस्योत्पद्यतइतिनार्थःमनसोनित्यत्वादतआह ॥ स्वात्मकेति ॥ न्यायजन्यविशिष्टज्ञानात्मके
त्यर्थः ॥ केवलमनसःपरामर्शजनकत्वाभावादाहतथाविधेनेति ॥ तादृशविशिष्टज्ञानसहितेनेत्यर्थः ॥ तदसत्वेनेति ॥ उपनयजन्यव्याप्तिविशिष्ट
वैशिष्ट्यावगाहिबोधस्यासत्वेनेत्यर्थः ॥ उपनयजन्यशाब्दबोधोत्तरंनिगमनश्रवणेनतद्घटकपदार्थोपस्थित्यातन्नाशादितिभावः ॥ बाधकाभावा
दिति ॥ महावाक्यार्थबोधस्यसंपन्नसामग्रीकावांतरनानावाक्यार्थबोधाधीनत्वात्पुनर्भानेवादितात्पर्यापेक्षाभावादितिभावः ॥ वादीति ॥ साधारण
धर्मोक्तिरियं ॥ अप्रामाण्यशंकानैय्यत्याभावात्कचित्परामर्शांतरवैय्यर्थ्यमस्वरसः ॥ व्याप्यपदस्यव्याप्त्यर्थकत्वेदूषणमाह ॥ नामार्थेति ॥ स्वयंलक्षणम

हेतिजगदीशीयावतरणमसंगतंमूलार्थतायाएवतस्यसंभवादित्याह॥ अत्रेति ॥अनुपपत्तेर्वक्ष्यमाणतयेति॥उदाहरणोपनययोरेवतत्पर्यवस्य
तीत्यनेनेत्यादिः॥यत्किंचिदिति॥ विषयिताविशेषणं॥तादृशेति॥व्युत्क्रमप्रयुक्तेत्यर्थः॥वक्ष्यमाणदोषेणनिरसनीयकल्पांतरमाह॥अथवेति॥
स्वाश्रयनिगमनवृत्तित्वसंबंधेनोपनयोत्तरत्वविशिष्टनिगमनत्वरूपानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदककोटौसंसर्गघटकतयानिगमनप्रवेशान्निगमन
संग्रहोबोध्यः॥स्वाश्रयीभूतेति॥अत्रेदंबोध्यं॥तादृशयत्किंचिच्छब्दबोधेत्यादिलक्षणेस्वाश्रयीभूतत्यादिविशेषणेवाक्यांतरसाधारण्यायवृत्तिसमु
दायत्वव्यावर्तकन्यूनवृत्तित्वानिरूपकत्वविशेषणस्यदर्शितदिशाज्ञानैक्यघटितस्यनिवेशेसमानाकारकप्रतिज्ञाद्वयहेत्वादिचतुष्टयेनत्षट्कसमुदायत्व
वारकतयानिषेधद्वयोपादानसार्थक्येपिज्ञानाघटितेऽस्मिन्लक्षणेतथान्यूनवृत्तित्वानिरूपकत्वविवक्षणासंभवात्स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरहेत्वा
दिवृत्तित्वस्यसमुदायत्वविशेषणेनैवोपपत्तौनिषेधद्वयनिवेशोव्यर्थएव॥अथतदनिवेशेप्रतिज्ञादिपंचकसमुदायत्वरूपविशेष्यदलवैयर्थ्यंस्यादितितत्सार्थ
क्यायैवोचितानुपूर्वीकत्वरूपविशेषणदलस्यनिषेधद्वयगर्भतादरइतिचेन्न॥क्रमिकवर्णसमुदायरूपप्रतिज्ञाद्यधिकरणक्षणाप्रसिद्धास्वाश्रयप्रतिज्ञां
त्यवर्णाव्यवहितोत्तरहेत्वाद्यक्षणवृत्तित्वेसतिस्वाश्रयहेत्वंत्यवर्णाव्यवहितोत्तरोदाहरणाद्यक्षणवृत्तित्वेसतीत्येवंरीत्यावृत्तित्वचतुष्टयविशेषि

तसमुदायत्वस्यैवविवक्षणीयतयाताद्दशैकदेशसमुदायत्वव्यावर्तकतयैवग्रंथकृदुपवर्णितार्थकविशेष्यदलसार्थक्यसंभवादिति॥ एवंचेति॥ उचि
तानुपूर्वीकेत्यस्यस्वाश्रयीभूतत्वादिविशेषणतात्पर्यकत्वेचेत्यर्थः॥ ननुतादृशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वनिवेशेपिन्यायघटककतिप
यवर्णवृत्तिसमुदायत्ववारणायप्रतिज्ञात्वादिपर्याप्त्यवच्छेदकयत्किंचिद्धर्मव्यापकत्वरूपप्रतिज्ञादिपंचवृत्तित्वार्थकविशेष्यदलसार्थक्यमसंभवभयेनतादृशभे
दप्रतियोगितावच्छेदकवर्णत्वव्यापकत्वनिवेशासंभवादेवंचेत्यसंगतमितिचेदत्रकेचित्॥ तादृशभेदप्रतियोगितावच्छेदकत्वस्यावच्छेदकतावच्छेदकसाधार
णत्वाप्रामाणिकत्वेतादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकयत्किंचिज्ज्ञानीयविषयतानिरूपकवर्णत्वव्यापकत्वस्यैवविवक्षणी
यतयानविशेष्यदलसार्थक्यमित्याहुः॥ वस्तुतस्तुस्वाश्रयप्रतिज्ञादिघटितयत्किंचित्तादृशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वविशिष्टवर्णत्वव्या
पकत्वनिवेशसंभवात्तदसंभवाभावेनतत्सार्थक्यासंभवइतिबोध्यं॥ नानाप्रतिज्ञादिसाधारणप्रतिज्ञात्वादिव्यापकत्वस्यकस्मिन्नपिन्यायत्वेऽसंभवाद
संभवइतिप्रतिज्ञात्वादिपर्याप्त्यवच्छेदकयत्किंचिदिति॥ तादृशोधर्मःप्रतिज्ञादिनिष्ठतत्तद्व्यक्तित्वमेव॥ नसंभूयैकार्थप्रतिपादकत्वमिति॥ वादिता
त्पर्यविषयीभूतोद्देश्यविधेयभावापन्नार्थबोधकत्वमित्यर्थः॥ गुणानांचेति॥ जैमिनिसूत्रमिदंतदर्थश्चगुणानां॥ विधेयानां॥ परार्थत्वात्॥ उद्दे

द्यसमाकांक्षत्वात्॥ उद्देश्यनिष्ठविषयतानिरूपितविषयताश्रयत्वादितियावत् ॥असंबंधः॥ अवच्छेद्यावच्छेदकभावापन्नविषयितानिरूपकत्वाभावः
नचैवंपर्वतोवह्निमानिति बोधीयवह्निवह्नित्वविषयितयोरवच्छेद्यावच्छेदकभावोनस्याद्वह्नित्वस्यापिधर्मिपारतंत्र्येणपर्वतविशेषणत्वादतआह॥सम
त्वात्तुल्यतयाभानादित्यर्थस्तथाचवह्नित्वस्यवह्नावपिभानात्तयोस्तुल्यतयाभानमितिनदोषः॥ सुंदरोदंडीति॥ अभेदान्वयबोधेक्वचिद्विशेष
णवाचकपदाव्यवहितोत्तरत्वविशिष्टविशेष्यवाचकपदज्ञानंकारणंयथानीलघटइत्यादौक्वचिद्विशेषणविशेष्यवाचकपदयोःसमानविभक्तिकत्वज्ञा
नंयथानीलोघटइत्यादौ॥सुंदरोदंडीत्यादौद्विविधस्याप्यभावाच्छाब्दबोधोवारणीयःप्रकृतेपिसैवदुरवस्थाभवन्मतइतिभावः॥असमस्तनामार्थं
ति॥ समासघटकपदार्थेत्यर्थः॥ अभेदान्वयप्रतियोगिसापेक्षतयेति ॥ समर्थःपदविधिरितिसूत्रं॥ अस्यार्थः॥ पदविधिः॥ पद
कार्यं॥ कार्याणिचतद्धितसमासादीनि॥ समर्थः॥ समर्थाश्रित एवसर्वंवाक्यंसावधारणमितिन्यायात्॥ एवकारव्यवच्छेद्यंचासमर्थानाश्रितत्वं॥
असामर्थ्यंचस्वविशिष्टविशेष्यकशाब्दबोधानुकूलवृत्त्यघटकपदार्थान्वितस्वार्थपरत्वं॥ तथाचप्रकृतेवह्निपदस्यवृत्त्यघटकद्विरुक्तयत्पदार्थान्वितस्वार्थपरत्वे
ऽसामर्थ्यात्तन्नतदुत्तरंतद्धितसंभवइतिभावः॥ वृत्तयश्चकृत्तद्धितसमासैकशेषसनाद्यंतधातवइति॥ यादृशायादृशावाक्येयेरिति॥ अथयादृशायादृशा

क्यानांपरामर्शविषयपदार्थोपस्थापकत्वमितिनिर्वचने सकलन्यायघटकप्रतिज्ञादिघटकपदानामपिपरामर्शप्रयोजकतयातावद्वृत्तिसमुदायत्वस्यक
स्मिन्नपिन्यायत्वेऽसत्वादसंभवः॥उदारणोपनययोरतिव्यात्यसंगतिश्चातंचेदत्रब्रूमः॥यादृशायादृशेत्यस्ययादृशसमुदायत्वाश्रयप्रयोज्यस्मृतिविषयत्वं
परामर्शविषयताव्यापकंतादृशसमुदायत्वाश्रयत्वमित्यर्थः॥ एतेन वाक्यानांपदार्थोपस्थापकत्वाभावात्कथमतिव्याप्तिदानमितिनिरस्तं॥ यथा
कथंचित्परामर्शानुकूलत्वमिति॥तथाचप्रतिज्ञादिपंचवाक्यानामपितादृशपरामर्शप्रयोजकत्वात्तावद्वृत्तिसमुदायत्वस्योदाहरणोपनययोरसत्वा
न्नतादृशवाक्यद्वयेऽतिव्याप्तिरितिभावः॥अथयादृशायादृशवाक्यानामित्युक्त्यान्यायांतरवाक्यानामपितादृशत्वात्तावद्वृत्तित्वस्यन्यायत्वेऽसत्वादसंभ
वःवक्ष्यमाणातिव्याप्त्यसंगतिश्च॥ नचयादृशसमुदायत्वाश्रयप्रयोज्यस्मृतिविषयत्वंपरामर्शविषयताव्यापकंतादृशसमुदायत्वाश्रयत्वमितिपूर्व
निरुक्तार्थेतात्पर्यंवक्तुंशक्यमविशेषप्रसंगादुक्तातिव्याप्तेर्दुर्वारत्वाच्चेतिचेन्न॥यत्किंचित्परामर्शप्रयोजकतायादृशायादृशवाक्यानामिति विवक्ष
णीयंन्यायांतरगतवाक्यानामतादृशत्वान्नासंभवः॥नचकोवन्हिमात्कुतइत्यादिवाक्यानामपितादृशतयाऽसंभवोदुर्वारइतिवाच्यं॥ एकप्रयुक्त
त्वेनतादृशवाक्यविशेषणत्वात्॥ नचाग्रिमदीधित्यसंगतिःशंक्यातादृशवाक्यपंचकस्यैकप्रयुक्तत्वेनतत्रैवातिव्याप्तेरभिप्रेतत्वान्नवाक्य

दर्शकेत्यस्यनकुंशक्यत्वात् ॥ नचतथासतिपर्वतोवन्हिमान्कुतोधूमादित्यादेरित्यत्रपर्वतोवन्हिमानित्यस्यवैफल्यंशंक्यं ॥ लक्षणसमन्वयार्थंतदुक्तेः ॥ न
चविप्रतिपत्तिघटकपर्वतोवन्हिमानितिवाक्यस्यन्यायप्रयोक्तृप्रयुक्तत्वेनतादृशतद्घटितसमुदायवृत्तित्वस्यन्यायत्वेऽसंभवादसंभवइतिवाच्यं ॥ आ
वृत्तौसैवप्रतिज्ञेतिमतेविप्रतिपत्तिघटकवाक्यस्यपुनरनुसंधानमात्रमेवनपुनःप्रतिज्ञावाक्योच्चारणमितितस्यवाक्यांतरत्वाभावादितिविभावनीयं
॥ ॥ इतिन्यायलक्षणं ॥ ॥ भ्रमावृत्तीति ॥ भ्रमान्यवृत्तीत्यर्थस्तेननिरुक्तानुपूर्वीप्रकारकज्ञानस्यान्यांशेभ्रमत्वेपिनक्षतिः ॥ हेतुवि
शिष्टहेतुत्वविषयिताबहिर्भूतेति ॥ तादृशहेतुत्वविषयिताव्यापकेत्यर्थः ॥ तादृशहेतुत्वत्वावच्छिन्नविशेष्यकनिश्चयत्वव्यापकप्रतिबंधक
तानवच्छेदकत्वंबहिर्भूतत्वमितिभट्टाः ॥ तादृशधर्मविशेषणत्वेगौरवमिति ॥ अथप्रतिज्ञादिभेदपंचकान्यतमप्रतियोगितावच्छेदकध
र्मवत्त्वरूपंलघुलक्षणंसंभवतितेनैवहेत्वंतसमुदायवारणात्तद्वारकप्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकेत्यादिविशेषणंगौरवापादकंकिमर्थं ॥ न
चप्रतिज्ञाभेदस्यतदेकदेशभेदस्यचकेवलान्वयितयासमनियतत्वेनैक्यादेकदेशातिव्याप्तिरेवंप्रतिज्ञाभेदस्यहेत्वंतसमुदायभेदस्यचैक्यात्तादृशसमु
दायवारकप्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकेत्यादिविशेषणमप्यावश्यकमितिवाच्यं ॥ तादृशभेदानांकेवलान्वयित्वेप्यव्याप्यवृत्तित्वेनप्रतियो

गिवैय्यधिकरण्याघटितपरस्परव्यापकत्वविरहेणैक्यायोगात्॥ यथान्वैतत्तथामिश्रलक्षणेव्याख्यायांस्पष्टमितिचेन्न॥ प्रतिज्ञाद्यन्यतमत्वशब्दस्य प्र
तिज्ञादिभिन्नभिन्नत्वार्थकत्वस्यस्वरससिद्धत्वाच्छब्दार्थानुल्लंघनेनैवगुरुलक्षणाकरणाद्दर्शितरूपस्यलक्षणत्वसंभवेपितस्यलक्षणांतरत्वात्॥ नन्वेवंहे
त्वंनसमुदायवारकविशेषणस्यस्वातंत्र्येणनिवेशात्कथंशब्दार्थानुल्लंघनमितिशंक्यं॥ प्रतिज्ञादिभिन्नोयस्मात्सप्रतिज्ञादिभिन्नस्तद्भिन्नत्वस्या
पितच्छब्दार्थत्वात्॥ एतेनप्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकंयद्व्यासज्यवृत्तिरूपंतत्तदन्यत्वेप्रतिज्ञाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगिताव
च्छेदकंयद्यत्तत्तद्भेदकूटमेवनिवेशनीयंसत्यंतदलेव्यासज्यवृत्तित्वनिवेशात्प्रतिज्ञाघटकयावद्वर्णान्यतमत्वमादायनैकदेशातिव्याप्तिरितिनिरस्तं त
स्यलक्षणत्वसंभवेपिप्रतिज्ञादिभिन्नभिन्नत्ववाचकप्रतिज्ञाद्यन्यतमत्वशब्दार्थत्वाभावात्॥ स्वानाश्रयांतरितभागद्वयवृत्त्यन्यत्वेनेति॥ स्वाश्र
यीभूतैकभागध्वंसाधिकरणक्षणोत्पत्तिकः स्वाश्रयभागांतरप्रागभावाधिकरणक्षणोत्पत्तिकश्चयः स्वानाश्रयस्तत्कान्यत्वेनस्वाश्रयध्वंसाधिकरणंयः
स्वाश्रयप्रागभावाधिकरणंक्षणस्तदुत्पत्तिकस्वानाश्रयकभिन्नत्वेनवेत्यर्थः॥ तादृशशाब्दबुद्धित्वपर्याप्तेति॥ अथपर्याप्तिनिवेशोसंभवस्तादृ
शशाब्दबोधंप्रतिपर्वतोवह्निमान्गिरिर्दहनवानित्यादिनानानुपूर्वीकज्ञानानांहेतुतयातेषांपरस्परंव्यभिचारेणतादृशज्ञानाव्यवहितोत्तरत्वस्या २८१

पिकार्यतावच्छेदके प्रवेशावश्यकत्वात् ॥ नन्वतादृशयत्किंचिदानुपूर्वीप्रकारकज्ञानाव्यवहितोत्तरत्वसहिततादृशशाब्दत्वपर्याप्तत्वं विवक्षणीयमि
ति वाच्यं ॥ एवमपि कार्यतावच्छेदककोटौ विषयनिवेशप्रयोजनाभावेनासंभवावारणादिति चेन्न ॥ तत्तदानुपूर्वीप्रकारकज्ञानाव्यवहितोत्तरत्वपर्याप्त
त्वनिवेश एव तात्पर्यात् ॥ अथवाऽनुमितिग्रंथोक्तलाघवानुरोधाद्विषयस्यापि कार्यतावच्छेदकनिवेशाभिप्रायकल्पनान्नोक्तदोषः ॥ अथैवमप्यवच्छेदक
तापर्याप्तिनिवेशो व्यर्थः ॥ यत्किंचिज्ज्ञाने वक्ष्यमाणतादृशजनकताद्वयशून्यत्वविशेषणेनैव विशिष्टवैशिष्ट्यावगाहिशाब्दबोधजनकज्ञानासंग्रहेणाति
प्रसंगाभावादिति चेदत्र केचित् ॥ स्वानवच्छेदकविषयिताविशिष्टजनकताशून्ययत्किंचिज्ज्ञानीयस्वावच्छेदकविषयितानिरूपकवर्णसमुदायत्वनि
ष्ठतात्पर्यकवस्तुतस्त्विति कल्पाभिप्रायेण यथाश्रुताभिप्रायेण वेदमिति वदंति ॥ वस्तुतस्तु प्रतिज्ञाघटकवह्निमानिति भागहेतुसमुदायेऽतिव्याप्तिस्त
त्र हि धूमज्ञानज्ञाप्यो वह्निरिति बोधनिष्ठजन्यतानिरूपितजनकताश्रयवक्ष्यमाणजनकताद्वयशून्ययत्किंचिज्ज्ञानीयविषयितानिरूपकवर्णसमु
दायत्वसत्त्वात् ॥ नन्वेकदेशवारणाय तादृशवर्णत्वव्यापकत्वं निवेशनीयमेवमपि प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिरनस्तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वा
निरूपकत्वं निवेशनीयं तेनैव तादृशसमुदायव्यावृत्तिरिति वाच्यं ॥ न्यूनवृत्तित्वानिरूपकत्वस्य समुदायत्वविशेषणत्वे धूमादालोकवान्पर्वतो वह्नि

मानेति प्रतिज्ञानिष्ठसमुदायत्वस्यतद्धटकधूमादितिभागनिष्ठसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वेन ताद्दशप्रतिज्ञायामव्याप्तिप्रसंगाज्जनक
ताद्वयशून्यत्वविशेषणवैयर्थ्यापातात्तैकदेशप्रतिज्ञाहेतुसमुदायादिवारणायताद्दशवर्णत्वसमनैयत्यंज्ञानैक्यघटितन्यूनवृत्तित्वानिरूपकत्वमेववानिवे
शनीयमितिनिरुक्तसमुदायेऽतिव्याप्तितादवस्थ्यमितिध्येयं ॥ तथाविधजनकताद्वयशून्यत्वेनेति ॥ यद्यपिपर्वतोवन्हिमानितिप्रतिज्ञादि
ज्ञानेपिविनिगमनाविरहप्रयुक्तजनकताद्वयसत्वादसंभवस्तथापिसमनियतानांतासामैक्योपगमेननतत्रभेदव्यासंगद्धित्वं ॥ यद्वास्वनिरूपित
जनकतावत्वस्वानवच्छेदकविषयितावच्छिन्नताद्दशान्यतमजन्यतानिरूपितजनकतावत्वोभयसंबंधेनतथाविधजन्यताशून्यत्वस्यस्वप्रतियोगिता
वच्छेदकताद्दशजनकतावत्वस्वसमानाधिकरणताद्दशजनकतावत्वोभयसंबंधेनभेदविशिष्टान्यत्वस्यवाताद्दशजनकताद्वयशून्यत्वमित्यनेनविवक्ष
णान्नासंभवः ॥ व्याप्यव्यापकभावानापन्नेति ॥ परस्परव्यभिचारीत्यर्थस्तथाचस्वाभाववद्वृत्तित्वस्वसमानाधिकरणाभावप्रतियोगित्वस्वसा
मानाधिकरण्येतत्त्रितयसंबंधेनताद्दशजनकताविशिष्टजनकताशून्यत्वंपर्यवसितार्थः ॥ स्वानवच्छेदकेति ॥ स्वसमनियतजनकतानवच्छेद
केत्यर्थस्तेनावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वाभावेप्रतिज्ञादिज्ञानत्वाद्यवच्छिन्नजनकतानवच्छेदकपृष्ठलग्नविषयिताविशिष्टताद्दशजनक 

तायाः प्रतिज्ञादिज्ञाने सत्वेपि नासंभवः ॥ अथ धूमादालोकवान्पर्वतो वन्हिमानिति प्रतिज्ञायामव्याप्तिस्तज्ज्ञाने हेत्वर्थविषयकबोधजनकतानवच्छे
दकपर्वतपदविषयिताविशिष्टतथाविधजनकतासत्वादितित्वेदत्र केचित् ॥ सामानाधिकरण्यस्वावच्छिन्नजनकत्वाव्यापकत्वोभयसंबंधेन
स्वानवच्छेदकविषयितावैशिष्ट्यस्य जनकतायां विवक्षणीयत्वात् ॥ असंभववारणाय प्रथमसंबंधनिवेशः ॥ धूमादालोकवान्पर्वतो वन्हि
मानिति प्रतिज्ञायामव्याप्तिवारणाय द्वितीयसंबंधनिवेशः ॥ यदि चैवमपि सत्वेन जनकतानिवेशादननुगम इति विभाव्यते तदा स्वानवच्छिन्न
त्वस्वावच्छिन्नतादृशजनकत्वाव्यापकत्वसामानाधिकरण्यैतत्त्रितयसंबंधेन विषयिताविशिष्टतादृशजनकताशून्यत्वमेव विवक्षणीयं ॥ धू
मादालोकवान्पर्वतो वन्हिमानिति प्रतिज्ञाघटकधूमादिति भागविषयितामादाय तस्यामव्याप्तिवारणाय प्रथमसंबंधनिवेशः ॥ तत्रैव पर्वतप
दादिविषयतामादायाव्याप्तिवारणाय द्वितीयसंबंधनिवेशः ॥ तत्रैव पर्वतपदविषयितामादायाव्याप्तिवारणाय द्वितीयसंबंधघटकजनकता
यां तादृशत्वनिवेशः ॥ वस्तुतस्तु स्वानवच्छेदकविषयिताविशिष्टतादृशजनकताशून्यत्वसंबंधेन तादृशजनकतावैशिष्ट्यं यत्किंचिज्ज्ञाने वि
वक्षणीयं धूमादालोकवान्पर्वतो वन्हिमानिति प्रतिज्ञाज्ञाने तदर्थविषयकबोधीयजनकतावैशिष्ट्यसत्वाल्लक्षणसमन्वयः ॥ नन्वेवमप्युदाहरण

घटकभागद्वयज्ञानीयजनकतयोः प्रत्येकंस्वानवच्छेदकविषयिताविशिष्टत्वेनतज्ज्ञानेनिरुक्तसंबंधेनतादृशजनकतावैशिष्ट्याभावात्तत्राव्या
प्तिरितिचेन्न॥ संबंधघटकजनकतायामुदाहरणज्ञानीयजनकताभेदनिवेशात्॥ अथैवमपिस्वानवच्छेदकविषयिताशून्यत्वमेवनिवेश्यतांकिं
तद्विशिष्टजनकतानिवेशनेनेतिचेन्न॥ एवंसतियत्किंचिज्ज्ञानीयविषयितायांतादृशजनकतावच्छेदकत्वस्यविशेष्यदललभ्यस्यवैयर्थ्यापत्तेः॥
जनकतानिवेशेचैकदेशज्ञानस्यापितादृशजनकताशून्यत्वेनैकदेशवारकतयैवतत्सार्थक्यात्॥ वस्तुतस्तुजनकत्वानिवेशेनिरुक्तरीत्योदाह
रणाव्याप्तिवारणायस्वानवच्छेदकविषयितायामुदाहरणज्ञानीयजनकतावच्छेदकविषयिताभेदस्यविवक्षणीयतयाहेतूदाहरणसमुदायज्ञा
नेनिरुक्तसंबंधेनहेत्वर्थबोधीयजनकतावैशिष्ट्यसत्वात्तदादायतत्समुदायेऽतिव्याप्तिरितिजनकतानिवेशस्तथाचतादृशज्ञानेउदाहरण
ज्ञानीयजनकताभिन्नतादृशहेत्वर्थबोधीयजनकतासत्वान्नतत्रातिव्याप्तिरितितत्वं॥ यत्तुस्वस्यस्वधर्मितावच्छेदकत्ववारणायप्रतिज्ञा
दिज्ञानेनत्वादिप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायाःस्वीकारात्स्वानवच्छेदकतादृशविषयिताशून्यत्वस्यप्रतिज्ञादिज्ञानेऽसत्वादसं
भवइतिजनकतानिवेशस्तथाचावच्छिन्नत्वसंबंधेनतादृशविषयिताविशिष्टत्वस्यजनकतायामसत्वान्नदोषइतितन्न॥ एवंसतियदिचेत्य

ग्रिमग्रंथासंगतिरुदासीनविषयितायाःस्वानवच्छेदकत्वेपिजनकतायांतदवच्छिन्नत्वाभावादेवाव्याप्त्यनवकाशात्॥ अगतिरिति॥ अव्याप्ति
रित्यर्थः॥ स्वानवच्छेदकविषयितायांस्वशून्यवृत्तित्वविशेषणंगतिरितिकेचित्॥ चिंतनीयइति॥ स्वाश्रयवृत्तित्वस्वानाश्रयवृत्तित्वोभयसंबंधेन
यत्किंचित्प्रतिज्ञात्वादिविशिष्टान्यत्वंदेयमितिभावः॥ यत्तुतादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वंदेयमितिभाववर्णनं॥तदसत्॥ धूमादा
लोकवान्पर्वतोवन्हिमानितिप्रतिज्ञासमुदायत्वस्यतादृशधूमादितिभागवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकतयातदसंग्रहवारणायज्ञानै
क्यघटितस्यतस्यविवक्षणीयतयातस्यतद्वारकत्वात्॥ तद्घटकप्रत्येकवाक्येऽतिव्याप्तिरिति॥ ननुदाहरणजन्यबोधेएकजन्यतायाअ
सत्वेनोदाहरणविषयकज्ञानेस्वानवच्छेदकविषयिताविशिष्टतथाविधजनकताशून्यत्वासत्वादुदाहरणाव्याप्तिःकिमर्थमुपेक्षितेतिचेन्न॥ स्वान
वच्छेदकेत्यस्यस्वनिरूपितजन्यतानिष्ठंयदन्यतमत्वघटकभेदप्रतियोगितावच्छेदकंतद्विशिष्टनिरूपितजनकतानवच्छेदकेत्यर्थः॥उदाहरणज
न्यबोधनिष्ठजन्यताद्वयस्यान्यतमत्वेनैवान्यतमत्वशरीरेनिवेशाज्जन्यतानिष्ठान्यतमत्वमेवतादृशभेदप्रतियोगितावच्छेदकंतद्विशिष्टनिरूपि
तस्वमिवोदाहरणविषयकज्ञाननिष्ठजनकतांतरमपि॥ एवंचोदाहरणविषयकज्ञानेऽनेकजनकतासत्वेपितद्ज्ञानंनस्वनिरूपितजन्यतानिष्ठं

यदन्यतमत्वघटकभेदप्रतियोगितावच्छेदकं तद्विशिष्टनिरूपितजनकतानवच्छेदकविषयताश्रयः किंतु समूहालंबनमव.यवांतरविषयकमेवेत्यु
दाहरणमात्रविषयकज्ञाने तादृशविषयतानाश्रयत्वसत्वादुदाहरणे लक्षणसंगतिरित्याशयेनातिव्याप्तिमात्राभिधानात् ॥ **यत्किंचिद्धर्मविशिष्टेशु
द्धसाध्यतावच्छेदकविशिष्टेत्यादि** ॥ अथशुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिशाब्दत्वावच्छिन्नजन्यतानिवेशेनैवोपनयवारणसंभवाद्य
त्किंचिद्धर्मविशिष्टेतिव्यर्थं ॥ नचसाध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकताकत्वमेवावगाहित्वं तेन विवक्षितमुपनयजन्यबोधेव्यापकतावच्छेदक
त्वेनैवसाध्यतावच्छेदकभानान्नतस्यतथात्वमितिवाच्यं ॥ एवंसति निगमनातिव्याप्तेस्तज्जन्यबोधेज्ञाप्यत्वधर्मितावच्छेदकतयास्वरूपत एव सा
ध्यतावच्छेदकभानात् ॥ यत्तुसाध्यतावच्छेदकेतरधर्मानवच्छिन्नप्रकारताकत्वं स्वनिरूपितप्रकारतानिरूपितत्वस्वभिन्नत्वोभयसंबंधेनावच्छे
दकताविशिष्टसाध्यतावच्छेदकनिष्ठावच्छेदकताकत्वमेवावगाहित्वं तार्थउपनयजन्यबोधेव्यापकतावच्छेदकत्वेनैवसाध्यतावच्छेदकभानान्नाव
गाहित्वं तद्विशेषणेन तद्व्यावृत्तिरिति यत्किंचिद्धर्मविशिष्टेति सार्थकमिति तन्न ॥ तथासत्युदाहरणजन्यबोधेयादृशव्याप्तिभानं तादृशव्याप्तिवि
शिष्टपक्षधर्मताकांक्षयैवोपनयप्रयोगइतिनियमानुरोधेनोदाहरणजन्यबोधेपिव्यापकतावच्छेदकत्वेनैवसाध्यतावच्छेदकभानस्योपगंतव्यतया

तस्यनिरुक्तशुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वाक्षतेरुत्तरत्रोदाहरणातिव्याप्तेः प्राचीनमताभिप्रायकत्वकथनासंगतेः ॥ एतेनो
पनयजन्यबोधेसाध्यवदन्यावृत्तित्वरूपव्याप्तिरेवभासतइत्यभिप्रायेणयत्किंचिद्धर्मविशिष्टेतिविशेषणमितिसमाधानमप्यश्रद्धेयं ॥ यदपि
साध्यतावच्छेदकेतरधर्मानवच्छिन्नप्रकारताकत्वमेवावगाहित्वां तार्थउपनयजन्यबोधेहेतुमन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वं
साध्यांशेभासतेएवंचक्वचिदुपनयजन्यबोधस्यावगाहित्वांनविशेषणेनवारणेप्यभावमात्रस्यसाध्यतावच्छेदकतास्थलीयोपनयजन्यबोधीयस
ध्यनिष्ठप्रकारतायाअभावरूपसाध्यतावच्छेदकेतरानवच्छिन्नत्वाक्षतेस्तद्वारणाययत्किंचिद्धर्मविशिष्टेतिविशेषणमितितदपिन ॥ ज्ञानविष
यवान्धूमादित्यादिस्थलीयनिगमनजन्यबोधीयसाध्यप्रकारतायाज्ञानविषयत्वरूपसाध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वात्तद्वारणानुरोधे
नानवच्छिन्नांतेनसाध्यतावच्छेदकता पर्याप्त्यवच्छेदकधर्मावच्छिन्नापर्याप्तिकावच्छेदकताकत्वस्यैवविवक्षणीयतयाऽभावसाध्यतावच्छे
दककस्थलीयोपनयजन्यबोधीयप्रकारतायास्तादृशत्वाभावादेवतद्व्यावृत्तेर्यत्किंचिद्धर्मविशिष्टत्यस्यवैय्यर्थ्यनादवस्थ्यात् ॥ अत्रेदंसमाधा
नं ॥ व्यापकसामानाधिकरण्यसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकरूपनानाविधव्याप्तीनामनुमित्युपयोगित्वमितिमताभिप्रायको

यंग्रंथस्तथाचोपनयजन्यबोधे प्रथमव्याप्तिविशिष्टहेतुभानेतस्यशुद्धसाध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावेनवारणेपि द्वितीयव्याप्तिभानेनन
द्वारणमितियत्किंचिद्धर्मविशिष्टेति विशेषणंसार्थकं ॥ नचतर्ह्युत्तरत्र प्राचीनमताभिप्रायकत्वकथनासंगतिः शंक्या ॥ नवीनमतेसवन्हिमानि
तिभागेन धूमव्यापकवन्हिलाक्षणिकवन्हिपदघटितेनव्यापकताबोधेपिसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकरूपव्याप्तिबोधासंभवा
त्प्राचीनमतेतूदाहरणेनव्याप्तेःप्रतिपादनेपिव्यापकसामानाधिकरण्यस्यैवसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकरूपव्याप्तेर्मनसै
वस्फग्रहत्वात् ॥ केचित्तु ॥ यत्किंचिद्धर्मावच्छिन्नविशेष्यकत्वावच्छिन्नत्वंप्रकारितायांशुद्धत्वंवासाध्यतावच्छेदकेनिवेश्यमितिपरिष्कारद्वयेग्रंथ
तात्पर्यं ॥ एवंचाननुषंगपक्षेयत्किंचिद्धर्मविशिष्टेत्यनेनोपनयनिगमनयोर्वारणंस्कघटमित्यदाहरणानुधावनंस्पष्टमेव ॥ अनुषंगपक्षेतुन
तेननिगमनवारणसंभवइतिशुद्धत्वंसाध्यतावच्छेदकेनिवेश्यकल्पांतरमुक्तं ॥ उक्तरीत्योपनयनिगमनयोर्वारणेप्युदाहरणस्यापिव्यापकत्व
बोधकतयाशुद्धसाध्यतावच्छेदकविशिष्टाबोधकत्वेननतत्रव्याप्तिनिकथनसंगतिरीत्यालोच्यप्राचीनमतमनुसृतमितिवदंति ॥ जनकत्व
स्येति ॥ तादृशावर्णवृत्तिसमुदायत्वमर्थः नतुतादृशावर्णत्वसमनियतसमुदायत्वं प्रतिज्ञाहेतुसमुदायस्यप्रतिज्ञैकदेशस्यचावयवत्वविशेष

णेनैव वारणात्॥ यत्किंचिदिति प्रत्येकं प्रतिज्ञाव्यवहारसिद्धये॥ अथ प्रतिज्ञाहेतूभयविषयकसमूहालंबनस्यापि तादृशशाब्दबोधजनक
तयाहेत्ववयववृत्तिसमुदायत्वस्यापि तादृशज्ञानविषयवर्णवृत्तित्वाद्विषयतायां तादृशशाब्दबोध जनकतावच्छेदकत्वविशेषणमावश्यकमिति
जनकतावच्छेदकविषयितानिरूपकवर्णत्वे सति समुदायत्वमिति विवक्षयैवोदाहरणवारणाद्व्यर्थः पक्षतावच्छेदकनिवेश इति चेन्न सार्थक्या
यहेत्ववयववारणाय विषयितायामनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यैव विवक्षणीयत्वाद्यथासन्निवेशे न वैयर्थ्याभावात्॥ एकदेशवारणाय
तादृशवर्णत्वसमव्याप्तसमुदायत्वमेव निवेश्यं तेनैव समुहालंबनज्ञानविषयहेत्ववयववारण मिति प्रतिज्ञाद्यघटकत्वं न देयमेवेत्याशयेनाह
एवमिति॥ अथोभयघटकभागद्वयाघटितत्वमपि न निवेशनीयं समानानुपूर्वीकप्रतिज्ञाद्वयेऽतिप्रसंगवारणाय तादृशशाब्दत्वावच्छि
न्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविशेषणस्याव
श्यकतया तेनैव प्रतिज्ञाहेतुसमुदायवारणात्॥ एतेन पूर्वकल्पेऽपि न साधु रुक्करीत्योदाहरणेऽतिप्रसंगाभावात्॥ मैवं उभयघटकभागद्व
याघटितत्वेनैव समानानुपूर्वीकप्रतिज्ञाद्वयवारणान्नोक्तविशेषणावश्यकता॥ एतेन वन्हिमद्द्रव्यसमानकालीनपर्वतो वन्हिमानिति प्रतिज्ञा

संग्रहाय न्यायावयवत्वरूपताद्दशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्यैवविवक्षणीयतयापूर्वकल्पः साधुरितिकेषांचिदुक्तिरनादर
णीयैव ॥ नचताद्दशप्रतिज्ञाद्वये प्रतिज्ञाहेतूभयघटकभागद्वयाघटितत्वसत्वात्कथंतेन तद्वारणमितिवाच्यं ॥ हेत्वादिपदस्य प्रतिज्ञात्वानाश्र
यपरत्वात् ॥ नच प्रतिज्ञायां प्रतिज्ञात्वानाश्रयत्वाभावेननतथापितद्वारणमितिसांप्रतं ॥ स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभय
संबंधेनताद्दशयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वविशिष्टान्यत्वस्यैवताद्दशविशेषणेनाविवक्षितत्वात् ॥ भट्टाचार्योक्तरीत्या
प्रतिज्ञाद्वयसमुदायस्य लक्ष्यतायाअपिवक्तुंशक्यत्वाच्च ॥ ननु प्रतिज्ञाद्यघटितत्वमिति ॥ अत्रकेचित् ॥ तदनिवेशे रमाधवः पूज्यः सदा
शिवोवंद्यइत्यादिप्रतिज्ञासमानार्थबोधकेतदेकदेशेमाधवः पूज्यः शिवोवंद्यइत्यादिभागेऽतिव्याप्तिरतस्तन्निवेशआवश्यक इतिपूर्वपक्षयंति ॥
तदसत् निरस्ततात्पर्यकशुकाद्युच्चारितवाक्यवारणायतात्पर्यस्यनिवेश्यत्वादुक्तस्थलेविशिष्टएवतात्पर्यादेकदेशवारणात् ॥ तात्पर्यनिवेशप्रकार
श्चाग्रेविवेचयिष्यते ॥ तथापिसकलप्रतिज्ञैकदेशस्यनतथात्वमिति ॥ नन्विदमयुक्तंव्यतिरेक्युदाहरणे नसाध्यस्याप्रतिपादनात्सकलोहरणे
ष्वपिव्याप्त्यसंभवादितिचेन्न ॥ यद्यत्पक्षकयद्यत्साध्यकयावंतोन्यायाः संभवंतिनावदुदाहरणेष्वतिप्रसंगाभावेपिताद्दशप्रसिद्धोदाहरणेषुसर्वत्रा

व्यावृत्तिसंभवात् ॥ यादृशपक्षसाध्यके ऽन्वय्युदाहरणघटितोन्यायोनास्त्येवतत्रप्रमाणोपलंभशालिभिरिदमनादरणीयमेव ॥ इतिसूत्रकारीयप्र
तिज्ञालक्षणं ॥ ॥ अन्यसाध्यकेति ॥ वन्हिव्याप्यधूमसाध्यकेत्यर्थः ॥ उद्देश्यतयेति ॥ उद्देश्यत्वमिच्छाविषयत्वं ॥ प्रतिज्ञाव्यवहार
विषयतेति ॥ पक्षसाध्यविशेषानियंत्रितप्रतिज्ञाव्यवहारविषयतेत्यर्थः ॥ स्वयंप्रतिज्ञासामान्यलक्षणाभिप्रायेणदीधितिर्लापितायेतुप्रतिज्ञावि
शेषलक्षणाभिप्रायकतयालापयंतितन्मतमनूद्यदूषयतियत्वित्यादिना ॥ एकधर्मावच्छिन्नपक्षकत्वस्यव्यावृत्तिंवक्तुंभूमिकामारचयति ॥ एतदि
ति ॥ मणिकृतोप्ययंपदानुषंगपक्षेस्वरसोस्तीत्यभिप्रायकमित्थंचेतिदीधितिग्रंथमवतारयति ॥ निगमनंचेति ॥ लक्षणादरइति ॥ लक्षण
स्यवृत्तेरादरइत्यर्थः ॥ एकेनैवपदेनैवेति ॥ समानानुपूर्व्यैकपदेनैवेत्यर्थस्तेनेतरेभ्योभिद्यतइत्यादौपदद्वयेनसाध्यस्यप्रतिपादनेपिनक्षतिः ॥
सर्वस्मादिति ॥ हेतुजन्यबोधस्यानतिरिक्तविषयकत्वसंपादनायपक्षकोटौसर्वस्मादिति ॥ एवमग्रेपिपक्षकोटौपंचम्यंतपदप्रयोजनंबोध्यं ॥
प्रमेयवृत्तिहेतुत्वमिति ॥ प्रमेयादित्यत्रज्ञापकत्वंपंचम्यर्थस्तस्यविशेष्यत्वेनैवभानात्प्रमेयनिष्ठंहेतुत्वंतदर्थइत्यतिव्याप्तिर्हेत्ववयवइतिज्ञेयं ॥
तात्पर्यभ्रमेणेति ॥ नञ्पदंयत्पदार्थंजलादिविशेषितस्वार्थंबोधयत्वितितात्पर्यभ्रमेणेत्यर्थः ॥ यदिति ॥ यत् ॥ जलादिकं ॥ इतरेति ॥ पृथि

वीतरेत्यर्थः॥ **इतरविशेषणविशेषणतयेति**॥धात्वर्थेतरविशेषणतावच्छेदकतयेत्यर्थस्तेनपश्यमृगोधावतीत्यादौवाक्यार्थस्यप्रथमांतार्थविशेष्यकत्वायधावनकर्तृत्वविशिष्टमृगादेःकर्मतासंबंधेनदर्शनान्वयस्यान्यत्रोक्तावपिनक्षतिः॥ **अत्रकेचिदिति**॥**अन्यूनविषयकत्वमिति**॥नन्वेतादृशान्यूनविषयकत्वोक्तौप्रमेयनिष्ठहेतुत्वंप्रमेयंप्रमेयादित्यत्रहेत्ववयवेऽतिव्याप्तिःपूर्वमभिहितैवेतिकथंपुनस्तादृशान्यूनविषयकत्वोक्तिःसंगच्छतइतिचेन्न॥नवीनमतेल्याप्यत्वस्यैवपंचम्यर्थत्वात्तन्मतेप्रमेयादितिहेतुवाक्यात्प्रमेयनिष्ठहेतुत्वबोधाभावान्नतत्रातिव्याप्तिरितितन्मतावलंबनेनतदुक्तिसंगतेः॥नचतन्मतेपिप्रमेयज्ञाप्यत्वंप्रमेयंप्रमेयादित्यत्रहेत्ववयवेऽतिव्याप्तिःशंक्या॥नामार्थधात्वर्थयोरभेदातिरिक्तसंबंधेनसाक्षादन्वयाभावात्प्रमेयपदस्यप्रमेयविषयकत्वलाक्षणिकतयातदर्थस्यधात्वर्थज्ञानेऽभेदान्वयावश्यकत्वेनयादृशधर्मावच्छिन्नःप्रतिज्ञाबोधस्तादृशधर्मावच्छिन्नविषयकबोधजनकत्वस्यतादृशहेतुवाक्येऽसंभवात्॥विषयत्वंप्रमेयंप्रमेयादितिहेतुवाक्यस्यातिरिक्तविषयकबोधजनकतयैववारणमितिध्येयं॥**अथवेति**॥**अतएवेत्यादि**॥घटशब्दइत्यारभ्यवारणार्थत्वादित्यंतोमिश्रग्रंथः॥ **घटशब्दोगुणइति**॥अत्रघटोगुणइत्येवप्रतिज्ञाघटइत्यस्यघप्रकारोत्तराकारोत्तरटत्वरूपानुपूर्व्यवच्छिन्नशब्दस्वरूपेनिरूढलक्षणातत्तात्पर्यग्राहकंशब्दपदं॥ **प्रतिज्ञारूपशब्दएवेति**॥प्रतिज्ञासमान

नुपूर्वीकःघटोगुणइतिशब्दएवेत्यर्थस्तेनप्रतिज्ञाशब्दस्योदाहरणघटकत्वाभावेपिनक्षतिः॥ तत्रेति॥तादृशोदाहरणस्थघटशब्दइत्यर्थः॥ विषय
विधयेति॥ घोत्तरघोगुणइतिप्रत्यक्षस्याप्यनुमितिसमानविषयकत्वसंभवेनघटशब्दस्यविषयविधयातज्जनकत्वादित्यर्थः॥अथप्रतिज्ञाघटक
घटशब्देऽतिव्याप्तिःकुतोनाभिहितातस्यापिगुणत्वेनस्वविषयकप्रत्यक्षजनकत्वादितिदिक्केचित्॥ प्रतिज्ञाश्रवणात्पूर्वंगुणत्वरूपविशेषणोपस्थि
त्यभावाद्गुणत्वेनप्रतिज्ञाघटकशब्दप्रत्यक्षासंभवात्प्रतिज्ञोपस्थितगुणत्वेनोदाहरणघटकतादृशशब्दप्रत्यक्षसंभवात्॥ प्रतिज्ञापूर्वंकोगुणइतिजि
ज्ञासायाःसार्वत्रिकत्वाभावाच्चेत्याहुः॥ पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वावच्छेदेनेति॥अन्यूनविषयकःसन्ननतिरिक्तविषयकइत्यु
द्देश्यविधेयभावमहिम्नाऽवच्छेद्यावच्छेदकभावलाभइतिकेचित्॥ नन्वेवंदर्शितसाध्यतावच्छेदकसंबंधनिवेशफलंनसंभवतीत्यतआह॥
साध्यतावच्छेदकसंबंधेति॥जल्पेति॥ विजिगीषुकथारूपेत्यर्थः॥ वादेति॥तत्वबुभुत्सोःकथारूपेत्यर्थः॥ अवयवत्वपर्याप्त्यवच्छे
दकेति॥ अथैवंसत्यन्यूनविषयकत्वदलवैयर्थ्यंधूमादालोकवान्पर्वतोवह्निमान्धूमादित्यादौहेतुवाक्यज्ञानीयजनकतायाअवयवत्वपर्याप्त्य
वच्छेदकयत्किंचिद्धर्मव्यापकविषयताकान्यतादृशप्रतिज्ञाघटकधूमादितिभागज्ञानवृत्तित्वेनतद्भिन्नत्वाभावात्तादृशहेतुवाक्येऽतिव्याप्त्यभावादि

तिच्चेन्न ॥ वन्हेर्वन्हिसामग्रीमान्पर्वतोऽभिधेयत्वान्दहनादित्यादिन्यायांतर्गतहेतुवाक्येऽतिव्याप्तेस्तद्दलसार्थक्यात् ॥ तत्रप्रतिज्ञाघटकवन्हेरि
तिभागज्ञानस्यतादृशविषयताकान्यत्वेपितन्निष्ठवन्हेरित्यानुपूर्वीज्ञानत्वावच्छिन्नजनकतातोदहनादित्यानुपूर्वीज्ञानत्वावच्छिन्नजनकतायादहना
दितिहेतुवाक्यज्ञाननिष्ठायाभिन्नत्वात्कारणतावच्छेदकभेदेनकारणतायाभेदस्यावश्यकत्वात् ॥ नचन्यायानंतर्गतदहनादितिवाक्येपक्षान्वितसा
ध्यान्वयबोधनक्षमार्थोपस्थितिजनकहेतुविभक्तिमच्छब्दत्वरूपहेतुत्वाभावेनतादृशवाक्यज्ञानस्यतादृशविषयताकान्यतयातद्वृत्तिजनकताभि
न्नत्वस्यन्यायांतर्गतदहनादितिवाक्यज्ञाननिष्ठजनकतायामसत्वेननतत्राप्यतिव्याप्तिरितिवाच्यं ॥ हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयताव
हिर्भूतविषयिताशून्यबोधजनकतावच्छेदकविषयतानिरूपकवर्णसमुदायत्वरूपहेतुत्वघटितावयवत्वपर्याप्त्यवच्छेदकेत्यादिविवक्षयात
त्रातिव्याप्तेःस्फुकरत्वात् ॥ नन्वेवंसतिवन्हेर्वन्हिसामग्रीमान्पर्वतोऽभिधेयत्वान्दहनादित्यादावन्यूनविषयकत्वदानेप्यन्यूनानतिरिक्तविष
यकप्रतिज्ञार्थहेत्वर्थविषयकसमूहालंबनज्ञानीयतादृशजनकतावच्छेदकविषयताश्रयवर्णसमुदायत्वमादायहेतुवाक्येऽतिप्रसंगोदुर्वार
नचमुख्यविशेष्यताद्वयशून्यत्वेनबोधोविशेषणीयःसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताभिन्नमुख्य

विशेष्यताशून्यत्वरूपमन्यूनविषयकत्वं वा विवक्षणीयमिति न समूहालंबनमादायातिव्याप्तिरिति वाच्यं ॥ तथा सत्यसंभवापत्तेः सर्वत्र प्रतिज्ञाजन्य
बोधे साध्यप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतायास्तदन्यपक्षतावच्छेदकनिष्ठप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतायाश्च स
त्वात् ॥ यद्यपि च तादृशविशेष्यतयोरभेदस्वीकारान्नासंभव इत्युच्यते तथापि पक्षान्वितसाध्यान्वयबोधनक्षमेत्यादिहेतुत्वघटितावयवत्वपर्याप्त्यव
च्छेदकेति विवक्षयैव दर्शितहेतुवारणेऽन्यूनविषयकत्वसार्थक्याय हेतुतावच्छेदकविशिष्टहेतुविशिष्टेत्यादिहेतुत्वघटितावयवत्वपर्याप्त्यवच्छेदके
ति विवक्षणं प्रक्षालनाद्धीति न्यायग्रस्तं दीधितिकारीयधूमादालोकवान्पर्वतो वह्निमान्धूमादित्यादौ हेतुवाक्येऽन्यूनविषयकत्वव्यावृत्तिदानासं
गतिश्चेत्यत आह वस्तुतस्त्विति ॥ केचित्त्विति ॥ यत्रेति ॥ रमाधवः पूज्यः सदाशिवो वंद्य इत्यादावित्यर्थः ॥ एकदेशेति ॥ माधवः पूज्यः
शिवो वंद्य इत्यादिभागेत्यर्थः ॥ कथंचिदिति ॥ अनवधानतयेत्यर्थः ॥ अप्रकृतार्थेति ॥ नानार्थकहर्यादिपदघटितेत्यर्थः ॥ वास्तवतथाविध
तात्पर्यसत्ताया इति ॥ तत्तदर्थबोधकत्वप्रकारकस्वानुकूलकृतिसमानाधिकरणेच्छाविशेष्यताया इत्यर्थः ॥ इदं वाक्यममुमर्थं बोधयत्वितिव
कुरिच्छयैव वाक्यप्रयोगाद्वाक्ये तादृशतात्पर्यसत्ता निर्वाहः ॥ अत्रेदं चिंत्यं ॥ निरुक्ततात्पर्यसमानाधिकरणसमुदायत्वविवक्षयैवाप्रकृतार्थप

रवाक्यवारणेतादृशसमुदायत्वेतात्पर्यव्यापकत्वनिवेशेप्रयोजनाभावेनप्रतिज्ञैकदेशसमुदायत्वस्यतात्पर्यसमानाधिकरणत्वात्तद्वारणम
शक्यमेव ॥ यत्तुयत्रपर्वतोवन्हिमानित्यादौवन्हिमत्पदेवन्हिविशिष्टपर्वतंबोधयत्वितितात्पर्यंतात्पर्यभ्रमेणपर्वतोवन्हिमानितिवाक्यात्तादृशबोध
स्तत्रतादृशवाक्येऽतिव्याप्तिरतस्तादृशसमुदायत्वंतात्पर्यव्याप्यत्वविवक्षणावश्यकतयाप्रतिज्ञैकदेशसमुदायत्वस्यतादृशत्वाभावात्तद्वारणमितित
न्न ॥ आनुपूर्व्यवच्छिन्नतादृशेच्छाविशेष्यत्वरूपतात्पर्यस्यानुपूर्व्याश्रयेकवर्णएवविश्रांतेः प्रतिज्ञासमुदायत्वस्यतद्व्याप्यत्वाभावादसंभवापत्तेः ॥ यदि
च्चविनिगमनाविरहात्सर्ववर्णेष्वेवतात्पर्यमविशिष्टमितिनासंभवइत्युच्यतेतदापियत्रपर्वतपदोत्तरंस्वंतवन्हिमत्पदंवन्हिविशिष्टपर्वतरूपार्थंबोधयत्वि
तितात्पर्येणैवतादृशप्रयोगस्तत्रतादृशप्रतिज्ञाया असंग्रहोदुर्वारएव ॥ अथतादृशेच्छाविशेष्यत्वतदवच्छेदकत्वान्यतरत्वावच्छिन्नव्याप्यत्वस्यसमुदा
यत्वेविवक्षणान्नोक्तदोषः ॥ यदिच्चविशेष्यतावच्छेदकतानव्यासज्यवृत्तिः किंतुविशेष्येयद्विशेषणंतत्रविशेष्यतावच्छेदकतातत्रयद्विशेषणंतत्रतद
वच्छेदकतावच्छेदकंतेतिमतेनोक्तविवक्षणेनप्रतिज्ञासंग्रहइतिमन्यतेतदातादृशेच्छाविशेष्यतायादृशधर्मावच्छिन्नातादृशधर्मप्रकारकनिश्चयत्वस
मानियतकारणतावच्छेदकयत्किंचिज्ज्ञानीयविषयताव्याप्यत्वमेवसमुदायत्वेविवक्षणीयमितिनकोपिदोषइतिच्चेन्न ॥ एवंसतिमूलोपात्तानुमि

त्यन्यूनानतिरिक्तविषयकत्वविशेषणवैय्यर्थ्यापत्तिः ॥ प्रतिज्ञाहेतुसमुदायत्वस्यकेवलहेतुसमुदायत्वस्य चान्यूनानतिरिक्तविषयकबोधपरत्वाव्या
प्यत्वादेव तत्रातिप्रसंगाभावात् ॥ नच तात्पर्यशरीरेशाब्दबोधमात्रंनिवेशनीयमितिनतद्वैय्यर्थ्यमितिशंक्यं ॥ वन्हिमत्पर्वतपरत्वाभाववतिवन्हिमत्प
दस्यलक्षणयापाषाणादिबोधतात्पर्यवतिपर्वतोवन्हिमानितिवाक्येऽतिव्याप्तेर्दुर्वारत्वात् ॥ अन्यूनानतिरिक्तविषयकबोधघटिततात्पर्यनिवेशेनैवो
पपत्तौ बोधे तादृशविशेषणस्यपृथक्तात्पर्यनिवेशस्य चानुपयुक्तत्वाच्चेति ॥ इदमत्रतत्वं ॥ निरुक्तेच्छारूपतात्पर्यविशेष्यतातदवच्छेदकत्वान्यत
रवद्वर्णत्वसमनैय्यत्यस्यतादृशविशेष्यतायादृशधर्मावच्छिन्नातादृशधर्मप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकयत्किंचिज्ज्ञानीयविष
यताश्रयवर्णत्वसमनैय्यस्यस्यवाशाब्दबोधजनकतावच्छेदकयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वेनिवेशआवश्यकोऽन्यथाघटवद्भूतलंपर्वतोवन्हिमा
नितिविशिष्टवाक्यंपर्वतेवन्हिबोधंजनयत्विति तात्पर्यवताप्रयुक्तेपर्वतोवन्हिमानित्यंशएवतात्पर्यविपर्यस्यतोनिरुक्तशाब्दबोधजनकेपर्वतोवन्हिमानि
तिवाक्ये ॥ एवंवन्हिमत्पदंवन्हिमत्पर्वतंबोधयत्विति तात्पर्यवताप्रयुक्तेपर्वतोवन्हिमानितिवाक्येतात्पर्यविपर्यस्यतोनिरुक्तशाब्दबोधजनकपर्वतोवन्हि
मानितिवाक्येऽतिप्रसंगोदुर्वारइत्थंचतत्रशाब्दबोधेऽनुमित्यन्यूनानतिरिक्तविषयकत्वमावश्यकमन्यथाहेतुवाक्यंप्रतिज्ञार्थंबोधयतुप्रतिज्ञाहेतुसमुदा

यस्ताद्दशार्थंबोधयत्वितिचपुरुषदोषाधीनतात्पर्यमादायकेवलहेतुवाक्येप्रतिज्ञाहेतुसमुदायेचातिप्रसंगस्तदवस्थएवेति॥ यत्तुचित्रगुःसुंदरइत्यादौ चित्रादिपदस्यतात्पर्यग्राहकत्वेनविशिष्टेतात्पर्यसत्तायाअभावादव्याप्तिरिति॥ तन्न॥ द्विविधंतात्पर्यंपदार्थतात्पर्यंवाक्यार्थतात्पर्यंचेति॥ तत्रायस्यचित्रादिपदेऽसत्वेपिद्वितीयंतद्घटितसमुदायेऽक्षतंचित्रगुपदममुमर्थंबोधयत्वितीच्छयैवताद्दशप्रयोगात्॥ इच्छाचविसंवादिभिन्नत्वेनविशेषणीयातेनेदानीमेवशाब्दबोधजनकमिदंवाक्यंभवत्वितीच्छयाप्रयुक्तेतत्कालीनशाब्दबोधाजनकेपर्वतोवन्हिमानितिवाक्येनातिप्रसंगः॥ यदिपुनस्ताद्दशेच्छाया अंशांतरेविसंवादिताक्वचित्संभावितेतिक्वचिदप्रसिद्धावव्याप्तिरितिमन्यतेतदातद्विशेषणंपरित्यज्यताद्दशेच्छाविशेष्यतेश्वरेच्छावृत्तित्वेनविशेषणीय समानाकारकेच्छास्वविषयताभेदस्याप्रामाणिकत्वात्संवाद्यंशानिरूपितविषयतामात्रस्येश्वरेच्छावृत्तित्वमक्षतमित्यलंबहुनेतिस्वधियोविदां कुर्वंतु॥ सर्वेभ्यइति॥ पूर्वोपस्थितपुत्रपौत्रस्वर्गपशुरूपफलोद्देशेनेत्यर्थः॥ कर्तव्यावितिशेषः॥ वाक्यभेदपरिहारार्थंतावतांफलानांसर्वत्वेनोपस्थितिमात्रंफलतातुप्रातिस्विकरूपेणेतिबोध्यं॥ तद्धर्मव्यापकेति॥ तद्धर्मव्यापकंविधेयव्याप्यंचयत्सर्वत्वमितियोजना॥ घटत्वव्यापकसर्वघटवृत्तिसर्वत्वावच्छिन्नतात्पर्यकस्यसर्वोघटःसुंदरइतिप्रयोगस्यवारणायविधेयव्याप्येति॥ तथाचताद्दशसर्वत्वस्यसौंदर्यव्याप्यत्वाभावान्नताद्दशप्र

योगः॥ स्कंदरघटद्वृत्तिसर्वत्रावच्छिन्नतात्पर्यकतादृशान्वयोगवारणायतद्धर्मव्यापकेति॥ **यद्यपिसमुहालंबनेति**॥ पर्वतोवन्हिमान्सर्वमभिधेयंप्रमेय
मितिसमूहालंबनेत्यर्थः॥ **वाक्यांतरसहितेति**॥ सर्वमभिधेयंप्रमेयमितिवाक्यसहितेत्यर्थः॥ **नतन्मात्रइति**॥ तथाचनप्रतिज्ञासंग्रहइति
भावः॥ अथेदमसंगतंवाक्यांतरसहितप्रतिज्ञाजन्यसमूहालंबनबोधनिष्ठसाध्यविशिष्टपक्षविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेद
कप्रतिज्ञामात्रविषयकयत्किंचिदेकज्ञानीयविषयताश्रयवर्णसमुदायत्वस्यप्रतिज्ञामात्रेसत्वात्॥ मैवंतादृशबोधनिष्ठवन्हिसंबंधिविषयकत्वा
वच्छिन्नजन्यतामादायैकदेशेऽतिव्याप्तिवारणायतादृशबोधनिष्ठायायाजन्यतेतिविवक्षणावश्यकतया प्रतिज्ञासंग्रहोदुःशकएव॥ **नचैक**
**देशस्यन्यायावयवत्वदलेनैववारणंशंक्यं**॥ प्रतिज्ञाद्यघटितत्वाघटितस्यैवतस्यनिवेशइत्यभिप्रायात्॥ **तथापिप्रकृतपक्षेति**॥ **अथधू**
मालोकादिपरामर्शानांपरस्परंव्यभिचारेणकारणत्वानुपपत्त्याऽव्यवहितोत्तरत्वसंबंधेनतत्तत्परामर्शविशिष्टानुमितित्वस्यैवजन्यतावच्छेद
कतयाव्याप्तिविषयतासाधारणतादृशजन्यतावच्छेदकविषयतात्वेननयद्विषयतासमनैय्यत्यसंभवःव्याप्त्यादिविषयकप्रतिज्ञार्थसमूहालंबनबोधीय
विषयितायाःसमनैय्यत्यसंभवेप्येकदेशवारणायविवक्षिततन्निष्ठयावज्जन्यताघटितसमुदायत्वस्यप्रतिज्ञामात्रेऽसत्वात्तदसंग्रहएवेतिचेदत्र

**केचित्तु** ॥ अव्यहितोत्तरत्वसंबंधावच्छिन्नाया तादृशपरामर्शीयजन्यतावच्छेदकतानदवच्छेदकतान्यतादृशपरामर्शजन्यतावच्छेदकविषयतात्वे
नयद्विषयतासमनैयत्यंतत्वमितिविवक्षणान्न दोषइत्याहुः ॥ **अन्येतु** जन्येयद्विशेषणंतदेवजन्यतावच्छेदकंनतद्विशेषणंतुतदवच्छेदकतावच्छेदकमेवे
त्यनुमितिविषयतानामेवविनिगमनाविरहेण सर्वासांजन्यतावच्छेदकत्वंनव्याप्तिविषयतायाइत्याहुः ॥ **तदुभयमप्ययुक्तं** ॥ नतत्परामर्शीव्य
वहितोत्तरत्वस्यजन्यतावच्छेदकेनिवेशेऽनुमितिविषयतानांजन्यतावच्छेदककोटावनिवेशप्रसंगेनासंभवस्यतादवस्थ्यानुद्धारात् ॥ **वस्तुतस्तु** ॥ धूम
त्वालोकत्वादिहेतुतावच्छेदकमनिवेश्यव्याप्यवत्तापरामर्शस्य स्वावच्छिन्नव्यापकतावच्छेदकवत्त्वावच्छिन्ननिरूपितसामानाधिकरण्यावच्छिन्नाया
स्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसंबंधेनकिंचिद्धर्मवन्निर्णयत्वेनैवहेतुता स्वावच्छिन्नव्यापकतावच्छेदकव
त्त्वावच्छिन्ननिरूपितसामानाधिकरण्यावच्छिन्नत्वस्य स्वनिष्ठावच्छेदकतानिरूपकं यद्धेतुनिष्ठमवच्छेदकत्वंतन्निरूपकंयदधिकरणनिष्ठमवच्छेद
कत्वंतन्निरूपकंयदाधेयत्वनिष्ठमवच्छेदकत्वंतन्निरूपकंयदभावनिष्ठमवच्छेदकत्वंतन्निरूपकंयत्प्रतियोगित्वनिष्ठमवच्छेदकत्वंतन्निरूपकंयदव
च्छेदकतानिष्ठमवच्छेदकत्वंतन्निरूपकंयदभावनिष्ठमवच्छेदकत्वंतन्निरूपकंयद्वह्नित्वनिष्ठमवच्छेदकत्वंतन्निरूपकंयद्वह्निनिष्ठमवच्छेदकत्वं २९७

तन्निरूपकंयदधिकरणनिष्ठमवच्छेदकत्वंतन्निरूपकंयदाधेयत्वनिष्ठमवच्छेदकत्वंतन्निरूपकेत्यर्थस्तेनवास्तवताद्दशसामानाधिकरण्यानिवेशे समानाधि
करणधूमवानयमितिज्ञानादनुमित्यापत्तिरितिदूषणानवकाशः॥स्वनिष्ठावच्छेदकतायांनिरवच्छिन्नत्वंनिवेशनीयमित्यादिकंइदंपुनरिहावधेयमि
त्यादिनानव्यमतवादेउक्तंतदभिप्रायेणेदमतएवव्याप्यवत्तापरामर्शत्वावच्छिन्नजनकतेत्युक्तिःसंगच्छते॥धूमत्वालोकत्वादिहेतुतावच्छेदकाघटित
निश्चयत्वादिकंतत्रैवनिरुक्तंद्रष्टव्यंविस्तरभयान्नेहोच्यतइतिदिक्॥उक्तोपनयः निर्व्याप्तिंनिरसितुंशंकते॥ नचेति॥ अभेदेनेति॥ तथाचानु
मितिविषयत्वोपनयजन्यबोधविषयत्वयोर्निरूप्यनिरूपकभावभेदेनभेदान्नोपनयजन्यबोधस्यताद्दशविषयतासमनियतविषयताकत्वमिति
भावः॥ यत्किंचिद्धर्मावच्छिन्नांशइति॥ तथाचहेतुजन्यबोधस्यप्रमेयत्वांशेनिर्धर्मितावच्छेदककत्वेननानिर्व्याप्तिरितिभावः॥ घटान्यत्व
वदिति॥ अत्रहेतुकोटौयावतांनिवेशस्तेषांपक्षकोटौनिवेशोहेतुवाक्यजन्यबोधस्यानतिरिक्तविषयकत्वसंपादनार्थं॥पक्षकोटौसधर्मेत्यनु
पादानेपक्षनिश्चयकालएवपक्षेसाध्यनिश्चयसंपत्तेःसंदेहाभावान्न्यायप्रयोगानुपपत्तिरतस्तन्निवेशः॥बाधवारणायस्वरूपसमवायोभयसंबंधघ
टितसामानाधिकरण्यसंबंधेनघटान्यत्वस्यसाध्यत्वंबोध्यं॥घटान्यत्ववद्रूपघटोभयत्वावच्छिन्नस्यहेतुत्वेघटान्यत्वस्यवैय्यर्थ्यापत्तिरुभयत्वाव

च्छिन्नस्य सामानाधिकरण्यसंबंधेन घटत्वादावभावाद्व्यभिचाराभावात्[illegible]नादृशहेतुवाक्यजन्यबोधस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावेन न हेतुवाक्ये
तिव्याप्तिरतो घटान्यत्ववत्तादृशान्यतरत्वावच्छिन्नस्य हेतुत्वं ॥ तत्र घटान्यत्वपरित्यागे सामानाधिकरण्येन तादृशान्यतरवति घटत्वादौ व्यभिचार इति तन्नि
वेशस्तदिदमाह ॥ घटत्वादाविति ॥ घटान्यत्वप्रवेशे सामानाधिकरण्यसंबंधेन घटान्यत्वविशिष्टं कपालरूपादिकमेव तस्य सामानाधिकरण्यसंबंधेन घट
त्वादावभावान्न व्यभिचारः ॥ ननु सामानाधिकरण्यसंबंधेन घटान्यत्वविशिष्टरूपस्यैव हेतुतास्त्वित्यत आह ॥ धर्मिभेदेनेति ॥ रूपभिन्नस्य घटस्यापि
प्रवेशेनेत्यर्थः ॥ विशेष्यस्य ॥ रूपघटान्यतरस्य ॥ घटमात्रस्य विशेष्यत्वे घटान्यत्वं व्यर्थं रूपमात्रस्य तथात्वे पक्षविशेष्यकत्वनिवेशेनापि वारणं संभवती
त्यतोऽन्यतरदुपात्तं तथा च व्यभिचारावारकत्वेऽपि वह्निमान् वह्निमदन्या हृनेरिति वद्धर्मिभेदान्न वैयर्थ्यमिति भावः ॥ ननु सामानाधिकरण्यसंबंधेन घटान्य
त्वविशिष्टस्यैव हेतुतास्तु किमन्यतरत्वनिवेशेनेत्यत आह ॥ घटान्यत्वसमानाधिकरणेति ॥ विशेष्यतावच्छेदकस्य ॥ अन्यतरत्वस्य ॥
अत्र घटान्यत्वोपलक्षितस्यान्यतरत्वावच्छिन्नस्यैव हेतुत्वं बोध्यं ॥ विलक्षणेति ॥ वैलक्षण्यं ॥ निरवच्छिन्नत्वं ॥ तथा च तादृशविषयतानिरूपित
निरवच्छिन्नावच्छेदकताशून्यधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकविषयताशून्यत्वमर्थः ॥ प्रमेयावच्छिन्नविषयतावारणाय द्वितीयनिरवच्छिन्नत्व

निवेशः ॥ नान्यूनपदव्यावृत्त्यसंगतिरिति ॥ अत्र तादृशानिश्चयत्वनिष्ठस्वरूपसंबंधरूपावच्छेदकत्वनिवेशे धूमादालोकवान्पर्वतो वन्हिमान्पर्वतो वन्हिमानि
त्यादिप्रतिज्ञाजन्यबोधानां तादृशाविशिष्टनिश्चयत्वनिष्ठस्वरूपसंबंधरूपावच्छेदकताकान्योन्यः ज्ञानज्ञाप्यत्वं धूमीयं न वा संबंधो वन्हिमान्न वेति संश
यत्वानिवर्तकतावच्छेदकविषयिताशून्यत्वाभावेन तादृशाप्रतिज्ञानामसंग्रह इति दूषणसंभवेऽन्यूनपदव्यावृत्त्यसंगतिरूपदूषणानौचित्यमिति केचित् ॥
यादृशरूपावच्छिन्नविशेषितेति ॥ अत्र तादृशानिश्चयत्वे स्वरूपसंबंधरूपानुमितिजनकतावच्छेदकत्वनिवेशे वन्हिसमानाधिकरणधूमकाली
न पर्वतो वन्हिमानिति प्रतिज्ञायामव्याप्तिः ॥ साध्यसामानाधिकरण्यत्वावच्छिन्नविशेषितहेतुविशेषितपक्षानिश्चयत्वस्यापि तादृशत्वादतोऽनतिरिक्तवृ
त्तित्वरूपमेव तान्निविष्टं ॥ अभावद्वयमिति ॥ अन्वयव्याप्तिविषयकत्वाभावव्यतिरेकव्याप्तिविषयकत्वाभावद्वयमित्यर्थः ॥ अन्वयिव्यतिरेक्युदा
हरणाकांक्षाघटितेति ॥ तादृशोदाहरणाकांक्षाजनकशाब्दज्ञानजनकन्यायावयवत्वरूपमित्यर्थः ॥ अपरमिति ॥ पक्षसतो विपक्षासतो हेतो
र्वचनमित्येवंरूपमित्यर्थः ॥ प्रतिज्ञायाः साध्यतावच्छेदकविशिष्टसाध्यबोधकत्वनियमस्य व्यभिचारमाशंकते ॥ यद्यपीति ॥ रक्तदंडवानिति वाक्या
द्रक्तत्वविशिष्टाभिन्नदंडसंबंधीति बोधोऽनुमितिस्तु समवायेन रक्तत्वविशिष्टदंडसाध्यतावच्छेदकेति भावः ॥ हृदयमिति ॥ मतुप्प्रकृति

नामार्थस्यनामार्थेभेदान्वयस्यप्रामाणिकत्वमस्वरसः॥ प्रतिज्ञाजन्यबोधजनकत्वस्यप्रतिज्ञात्वेआत्माश्रयादाह॥ अत्रचेति॥ एवंचेति॥ भिद्यतेभिन्नमित्यादौप्रतिज्ञार्थबोधानांविशिष्योपादानेनेत्यर्थः॥ अन्यतमत्वेनानुगमःसफलोभवतीतिशेषः॥ अन्यथाप्रतिज्ञार्थत्वेनानुगततादृशार्थविषयकशाब्दबोधानिवर्त्यसंशयानिवर्तकप्रतिज्ञार्थबोधजनकत्वमित्यस्यैवसम्यक्त्वेऽन्यतमत्वनिवेशोव्यर्थएवस्यादितिभावः॥ तेनरूपेणेति॥ अन्यतमत्वेनेत्यर्थः॥ कूटघटितधर्मस्येति॥ तादृशकूटवत्संशयप्रतिबंधकत्वसामान्याभावविशिष्टबोधनिष्ठान्यतमत्वस्येत्यर्थः॥ लाघवेनेति॥ यद्यपितादृशतादृशबोधान्यतमबोधानिवर्त्यत्वस्यतादृशान्यतमत्वसमानाधिकरणप्रतिबंधकतानिरूपितप्रतिबध्यत्वसामान्याभावरूपत्वेसर्वेषामेवसंशयानांस्वविरोधिसमूहालंबनात्मकतद्बोधान्यतममादायतन्निवर्त्यत्वेनतदभावविशिष्टसंशयाप्रसिद्धिः॥ तादृशतादृशबोधान्यतमत्वव्यापकप्रतिबंधकतानिरूपितप्रतिबध्यत्वसामान्याभावरूपत्वेचतादृशप्रतिबंधकतायाअप्रसिद्धत्वेनाव्याप्तेर्जागरूकत्वेननिवर्त्यत्वांशेऽन्यतमत्वेनबोधानांनिवेशेगौरवकथनमनुचितं॥ तथापितादृशतादृशविशिष्टार्थविषयकनिश्चयत्वव्यापकप्रतिबंधकतान्यतमप्रतिबंधकतानिरूपितप्रतिबध्यत्वसामान्याभावस्यैवतेनविवक्षणान्नाव्याप्त्यादिकं॥ परंत्वेवंविवक्षातात्पर्येतादृशतादृशबोधभेदकूटवद्भिन्नत्वरूपान्यतमत्वेत्याद्युक्तिर्विचारणीयैवेतिध्येयं॥

अन्यतमेनापीति॥अन्यतममध्येकेनापीत्यर्थस्तेनतादृशाकूटलाभः॥ ननुतादृशान्यतमबोधजनकत्वमेवप्रतिज्ञातमस्तीत्यतआह॥ अधि
कंत्विति॥ यादृशविशिष्टार्थबोधजनिकाइत्युक्त्वावास्तवविशिष्टविषयिताशालिबोधप्रदर्शनेजनकतान्वयिबोधेऽपिवास्तवतादृशविशिष्टविषयि
ताशालित्वलाभादसंभवंवक्तुंभूमिकामारचयति॥ तथापीत्यादिना॥ न्यायावयवत्वमुभयघटकेत्यादिविशेषणाघटितमित्याशयेनहेत्वंतइति॥
तादृशविशेषणघटितमित्याशयेनहेतौवेति॥ उक्तदिशेति॥ अनिवर्तकत्वस्यप्रतिबंधकतावच्छेदकविषयिताशून्यत्वरूपस्यनिवेशावश्य
कत्वप्रदर्शनदिशेत्यर्थः॥ निश्चयत्वानवच्छिन्नेति॥ तादृशानिश्चयत्वाव्यापकेत्यर्थस्तेनसंबंधोवान्हिमान्नवेत्यादिसंशयमादायनाव्याप्तिर्नवा
ऽन्यूनविषयकत्वदलवैयर्थ्यं॥ उक्तेति॥ धूमादालोकवानित्यादिस्थलीयेत्यर्थः॥ जन्यतायांतादृशविषयित्वावच्छिन्नत्वंनिवेश्यमितिप्रागभिधा
नेनैवजन्यतास्वन्यूनत्वंलब्धमित्येतद्दर्शयति॥ उक्तप्रायमिति॥ इतरेभ्योभिद्यतेइत्यादौतद्बोधादिति॥ भिदधातोरकर्मकत्वात्तदुत्त
राख्यातस्यनाश्रयत्वार्थकत्वंभावेचाकर्मकेभ्यइत्यनुशासनेनाकर्मकधातूत्तराख्यातस्यस्वार्थएवविधानादितितुनाशंक्यंभेत्स्यतेअभेदिवाघटइति
प्रयोगानुरोधाद्भिदधातोःसकर्मकत्वाद्घटत्वादिविशिष्टहेतुमत्वरूपव्यापाराविवक्षायामितरेभ्योभिद्यतइतिकर्मकर्तरिप्रयोगोनिराबाधएवेति

ध्येयं ॥ पूर्ववदेवेति ॥ तावद्बाधानिवर्त्ययावत्संशयानिवर्तकत्वरूप एवेत्यर्थः ॥ दर्शितहेत्विति ॥ धूमादालोकवानित्यादिरित्यादिः ॥ अत्रच स्वम
तापेक्षया गौरवमेवास्वरसबीजमिति ॥ अथ धूमादालोकवान्पर्वतोवह्निमान्धूमादित्यादौ प्रतिज्ञाहेतूभयजन्यसमूहालंबनबोधस्यापितावद्बाधा
निवर्त्ययावत्संशयानिवर्तकत्वेसतितत्तद्विशिष्टार्थविषयकबोधान्यतमयत्किंचिद्बाधनिवर्त्यत्वाभावरूपान्यूनानतिरिक्तविषयकत्वविशिष्टत्वेन तन्निष्ठहे
त्वर्थविषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रयेहेतावतिव्याप्तिसंभवेगौरवोद्भावनंनिर्बीजमितिचेन्न ॥ निरुक्तान्यूनानतिरिक्तविषयकत्वव्या
पकमुख्यविशेष्यतावच्छिन्नत्वस्यजन्यतायांविवक्षणेतादृशहेतौनातिव्याप्तिस्तज्जन्यबोधीयमुख्यविशेष्यतायास्तादृशकेवलप्रतिज्ञाजन्यबोधसा
धारणतादृशबोधत्वव्यापकत्वाभावात् ॥ विशेष्यतायांमुख्यत्वनिवेशान्नप्रतिज्ञाजन्यबोधीयालोकविशेषणतापन्नधूमविशिष्टज्ञाप्यत्वविषयतामा
दायहेतावतिव्याप्तिर्धर्मितावच्छेदकतायाःप्रकारतान्यत्वमतेप्रतिज्ञाजन्यबोधीयायाधूमविशिष्टज्ञाप्यत्वनिष्ठधर्मितावच्छेदकप्रकारतानिरूपितवि
षयतायाइतरविशेषणतानापन्नत्वरूपमुख्यताक्रांतायास्तादृशबोधत्वव्यापकत्वेपितस्याजन्यतानवच्छेदकतयातदवच्छिन्नजन्यतायाअप्रसि
द्धेर्नतामादायहेतुवाक्येतिव्याप्तिरितिगौरवोद्भावनंसबीजं ॥ नच्चैवंसत्यन्यूनविषयकत्वदलवैय्यर्थ्यशंक्यं ॥ तददानेधूमादालोकवान्पर्वतोवह्नि

मान्धूमादित्यादौ प्रतिज्ञाजन्यबोधीयमुख्यविशेष्यताया हेतुजन्यबोधसाधारणतादृशानतिरिक्तविषयकबोधत्वव्यापकत्वाभावेन प्रतिज्ञाया अ
संग्रहापत्त्यानद्दलावश्यकत्वात् ॥ ननु चैत्रः पचतीत्यादावुपनयस्य दुर्वचत्वेन न्यायाभावाच्चैत्रः पचतीत्यस्य प्रतिज्ञात्वमेव न संभवतीति तत्र लक्ष
णसंगमनं दीधितिकृतामफलमेवेत्याशयेन शंकते ॥ नन्विति ॥ व्युत्पत्त्यविरुद्धतयेति ॥ नञो निपातत्वादिति भावः ॥ हृदयमिति ॥
अनुयोगितायाः संसर्गतावादिना अनुयोगितानेतरीयाइदंभेदानुयोगित्वाभाववदिति द्विविधप्रत्यक्षेनेतराणीति वाक्यजन्यशाब्दबोधसामग्र्या
प्रतिबंधकत्वं वाच्यमनुयोगितायाः संसर्गत्ववादिनात्वनुयोगितासंबंधेनेतरभेदाभाववदित्येकविधप्रत्यक्षं प्रत्येवेति षष्ठ्यर्थस्वत्वस्य प्रकारत्वव्य
वस्थापनदिशाऽनुयोगितायाः प्रकारत्वेलाघवमस्वरसः ॥ वितर्क्येति ॥ यदि तथाशब्दस्य प्रक्रांतं यद्विशेष्यं स एवार्थस्तदोपनयजन्यबुद्धौ हेतु
मत एव विशेष्यत्वेन प्रक्रांतत्वात्तस्माद्धेतुमानित्यर्थः स्याद्धेतुमनिहेतौ वा हेतुज्ञानज्ञाप्यत्वान्वयो न संभवत्यननुभावात् ॥ यदि प्रकारांतं प्रकारोः
र्थस्तदोपनयजन्यबोधविशेष्यस्य सामान्यतोऽन्वयव्याप्तौ प्रवेशेन प्रकारतयोक्त एव दोषः ॥ यदि प्रक्रांतसादृश्यं तदाभिधेयं प्रमेयं ज्ञेयत्वादित्या
दौ प्रक्रांतं यदुपनयजन्यबोधविशेष्यमभिधेयं तद्भेदघटितनत्सादृश्याप्रसिद्धिरितिरीत्या वितर्क्येत्यर्थः ॥ तत्प्रदर्शनमिति ॥ विप्रतिपत्तौ कोटि

प्रदर्शनमित्यर्थः॥ तथाचसाधारणधर्मोद्यसत्वेपिनक्षतिः॥ **तस्येत्यादि**॥ **तस्य**॥ विप्रतिपत्तिकोटित्वस्य॥ **स्वतइति**॥ तद्विशिष्टबुद्धौतन्मुख्य
विशेष्यकज्ञानत्वेनहेतुत्वादितिभावः॥ **निराकांक्षवाक्यव्युदासइति**॥ ननुनिराकांक्षवाक्यस्यन्यायांतर्गतत्वमेवनसंभवतीतिकथमेतदितिचेदत्र
**केचित्**॥ उपनयघटकवन्हिपदसंबंधिपदार्थपदानामेवन्यायांतर्गततयातेष्वेवानुपूर्वीभ्रमस्याभिप्रेतत्वादित्याहुः॥ **अवश्यंविवक्षणीयतयेति**॥
धूमवदालोकवान्पर्वतोवन्हिमान्धूमादित्यादौप्रतिज्ञार्थविषयकबोधनिष्ठहेतुविशिष्टहेतुत्वविषयकत्वावच्छिन्नजन्यताप्रतियोगिकजनकताश्रयेहेतुवा
क्येऽतिव्याप्तिवारणायेत्यादिः॥ **निवेशनासंभवेपीति**॥ पर्वतोवन्हिमानितिवाक्यस्यवन्ह्यादिशून्यपर्वतादौवन्हिमत्वावगाहिबोधत्वावच्छिन्नज
नकत्वानुरोधादितिभावः॥ वाक्यपदेनाकांक्षादिमत्वलाभेशाब्दपदापेक्षादीधितिकृदुक्तानांस्फुटीकरोति॥ **शाब्देति**॥ **ज्ञानादेः**॥ योग्यताज्ञाना
देः॥ स्वमतेशाब्दवाक्यपदयोरुभयोरेवाकांक्षादिमत्वलाभार्थकत्वंयत्वितिमतेचवाक्यपदादाकांक्षादिलाभःशाब्दपदाद्विजातीयशाब्दलाभइत्येवंम
तयोर्भेदः॥ **एतदर्थमेवेति**॥ निगमनातिव्याप्तिवारणार्थमेवेत्यर्थः॥ **पक्षेति**॥ तत्रास्यातार्थाश्रयत्वस्यस्यैवविशेष्यत्वादितरभेदाश्रयत्वमित्येव
बोधादितिभावः॥ पक्षाविशेष्यकेत्यस्यार्थांतरपरत्वावश्यकतांदर्शयन्नेवनिगमनेऽतिव्याप्तिर्नास्तीत्याह॥ **वस्तुतस्त्विति**॥ **अथैवमपि**गोत्वंस

मवायसंबंधावच्छिन्नप्रतियोगिताकगोत्वाभाववत्कालिकसंबंधावच्छिन्नप्रतियोगिताकगोत्वाभाववादित्यादौयत्रगोत्वंतत्रगोत्वमितिव्यतिरेक्युदाहरण
जन्यबोधस्यपक्षतावच्छेदकानवच्छिन्नविशेष्यतानिरूपकत्वेनतज्जनकेनादृशव्यतिरेक्युदाहरणेऽतिव्याप्तिर्दुर्वारैव॥ नचकालिकेनगोत्वाभावस्य
गोत्वानधिकरणदेशावच्छेदेनगविसत्वात्तत्रसमवायेनगोत्वाभावस्यासत्वान्निरुक्तहेतुर्व्यभिचारीकालिकेनगोत्वाभावस्यसाध्यत्वेसमवायेनगोत्वा
भावस्यहेतुत्वेचनतत्रव्यतिरेकव्याप्तिबोधकोदाहरणसंभवःकालिकेनगोत्वस्यघटेपिसत्वात्तत्रसमवायेनगोत्वाभावादितिवाच्यं॥ तथापिगो
त्वंगोभिन्नंसमवायावच्छिन्नाधारतासंबंधेनगोत्वाभाववद्वासमवायेनगोत्वाभावादित्यादौयत्रगोत्वंतत्रगोत्वमितिव्यतिरेक्युदाहरणेपरममहत्त्वंपर
ममहत्त्ववद्भिन्नंसमवायेनपरममहत्त्वाभावादित्यादौयत्रपरममहत्त्वंतत्रपरममहत्त्वमितिव्यतिरेक्युदाहरणेचातिव्याप्तिर्दुर्वारैवेतिचेदत्रकेचि
त्समादधति॥ उक्तोदाहरणवारणायस्वनिरूपकत्वस्वभिन्नपक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतानिरूपकत्वोभयसं
बंधेनपक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतावदन्यत्वमपिबोधविशेषणंदेयंयत्रगोत्वंतत्रगोत्वमितिव्यतिरेक्युदाहरण
जन्यबोधस्यतादृशोभयसंबंधेनगोत्वत्वावच्छिन्नविशेष्यतावत्वेननतत्रातिव्याप्तिः॥ धूमादालोकवान्पर्वतोवह्निमानितिप्रतिज्ञाजन्यबोधस्यनिरु

क्तोभयसंबंधेनालोकप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतावत्त्वेन तदसंग्रह इति पक्षतावच्छेदकावच्छिन्नविशेष्यतावदन्यत्वमपहाय
पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतावदन्यत्वनिवेशः॥ धूमादालोकेत्यादिप्रतिज्ञाजन्यबोधस्य तादृशविशिष्टपर्वतत्वावच्छिन्न
विशेष्यताभिन्नालोकप्रकारतानिरूपितकेवलपर्वतत्वावच्छिन्नविशेष्यतावत्त्वेन तदसंग्रहवारणाय द्वितीयसंबंधे पक्षतावच्छेदकतापर्याप्तिनिवेशः॥
द्वितीयसंबंधे स्वभिन्नत्वानुपादाने प्रतिज्ञामात्रेऽसंभव इति तन्निवेशः॥ नचैवमपि प्रमेयं गोत्वं गोभिन्नं समवायेन गोत्वाभावादित्यादौ यत्र गोत्वं तत्र गोत्व
मिति व्यतिरेक्युदाहरणजन्यबोधस्य पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यताकत्वाभावेन निरुक्तविशेषणवत्त्वात्तद्वारणमशक्य
मिति शंक्यं॥ सास्नाभावसाध्यकोक्तव्यतिरेक्युदाहरणवारकपक्षतावच्छेदकानवच्छिन्नविशेष्यतानिरूपकत्वदलेन पक्षतावच्छेदकतापर्याप्त्यधिक
रणधर्मावच्छिन्नविशेष्यतानवच्छिन्नतादृशधर्मानवच्छिन्नविशेष्यतानिरूपकत्वस्य विवक्षणात्॥ धूमादालोकवान्पर्वतो वह्निमानित्यादौ केव
लपर्वतत्वावच्छिन्नविशेष्यतामादाय प्रतिज्ञायामव्याप्तिरतः प्रथममनवच्छिन्नांतं॥ प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतामादायासंभववारणा
य द्वितीयमनवच्छिन्नांतं॥ प्रमेयगोत्वपक्षकदर्शितव्यतिरेक्युदाहरणवारणाय तत्र पर्याप्तिनिवेशः॥ यत्त्वेवमपि संबंधी वह्निमानित्यादौ निगम

नवारणं लिंगाविषयकत्वविशेषणं विनाऽशक्यमेवेति निगमनोपेक्षा निर्बीजेति तन्न ॥ विधेयांशेऽधिकावगाहिबोधानुपगमपक्षे तादृशान्यायानु
पगम इत्यभिप्रायेणाननुषंगपक्षे निगमनोपेक्षाबीजसंभवात् ॥ तादात्म्येन पृथिवीहेतुकेति ॥ भेदाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वप
प्रतियोगिस्वरूपत्वमप्यस्तीत्यभिप्रायेणेदं तेन पृथिवीभेदाभावस्य पृथिवीत्वरूपत्वात्पृथिवीभेदाभावत्वेन कथं पृथिव्याभानमिति शंकानवकाशः ॥ बो
धासंभवादिति ॥ नच नेयं पृथिवीत्यत्र नच पृथिवी नेयमिति योजनात्तत्र नच पृथिवीत्यस्य न पृथिवीभेदोऽर्थः प्रथमांतानुयोगिवाचकपदाभावात् ॥
नेयमित्यत्र नञो नात्यंताभावोऽर्थः सप्तम्यंतानुयोगिवाचकपदाभावादिति भावः ॥ दर्शितव्युत्पत्तीति ॥ उद्देश्यतावच्छेदकविधेययोरैक्येऽन्वया
नुपपत्तिरिति व्युत्पत्तीत्यर्थः ॥ मतुपो निरर्थकत्वेत्याह ॥ गंधसमानकालीनेति ॥ स्वस्य स्वधर्मितानवच्छेदकत्वेनेति ॥ स्वनिष्ठप्रकारतानिरू
पितविशेष्यतावच्छेदकत्वस्य स्वनिष्ठत्वविरहेणेत्यर्थः ॥ अत्र केचित् ॥ धर्मितावच्छेदकताप्रकारतयोरैक्यमेव स्वीक्रियते परंतु तस्यैव तद्धर्मितावच्छे
दकत्ववारणाय तन्निष्ठावच्छेदकतात्वेनैव तदवच्छिन्नविशेष्यतानिरूपितत्वं न तु तन्निष्ठप्रकारतात्वेन एवं च तन्निष्ठप्रकारतात्वावच्छिन्ननिरूप
कताकविशेष्यतानिरूपितत्वावच्छेदकतन्निष्ठावच्छेदकतात्वावच्छिन्नतन्निष्ठप्रकारतारूपस्य तन्निष्ठतद्धर्मितावच्छेदकत्वस्य नापत्तिरिति वदं

**ति॥ एतेनेति॥** निरवच्छिन्नविशेष्यतांव्यवस्थाप्यपक्षाविशेषणत्वस्यनिरुक्तार्थकत्वकरणेनेत्यर्थः॥ **पक्षतावच्छेदकेति॥** विधेयात्मके
त्यादि॥तथाचपक्षतावच्छेदकनिष्ठप्रकारतेत्यनेनधूमनिष्ठविधेयताग्रहणसंभवात्तादृशोपनयजन्यबोधस्यनिरुक्तपक्षाविशेषणत्वेनलिंगाविषयक
त्वमक्षतमितिभावः॥उपनयार्थघटकव्यापकताघटकसामानाधिकरण्यघटकधूमप्रकारतायाःपक्षतावच्छेदकनिष्ठप्रकारताशब्देनोपादानमाह॥
**एवमिति॥** इदंचप्रकारताविधेयतयोर्नाभेदः किंतुसाहचर्यमात्रमितिपक्षतायंथोक्तपक्षाभिप्रायेण तेननिरुक्तपक्षाविशेषणत्वघटकपक्षतावच्छे
दकनिष्ठप्रकारतायांविधेयतान्यत्वविशेषणेननिरुक्तोपनयातिव्याप्तिवारणेपिनक्षतिः॥ तत्पक्षेविधेयनिष्ठप्रकारताया अपिविधेयतान्यत्वात्॥
नन्वेवमपितादृशप्रकारतान्यत्वस्यविधेयतायामक्षतत्वान्नातिव्याप्तिरितिवाच्यं॥ अग्रिमप्रकारतायाःपक्षतावच्छेदकनिष्ठप्रकारतानिरूपकवि
शेष्यतानिरूपकविषयतात्वादिनैवभेदस्यनिवेशेनविधेयताप्रकारतयोरेकविशेष्यतानिरूपितत्वेनविधेयतायांतादृशविषयतान्यत्वविरहात्॥
**पक्षतावच्छेदकहेतुकेति॥** गंधवतीतरेभ्योभिद्यतेगंधादित्यादिस्थलीयेत्यर्थः॥ **एतेनेति॥** एवमित्यादिनाव्युपपनयातिव्याप्तिसंगमनेनेत्य
र्थः॥ **परंपरयासाध्यविशेषणतयेति॥** साक्षात्साध्यनिरूपितविशेषणताभिन्नत्वोक्तौवन्हिकालीनद्रव्यसामग्रीमान्वन्हेरित्यादावव्याप्तेः सा

क्षात्तरंपरासाधारणनिरूपितत्वमेवनिवेश्यमितिभावः ॥ **दधिद्व्यणुकेति** ॥ द्रव्यत्वव्याप्यव्याप्यजातेःपरमाणावस्वीकाराद्दधित्वस्यपरमाण्ववृत्तित्वे नदधिद्व्यणुकविषयकबोधस्यदधिसमवेतद्रव्यविषयकत्वमितिभावः ॥ **यद्यपि**निरुक्तपक्षाविशेषणत्वेननिरुक्तसाध्याविशेषणत्वेनचयल्लिंगप्रकार त्वंतच्छून्यत्वविवक्षयापिदधिद्रव्यमित्यादिहेतुपक्षकप्रतिज्ञात्रयेपिनाव्याप्तिस्तथापिसिषाधयिषयान्यायप्रयोगोपगमेदधिमद्द्रव्यइत्यादौसमवायेन साध्यसाधनभावेतदनभ्युपगमेपिकालिकसंबंधेनदधिसाध्यकेकालिकसमवायोभयसंबंधेनदधिहेतुकेप्रतिज्ञाजन्यबोधेतादृशप्रकारतासत्वादव्याप्ति र्दुर्वारा ॥ **नन्वनंतः**पातित्वमव्यापकत्वंतथाचप्रमेयत्वनिष्ठहेतुत्वंप्रमेयंप्रमेयत्वादित्यादौहेतावतिव्याप्तिरतस्तद्व्याचष्टे ॥ **पक्षतावच्छेदकेति** ॥ अथेद मनुपपन्नंदधिद्रव्यमित्यादिस्थलत्रयेपिदधित्वादिप्रकारतानिरूपितसंसर्गतानिरूपकत्वस्यदधित्वाद्यवच्छिन्नविशेष्यतायामसत्वादव्याप्तेरवारण दितिचेदत्र**केचित्** ॥ दधित्वनिष्ठावच्छेदकत्वप्रकारतयोर्भेदेपितद्भेदेनदधिनिष्ठावच्छिन्नानवच्छिन्नविशेष्यतयोर्भेदेपिवाप्रकारतावच्छेदकतयोर्निरू पकीभूतसंसर्गताव्यक्तिभेदोनांगीक्रियतेतथाचतादृशसंसर्गतानिरूपकविषयताभिन्नलिंगविषयताशून्यत्वंतादृशप्रतिज्ञाजन्यबोधेऽक्षत मितिनाव्याप्तिः ॥ **नन्वेवंसति**स्वस्यस्वधर्मितावच्छेदकत्वापत्तिःशंक्या ॥ अवच्छिन्नविशेष्यतायाधर्मितावच्छेदकनिष्ठप्रकारतानिरूपकसंसर्गता

निरूपितत्वेपिधर्मितावच्छेदकनिष्ठप्रकारतानिरूपितत्वाभावात् ॥ यद्वासंसर्गताव्यक्त्यभेदेप्यनवच्छिन्नविशेष्यतानिरूपितत्वेनैवधर्मितावच्छेदक
प्रकारतानिरूपकत्वमवच्छिन्नविशेष्यतानिरूपितत्वेनचधर्मितावच्छेदकतानिरूपकत्वंस्वीक्रियतेतथाचावच्छिन्नविशेष्यतानिरूपितत्वावच्छिन्ननिरू
पकताकत्वस्यधर्मितावच्छेदकप्रकारतायामसत्त्वान्नस्वस्यस्वधर्मितावच्छेदकत्वापत्तिरित्याहुः ॥ तदनिरूपकत्वादिति ॥ पक्षतावच्छेदकप्रका
रतायाधर्मितावच्छेदकताभिन्नत्वादितिभावः ॥ **कथंचिदिति** ॥ विषयतायाविषयरूपत्वेपक्षरूपस्वनिरूपकविषयताद्वाराधर्मितावच्छेदक
त्वप्रकारतयोर्भेदानुपगमादित्यर्थः ॥ **ननु**लिंगविषयतेत्यनेनलिंगतावच्छेदकावच्छिन्नविषयतैवप्रवेश्यासंयोगेनवन्हिसाध्यकप्रतिज्ञाजन्यबो
धेसंयोगस्यस्वरूपतएवसंसर्गतोपगमान्नतस्यामव्याप्तिरतोदूषणांतरमाह ॥ **एवमिति** ॥ संयोगेनवन्हिसाध्यकवन्हिसंयोगहेतुकप्रतिज्ञा
यामव्याप्तिमुद्धरतांमतंनिरस्यति ॥ एतेनेति ॥ **तद्धर्मितावच्छेदकत्वस्येति** ॥ भूतलत्वधर्मितावच्छेदकत्वस्येत्यर्थः ॥ भूतलत्वस्यभूतलत्वधर्मि
तावच्छेदकत्वेभूतलेभूतलत्वप्रकारकज्ञानानुव्यवसायापत्तिरितिकेचित् ॥ प्रकारांतरेणवारणसंभवादिति ॥ स्वनिष्ठप्रकारतानिरूपितत्वावच्छि
न्ननिरूपकताकत्वमेवस्वधर्मितावच्छेदकत्वंभूतलंघटवदितिज्ञानेचभूतलत्वावच्छिन्नविशेष्यतायाभूतलत्वनिष्ठप्रकारतानिरूपितत्वेनभूतलत्वनि

ष्ठप्रकारतानिरूपकत्वानंगीकारान्नतस्यतद्धर्मितावच्छेदकत्वप्रसक्तिरितिभावः॥ वस्तुतस्त्वित्यादिकल्पांतरमवतारयति॥ उक्तेति॥ विद्वेषादिति॥
वस्तुतस्त्विति कल्पेबहिर्भूतत्वांतापूरणे नतन्निर्वचनानावश्यकत्वादितिभावः॥ पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतेत्यादि॥ अत्रपंचमविषयता
यामवच्छेदकत्वंद्विविधं॥ कोटिप्रविष्टस्यावच्छेदकत्वमतसिद्धं॥ स्वातंत्र्येणविनिगमनाविरहप्रयुक्तंच॥ तत्रप्रथमे विषयतानिष्ठावच्छेदकतावच्छे
दकोधर्मःव्यापकत्वविषयतानिरूपितत्वंसाध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविषयतात्वंचेत्युभयं॥ द्वितीयेचतुर्थविषयता
निरूपितत्वसहितमितिभेदः॥ मध्यवर्तिविषयतयोरभेदेयथाश्रुतएवनिरूप्यनिरूपकभावोऽन्यथामुख्यविशेष्यतानिरूपितविषयत्वावच्छिन्नविष
यतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपितविषयत्वांशेइतिरीत्यावक्तव्यं॥ नचतादृशावच्छेद्या
वच्छेदकभावनिवेशोव्यतिरेकिपरामर्शीयसाध्याभावव्यापकत्वविशिष्टहेत्वभावविषयतायाअसंग्रहःसंसर्गताख्यद्वितीयविषयत्वावच्छिन्नवि
षयतायाअप्रसिद्धेः॥ एवंप्रतियोगित्वनिष्ठसांसर्गिकविषयत्वावच्छिन्नविषयतायाअपीतिवाच्यं॥ पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानि
रूपितविषयताविशिष्टविषयताविशिष्टविषयताविशिष्टविषयताविशिष्टविषयत्वांशेइत्यादिरीत्यानिवेशनीयत्वात्॥ वैशिष्ट्यंचस्वानिरूपि

तत्वस्वनिरूपितविशेष्यतानिरूपितविषयतावच्छिन्नविषयत्वानिरूपितत्वोभयसंबंधावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसंबंधेन॥अत्रचसं
सर्गतायाःस्वपदेनोपादानेतन्निरूपितप्रकारतायांस्वानिरूपितत्वासत्वेननिरुक्तोभयसंबंधावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसंबंधेनप्रकारत
यांसंसर्गतासत्वात्प्रकारतोपादानेचतदवच्छिन्नविशेष्यतानिरूपितप्रकारतायांस्वनिरूपितत्वसत्वेपिस्वनिरूपितेत्यादिद्वितीयसंबंधविरहादेवत
दुभयसंबंधावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसंबंधेनस्वविशिष्टत्वसत्वाद्धेत्वभावसाध्यविषयतयोरनुगमः॥अथवास्वावच्छिन्नविषयतानि
रूपितत्वस्वनिरूपितत्वैतदन्यतरसंबंधेनविशिष्टत्वंबोध्यं॥अत्रतादृशविषयतांशेविशेषणविधया अवच्छेदकतावच्छेदकतेत्यनेनचतुर्थविषयता
निरूपितत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताप्रयोज्यावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वंप्रतिबध्यतावच्छेदकतायांलभ्यतेतत्रविशेषणविध
येत्यनुपादानेतादृशविषयतानिष्ठावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणंचतुर्थविषयतानिरूपितत्वसहितमेवेतितदवच्छिन्नावच्छेदकताकप्रतिबंधक
तानसाध्यंहेतुव्यापकत्वाभाववदितिज्ञानीयाकिंतुपक्षःसाध्यव्याप्यहेत्वभाववानितिज्ञानीयै — वेतितदवच्छेदकविषयताशून्यत्वस्यउदाहरणादिजन्य
बोधेसत्वादतिव्याप्तिः॥तदुपादानपक्षेतुनिरुक्तविषयतानिरूपितत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताप्रयोज्यावच्छेदकतापर्याप्तेःकेवलव्या

पकत्वविषयतानिरूपितत्वविशिष्टविषयतात्वे एवसत्वेनतदवच्छिन्नावच्छेदकताकप्रतिबंधकतावच्छेदकविषयतायाउदाहरणादिजन्यबोधेस
त्वान्नातिव्याप्तिः॥ पर्वतत्वव्यापकवाच्यत्ववज्ज्ञेयत्ववत्प्रमेयत्ववद्द्रव्यत्ववान्पर्वतोवन्हिमानित्यादौपरामर्शीयविशिष्टपक्षतावच्छेदकनिष्ठप्रकारता
निरूपितमुख्यविशेष्यतामारभ्यपंचमीपक्षतावच्छेदककोटिप्रविष्टपर्वतत्वव्यापकवाच्यत्वविषयतामादायतादृशप्रतिज्ञायामव्याप्तिवारणायमुख्य
विशेष्यतायांपक्षतावच्छेदकावच्छिन्नत्वंविशेषणंपक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकत्वंतदर्थः॥ नचतथापिपक्षतावच्छेद
कनिष्ठप्रकारतानिरूपितविशेष्यत्वतदवच्छिन्नविशेष्यतयोरैक्येपुनर्दोषाद्दुर्वारइतिवाच्यं॥ स्वस्यस्वधर्मितावच्छेदकत्ववारणायधर्मितावच्छेदका
वच्छिन्नविशेष्यतात्वेनधूमादिप्रकारतानिरूपितत्वस्यस्वीकर्तव्यतयालक्षणेपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतातावच्छिन्ननिरूपकताक
विषयतानिरूपितेत्यादिरीत्यानिवेशेनपक्षतावच्छेदककोटिप्रविष्टविषयतायाअतथात्वान्नाव्याप्तिः॥ निरुक्तधर्मविशिष्टविषयत्वावच्छिन्नत्वम
निवेश्यजनकतावच्छेदकपंचमविषयत्वावच्छिन्नत्वनिवेशेप्रमेयत्ववद्वन्हिसाध्यकस्थलेपरामर्शीयवन्हिनिष्ठपंचमविषयतायावन्हिःप्रमेयत्वा
भाववानितिज्ञानीयप्रतिबंधकतायांप्रमेयत्वनिष्ठप्रकारतानिरूपितवन्हित्वावच्छिन्नविशेष्यतात्वेनावच्छेदकतयातादृशप्रतिबंधकतावच्छेद

कविषयताशून्यत्वस्यप्रतिज्ञाजन्यबोधेऽसत्वादव्याप्तिरतस्तथानिवेशः॥ इदंचहेतुव्यापकत्वनिष्ठप्रकारतानिरूपितप्रमेयत्ववन्हित्वावच्छिन्नविशे
ष्यत्वप्रमेयत्वनिष्ठप्रकारतानिरूपितशुद्धवन्हित्वावच्छिन्नविशेष्यतयोरैक्याभिप्रायेणतयोर्भेदेतुव्यापकत्वनिष्ठप्रकारतानिरूपितप्रमेयवन्हित्वावच्छि
न्नप्रकारतायाएवपंचमीत्वात्तस्याश्चप्रमेयत्वाभावविषयकज्ञानप्रतिबंधकतानवच्छेदकत्वेनाव्याप्तिविरहादितितुनशंक्यं॥ व्यापकत्वस्यसाध्यता
वच्छेदकरूपत्वेनव्यापकत्वनिष्ठप्रकारतानिरूपितसाध्यतावच्छेदकावच्छिन्नविशेष्यतायामपिव्यापकत्वघटकप्रमेयत्वनिष्ठप्रकारतानिरूपितत्वव
न्हित्वावच्छिन्नत्वयोः सत्वेनचतस्याअपिनिरुक्तप्रतिबंधकतावच्छेदकत्वेनतादृशप्रतिबंधकतावच्छेदकविषयतामादायाव्याप्तेः॥ अथचतुर्थविषयतांशे
जनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वघटितपरिष्कारएवोचितःतावताप्यन्वयपरामर्शीयाधिकरणनिष्ठचतुर्थविषयतां व्य
तिरेकिपरामर्शीयसंसर्गविषयताघटितहेत्वभावनिष्ठविषयतांचादायतन्निष्ठावच्छेदकतापर्याप्त्यधिकरणीभूतसाध्यतावच्छेदकावच्छिन्नप्रका
रतानिरूपितविषयतात्वसाध्याभावव्यापकत्वविषयतानिरूपितत्वविशिष्टहेत्वभावविषयतात्वविशिष्टावच्छिन्नप्रतिबंधकतावच्छेदकविषयता
याअन्वयव्यतिरेक्युदाहरणजन्यबोधादौसत्वान्नातिव्याप्तिरितिचेन्न॥ एवंसतिवन्हिमान्धूमादित्यादौयत्रधूमस्तत्रवन्हिरित्युदाहरणजन्यबोधेपरा ३०६

मशङ्ख्यायाअधिकरणनिष्ठचतुर्थविषयतातन्निष्ठावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणंयत्साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वविशिष्टवि
षयतात्वंतद्विशिष्टावच्छिन्नप्रतिबंधकतावच्छेदकविषयताशून्यत्वसत्वेनतादृशोदाहरणेतिव्याप्तेः॥ तादृशोदाहरणजन्यबोधेवह्न्यंशेअधिकरणवृत्तित्व
स्यप्रकारतयाऽभानेनसाध्यविषयतानिरूपितत्वविशिष्टाधिकरणविषयताशून्यत्वस्यनिरुक्तबोधेऽक्षत्वात्॥ **नच**तादृशविशिष्टविषयत्वावच्छिन्ना
यामहानसंधूमव्यापकवह्न्यभाववदितिज्ञानीयप्रतिबंधकतातदवच्छेदिकामहानसवृत्तिवह्निविषयितापिमहानसविशेष्यकविशिष्टवन्ह्यभाववुद्धौम
हानसविशेष्यकविशिष्टवन्हिप्रकारकज्ञानस्येवमहानसवृत्तित्वप्रकारकज्ञानस्यापिप्रतिबंधकत्वादितिवाच्यं॥ एकरूपेणप्रतिबंधकत्वाभावेन
साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविषयित्वावच्छिन्नप्रतिबंधकत्वावच्छेदकस्यमहानसवृत्तित्वविशिष्टवन्हिविषयितायामभावेना
तिव्याप्तितादवस्थ्यात्॥ **तथापीत्यादिसंग्रहोबोध्यइति**॥ अत्रेदमुच्यते॥ निरूप्यनिरूपकभावापन्नव्यापकत्वत्वावच्छिन्नविषयतानिरू
पितत्वस्यनतद्व्यक्तित्वेननिवेशोऽननुगमादपितुतादृशविषयतानिरूपितत्वत्वेनैवएवंचचोदाहरणजन्यबोधीयसाध्यविषयतानिरूपितव्यापक
त्वविषयतात्वव्यक्तेरपिसामान्यरूपेणावच्छेदकतावच्छेदकत्वात्तद्वद्विषयताशून्यत्वस्योदाहरणजन्यबोधेऽसत्वेनातिव्याप्त्यभावात्तादृशधर्मविशिष्ट

विषयताशून्यत्वमपहायतादृशधर्मवद्विषयतावच्छिन्नप्रतिबंधकतावच्छेदकविषयताशून्यत्वनिवेशोव्यर्थइतिप्रतिभातितथापितादृशसामान्यरूपेणा
पितद्व्यक्तेरेवावच्छेदकतावच्छेदकत्वमित्यभिप्रायेणेदमिति॥ नचैवंगोत्वाभावःप्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान्गोत्वाभावादित्यादौमुख्यविशे
ष्यतानिवेशेपिहेतुविशेष्यकपरामर्शीयमुख्यविशेष्यतामारभ्यपंचमीयाप्रमेयत्वव्यापकवाच्यत्वविषयतामादायोक्तरीत्याऽव्याप्तिरितिवाच्यं॥प
क्ष्यमुख्यविशेष्यकपरामर्शस्यैवजनकत्वमितिमतोपगमात्॥ अथवाहेतुतावच्छेदकसंबंधावच्छिन्नाधेयत्वसंबंधावच्छिन्नपक्षतावच्छेदकपर्या
प्तावच्छेदकताकप्रकारत्वानिरूपकत्वस्यपक्षमुख्यविशेष्यतायांनिवेशनात्पर्यात्॥ पर्याप्तिनिवेशान्नसमवायसंबंधावच्छिन्नाधेयतयादधिविशिष्ट
दधिपक्षकप्रतिज्ञायामव्याप्तिः॥ नन्वत्रवन्ह्यभावव्यापकाभाववान्पर्वतोवन्हिमानित्यादौव्यतिरेकिपरामर्शीयपंचमीसाध्याभावव्यापकहेत्वभावvi
षयतामादायनिरुक्तप्रतिज्ञायामव्याप्तिरितिचेन्न॥ हेत्वभावस्यसाध्याभावव्यापकत्वेनप्रमेयत्वादिनाऽतिप्रसंगात्॥ किंतुहेत्वभावत्वेनतथाचसा
ध्याभावव्यापकतावच्छेदकहेत्वभावत्वरूपव्यापकत्वविषयतानिरूपितत्वविशिष्टविषयतात्वविशिष्टावच्छिन्नप्रतिबंधकतावच्छेदकत्वस्यकेवल
साध्याभावव्यापकत्वविशिष्टाभावत्वावच्छिन्नविषयतायामसत्वेननिरुक्तप्रतिज्ञायांलक्षणसमन्वयात्॥ अथपर्वतआलोकव्यापकवन्हिमान्धूमा

दित्यादावव्याप्तिः ॥ धूमव्यापकालोकव्यापकवन्हिसामानाधिकरणधूमवान्पर्वतइतिपरामर्शीयपर्वतत्वावच्छिन्नमुख्यविशेष्यतानिरूपितेत्यादिक्रमेण
यापंचमीविषयताआलोकव्यापकत्वविशिष्टवन्हिविषयतातदंशेविशेषणविधयाअनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणंय
दालोकव्यापकवन्हिविषयतात्वंतद्वद्विषयताशून्यत्वस्यतज्जन्यशाब्दबोधेऽसत्वादितिचेन्न । वन्हिव्याप्यधूमवान्पर्वतइतिपरामर्शीयधूमव्यापकवन्हि
त्वावच्छिन्नविषयतायांपंचम्यांवन्हित्वावच्छिन्नविषयतात्वंजनकतावच्छेदकतावच्छेदकताश्रयीभूतोधर्मस्तद्वद्विषयताशून्यत्वस्यप्रतिज्ञाजन्यबो
धेसत्वात्पर्वतोवन्हिमानितिप्रतिज्ञायामव्याप्तिरतोजनकतावच्छेदकतावच्छेदकतापर्याप्तिरुपात्तासाचहेतुव्यापकत्वविशिष्टप्रकृतसाध्यविषय
तात्वएवननुतदेकदेशेमानाभावादितिपर्वतआलोकव्यापकवन्हिमानितिप्रतिज्ञायांनाव्याप्तिः ॥ एतेनपर्वतआलोकव्यापकवन्हिमानितिप्रतिज्ञा
यामव्याप्तिवारणायअथसाध्यतावच्छेदकावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपिताधेयत्वविषयतानिरूपितहेतुविषयतानिरू
पितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वाव्यापिकायानिरुक्तपंचमविषयतातदंशेविशेषणविधयावच्छेदकतावच्छेदकतापर्याप्त्य
धिकरणंयत्तद्वद्विषयताशून्यत्वस्यनिवेशनीयत्वेननोक्तप्रतिज्ञायामव्याप्तिः ॥ आलोकव्यापकत्वविशिष्टवन्हिविषयतायास्तादृशनिश्चयत्वव्यापकत्वा

हेतुव्यापकत्वविशिष्टसाध्यतावच्छेदकावच्छिन्नविषयतायाः साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयतायाश्च तादृशानिश्चयत्वाव्यापकत्वात्तत्र
लक्षणसमन्वयः॥ केवलसाध्यसमानाधिकरणहेतुमान्पक्षतावच्छेदकविशिष्टः पक्ष इतिज्ञानेपि तादृशानिश्चयत्वसत्वेन तत्र तादृशविशिष्टविषयता
या असत्वादितिचेन्नैवं॥ तथासति मुख्यपदोपादानस्य पक्षतावच्छेदकावच्छिन्नेत्यस्य साध्यतावच्छेदकहेतुतावच्छेदकोपादानस्य दीधितिकृदुक्तस्य
किंचिद्व्यापकत्वविशिष्टनिरूपितत्वस्य च वैयर्थ्यापत्तेः॥ तथाहि गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान्गोत्वाभावादित्यादौ प्रमेयत्वव्याप
कत्वविशिष्टवाच्यत्वविषयतायाः प्रमेयत्वव्यापकवाच्यत्वसमानाधिकरणधर्मवानित्यादौ तादृशवाच्यत्वविषयताया वह्न्यभावव्यापकप्रमेयत्ववान्पर्व
तो वह्निमानित्यादौ वह्न्यभावव्यापकत्वविशिष्टप्रमेयत्वविषयताया द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयमित्यादौ संयोगव्यापकत्वविशिष्टद्रव्य
त्वविषयताया गुणव्याप्यरूपवानयं स्पर्शवानित्यादौ रूपव्यापकत्वविशिष्टगुणविषयतायाश्च तादृशानिश्चयत्वव्यापकत्वात्तादृशानिश्चयत्वाव्या
पिका हेतुतावच्छेदकावच्छिन्नव्यापकत्वविशिष्टसाध्यविषयतैवेति तच्छून्यत्वस्य तादृशप्रतिज्ञाजन्यबोधेषु सत्वाल्लक्षणसंगमनात्॥ एवमपि गो
त्वाभावः गोत्वाभावव्यापकवाच्यत्ववत्सास्नाभाववान्गोत्वाभावादित्यादिस्थलीयप्रतिज्ञायामव्याप्तिस्तादृशानिश्चयत्वव्यापिकाया गोत्वाभावव्याप

कत्वविशिष्टसाध्यतावच्छेदकावच्छिन्नविषयतातदंशे तादृशविषयतात्वं यथावच्छेदकतायाः पर्याप्त्यधिकरणं तथा गोत्वाभावव्यापकत्वविशिष्टविषयतात्वरूपसामान्यधर्मोऽपि तत्थाविधावच्छेदकतायाः पर्याप्त्यधिकरणं भवतीति तद्विषयताशून्यत्वस्य तत्प्रतिज्ञाजन्यशाब्दबोधेऽसत्वात्॥ नच तदंशेऽवच्छेदकतापर्याप्त्यधिकरणं यो धर्मस्तस्मिन्तादृशनिश्चयत्वाव्यापकतावच्छेदकत्वं वाच्यं गोत्वाभावव्यापकत्वविशिष्टसाध्यतावच्छेदकावच्छिन्नविषयतांशे तादृशसामान्यधर्मस्यावच्छेदकतापर्याप्त्यधिकरणत्वेपि तस्य तादृशनिश्चयत्वाव्यापकतावच्छेदकत्वविरहेण तादृशविषयतात्वस्यैव तादृशत्वेन तद्विषयताशून्यत्वस्य तत्र सत्वान्नाव्याप्तिरिति वाच्यं ॥ तथापि गोत्वाभावव्यापकवाच्यत्ववत्तात्वाभाववानिति प्रतिज्ञायामव्याप्तेर्दुष्परिहरत्वात्॥ यत्र गोत्वाभावव्यापकवाच्यत्वस्य प्रमेयत्वेन भानं तत्र प्रमेयवत्तात्वाभावसमानाधिकरणगोत्वाभाववान्गोत्वाभावइति निश्चये साध्यतावच्छेदकावच्छिन्नेत्यादिक्रमेण तादृशनिश्चयत्वस्य सत्वेन तत्र गोत्वाभावव्यापकत्वविशिष्टवाच्यत्वत्वावच्छिन्नविषयत्वासत्वेन गोत्वाभावव्यापकत्वत्वावच्छिन्नप्रकारतानिरूपितवाच्यत्वत्वावच्छिन्नविषयतात्वस्य तादृशनिश्चयत्वाव्यापकतावच्छेदकतया पंचमाविषयतांशेऽवच्छेदकतापर्याप्त्यधिकरणतया चानुगतधर्मत्वेन तद्विषयताशून्यत्वस्य तत्राभावात्॥ एवं गोत्वाभावव्यापकवाच्यत्वसमानाधिकरणधू

मवान्पर्वतोवन्हिमानितिप्रतिज्ञायामव्याप्तिः॥ यत्रगोत्वाभावव्यापकवाच्यत्वस्यप्रमेयत्वेनभानंतत्रवन्हिसमानाधिकरणधूमवान्प्रमेयसमानाधिक
रणधूमवानितिनिश्चयेतादृशनिश्चयत्वस्यसत्वेनगोत्वाभावव्यापकत्वत्वावच्छिन्नप्रकारतानिरूपितवाच्यत्वत्वावच्छिन्नविशेष्यतायाअसत्वेनताद
शविशेष्यतात्वस्योक्तरूपाक्रांतत्वात्॥ अथसाध्यतावच्छेदकघटकतावच्छेदकातिरिक्तानवच्छिन्नावच्छेदकताकसाध्यविषयतानिरूपिताधिकरणविष
यतानिरूपितेत्यादिक्रमेणपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वंनिरुच्यतादृशनिश्चयत्वाव्यापकतावच्छेदकत्वंवाच्यं उक्तस्थलेप्रमेयत्वस्य
तद्घटकतानवच्छेदकतयानदोषः॥ एवंपक्षतावच्छेदकघटकतावच्छेदकातिरिक्तानवच्छिन्नावच्छेदकताकपक्षविशेष्यताशालिनिश्चयत्वंनिर्वाच्य
मतोनोक्तद्वितीयदोषइतिचेन्न॥ तथापिगोत्वाभावोगोत्वाभावव्यापकप्रमेयवत्सास्नाभाववान्प्रमेयत्वव्यापकवाच्यत्वसमानाधिकरणधूम
वान्पर्वतोवन्हिमानितिप्रतिज्ञायामव्याप्तेर्वज्रलेपत्वात्॥ प्रमेयत्वस्यापिसाध्यतावच्छेदकघटकतावच्छेदकत्वात्पक्षतावच्छेदकघटत्वाच्च॥ अ
थयद्यद्रूपावच्छिन्नस्ययस्ययस्यसाध्यतावच्छेदकघटकतातत्तद्रूपातिरिक्तरूपानवच्छिन्नतत्तन्निष्ठावच्छेदकताकसाध्यनिष्ठविषयतानिरूपिते
त्यादिक्रमेणतादृशनिश्चयत्वंवाच्यं तथाचोक्तस्थलेप्रमेयत्वव्यापकवाच्यत्वत्वेनरूपेणतादृशवाच्यत्वस्यसाध्यतावच्छेदकघटकतयानदोषः॥

एवंयद्यद्रूपावच्छिन्नस्ययस्ययस्यपक्षतावच्छेदकघटकत्वंतत्तद्रूपातिरिक्तरूपानवच्छिन्नतत्तन्निष्ठावच्छेदकताकपक्षनिष्ठविशेष्यताशालिनिश्चय
त्वंनिरुच्यमानदशानिश्चयत्वाव्यापकतानवच्छेदकत्वंनिर्वाच्यमितिनकोपिदोषइतिचेत्तर्हिपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतात्वनिवेशनापेक्षयाला
घवमितिसर्वप्रयासोअनादेयएव॥ किंचिद्व्यापकत्वेति॥ किंचिद्व्यापकत्वविषयितानिरूपितेत्यर्थः॥ वस्तुतस्त्विति॥ अभावनिष्ठविषयताभिन्न
त्वमिति॥ अभावत्वानवच्छिन्नत्वमित्यर्थः॥ तेनाभावपक्षकाभावत्वसाध्यकस्थलेऽन्वयपरामर्शीयाधिकरणनिष्ठचतुर्थविषयतायाअभावमात्रनिष्ठत्वे
पिनक्षतिः॥ नन्वेवंमुख्यत्वंव्यर्थंसाध्याभावनिष्ठचतुर्थविषयतायाअभावत्वावच्छिन्नत्वादितिवाच्यं॥ एवमपिप्रमेयत्वव्यापकत्वाच्यत्ववज्ज्ञेयत्वसाध्यक
स्थलेनिरुक्तरीत्याअव्याप्तेस्तत्सार्थक्यात्॥ साध्याभावसाध्यकस्थलेप्रयोजनदर्शनंचप्रथमकल्पाभिप्रायेण॥ ननुद्वितीयकल्पेधूमव्यापकप्रमेयत्व
वान्ह्रदोधूमाभाववान्वह्न्यभावादित्यादौव्यतिरेकिपरामर्शीयहेतुसंसर्गविषयताघटितचतुर्थविषयतायावह्निनिष्ठायाअभावत्वानवच्छिन्नत्वेनतद्घटि
तपंचमविषयताधूमव्यापकत्वनिष्ठेत्यव्याप्तिरितिचेन्न॥ हेतुभूताभावप्रतियोगितावच्छेदकानवच्छिन्नत्वस्यैवचतुर्थविषयतायांनिवेशनीयत्वात्॥ न
चतत्रापिहेतौप्रतियोगित्वस्यसंसर्गतयाभानेनपक्षविषयतानिरूपितहेतुविषयतानिरूपिताभावविषयतानिरूपिताभावत्वविषयताया नि रु क्त

विशेषणाक्रांतायाश्चतुर्थ्याः सत्वेन तद्घटितानवच्छेदकत्वविषयतामादायाव्याप्तिः ॥ एवं पृथिवीत्वव्यापकवान्यत्ववद्गगनं पृथिवीत्वाभाववद्वृत्तित्वादित्या
दावपि निरुक्तरीत्या व्याप्तिरिति वाच्यं ॥ हेतुभूताभावप्रतियोगितावच्छेदकवृत्तित्वस्यापि चतुर्थविषयतायां निवेशनीयत्वात् ॥ एवं दिशैव वान्यत्वं घट
वृत्तिअप्रतियोगित्वादित्यादौ यत्र घटवृत्तित्वाभावस्तत्र प्रतियोगित्वमित्युदाहरणे नातिव्याप्तिः ॥ तत्र व्यतिरेकिपरामर्शीयाया अपि चतुर्थ्या विशेषण
द्वयाक्रांतायाः पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितहेतुसंसर्गविषयतानिरूपितहेतुविषयतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयता
याः प्रसिद्धत्वेन तन्निरूपितहेत्वभावविषयतानिष्ठावच्छेदकतावच्छेदकधर्मावच्छिन्नावच्छेदकताकप्रतिबंधकतावच्छेदकविषयतायाः सत्वात् ॥
यद्यपि तादृशसंसर्गताया अपि हेतुभूताभावप्रतियोगितावच्छेदकप्रतियोगितात्वावच्छिन्नत्वं ॥ तथापि तादृशावच्छेदकतापर्याप्त्यधिकरणधर्मानव
च्छिन्नत्वस्यैव निवेशनीयत्वेनोक्तसंसर्गविषयतायाः प्रतियोगितात्वावच्छिन्नप्रतियोगितात्वस्यैवावच्छेदकतया तत्पर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकता
भावात् ॥ नचैवमपि पर्वतो वन्हिमान्जातिमद्द्रव्यसमानाधिकरणधर्मादित्यादौ परामर्शीयहेतुतावच्छेदककोटिप्रविष्टवन्हिविषयतामादायाव्याप्तिरि
ति वाच्यं ॥ धर्मितावच्छेदकतानात्मकत्वस्य निवेशनीयत्वात् ॥ एवमभाववत्वानवच्छिन्नत्वमपि चतुर्थविषयतायां निवेशनीयं तेन धूमव्यापकमेयत्ववा

नाकाशः निर्धूमः आधेयत्वाभावादित्यादौ धूमव्यापकाधेयत्वाभाववानिति परामर्शीय मुख्यविशेष्यतामारभ्य पंचमीं व्यापकत्वकोटिप्रविष्टप्रतियोगि
त्वविषयतामादाय दर्शितप्रतिज्ञायां नाव्याप्तिरिति सुधियो विदांकुर्वंतु नाग्रहेणेति दिक् ॥ ननु विषयतायां येन रूपेण जनकतावच्छेदकत्वं तेन रूपेण त
स्याः प्रतिबंधकतावच्छेदकत्व एव सर्वमिदं संभवति तदेव न परामर्शस्यानुमितिजनकत्वे कल्पनीये व्याप्तिघटकपदार्थांशे निश्चयत्वाद्यनिवेशप्र
युक्तलाघवानुरोधाद्व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिनिश्चयत्वेनैव कारणत्वं वाच्यं ॥ तच्च विशेष्ये विशेषणमिति रीत्या ज्ञानव्यावृत्तं धूमत्वावच्छिन्नाव
च्छेदकतानिरूपितव्यापकत्वत्वावच्छिन्नावच्छेदकतानिरूपितवह्नित्वावच्छिन्नावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपिताधेयत्वाव
च्छिन्नावच्छेदकतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविशेष्यताशालिनिश्चयत्वं तथा च वि
शिष्टवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणतया पूर्वं व्याप्तिघटकतत्तद्विशेषणतावच्छेदकप्रकारकनिश्चय
सत्वे प्रतिबंधकवशादेव तत्तदंशे संशयात्मकज्ञानासंभवे तत्तदंशे निश्चयत्वस्य कारणतावच्छेदककोटावनिवेशात् ॥ अवच्छेदकत्वं च प्रकारत्वादिविल
क्षणं प्रतिबंधकतावच्छेदकं च विशेष्ये विशेषणमिति रीत्या ज्ञानसाधारणं प्रकारतात्वादिविशिष्टमेव ॥ न त्ववच्छेदकतात्वादिविशिष्टमित्थं च पंचमविष

यतांशे विशेषणविधया अनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणव्यापकत्वत्वावच्छिन्नावच्छेदकतानिरूपितवन्हित्वावच्छिन्नावच्छेदकत्व
त्व विशिष्टावच्छिन्नप्रतिबंधकतायाअप्रसिद्धत्वेनासंभवः ॥ नचतदुपलक्षितविषयत्वावच्छिन्नत्वनिवेशान्नदोषइति वाच्यं ॥ तथासतिजातिविशिष्ट
वन्हिसाध्यकस्थलेपूर्वोक्तरीत्याऽव्याप्तेः ॥ नचसाध्यतावच्छेदकविशिष्टविषयत्व व्यापकत्वंतादृशप्रतिबंधकतायांविशेषणंदेयमिति वाच्यं ॥
तथासतिमुख्यत्वस्यवैयर्थ्यादितिचेन्न ॥ पंचमविषयतांशेजनकतावच्छेदकतावच्छेदकतात्वावच्छिन्नानधिकरणत्वानवच्छेदकप्रकारता
कंयद्यत्तदवच्छेदकविषयिताशून्यत्वंबोधेविशेषणंदेयं ॥ स्वंप्रतिबंधकताजातिविशिष्टवन्हिसाध्यकस्थलेवन्हिर्जातिमान्नवेति संशयप्रतिबं
धकताचनस्वपदार्थः तदनवच्छेदकव्यापकत्वविषयितायाअवच्छेदकत्वत्वावच्छिन्नाधिकरणत्वात् ॥ किंतुव्यापकत्वसंशयप्रतिबंधकतैवस्वप
दार्थः तदनवच्छेदकप्रकारतायाअवच्छेदकतात्वावच्छिन्नानधिकरणत्वादितिनप्रतिज्ञोदाहरणयोरसंग्रहावितिहृदयं ॥ अथैतादृशानुगमस्यदी
धितिकाराभिप्रेतत्वेद्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयंद्रव्यत्ववान्गुणाद्गुणव्याप्यरूपवानयंस्पर्शवान्रूपादित्यादौप्रतिज्ञासंग्रहायावच्छेदकद्वयो
पादानमित्यादिनाप्रकृतहेतुतावच्छेदकावच्छिन्नस्यप्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतोपयिकेत्यत्रहेतुतावच्छेदकसाध्यतावच्छेदकयोर्निवेश

व्याप्तिकथनासंगतिस्तथाहिप्रथमस्थलेप्रकृतानुमितित्वावच्छिन्नजन्यतानिरूपितपरामर्शनिष्ठजनकतायामवच्छेदकीभूतायापंचमीपक्षतावच्छे
दकावच्छिन्नविशेष्यतानिरूपितहेतुनिष्ठविषयतानिरूपिताधेयत्वनिष्ठविषयतानिरूपिताधिकरणनिष्ठविषयतानिरूपितायागुणत्वावच्छिन्ननिरूपित
व्यापकत्वविशिष्टद्रव्यत्वविषयतातन्निष्ठविषयतात्वस्यैवावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणतयातादृशविषयतात्वावच्छिन्नविषयताशून्यशाब्दबो
धजनकत्वस्यतत्प्रतिज्ञायांसत्वेनाव्याप्त्यभावेनहेतुतावच्छेदकपदंव्यर्थं॥ द्वितीयस्थलेपिप्रकृतानुमितित्वावच्छिन्नजन्यतानिरूपितपरामर्शनिष्ठजन
कतायामवच्छेदकीभूतायापक्षमुख्यविशेष्यतानिरूपितविषयतामारभ्यरूपत्वावच्छिन्ननिरूपितव्यापकत्वविशिष्टस्पर्शत्वावच्छिन्ननिष्ठापंचमी
विषयतातन्निष्ठविषयतात्वस्यैवावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणतयातद्वद्विषयिताशून्यत्वस्यतत्प्रतिज्ञाजन्यशाब्दबोधेसत्वेनतत्राव्याप्ति
विरहेणसाध्यतावच्छेदकपदमपिव्यर्थं॥ नचतादृशपरामर्शनिष्ठजनकतायामवच्छेदकीभूताप्रकृतपक्षतावच्छेदकीभूतद्रव्यत्वव्याप्यसंयोगसमा
नाधिकरणधर्मावच्छिन्नमुख्यविशेष्यतानिरूपिततत्तद्धर्मनिष्ठविषयतानिरूपिताधेयत्वनिष्ठविषयतानिरूपिताधिकरणनिष्ठविषयतातन्निरू
पितायापंचमीद्रव्यत्वव्याप्यसंयोगत्वावच्छिन्नविषयताएवंद्वितीयेरूपव्यापकत्वविशिष्टगुणविषयतातन्निष्ठविषयतात्वस्यानुमितिजनकतावच्छे

दकतावच्छेदकतापर्याप्त्यधिकरणत्वेनतद्वद्विषयताशून्यत्वस्यतादृशप्रतिज्ञाजन्यशाब्दबोधेःसत्वेनाव्याप्त्यातदुपादानसार्थक्यमितिवाच्यं॥स्व
स्यस्वधर्मितावच्छेदकतापत्त्याद्रव्यत्वव्याप्यसंयोगसमानाधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतायाःसंयोगसमानाधिकरणधर्मेऽनंगीका
रात्॥अन्यथातदुभयोपादानेपिप्रमेयत्वव्यापकवाच्यत्वसमानाधिकरणधूमवान्पर्वतोवह्निमानितिप्रतिज्ञायामव्याप्त्यापत्तेः॥तादृशपक्षतावच्छेदकाव
च्छिन्नविशेष्यतानिरूपितधूमनिष्ठविषयतानिरूपिताधिकरणनिष्ठविषयतानिरूपितव्यापकत्वविशिष्टवाच्यत्वनिष्ठविषयतात्वस्यापिप्रकृतानुमि
तिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणत्वेनतद्वद्विषयताशून्यत्वस्यतत्प्रतिज्ञाजन्यशाब्दबोधेऽसत्वात्॥नचानुमितौतज्जनकीभूतपरामर्शे
वाप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकत्वनिवेशेप्रयोजनविरहेणेदंत्वावच्छिन्नविशेष्यकद्रव्यत्वविधेयकानुमितिजनकेदंत्वावच्छिन्नविशेष्यकद्रव्य
त्वव्याप्यसंयोगत्वावच्छिन्नप्रकारकपरामर्शनिष्ठजनकतायामवच्छेदकीभूतापंचमीसंयोगत्वावच्छिन्नव्यापकत्वविशिष्टद्रव्यत्वविषयतात्वन्निष्ठविषय
तात्वस्यापीदंत्वावच्छिन्नोद्देश्यकद्रव्यत्वविधेयकानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणत्वेनतद्वद्विषयताशून्यत्वस्यतत्राभावादितितत्रा
व्याप्तिवारणायअनुमितौहेतुतावच्छेदकावच्छिन्नहेतुकत्वनिवेशलाभायप्रकृतहेतुतावच्छेदकनिवेशनं॥तथाचतादृशानुमितिजनकप्रकृतहेतुता

वच्छेदकीभूतगुणत्वावच्छिन्नप्रकारकपरामर्शनिष्ठजनकतायामवच्छेदकीभूतापक्षविशेष्यतानिरूपितगुणत्वावच्छिन्नविषयतातन्निरूपिताधेय
त्वविषयतानिरूपिताधिकरणविषयतानिरूपितायां पंचमीगुणत्वावच्छिन्नव्यापकत्वविशिष्टद्रव्यत्वविषयता तच्छून्यत्वस्य तत्रसत्वान्नाव्याप्तिरेवमिदं
त्वावच्छिन्नोद्रव्यकोयंगुणत्वावच्छिन्नविधेयताकानुमितिजनकोगुणव्याप्यरूपवानयमितिपरामर्शस्तदीयोक्तक्रमेण पंचम्यां विषयतायां रूपव्यापक
त्वविशिष्टगुणत्वविषयतात्वं गुणत्वेनस्पर्शविधेयकानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं तद्वद्विषयताशून्यबोधजनकत्वस्य द्विर्न
यप्रतिज्ञायामसत्वादव्याप्तिरतःसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्यानुमितौनिवेशलाभायसाध्यतावच्छेदकनिवेशनमितिवाच्यं॥ तथासति
प्रमेयत्वव्यापकवाच्यत्वसमानाधिकरणधूमवान्पर्वतोवह्निमानितिप्रतिज्ञायामव्याप्तिस्तादृशपरामर्शीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकृत
हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नविषयतानिरूपिताधेयत्वविषयतानिरूपिताधिकरणविषयतानिरूपितप्रमेयत्वव्यापकत्वविशिष्टवाच्यत्वविषय
तात्वस्य तथात्वेन तद्वद्विषयताशून्यत्वस्य तत्राभावात्॥ एवंधूमव्यापकालोकसमानाधिकरणधूमवान्पर्वतोवह्निमान्धूमादित्यादिस्थलीयप्रतिज्ञायाम
व्याप्तिर्बोध्या॥ अनुमितौपरामर्शेचपक्षतावच्छेदकावच्छिन्नविषयकत्वनिवेशनात्तादृशपरामर्शीयप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतामारभ्य

पंचमीन प्रमेयत्वव्यापकत्वविशिष्टवाच्यत्वविषयताकिंतु धूमव्यापकत्वविशिष्टवन्हि विषयता तच्छून्यत्वस्यतत्रसत्वान्नाव्याप्तिः ॥ नन्वेवमपिसंयोगत्वावच्छि
न्नहेतुकायागुणत्वावच्छिन्नहेतुकायाश्च द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयंद्रव्यत्ववानित्याद्यनुमितेरेकाकारतया तादृशानुमितिजनकसंयोगत्वावच्छिन्न
प्रकारकपरामर्शीयपंचमविषयतामादायाव्याप्तिवारणायावच्छेदकपदोपादानं ॥ तथाचगुणत्वावच्छिन्नप्रकारकपरामर्शीयपंचमविषयतामादायनाव्या
प्तिरितिवाच्यं ॥ संयोगत्वावच्छिन्नहेतुकतादृशानुमित्यप्रसिद्धेः ॥ द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयंद्रव्यत्ववान्संयोगादित्यादिन्यायप्रयोगाभावादत
एवदीधितिकृतापिवन्हिव्याप्यधूमवान्पर्वतोवन्हिमानित्यादिकस्तुनन्यायप्रयोग इत्युक्तमेवंचकथंभट्टाचार्याणामनुगमप्रकारःसंभवतीतिचेदत्रोच्यते॥
तादृशन्यायप्रयोगाभावेनसंयोगत्वावच्छिन्नहेतुकपरार्थानुमितेरप्रसिद्धत्वेपिअनुमितिपदेनस्वार्थानुमितिपरार्थानुमितिसाधारणानुमितित्वावच्छि
न्नत्वस्यैवविवक्षणीयतयासंयोगत्वावच्छिन्नहेतुकतादृशस्वार्थानुमितेःप्रसिद्धतयातामादायाव्याप्तिवारणायहेतुतावच्छेदकनिवेशः॥ तथाचद्रव्यत्वव्याप्य
संयोगवद्वृत्तिधर्मवानयंद्रव्यत्वव्याप्यसंयोगवानितिपरामर्शस्यगुणत्वावच्छिन्नाप्रकारकत्वेपितादृशधर्मवानयंद्रव्यत्वव्याप्यगुणवानितिपरामर्शस्यैवत
थात्वेनतादृशपरामर्शीयनिरुक्तपंचमविषयताशून्यशाब्दबोधजनकत्वस्यतत्प्रतिज्ञायांसत्वान्नाव्याप्तिरेवंगुणव्याप्यरूपवानयंस्पर्शवान्रूपादित्यादौगुण

व्याप्यरूपवानयंगुणवानित्यनुमितिजनकपरामर्शमादायाव्याप्तिरतः साध्यतावच्छेदकनिवेशः॥ वस्तुतस्तुपक्षतावच्छेदकधर्मनिष्ठप्रकारतायाःपक्षताव
च्छेदकावच्छिन्नमुख्यविशेष्यत्वानिरूपितत्वमित्येतत्सूचनायतदनुसरणं ॥तथाहिहेतुव्यापकत्वविशिष्टसाध्यविषयतासाध्याभावव्यापकत्वविशिष्टहे
त्वभावविषयत्वयोर्नताद्रूप्येणनिवेशः किंतुनिरुक्तपंचमविषयतात्वेनरूपेणसातुहेतुव्यापकत्वविशिष्टसाध्यविषयतासाध्याभावव्यापकत्वविशिष्टहेत्वभा
वविषयताएतदन्यावाभवतु परंतुपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतेत्यादिक्रमेणपंचमविषयताग्राह्यानतुयथाकथंचित्पंचमविषयतेत्येतत्सूचनायत
दुपादानं ॥उपात्तेचतस्मिन्यथापक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितापंचमीगुणत्वावच्छिन्नसाध्यविषयताभवतितथाग्राह्यानतुपक्षतावच्छेदकनिष्ठ
प्रकारतातस्याःपक्षतावच्छेदकावच्छिन्नविशेष्यत्वानिरूपितत्वादितिनिश्चेतुंशक्यतइतिनक्षुसादकोऽयंग्रंथइतिनकोपिदोषः॥ वस्तुतस्तुतत्त्वेत्यादिनावि
शिष्यान्वयव्यतिरेकव्याप्त्यनवगाहित्वनिवेशकल्पोपिगदाधरसंमतःदीधितौवाकाराभावेपिस्वयंविशिष्यापितदवगाहित्वस्येत्यभिधानादेवंचतत्कल्पएव
व्याप्तिप्रदर्शनपरोयंग्रंथःनत्वनुगमपक्षइतितत्त्वं॥सत्यंतोत्तरेति॥ मूलोक्तप्रतिज्ञालक्षणघटकीभूतसत्यंतादुत्तरेत्यर्थः॥ तेनजनकत्वेसतीत्यस्यनन्या
गः॥ तिङर्थस्येति॥ स्वर्गकामोयजेतेत्यादौविध्यर्थकलिङ्प्रत्ययःतिङ्रूपस्तदर्थइष्टसाधनत्वंतस्यधात्वर्थेभानादितिभावः॥ द्वितीयांतनामार्थेति॥ न्ता

कंपनतीत्यादावित्यादिः॥आधेयत्वकर्मत्वादिति॥भूतले घटस्तंडुलं पचतीत्यादावाधारतावद्भूतलवान्यटः कर्मतावत्तंडुलवान्पाक इत्यन्वबोधः स्यात्तत्र च दर्शितव्युत्पत्तिविरोध इत्याशयः॥ भूतले घट इत्यादौ सप्तम्यर्थः अधिकरणत्वं तत्र घटान्वयः घटान्विताधिकरणत्वस्य भूतलेन्वय इति प्रत्ययार्थस्य विशेषणत्वस्वीकारेपि न दर्शितव्युत्पत्तिविरोध इत्याशयेन शंकते न चेति॥ नोक्तातिप्रसंगः॥ भूतले घट इत्यादितो न भूतलवान्यट इति बोधप्रसंगः॥ शेषमेतत्सर्वं ग्रंथे हेतुग्रंथे च कृष्णंभट्टलिखिताद्धिकलेखनीयाभावान्नद्विचारस्तत्रैव द्रष्टव्यो विस्तरभयान्नात्र लिख्यते॥ ॥इति मीमांसान्यायपंचास्यश्रीमद्राघवाचार्यशिष्यस्य पर्वते इत्युपनामकरघुनाथस्य कृतौ न्यायरत्नाभिधायां गादाधरीपंचवादटिप्पण्यामवयवग्रंथः॥ ॥

अथ पक्षताग्रंथांतर्गतसंशयपक्षताविचारः॥ ॥व्याप्त्यनंतरं पक्षधर्मता निरूप्यत इति मूलं॥ तत्र व्याप्तिपदस्य व्याप्तिस्वरूपनिरूपणार्थकतया व्याप्त्यनंतरमित्यस्य व्याप्तिस्वरूपनिरूपणध्वंसाधिकरणकालवृत्तीत्यर्थस्तस्य निरूप्यत इत्यत्र लक्षणादिप्रकारकप्रतिपत्त्यनुकूलव्यापाररूपनिपूर्वकरूपधात्वर्थनिरूपणेऽभेदेनान्वयः कर्माख्यातवशाच्च भयेत्यध्याहार्यं तदर्थमत्समवेतकृतेर्जन्यतासंबंधेन धात्वर्थनिरूपणेऽन्वयस्तादृशनिरूपणस्याख्यातार्थविषयत्वेनस्य च पक्षधर्मतापदार्थेऽन्वयस्तथा च मत्समवेतकृतिजन्यं यद्व्याप्तिस्वरूपनिरूपणध्वंसाधिकरणकालीनाभिन्नं निरूप

णंतद्विषयताश्रयःपक्षधर्मतेत्यन्वयबोधः॥ **गादाधर्यांमूलेइति** ॥ मूलनिष्ठोयोव्याप्त्यादिवृत्तिनिरूपकताकसंगत्यप्रदर्शनप्रयुक्तासंगतत्वज्ञानाधीनोन्म
त्तप्रलपितत्वशंकाधीनोपेक्षारूपन्यूनतापरिहारस्तदिच्छावान्व्याप्त्यादिनिष्ठसंगतिप्रदर्शनकर्तादीधितिकारस्तादृशप्रदर्शनसमानकालीनमूलावतरणानुकू
लकृतिमानितितदर्थोबोध्यः॥ **नन्वनु**मितिलक्षणोपोद्घातसंगत्याव्याप्तिपक्षधर्मतयोर्निरूपणीयत्वेपक्षधर्मतानिरूपणप्रतिबंधकप्रथमोपस्थितव्याप्तिस्वरू
पनिरूपणेच्छायास्तन्निरूपणेननिवृत्तावववश्यवक्तव्यत्वरूपावसरसंगतेःपक्षधर्मतायांज्ञातुंशक्यत्वात्तयोःसंगत्यप्रदर्शनमितिचेद् **त्रकेचित्** ॥ व्याप्ति
स्वरूपंनिरूप्येत्युक्तावेवतन्निरूपणेच्छायांतन्निरूपणप्रतिबंधकत्वंज्ञायतेनान्यथेत्यनुभववान्नावसरसंगतिलाभ **इत्याहुः** ॥ संगत्यप्रदर्शनेनेत्यस्यसं
भवद्यावत्संगत्यप्रदर्शनेनेत्यर्थ **इत्यपरे** ॥ तन्मतेसंभवद्यावत्संगतिप्रदर्शनसंप्रदायविरोधएवन्यूनताशब्दार्थोनतुपूर्वोक्तः॥ अनुमितिलक्षणेतिदीधि
तावनुमितेर्लक्षणमितिषष्ठीतत्पुरुषभ्रमनिरासायाह ॥ **अनुमितिलक्षणमनुमितिस्वरूपमिति** ॥ तदनुकूलसंगत्येत्यत्रतृतीयार्थोज्ञानजन्यजिज्ञा
साधीनत्वंतस्यव्याप्तिपक्षधर्मतामितिद्वितीयांतोपस्थाप्यव्याप्तिपक्षधर्मताविषयकत्वान्वितेनिरूपयितुमित्यत्रधात्वर्थेनिरूपणेन्वयःसमभिव्याहृतक्रिया
न्वितसमानकर्तृकत्वसहितस्वेच्छाधीनेच्छाविषयत्वंतुमुन्प्रत्ययार्थः॥ अव्ययकृतोभावेइत्यनुशासनादरेचतादृशसंबंधेनैवप्रकृत्यर्थस्यान्वयः॥आ

हेतिप्रतिजानीत इत्यर्थः ॥ अव्यवहितोत्तरकालकर्तव्यत्वप्रकारकबोधानुकूलव्यापाररूपप्रतिज्ञारूपतदर्थनिरुक्तुमुत्प्रत्ययार्थान्वयस्तादृशप्रतिज्ञा
न्विताख्यानार्थकृतेराक्षिप्तप्रथमांतार्थकर्तर्यन्वयस्तथाचतादृशसंगतिज्ञानजन्यजिज्ञासाधीनंयद्व्याप्तिपक्षधर्मताविषयकनिरूपणंतादृच्छाविष
यतत्समानकर्तृकनिरुक्तप्रतिज्ञानुकूलकृतिमान्मणिकारइतिविशिष्टदीधितिवाक्यार्थः ॥ यद्यपीति ॥ यद्यपिपक्षोवन्हिमानित्यादौपक्षतायाः का
रणतावच्छेदकघटकत्वसंभवस्तथापिसर्वत्रनतथेतिभावः ॥ यद्वा अवच्छेदकावच्छेदेनसंगतिप्रदर्शनसंप्रदायमनुरुध्येदं ॥ तत्रैकाराभावादिति ॥
श्रूयमाणाचसंवलितस्यैवप्रतीकधारणानियमादितिभावः ॥ ननुकुतोयंनियमइत्यतआह ॥ प्रत्यक्षेत्यादीति ॥ अथसाध्यवदन्यावृत्तित्वमित्यस्य
साध्यवदितिप्रतीकधारणान्मूलाचूसहितस्यैवप्रतीकधारणमितिननियमः ॥ नच यत्राचूसहितस्यैवप्रतीकधारणंतत्रैवायंनियमःसाध्यवदित्यादौ
हलंतस्यैवधारणान्नदोषइतिवाच्यं ॥ एवमपिनन्वनुमितिहेतुभूतेत्यादेर्नन्वित्यादिप्रतीकधारणस्यासंगतेरवारणादितिचेन्न ॥ यत्रसमासघटक
स्याचूसहितस्यप्रतीकधारणंतत्रैवदर्शितनियमइतिनकोपिदोषः ॥ नचाग्रिमप्रत्यक्षपदस्यप्रतीकधारणमितिभ्रमनिरासार्थंप्रत्यक्षाचितीतिप्रतीक
धारणंसम्यगेवेतिवाच्यं ॥ प्रथमोपात्तस्यैवप्रतीकधारणनियमेनतादृशभ्रमासंभवाद्दर्शितनियमस्यैवदीधितिकृत्संमतत्वमविरुद्धं ॥ संदिग्धः सा

ध्यरूपो धर्मो यत्रेति व्युत्पत्त्येति ॥ तादृशव्युत्पत्तौ यत्रेतिसप्तम्यंतार्थयद्विशेष्यताकत्वस्यसंशयविषयरूपसंदिग्धपदार्थैकदेशसंशयेऽन्वयस्तादृशसं
शयविषयस्यसाध्यरूपधर्मेऽन्वयस्तथाचयद्विशेष्यकसंदेहविषयीभूतोसाध्याभिन्नोधर्मइतिविग्रहवाक्याद्बोधः समासेतुसाध्याभिन्नप्रकारकसंशयवि
शेष्यालक्षणयाउत्तरपदार्थः पूर्वपदंतादृशलक्षणातात्पर्यग्राहकंसंदिग्धसाध्यधर्मपदोत्तरभावप्रत्ययेनतादृशसंशयविशेष्यत्वंबोध्यतेनचविशेष्यता
संबंधेनतादृशसंशयपर्यवसितंपक्षत्वमित्यर्थः॥ धर्मपदसार्थक्यायेति ॥ साध्यंधर्मोयत्रससाध्यधर्माइतिव्युत्पत्तिस्तत्रयत्रेतिसप्तम्यंतार्थयन्निरूपि
तत्वस्याधेयताविशिष्टरूपधर्मपदार्थैकदेशाधेयतायामन्वयस्तादृशधर्मपदार्थस्याभेदेनसाध्येऽन्वयस्तथाचयन्निरूपिताधेयताविशिष्टंसाध्यमिति
विग्रहवाक्यार्थः समासेतुसाध्यनिष्ठधर्मतानिरूपितधर्मितावान्लक्षणयोत्तरपदार्थः पूर्वपदंतादृशलक्षणातात्पर्यग्राहकंसाध्यधर्मपदोत्तरभावप्रत्ययेन
तादृशधर्मित्वंबोध्यते ॥ संदिग्धंचतत्साध्यधर्मत्वमितिकर्मधारयःह्रदोवह्निमान्धूमादित्यादौह्रदादौसंदिग्धसाध्यधर्मित्वरूपपक्षत्वमप्रसिद्धंस्यादित्य
तः स्वस्मिन्निति ॥ तथाचसंदिग्धंसाध्यधर्मित्वंयत्रेतिव्युत्पत्तौयद्विशेष्यकसंदेहविषयीभूतंसाध्यधर्मित्वमितिविग्रहवाक्यार्थः समासेतुसाध्यध
र्मित्वप्रकारकसंशयविशेष्यालक्षणयोत्तरपदार्थः पूर्वपदंतात्पर्यग्राहकंभावप्रधानत्वेनतादृशसंशयविशेष्यत्वंविशेष्यतासंबंधेनसाध्यधर्मित्वप्रका

१ अर्थात्संदिग्धसाध्यधर्मत्वपदस्य

१ भावप्रत्ययेनेतिपाठेभावस्यधर्मस्यप्रत्ययोबोधस्तेनेत्यर्थः सचबोधः संदिग्धसाध्यधर्मत्वपदस्यभावप्रधानतयातेनानपरेषांकुचोद्यानवकाशः

रकसंशयवत्वंपक्षत्वमितिपर्यवसितं ॥ साध्येति ॥ साध्येसंदिग्धंधर्मत्वंयस्येतिव्युत्पत्तौसमभ्यतार्थसाध्यविशेष्यताकत्वस्यसंशयविषयरूपसं
दिग्धपदार्थैकदेशेसंशयेऽन्वयः यस्येतिषष्ठ्यंतार्थयन्निरूपितत्वस्याधेयत्वरूपेधर्मत्वेऽन्वयस्तथाचसाध्यविशेष्यकसंदेहविषयीभूतंयन्निरूपितंधर्म
त्वमितिविग्रहवाक्याद्बोधः समासेतुयन्निरूपितधर्मत्वप्रकारकसंशयविशेष्यंलक्षणयोत्तरपदार्थः पूर्वपदंतात्पर्यग्राहकंभावप्रत्ययेनतादृशसंशय
विशेष्यत्वंविशेष्यतासंबंधेनयन्निरूपितधर्मत्वप्रकारकसंशयवत्वरूपंपर्यवसितंपक्षत्वमितिलभ्यतइतिज्ञेयं ॥ पर्यवसितकार्यकारणभावमाहैवं
त्वेति ॥ पर्वतत्वसामानाधिकरण्येनवन्हिसाध्यकस्थलीयकार्यतावच्छेदकस्यनीलपर्वतोवन्हिमानित्यनुमितिसाधारणतयातादृशानुमितेश्चतादृशप
र्वतोवन्हिमान्नवेतिसंशयाभावेपिनीलपर्वतोवन्हिमान्नवेतिसंशयादुत्पत्तेर्व्यतिरेकव्यभिचारइतिकार्यतावच्छेदककोटौपर्वतत्वावच्छिन्नत्वमनिवेश्य
शुद्धपर्वतत्वावच्छिन्नेति ॥ पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपिकेतितदर्थः ॥ जातित्वेनपर्वतत्वावगाहिवन्ह्यनुमिति
मादायतद्दोषतादवस्थ्यमतः प्रतियोगिभूतावच्छेदकतायांनिरवच्छिन्नत्वनिवेशः ॥ यद्यपिजातिमान्वन्हिमानितिनिश्चयसाधारणतादृशनिश्चयत्व
व्यापकत्वस्यपर्वतोवन्हिमान्नवेतिसंशयप्रतिबंधकतायामसत्वादसंभवइतिकारणतावच्छेदककोटावपिशुद्धत्वनिवेशआवश्यकइतितन्निवेशाक

थनेनन्यूनतासंभाव्यनेतथापितत्रविशेष्यतायांपर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वनिवेशेनाप्यसंभववारणसंभवात्पर्वतत्वनिष्ठनिरवच्छिन्ना
वच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वरूपशुद्धपर्वतत्वावच्छिन्नत्वनिवेशप्रयोजनाभावइतितन्निवेशाकथनमितिध्येयं ॥ कार्यतावच्छेदककोटौशुद्ध
संयोगसंबंधावच्छिन्नत्वानिवेशेपर्वतत्वसामानाधिकरण्येनवन्हिसाध्यकेऽवच्छेदकावच्छेदेनानुमितेरपिकार्यतावच्छेदकाक्रांततयातस्याश्चतादृ
शपर्वतत्वावच्छेदेनवह्न्यभावावगाहिसंशयंविनापिपर्वतत्वसामानाधिकरण्येनवह्न्यभावसंशयादुत्पत्त्याव्यतिरेकव्यभिचारइतितन्निवेशः सं-
योगत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकसंयोगनिष्ठसांसर्गिकविषयतावच्छेदकताकत्वंतदर्थः ॥ यत्तुसंयोगेनवन्हिसाध्यकेसंयुक्तसं
योगेनवह्न्यनुमितेरपिकार्यतावच्छेदकाक्रांततयातस्याश्चतादृशसंयोगेनवन्हिमान्नवेतिसंशयाभावेप्युत्पत्तेर्व्यतिरेकव्यभिचारइतिकार्यतावच्छेद
केशुद्धसंयोगावच्छिन्नत्वनिवेशः किंचिन्निष्ठसांसर्गिकविषयत्वानिरूपितसंयोगनिष्ठसांसर्गिकविषयतानिरूपकत्वंतदर्थइतितदसत् ॥ परं
परासंबंधेनविशिष्टबुद्धौपरंपराघटकविशेष्यीभूतसंसर्गविषयतायांविशेष्यतानिरूपितत्वस्यतद्घटकप्रकारीभूतसंसर्गविषयतायांप्रकारता
निरूपितत्वस्यैवस्वीकृतत्वाच्छुद्धपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितायासंयोगनिष्ठसंसर्गतातन्निरूपिकायाशुद्धवन्हित्वावच्छिन्नविधेयतातच्छा

त्यनुमितित्वस्यकार्यतावच्छेदकत्वोपगमेनैवदर्शितव्यभिचारवारणात्॥एवंशुद्धवन्हित्वावच्छिन्नत्वानिवेशेपर्वतःसुंदरवन्हिमानित्यनुमितेःपर्व
तपक्षकवन्हिसाध्यकस्थलीयकार्यतावच्छेदकाक्रांततयातस्याश्चतादृशपर्वतोवन्हिमान्नवेतिसंशयाभावेपिपर्वतःसुंदरवन्हिमान्नवेतिसंशयादुत्प
त्याव्यतिरेकव्यभिचारइतितन्निवेशः॥वन्हित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकतानिरूपकत्वंतदर्थः॥जातित्वेनवन्हित्वावगाह्यनुमिति
मादायतद्दोषइतिप्रतियोगिभूतावच्छेदकतायांनिरवच्छिन्नत्वंविशेषणं॥ नतुस्वरूपसंबंधविशेषइति॥ अवच्छिन्नत्वघटकमवच्छेदकत्वंप्रका
रताधिकरणताविषयतावच्छेदकत्वादिरूपंमूलाग्रादौप्रतीयमानदैशिकावच्छेदकत्वादिरूपंचनेत्यर्थः॥सकलसाधारणवन्हित्वावच्छिन्नव
त्तानिश्चयत्वेनैवप्रतिबंधकत्वकल्पनादिति ॥अथपर्वतोवन्हिमान्महानसीयवन्हिमानूचत्वरीयवन्हिमानित्यादिनिश्चयसाधारणवन्हि
त्वावच्छिन्नप्रकारताशालिनिश्चयत्वस्यदुर्वचत्वात्कथंतादृशानिश्चयत्वेनैकप्रतिबंधकत्वंतादृशनिश्चयानां॥तद्भिन्नवन्हिसामान्याभावाप्रकारक
त्वेसतिवन्हित्वावच्छिन्नप्रकारताकत्वंमहानसीयवन्हिमान्नवापर्वतइतिसंशयस्यापिवन्हिनिश्चयत्वापत्तेः॥नचवन्हित्वव्याप्यधर्मावच्छिन्नप्रति
योगिताकाभावत्वेनवन्हित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वेनवावन्हिसामान्याभावतद्विशेषाभावानुगमय्यतादृशाभावत्वविशिष्टाप्र

कारकत्वेसतिवन्हित्वावच्छिन्नप्रकारताकत्वमेववन्हित्वावच्छिन्नवत्तानिश्चयत्वमनुगतमितिनोक्तदोषइतिवाच्यं॥ चत्वरीयवह्न्यभाववान्महानसी
यवन्हिमानितिनिश्चयस्यासंग्रहापत्तेरितिचेन्न॥ स्वविशिष्टाधिकरणतान्यत्वस्वावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशे
ष्यतानिरूपितविशेष्यत्वीयत्वोभयसंबंधेनवन्हित्वावच्छिन्नप्रकारताविशिष्टाधिकरणतावज्ज्ञानत्वमेववन्हित्वमहानसीयवन्हित्वाद्यवच्छिन्नवत्ता
निश्चयसाधारणमनुगतंपर्वतेवन्हित्वावच्छिन्न वत्तानिश्चयत्वंस्ववचंप्रथमसंबंधघटकमधिकरणतायांस्ववैशिष्ट्यंचस्वावच्छेदकधर्मपर्याप्तावच्छे
दकताकप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यत्वीयत्वस्वनिरूपितपर्वतत्वावच्छिन्नविशे
ष्यतानिरूपितविशेष्यत्वीयत्वोभयसंबंधेन॥ स्वावच्छेदकेत्यनेनस्वरूपसंबंधेनस्वावच्छेदकताश्रयस्यैवविवक्षणान्महानसीयवन्हिमान्वन्हिसामा
न्याभाववान्वेतिसंशयस्यस्वावच्छेदकवन्हित्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावप्रकारत्वेनतन्निष्ठाधिकरणतायांनोक्तोभयसंबंधेन
वन्हित्वावच्छिन्नप्रकारताविशिष्टान्यत्वमितिनतस्यवन्हित्वावच्छिन्नवत्तानिश्चयत्वं॥ महानसीयवन्हिमान्नवेतिसंशयस्यमहानसीयवन्हित्वा
वच्छिन्नप्रकारतारूपस्वपदार्थवन्हित्वावच्छिन्नप्रकारतायामुभयमप्यवच्छेदकंतत्पर्याप्तावच्छेदकताकप्रतियोगिताकमहानसीयवह्न्यभाव

प्रकारकत्वानन्निष्ठाधिकरणतायानोक्तोभयसंबंधेनवन्हित्वावच्छिन्नप्रकारताविशिष्टाधिकरणतान्यत्वमितितद्व्युदासः ॥ महानसीयवन्हिमान्नवा
चत्वरीयवन्हिमानित्याशिकनिश्चयेचत्वरीयवन्हित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वीयाधिकरणतैवतादृशीतितत्रतन्निश्चयत्वोपपत्तिः ॥ जन्यतासं
बंधेनेच्छावदन्यत्वमेवानाहार्यत्वमनुगतंऋवच्चमाहार्यज्ञानेइच्छायाहेतुत्वोपगमात् ॥ नचसर्वस्यैवज्ञानस्येश्वरेच्छाजन्यत्वेनतदन्यज्ञानाप्रसिद्धिरि
तिवाच्यं ॥ जन्यतावच्छेदकज्ञानत्ववत्वसंबंधेनेच्छाभाववत्वस्यविवक्षितत्वादीश्वरेच्छायाःकार्यत्वावच्छिन्नंप्रत्येवहेतुतयाज्ञानत्वस्यतज्जन्यता
नवच्छेदकत्वेनानुपपत्यभावात् ॥ वस्तुतस्तुसमवायसंबंधावच्छिन्नेच्छानिष्ठजनकतानिरूपितजन्यतावदन्यत्वमेवतत् ॥ ईश्वरेच्छायाविषयता
संबंधेनैवहेतुत्वान्नतादृशज्ञानाप्रसिद्धिः ॥ अथैवमप्यप्रमाण्यज्ञानानामननुगतानामेवोत्तेजकतयानवन्हिमान्महानसीयवन्हिमानित्यादिसकल
निश्चयसाधारणमेकंप्रतिबंधकत्वंसंभवतीतिचेन्न ॥ विशेष्यत्वैकक्षणावच्छिन्नैकात्मवृत्तित्वरूपसामानाधिकरण्योभयसंबंधावच्छिन्नप्रतियोगि
ताकतत्तदप्रामाण्यग्रहाभावविशिष्टवन्हिमत्तानिश्चयत्वेनतेषामेकप्रतिबंधकत्वमित्यभिप्रायः ॥ अथैवमपिमहानसीयवन्हिमत्तानिश्चयस्यमहा
नसीयवन्हिसामान्याभाववत्ताबुद्धिप्रतिबंधकत्वेप्रतिबध्यतावच्छेदकंयदिमहानसीयवन्हित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत्ताज्ञानत्वंत

दास्कंदरमहानसीयवह्न्यभाववत्ताज्ञानस्यापितत्प्रतिबंधकत्वापत्तिः॥ यदिच्चमहानसीयवन्हित्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववत्ता
ज्ञानत्वंतदाप्येकत्रापर्याप्तस्योभयत्रापर्याप्तत्वमितिन्यायेनस्कंदरमहानसीयवह्न्यभावस्यापिमहानसीयवन्हित्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभा
वत्वेनतद्दोषतादवस्थ्यमेवातोमहानसीयत्वनिष्ठावच्छेदकताभिन्नवन्हित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकाभाववत्ताज्ञा
नत्वस्यैवतथात्वंवक्तव्यंतथाचवन्हिसामान्याभाववत्ताज्ञानस्यापितेनरूपेणमहानसीयवन्हिमत्ताज्ञानप्रतिबध्यत्वात्तत्प्रतिबंधकतावच्छेदककोटौ
महानसीयत्वविषयतायानिवेशावश्यकतयावन्हिसामान्याभावबुद्धिप्रतिबंधकतावच्छेदककोटौमहानसीयत्वविषयतानंतर्भावोक्तिः कथंसंग
च्छतइतिचेदत्रकेचित्॥ महानसीयत्वनिष्ठावच्छेदकताभिन्नवन्हित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वघटितरूपस्यमहानसीय
वन्हिसामान्याभावबुद्धिप्रतिबंधकतावच्छेदकत्वेगौरवान्महानसीयत्ववन्हित्वैतद्गतद्वित्वावच्छिन्नपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभाववत्ता
ज्ञानत्वस्यैवतत्प्रतिबध्यतावच्छेदकतयावन्हिसामान्याभाववत्ताज्ञानत्वस्यतदनाक्रांततया तादृशोक्तिः संगच्छतइत्याहुः॥ प्रतिबंधकतावच्छेदक
त्वसाध्यतावच्छेदकत्वयोः पर्याप्त्यानिवेशोत्वाहनवेति॥ अथसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारकत्वनिष्ठस्वरूपसंबंधरूपावच्छेदकताकत्व

स्यप्रतिबंधकताविशेषणत्वेनैवोक्तदूषणद्वयस्यापिवारणसंभवाद्नाहार्यत्वादिगुरुतरविशेषणविशिष्टसाध्यवत्ताज्ञानत्वव्यापकप्रतिबंधकता
निवेशोनयुक्तः॥ साध्यतावच्छेदकपर्याप्तत्वंचावच्छेदकतायामुपलक्षणं तेन वन्हिसाध्यकस्थलेवन्हित्वनिष्ठप्रकारतावच्छेदकतायामहानसीय
वन्हित्वनिष्ठावच्छेदकतासाधारणवन्हित्वनिष्ठावच्छेदकतात्वेनवन्हिसामान्याभावबुद्धिप्रतिबंधकतावच्छेदककोटौप्रवेशेपिनवन्हिमान्नवापक्षइतिसं
शयासंग्रहः॥ महानसीयवन्हित्वपर्याप्तत्वोपलक्षितावच्छेदकताकप्रकारतायावन्हित्वनिष्ठावच्छेदकताकप्रकारतात्वेनवन्हिसामान्याभावबुद्धिप्रति
बंधकतावच्छेदककोटौप्रविष्टतयानमहानसीयवन्हिसाध्यकेवन्हिसामान्याभावकोटिकसंशयासंग्रहोपि॥ शुद्धवन्हित्वावच्छिन्नसाध्यकेवन्हित्वप
र्याप्तत्वोपलक्षितावच्छेदकताकप्रकारतायामहानसीयवह्न्यभावबुद्धिप्रतिबंधकतानवच्छेदकतयानमहानसीयवह्न्यभावकोटिकसंशयस्यसंग्रहः॥ अ
थमहानसीयवन्हित्वनिष्ठावच्छेदकतायाअपिवन्हित्वपर्याप्तत्वमेकत्रापर्याप्तस्योभयत्रापर्याप्तत्वमितिन्यायेनाक्षतमितिकथंवन्हि साध्यकेमहानसीय
वह्न्यभावकोटिकसंशयस्यपक्षतात्ववारणमितिचेदत्रकेचित्॥ साध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नावच्छेदकताकत्वमेवप्रकारतायांतत्पर्या
प्तावच्छेदकताकत्वं॥ नचमहानसीयवन्हिमत्ताज्ञानीयप्रकारतावच्छेदकतापर्याप्त्यवच्छेदकापेक्षाबुद्धिविशेषविषयत्वरूपद्वित्वशरीरेवन्हित्वविशेषण

वन्हित्वत्वादेरपिप्रविष्टतयातद्दोषतादवस्थ्यंशक्यं ॥ साध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मपर्याप्तावच्छेदकताकत्वस्यपर्याप्तिविशेषणत्वेनसामंजस्यादि त्याहुः ॥ वस्तुतस्तु ॥ किंचिदविशेषितधर्मावच्छिन्नसाध्यकेसाध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्यस्वव्याप कत्वस्वसमानाधिकरण्योभयसंबंधेनसाध्यताविशिष्टान्यत्वरूपस्यवाप्रकारतायांसाध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वस्यविवक्षणान्नकोपि दोषइतिध्येयं ॥ यत्तुप्रकारतायाःप्रकारस्वरूपत्वमतेमहानसीयवन्हेर्महानसीयवन्हित्वावच्छिन्नप्रकारतारूपत्वस्यैवशुद्धवन्हित्वावच्छिन्नप्रका रतारूपत्वस्याप्यनपक्षादतयाशुद्धवन्हित्वावच्छिन्नसाध्यकेमहानसीयवन्हिमान्नवापक्षइतिसंशयस्यपक्षतात्वापत्तिवारणायान्यूनवृत्तित्वरूपावच्छि न्नत्वनिवेशआदृतः ॥ नचैवंमहानसीयवन्हिसाध्यकेमहानसीयवन्हिमान्नवेतिसंशयस्यपक्षतात्वानुपपत्तिःसाध्यतावच्छेदकावच्छिन्नप्रकारतानि रूपकत्वस्यकेवलवन्हिमत्तानिश्चयसाधारणत्वादितिवाच्यं ॥ साध्यतावच्छेदकावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकताकत्वविशिष्टनिश्चयस्यैव साध्यवत्तानिश्चयपदेनविवक्षणात् ॥ नचैवंसतितादृशप्रकारतात्वावच्छिन्नावच्छेदकताकप्रतिबंधकतायानिवेशोपिसंभवतीतिनमन्नमतेप्यनुपपत्ति रितिवाच्यं ॥ एवंसतिमहानसीयवन्हिसाध्यकेमहानसीयवन्हिमान्वन्हिसामान्याभाववान्वेतिसंशयासंग्रहप्रसंगादितितन्न ॥ प्रकारतात्वाव

च्छिन्ननिरूपकतायाः प्रकारस्वरूपत्व पक्षे उक्तातिप्रसंगस्य दुर्वारत्वात्॥ यदपि शुद्धवन्हित्वावच्छिन्नसाध्यके वन्हिघटोभयत्वावच्छिन्नतदभाव कोटिकसंशयस्य पक्षतात्वापत्तिवारणाय न्यूनवृत्तित्वरूपावच्छिन्नत्वनिवेशः उभयत्वावच्छिन्नाभाववत्ताज्ञानं प्रत्युभयत्वाप्रकारकोभयवत्ताज्ञानस्यापि प्रतिबंधकताया ग्रंथकारानुमतत्वादिति तदपि न॥ साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारत्वानवच्छिन्नत्वस्य प्रतिबंधकतायां निवेशनीयत्वात्॥ एवमप्यनाहार्यत्वादि विशेषणविशिष्टज्ञानत्वव्यापकत्वनिवेशापेक्षया लाघवं निष्प्रत्यूहमेव॥ नच साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारताभिन्नत्वं निवेश्यते उत साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नत्वं वा॥ नाद्यस्तादृशमहानसीयवन्हित्वावच्छिन्नप्रकारताया अपि वन्हित्वावच्छिन्नप्रकारतात्वेन वन्हिसामान्याभावबुद्धिप्रतिबंधकतावच्छेदकतया वन्हिसाध्यके वन्हिमान्नवेति संशयासंग्रहप्रसंगात्॥ न द्वितीयः॥ महानसीयवन्हित्वावच्छिन्नप्रकारताया वन्हित्वावच्छिन्नप्रकारताभिन्नत्वाभावेन वन्हिसाध्यके महानसीयवन्हिमान्नवेति संशयस्य पक्षतात्वापत्तेरिति वाच्यं॥ साध्यतावच्छेदकातिरिक्तधर्मावच्छेद्यत्वप्रकारतात्वोभयावच्छिन्नप्रकारतानिष्ठावच्छेदकताकान्यत्वेन प्रतिबंधकतायाः साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारतान्यासाध्यतावच्छेदकसंबंधावच्छिन्नाया पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित प्रकारता तदनिरूपकत्वेन ज्ञानस्य वा विशेषणीयत्वात्॥ द्वितीयकल्पे

साध्यतावच्छेदकसंबंधावच्छिन्नत्वनिवेशाच्च नमहानसीयवन्हिसाध्यकेपरंपरासंबंधावच्छिन्नमहानसीयत्वनिष्ठप्रकारतामादायमहानसीयवन्हिमा
न्नवेतिसंशयासंग्रहप्रसंगः नवापूर्वकल्पेप्रकारतात्वावच्छिन्नत्वनिवेशाद्देशोवन्हिमत्पर्वतवानितिज्ञानीयप्रकारतामादायवन्हिमान्नवेतिसंशयासं
ग्रहः ।। यद्यपिद्वितीयकल्पेपिवन्हिव्याप्यसाधकं वन्हिव्याप्यधूमवान्नवेतिसंशयस्यपक्षतात्वप्रसंगः वन्हिव्याप्यधूमाभाववत्ताप्रत्यक्षंप्रतिवन्हिव्याप्यवत्ताज्ञा
नांसिद्ध्यभावादिविशिष्टभिन्नविषयकानुमितिसामग्रीत्वेनप्रतिबंधकत्वात्तन्निबंधकतायांचवन्हिव्याप्यत्वावच्छिन्नप्रकारतायाअवच्छेदकत्वादेवंपर्वतेव
न्हिसाधकेनेदेशोवन्हिमत्पर्वतवान्नवेतिसंशयस्यपक्षतात्वप्रसंगस्तादृशसंशयीयदेशोवन्हिमत्पर्वतवानितिनिश्चयनिष्ठप्रतिबंधकतायांपर्वतांशेव
न्हित्वावच्छिन्नप्रकारतायाअवच्छेदकत्वात् ।। व्यापकत्वरूपावच्छिन्नत्वनिवेशेचेतरकारणासमवधानकालीनवन्हिव्याप्यवत्ताज्ञानसाधारणसा
ध्यवत्तानिश्चयत्वव्यापकत्वस्यवन्हिव्याप्यधूमवान्नवेतिसंशयप्रतिबंधकतायामसत्वान्नप्रथमदोषः पर्वतोवन्हिमानितिनिश्चयसाधारणसाध्यव
त्तानिश्चयत्वव्यापकत्वस्यदेशोवन्हिमत्पर्वतवान्नवेतिसंशयप्रतिबंधकतायामसत्वान्नद्वितीयदोषः संभवतितथापिपक्षतावच्छेदकावच्छिन्न
मुख्यविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतावच्छिन्नायासाध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारत्वानिरूपकज्ञानानि

ष्ठप्रतिबंधकतातन्निरूपितज्ञानत्वावच्छिन्नप्रतिबध्यताशालिसंशयःपक्षतेतिस्वरूपसंबंधरूपावच्छेदकत्वनिवेशाकल्पीयसमुदितलक्षणार्थस्तत्रप्रति
बध्यतायांज्ञानत्वावच्छिन्नत्वनिवेशान्नप्रथमदोषःसामग्रीप्रतिबध्यतायाप्रत्यक्षत्वेनावच्छेदात्॥ नचभिन्नविषयकानुमितिसामग्र्याःप्रत्यक्षशा
ब्दात्मकद्विविधानुभवप्रतिप्रतिबंधकतयोभयसाधारणभिन्नविषयकानुभवत्वमेवतत्प्रतिबध्यतावच्छेदकमनुभवत्वंचस्मृत्यन्यज्ञानत्वमितिव
न्हिव्याप्यवानितिज्ञाननिष्ठसामग्रीविधयायाप्रतिबंधकतातन्निरूपितप्रतिबध्यतायाअपिज्ञानत्वावच्छिन्नत्वमक्षतमितिवाच्यं॥ अनुमि
तिसामग्रीकालेशाब्दादीच्छायांसत्यांशाब्दाद्युत्पत्तयेशाब्दादीच्छायाउत्तेजकत्वावश्यकतयाशाब्दादीच्छाविरहविशिष्टशाब्दत्वादिरूपाननुगतध
र्म्मस्यैवतत्प्रतिबध्यतावच्छेदकत्वावश्यकतयाऽनुभवत्वस्यतत्प्रतिबध्यतानवच्छेदकत्वात्॥ अत्रेदंसमाधानं॥ वन्हिसाध्यकेमहानसीयवन्हिमा
न्नवेतिसंशयस्यपक्षतात्वापत्तिर्महानसीयवन्ह्यभावविषयकज्ञानंप्रतिवन्हिमान्महानसीयवन्हिमानितिनिश्चयविशिष्टवन्हिमत्तानिश्चयस्यप्रति
बंधकतयातत्प्रतिबंधकतायांवन्हित्वपर्याप्तावच्छेदकताकप्रकारताया अवच्छेदकत्वादतोव्यापकत्वरूपावच्छिन्नत्वनिवेशः॥ यत्तुज्ञानवैशिष्ट्यानव
च्छिन्नत्वस्यापिप्रतिबंधकतायांनिवेशान्नोक्तदोषः॥ नचानुयोगिताविशेषसंबंधेनाप्रामाण्यज्ञानादिविशिष्टाभावस्यप्रतिबंधकतावच्छेदकको

टौ निवेशाज्ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबंधकताप्रसिद्धिरितिशक्यं॥ स्वरूपसंबंधावच्छिन्नज्ञानवैशिष्ट्यनिष्ठावच्छेदकत्वानिरूपकत्वस्यतदर्थ
त्वादिति॥ तन्न॥ अप्रामाण्यज्ञानाभावादेर्विनिगमनाविरहेणैकविशिष्टापरस्यैवप्रतिबंधकतावच्छेदकत्वेनावच्छेद्याश्रयेसाक्षाद्यद्विशेषणंनदव
च्छेदकंनत्रविशेषणंत्ववच्छेदकतावच्छेदकंसमनियतनानाधर्मावच्छिन्नप्रतिबंधकतानांचनाभेदइतिमते उक्तस्थलेप्रकारितावच्छिन्नप्रतिबंधकता
विशेषज्ञानवैशिष्ट्यानवच्छिन्नत्वस्यनिरपवादतयोक्तदोषस्यान्यूनवृत्तित्वरूपावच्छिन्नत्वनिवेशमंतरेणाशक्यसमाधित्वेनमनद्व्यसाधारण्येन
तन्निवेशोभट्टाचार्याभिप्रेतइति॥ नचज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधकताशून्यवृत्तित्वमेवज्ञानवैशिष्ट्यानवच्छिन्नत्वमित्यनेनविवक्षणीयमि
तिनैषदोषइतिवाच्यं॥ तथासतिपर्वतेनवह्न्यभाववज्जलादिमद्वृत्तिजलवत्ह्रदकालीनवह्नित्वावच्छिन्नसाधनेज्ञानवैशिष्ट्यावच्छिन्नप्रतिबंधक
ताशून्यवृत्तित्वस्यसाध्यवत्तानिश्चयवृत्तिप्रतिबंधकतायामसत्वेनपक्षेतादृशसाध्यसंशयासंग्रहप्रसंगः॥ नचप्रकृतज्ञानवैशिष्ट्यावच्छिन्नप्रतिबं
धकताशून्यवृत्तित्वविवक्षणान्नैषदोषइतिवाच्यं॥ प्रकृतत्वस्यतन्मनोमात्रगम्यत्वेनेतरबोधानर्हत्वात्॥ नचप्रकृतपक्षतावच्छेदकावच्छिन्नवि
शेष्यतानिरूपितप्रकृतसाध्याभावत्वावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यनिष्ठस्वरूपसंबंधावच्छिन्नावच्छे

दकतानिरूपकप्रतिबंधकताभून्यत्वानित्वविवक्षणान्नोक्तदोषइतिवाच्यं॥ तथापिपर्वतोमहानसीयवन्हिमद्वृत्तिवन्हिमत्पर्वतकालीनवन्हिमानि
त्यादौपर्वतस्ताहशवान्हिमान्नवेतिसंशयासंग्रहप्रसंगस्तत्प्रतिबंधकतायास्ताहशप्रतिबंधकताभून्यत्वनित्वाभावात्॥ यद्वानुमितिग्रंथेविषयितया
साध्यव्याप्यहेतुमत्पक्षवज्ज्ञानस्यस्थलविशेषेऽनुमितिकारणतोक्तस्तद्वत्ताहशस्थलेविषयितयासाध्यविशिष्टपक्षवज्ज्ञानत्वेनैवप्रतिबंधक
त्वंतत्रसाध्यवत्ताज्ञाननिष्ठप्रतिबंधकतायांसाध्यविशिष्टपक्षस्यैवावच्छेदकत्वेनसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वावच्छिन्नप्रतिबंधकतानिवेशे
संग्राह्यसंशयासंग्रहइतिव्यापकत्वरूपावच्छिन्नत्वनिवेशः॥ नचसाध्यविशिष्टपक्षस्यावच्छेदकतास्थलेपिविषयनिष्ठावच्छेदकतायांविषयितात्वे
नप्रकारितायाअपिसंबंधविधयाऽवच्छेदकत्वान्नतत्रसंग्राह्यसंशयासंग्रहइतिवाच्यं॥ पूर्वोक्तसाध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठप्रकार
तात्वावच्छिन्नावच्छेदकताकत्वस्यप्रतिबंधकताविशेषणत्वावश्यकत्वेनतत्रसंग्राह्यसंशयासंग्रहतादवस्थ्यात्॥ उपनीतभानात्मकेति॥
लौकिकसन्निकर्षाजन्येत्यस्यत्यर्थस्तेनानुमानिकशाब्दादिबाधनिश्चयस्यापिसाध्यवत्तानिश्चयसामान्यनिवर्त्यत्वेपिनक्षतिः॥ लौकिकसन्निकर्षज
न्यबाधनिश्चयस्यचनसाध्यवत्तानिश्चयसामान्यनिवर्त्यत्वमितिबाधनिश्चयसामान्योपेक्षा॥ भ्रमत्वज्ञानास्कंदितस्येति॥ एतच्चबाधनिश्चय ३२२

रूपप्रतिबंधकसत्वादेवनवक्ष्यमाणानुमित्यापत्तिरितिशंकाव्युदासाय॥ तथाविधेति॥ भ्रमत्वज्ञानास्कंदितेत्यर्थः॥ अनुमित्यापत्तिरिति॥ अ
नुमित्यनंतरमपीत्यादिः॥ संशयस्यपक्षतात्वमतेसिद्धेरप्रतिबंधकत्वादितिभावः॥ अनुगमस्यापीति॥ पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यता
निरूपितसाध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठप्रकारतात्वावच्छिन्नावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबंध
कतावच्छेदकविषयित्वमनुगतंबाधत्वं॥ विशेष्यतायांमुख्यत्वस्यावच्छेदकतायांप्रकारतात्वावच्छिन्नत्वस्यनिवेशाच्चनपर्वतेवन्हिसाधनेदेशोवन्हिम
न्पर्वतवान्नवावन्हिमान्पर्वतोघटवान्नवेत्यनयोःसंशयोःपक्षतात्वप्रसंगः॥ यथाश्रुतेतादृशपक्षताघटकतादृशबाधत्वेचतादृशप्रकारतानिष्ठावच्छेदकताक
प्रतिबंधकतानिरूपितप्रतिबध्यतावच्छेदकत्वमपिविशेषणंदेयंतेननवन्हिसाध्यकेसाध्यवत्ताज्ञानप्रतिबंधकतावच्छेदकवह्न्यभावव्याप्यत्वावच्छि
न्नविषयित्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यताशालिनःवह्न्यभावव्याप्याभाववान्पर्वतःपर्वतोवह्न्यभाववांश्चेतिसमूहालंबनस्यपक्षता
त्वापत्तिः साध्यवत्ताज्ञानप्रतिबंधकतावच्छेदकत्वनिवेशाच्चनवन्हिव्याप्यसाध्यकेवन्हिमान्नवेतिसंशयस्यपक्षतात्वापत्तिरपि॥ अथनिरुक्तबाध
त्वघटकसाध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठप्रतिबध्यतावच्छेदकत्वंयदिस्वरूपसंबंधरूपंतदासंयोगेनवन्हिसाध्यकेसाध्यतावच्छेदकसंयो

गसंबंधावच्छिन्नवह्नित्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदकदैशिकविशेषणतासंबंधावच्छिन्नवह्न्यभावत्वावच्छि
न्नविषयित्वावच्छिन्नप्रतिबंधकताकत्वस्यसामानाधिकरण्येनवह्निकोटिकसंशये ऽ सत्वान्नदसंग्रहइत्यनतिरिक्तवृत्तित्वरूपमेवनहुाच्यंतथाच
नीलपर्वतःस्कंदरवह्निमानित्यादौपर्वतोनीलोनवावह्निःस्कंदरोनवेतिसंशयानामपिपक्षतात्वापत्तिरितिचेन्नैवं ॥ सामानाधिकरण्येनावच्छेदका
वच्छेदेनचसाध्यवत्स्थलीयपक्षताशरीरेशुद्धसंयोगसंबंधावच्छिन्नत्वस्यैवप्रकारतायांनिवेशेनतादृशप्रकारताघटितधर्मावच्छिन्नप्रतिबध्य
तानिरूपितप्रतिबंधकतावच्छेदकव्यापकत्वविशिष्टदैशिकविशेषणतासंबंधावच्छिन्नवह्न्यभावत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबंधकता
कत्वस्यसामानाधिकरण्येनावच्छेदकावच्छेदेनचवह्निकोटिकसंशयादौसत्वेनानुपपत्यभावादित्थंचनीलपर्वतःस्कंदरवह्निमानित्यत्रनैत्या
भावसौंदर्याभावविषयितयोर्विशिष्टपक्षेविशिष्टसाध्यवत्ताज्ञानीयप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदकत्वाभावेन
ननिरुक्तसंशययोःपक्षतात्वप्रसक्तिः ॥ निरुक्तबाधत्वनिरूपितमवच्छिन्नत्वमपिस्वरूपसंबंधरूपमेवग्राह्यंनान्यूनवृत्तित्वरूपंप्रयोजनाभावात्तन्नि
वेशेनाकार्यत्वादिनिवेशावश्यकतयागौरवप्रसंगाच्च ॥ नचैवंसतिसामानाधिकरण्येनवह्निसाध्यकेपक्षतावच्छेदकव्यापकत्वविशिष्टदैशिक

विशेषणतासंबंधावच्छिन्नवह्न्यभाववत्तावच्छिन्नविषयित्वरूपबाधत्वावच्छिन्नप्रतिबंधकताकत्वस्यावच्छेदकावच्छेदेनवन्हिवह्न्यभावरूपको
टिद्वयावगाहिसंशयेऽसत्वात्तस्यपक्षतात्वानुपपत्तिरितिशंक्यं॥अवच्छेदकावच्छेदेनवन्हिमत्ताज्ञानीयप्रकारतायाअपिवन्हित्वावच्छिन्नसं
योगसंबंधावच्छिन्नप्रकारतात्वेनावच्छेदकावच्छेदेनवह्न्यभाववत्ताज्ञानप्रतिबंध्यतावच्छेदकत्वेनतदवच्छिन्नप्रतिबध्यताकत्वस्यतादृशसं
शयेऽक्षत्वात्॥निरुक्तबाधत्वघटकप्रतिबंधकताद्वयंबाधत्वावच्छिन्नप्रतिबंधकत्वंचज्ञानवैशिष्ट्यानवच्छिन्नंग्राह्यंतेननावच्छेदकधर्मद
र्शनमादायदोषः॥अथवाऽन्यूनवृत्तित्वरूपमेवबाधत्वनिरूपितमवच्छिन्नत्वंग्राह्यं॥नचपक्षःसाध्याभाववान्साध्यंपक्षनिष्ठाभावप्रतियो
गीत्यादिसकलबाधनिश्चयसाधारणनिरुक्तबाधत्वव्यापकप्रतिबंधकत्वाप्रसिद्धिरितिवाच्यं॥स्वावच्छिन्नप्रतिबंधकताव्याप्यनिरुक्त
विषयित्वात्मकबाधत्वकसाध्यवत्तानिश्चयनिवर्त्यतावच्छेदकविषयिताकत्वस्यपर्यवसितार्थतयाविवक्षणान्नकोपिदोषइतिदिक्॥यत्ति
ति॥पक्षसाध्यवैशिष्ट्यावगाहित्वं॥पक्षसाध्यविषयतानिरूपितवैशिष्ट्यविषयिताशालित्वमित्यर्थः॥तेननपर्वतोवह्न्यभाववान्संयोगश्चेतिबाध
संग्रहः॥तथात्वादिति॥साध्यतावच्छेदकसंबंधावच्छिन्नाधारतातत्संबंधावच्छिन्नाधेयतान्यतरस्यैववैशिष्ट्यपदेनग्राह्यत्वाद्वन्हिमान्नवेत्यादाव

पिताद्दशा। धारत्वस्यैवसाध्यसंसर्गनेत्यभिप्रायः तद्विरोधादिति ॥ दीधितिकृतामणिकृत्प्रकारएवादृतइतिभावः ॥ नन्विदमयुक्तंदीधितिकृ
तामणिकृत्प्रकारसदृशप्रकारांतरमेवसंगृहीतमितिमणिकारसंगृहीतसंशयासंग्रहेपिनक्षतिरित्यतआह ॥ वस्तुतस्त्विति ॥ उभयत्वा
वच्छिन्नभेदप्रतियोगित्वस्यकेवलान्वयितयातदभावरूपकोट्यप्रसिद्धेः ॥ साध्यतावच्छेदकावच्छिन्नेतादृशभेदप्रतियोगित्वकोटिकसंशय
स्याप्रसिद्ध्यानतस्यपक्षतात्वंसंभवतीत्यतःसंशयांतरस्यपक्षतात्वंदर्शयति ॥ तत्रेति ॥ केवलान्वयिसाध्यकानुमानविशेषेतादृशविशेषणा
सत्त्वंप्रदर्श्यव्यतिरेकीसाध्यकानुमानविशेषेणतदप्रसिद्धिमाह ॥ एवमिति ॥ सिद्धसाधनस्थलेति ॥ सिद्धिदशायामित्यर्थः ॥ वन्हिव्या
प्याभाववाभाववानिति ॥ वन्हिव्याप्यवत्तानिश्चयस्यवन्हिव्याप्यवान्पर्वतःपर्वतोवन्हिमान्नवेतिसंशयंप्रतिकार्यसहभावेनविरोधित्वादे
नावदनुभावनं ॥ तद्रूपाबुद्धौतदभावव्याप्यत्वावच्छिन्नप्रकारताकज्ञानस्यैवविशेषधर्मदर्शनविधयाविरोधित्वंनतुतदभावव्याप्याभावाभा
ववत्वावच्छिन्नप्रकारताकज्ञानस्यमानाभावादितिभावः ॥ यत्त्विति वन्हिव्याप्यसाध्यकेवन्हित्वेनवन्हिव्याप्यावगाहीयःवन्हिमान्नवेतिसंश
यस्तन्निष्ठप्रतिबध्यतायावन्हिव्याप्यरूपसाध्यनिष्ठविषयताघटितधर्मावच्छिन्नत्वान्नदोषतादवस्थ्यमतःसाध्यविषयताघटितधर्मावच्छि

न्नत्वमनिवेश्यसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नत्वनिवेशनं ॥ पक्षसाध्यभेदेनपक्षतायाभेदादभावसाध्यकस्थलेपक्षताशरीरे
साध्यतावच्छेदकावच्छिन्नविषयताघटितेत्यादिविशेषणंप्रतिबध्यतायांनदेयंवह्न्यभावसाध्यकेवह्निमान्नवेत्यादिसंशयस्यासंग्रहेइष्टापत्तिर्वावह्न्य
भावाभाववान्नवेत्यादिसंशयानामेवतत्रपक्षतात्वोपगमादित्याशयेनदूषणांतरमाह ॥ यत्रचेति ॥ अत्रेदंचिंत्यं ॥ यथाश्रुतेतन्मतपरिष्कारेम
हानसीयवह्निसाध्यकेमहानसीयवह्निमान्वह्निसामान्याभाववान्वेतिसंशयासंग्रहस्तन्निष्ठवह्निसामान्याभावविषयकत्वावच्छिन्नप्रतिबध्यतायाः
साध्यतावच्छेदकमहानसीयवह्नित्वावच्छिन्नविषयताघटितधर्मानवच्छिन्नत्वात् ॥ नचसाध्यतावच्छेदकताश्रयधर्मावच्छिन्नविषयताघटित
धर्मावच्छिन्नत्वविवक्षणान्नदोषइतिवाच्यं ॥ तथासतिमहानसीयवह्निसाध्यकेवह्निमान्नवेतिसंशयसंग्रहस्यपूर्वोक्तस्यावारणादतः साध्य
तावच्छेदकावच्छिन्नविषयताघटितेत्यादिविशेषणस्थानेसाध्यतावच्छेदकावच्छिन्नविषयतायांस्ववृत्तित्वविशिष्टप्रतिबध्यताव्याप्यत्वमेव
निरुक्तसकलदोषवारणायविवक्षणीयंस्वंसंशयः इत्थंचवह्न्यभावसाध्यकेवह्निमान्नवेतिसंशयस्यापिसंग्रहः प्रतिबध्यतायांस्ववृत्तित्ववि
शिष्टत्वनिवेशाद्वह्न्यभावसाध्यकेप्रतिबध्यतायावह्निमानितिबाधनिश्चयसाधारण्येपिनक्षतिः ॥ एवंचसाध्यतावच्छेदकावच्छिन्नविषयतायांसाध्यता

वच्छेदकसंबंधावच्छिन्नाधेयतासंबंधानवच्छिन्नत्वपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताभिन्नत्वयोःप्रतियोगितासंबंधानवच्छिन्नत्वस्यच
निवेशेनापिवह्निव्याप्यपक्षकवह्निव्याप्यसाध्यकस्थलेवह्निव्याप्यंवह्निमन्नवेतिसंशयवारणंसंभवति ॥ साध्यतावच्छेदकावच्छिन्नविषयतायां
साध्यतावच्छेदकसंबंधावच्छिन्नाधेयतासंबंधानवच्छिन्नत्वनिवेशाच्चतत्रैववह्निर्वह्निव्याप्योनवाइतिसंशयवारणंप्रतियोगित्वसंबंधानवच्छि
न्नत्वस्यानिवेशाच्चनतत्रैववह्निव्याप्याभावाभाववान्पर्वतःपर्वतोवह्निमान्नवेतिसंशयसंग्रहइतियत्त्विति मतंसम्यगेवेति ॥ अत्रोच्यतइति ॥ अ
त्रस्वनिष्ठविषयितायांबाधप्रतिबध्यतावच्छेदकत्वस्यसंशयत्वघटकप्रतिबध्यतायांसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्य
तावच्छेदकावच्छिन्नत्वस्यचाग्रेनिवेशनीयतयाबाधप्रतिबध्यतावच्छेदकस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबंधकतानिरूपितायासाध्य
वत्तानिश्चयत्वव्यापकप्रतिबंधकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नाप्रतिबध्यतातच्छालिसंशयः पक्षतेतिसमुदितार्थः तत्रस्वनिष्ठवि
षयितायांबाधप्रतिबध्यतावच्छेदकत्वविशेषणप्रयोजनंवह्निव्याप्यसाध्यकेवह्निमान्नवापक्षइतिसंशयस्यपक्षतात्वापत्तिवारणरूपमेववेदित
व्यं ॥ बाधप्रतिबध्यतावच्छेदकविषयितायांस्वनिष्ठत्वानुपादानेवह्निसाध्यकेपर्वतोवह्न्यभाववानितिज्ञानेऽतिव्याप्तिरतस्तन्निवेशः ॥ बाधनिश्च

यनिवर्त्यत्वे सति साध्यवत्तानिश्चयनिवर्त्यं रूपदलद्वयोपादाने वह्निव्याप्यसाध्यके वह्निव्याप्याभावाभाववान्पर्वतः पर्वतो वह्निमान्न वेति संश
यातिव्याप्तिः ॥ बाधप्रतिबध्यतावच्छेदकत्वनिष्ठविषयितावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यताशालित्वे सति साध्यवत्तानिश्चयनिवर्त्यत्व
मित्येतावदुक्तौ पर्वते वह्निसाधनेन पक्षाभाववान् पर्वतः पर्वतो महानसीयवह्निमान्न वेति संशयस्य पक्षतापत्तिः ॥ बाधप्रतिबध्यतावच्छेदकत्वनिष्ठ
विषयिताघटितधर्मावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतायां साध्यवत्तानिश्चयत्वव्यापकप्रतिबंधकतानिरूपितत्वनिवेशेन न निरुक्तसंश
यस्य पक्षतात्ववारणेऽपि पर्वते वह्निसाधने वह्निः पर्वतवृत्तिर्न वेति संशयासंग्रहस्तादृशबाधप्रतिबध्यतावच्छेदकपर्वतवृत्तित्वविशिष्टवह्नि
त्वावच्छिन्नविषयिताघटितं यत्पर्वतवृत्तित्वविशिष्टवह्निनिश्चयत्वं तदवच्छिन्नप्रतिबंधकतानिरूपितायाः पर्वतवृत्तित्वाभावविषयकत्वाव
च्छिन्नप्रतिबध्यतायां साध्यवत्तानिश्चयत्वव्यापकसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबंधकतानिरूपितत्वस्य प्रतिबंधकतावच्छेदकभेदेन नि
रूपकप्रतिबंधकताभेदात्तद्भेदेन च निरूप्यप्रतिबध्यताभेदावश्यकतया असत्वात्तस्मात्तादृशप्रतिबध्यतावच्छेदकावच्छिन्नत्वनिवेशस्तथा
च पर्वतो वह्निमान् पर्वतवृत्तिर्वह्निरिति द्विविधनिश्चयप्रतिबध्यतावच्छेदकपर्वतवृत्तित्वाभावविषयकबुद्धित्वस्यैकत्वेन न तत्संग्रहः ॥ अ

थात्रकल्पेमहानसीयवह्न्यभावसाध्यकेपर्वतोमहानसीयवह्निमान्वावह्निसामान्याभाववान्वेतिसंशयासंग्रहः॥ महानसीयवह्निमत्तानिश्चयरूपबाधनि
श्चयप्रतिबध्यतावच्छेदकस्वनिष्ठवह्निसामान्याभाववत्तावच्छिन्नविषयित्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतायासाध्यवत्तानिश्चयप्रतिब
ध्यतावच्छेदकमहानसीयवह्नित्वावच्छिन्नविषयिताघटितधर्मानवच्छिन्नत्वादितिचेन्न॥ साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकर
णधर्मावच्छिन्नत्वमनिवेश्यसाध्यवत्तानिश्चयप्रतिवच्छेदकस्वनिष्ठविषयित्वावच्छिन्नत्वस्यसंशयत्वघटकप्रतिबध्यतायांनिवेशनीयतयानिरु
क्तसंशयनिष्ठमहानसीयवह्नित्वावच्छिन्नविषयिताया एववह्नित्वावच्छिन्नविषयितात्वमहानसीयवह्नित्वावच्छिन्नविषयितात्वाभ्यांद्विविध
प्रतिबध्यतावच्छेदकतयानामादायनिरुक्तसंशयसंग्रहात्॥ स्वनिष्ठत्वनिवेशाच्चनत्रैववह्निमान्नवेतिसंशयेमहानसीयवह्निमत्तानिश्चयरूप
बाधनिश्चयप्रतिबध्यतावच्छेदकवह्निसामान्याभावत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतायावह्निमान्महानसीय
वह्निमानित्यादिसकलनिश्चयसाधारणवह्नित्वावच्छिन्नविषयित्वावच्छिन्नायाःसाध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकमहानसीयवह्नित्वावच्छिन्न
विषयित्वावच्छिन्नायाःसत्वेपिनतस्यपक्षतात्वापतिर्महानसीयवह्नित्वावच्छिन्नविषयितायाःस्वनिष्ठत्वविरहात्॥ यद्वासाध्यवत्तानिश्चयप्रति

बध्यतावच्छेदकविषयितायां साध्यवत्तानिश्चयप्रतिबंधकतावच्छेदकत्वविवक्षणान्न तस्य तत्स्थले पक्षतात्वप्रसंगः ॥ वह्निव्याप्याभावाभावत्वेन व्याप्यस्य पृथक्भानेपीति ॥ वह्निव्याप्यत्वावच्छिन्नप्रकारताकज्ञानस्यैव विशेषदर्शनविधया वह्न्यभाववत्ताबुद्धिप्रतिबंधकत्वमिति न तादृशसंशयस्य पक्षतात्वप्रसक्तिरिति ज्ञेयं ॥ वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहादिति ॥ अथैवमपि वह्निव्याप्यसाध्यके वह्निव्याप्याभावाभावत्ववह्नित्वोभयरूपेण वह्निकोटिकस्य वह्निव्याप्याभावाभावात्मकवह्निमान्वह्निसामान्याभाववान्वेति संशयस्य पक्षतात्वप्रसंगः स्वनिष्ठवह्निविषयताया वह्निव्याप्याभावाभावत्वावच्छिन्नविषयितात्वेन बाधप्रतिबध्यतावच्छेदकत्वाद्वह्नित्वावच्छिन्नप्रकारतात्वेन वह्निसामान्याभाववत्ताज्ञानप्रतिबंधकतावच्छेदकत्वाच्चैवं ॥ स्वनिष्ठविषयताद्वितयोर्बाधप्रतिबध्यतावच्छेदकतावच्छेदको धर्मस्तद्विशिष्टविषयित्वपर्याप्तावच्छेदकताकत्वेन संशयत्वघटकप्रतिबंधकताविवक्षणीया निरुक्तस्थलीयबाधप्रतिबध्यतावच्छेदकतावच्छेदकवह्निव्याप्याभावाभावत्वावच्छिन्नविषयितात्वविशिष्टपर्याप्तावच्छेदकताकत्वस्य निरुक्तसंशयीयवह्नित्वावच्छिन्नप्रकारकत्वावच्छिन्नप्रतिबंधकतायामसत्वान्न तस्य पक्षतात्वापत्तिः पर्याप्तिनिवेशाच्च न तादृशविषयतात्वरूपधर्ममादाय तद्दोषतादवस्थ्यं ॥ यद्यप्येवं सति महानसीयवह्निसाध्यके महानसीयवह्निमान्वह्नि

सामान्याभाववान्वेतिसंशयासंग्रहः ॥ वन्हिसामान्याभावबुद्धिप्रतिबंधकतायांस्तादृशमहानसीयवन्हित्वावच्छिन्नविषयितात्वविशिष्टानवच्छिन्नत्वा
त्तथापिबाधप्रतिबध्यतावच्छेदकतावच्छेदकोधर्मइत्यनेनबाधप्रतिबध्यतावच्छेदकतावच्छेदकताश्रयधर्मविवक्षणान्महानसीयवन्हित्वावच्छिन्न
विषयिताघटितादृशवन्हित्वावच्छिन्नविषयितात्वविशिष्टावच्छिन्नत्वस्यवह्न्यभावबुद्धिप्रतिबंधकतायामक्षतत्वेनतादृशसंशयासंग्रहाभावात् ॥
अथैवंसतिसाध्यवत्तानिर्णयनिवर्त्यत्वदललभ्यसंशयत्वघटकप्रतिबध्यतायांसाध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वविशेषणस्य
वैयर्थ्यापातः ॥ महानसीयवन्हिमान्नवेतिसंशयस्यमहानसीयवह्न्यभावबुद्धिप्रतिबंधकतायांस्तादृशवन्हित्वावच्छिन्नविषयितात्वरूपधर्मविशि
ष्टपर्याप्तावच्छेदकताकत्वाभावेनवन्हिसाध्यकेपक्षतात्वाप्रसक्तेरितिचेन्न ॥ वन्हिव्याप्याभावसाध्यकेवह्न्यभावबुद्धिप्रतिबंधकतायांवन्हिव्याप्य
वत्तानिश्चयरूपबाधप्रतिबध्यतावच्छेदकतावच्छेदकवन्हित्वावच्छिन्नविषयितात्वविशिष्टावच्छिन्नत्वेनवन्हिमान्नवेतिसंशयस्यपक्षतात्वा
पत्तिवारणायतद्विशेषणस्यावश्यकत्वात् ॥ नचबाधनिश्चयत्वव्यापकतावच्छेदकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतात्वकत्वरू
पबाधप्रतिबध्यतावच्छेदकत्वविवक्षणान्नवन्हिव्याप्याभावसाध्यकेवन्हिमान्नवेतिसंशयस्यपक्षतात्वापत्तिर्वह्न्यभावविषयकत्वावच्छिन्नप्रतिब ३२१

ध्यतानिरूपितप्रतिबंधकतात्वस्यवह्निव्याप्यत्वावच्छिन्नप्रकारताकविशेषदर्शनानात्मकवह्निव्याप्याभावाभावत्वावच्छिन्नप्रकारताकनिश्चयसा
धारणबाधनिश्चयत्वव्यापकतानवच्छेदकत्वादितिभाव्यं ॥ तथासतिमहानसीयवह्निसाध्यकेमहानसीयवह्न्यभाववान्वेतिसंशयस्यपक्षतात्वानुप
पत्तिर्महानसीयवह्नित्वावच्छिन्नाप्रकारकमहानसीयवह्न्यभावाभावत्वावच्छिन्नप्रकारकबुद्धिंप्रतिवह्निसामान्याभाववत्ताबुद्धेःप्रतिबंधकतयात
न्निष्ठमहानसीयवह्न्यभावाभावत्वावच्छिन्नविषयकत्वरूपत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतात्वस्यवह्निसामान्याभाववत्तानिश्चय
साधारणबाधनिश्चयत्वव्यापकतानवच्छेदकत्वादनुगतरूपबाधनिवेशकल्पेस्वरूपसंबंधरूपबाधत्वावच्छिन्नत्वविशेषितप्रतिबंधकताघटित
बाधप्रतिबध्यतावच्छेदकत्वस्यव्यापकतासंबंधेनबाधनिश्चयत्वविशिष्टत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतात्वरूपस्यवाबाधप्र
तिबध्यतावच्छेदकत्वस्यस्वनिष्ठविषयितायांविवक्षणीयतयावह्निव्याप्याभावसाध्यकेवह्न्यभावविषयकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबं
धकतायांबाधनिश्चयत्वावच्छिन्नत्वस्यव्यापकतासंबंधेनबाधनिश्चयत्ववैशिष्ट्यस्यचसत्वाद्वह्निसामान्याभाववान्वेतिसंशयस्यपक्षतात्ववार
णायतद्विशेषणावश्यकत्वात् ॥ बाधप्रतिबध्यतावच्छेदकस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतायांसाध्य

वत्तानिर्णयप्रतिबध्यतावच्छेदकावच्छिन्नत्वस्थानेसाध्यवत्तानिर्णयप्रतिबंधकतावच्छेदकावच्छिन्नत्वविवक्षणान्नवन्हिव्याप्यसाधकेवन्हिव्याप्या
भावाभावात्मकवन्हिमान्वन्हिसामान्याभाववान्वेतिसंशयस्यपक्षतात्वापत्तिर्नवा तत्रैववन्हिव्याप्यधूमवान्नवेतिसंशयस्यपक्षतात्वापत्तिरित्यपिके
चित्॥ अथैवमपिमहानसीयवन्हिमत्पर्वतकालीनपर्वतोवन्हिमानित्यनुमितौतादृशपर्वतोवन्हिमान्नवेतिसंशयस्यपक्षतात्वापत्तिः॥ नचप
क्षतावच्छेदककोटौपर्वतत्वावच्छेदेनमहानसीयवन्हिमत्वस्यनिवेशेतादृशपर्वतत्वविशिष्टेमहानसीयवन्हिमत्तासंशयस्याहार्यत्वात्तस्यचातिप्रसंजक
त्वात्॥ पर्वतत्वसामानाधिकरण्येनतन्निवेशेचतस्यविशिष्टपक्षेसाध्यवत्तानिश्चयनिवर्त्यत्वाभावादितिवाच्यं॥ तथापितत्रैवपर्वतत्वावच्छेदेनम
हानसीयवन्हेः पक्षतावच्छेदकघटकत्वेपर्वतोमहानसीयवन्हिमान्नवेतिसंशयस्यपक्षतात्वापत्तिस्तस्यपर्वतत्वावच्छेदेनवन्ह्यभाववत्तानिश्चयात्म
कबाधनिश्चयप्रतिबध्यतावच्छेदकमहानसीयवन्हित्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यताशालित्वान्नादृशप्रतिबध्य
तायाश्चविशिष्टपक्षेसाध्यवत्तानिश्चयत्वव्यापिकायापर्वतत्वावच्छिन्नेमहानसीयवन्हिमत्तानिश्चयत्वावच्छिन्नप्रतिबंधकतानिरूपितत्वाच्च॥
नचसाध्यवत्तानिश्चयत्वव्यापकप्रतिबंधकतायांपक्षेपक्षतावच्छेदकप्रकारकग्रहत्वाव्यापकत्वविशेषणान्नायंदोषइतिवाच्यं॥ नचासतिवन्हि

मत्पर्वतकालीनपर्वतोवन्हिमानित्यादौपर्वतोवन्हिमान्नवेतिसंशयासंग्रहप्रसंगः ॥ नचतादृशसंशयस्यालक्ष्यत्वंशंक्यं ॥ तथासति
नीलपर्वतोवन्हिमानित्यादावपितस्यालक्ष्यतापत्तौतत्रातिप्रसंगात् ॥ निरुक्तस्थलेपर्वतत्वावच्छेदेनवन्हेः पक्षतावच्छेदकघटकत्वे विशि
ष्टपक्षेसाध्यवत्तासंशयस्यानाहार्यस्यासंभवेनपर्वतोवन्हिमान्नवेतिसंशयस्यैवपक्षतात्वोपगमस्यावश्यकत्वाच्च ॥ ननुपक्षसाध्यभे
देनपक्षताभेदाद्वन्हिमत्पर्वतकालीनपर्वतपक्षकस्थलेविशिष्टपक्षग्रहत्वाव्यापकत्वंनदेयमिति वाच्यं ॥ एवमपिघटवन्हिमत्पर्व
तकालीनपर्वतोवन्हिमानित्यादौतादृशविशेषणोपादानेपर्वतोवन्हिमान्नवेतिसंशयासंग्रहः ॥ तदुपादानेपर्वतोघटविशिष्टवन्हि
मान्नवावन्हिघटोभयवान्नवेतिसंशययोः संग्रहापत्तिर्वन्हिघटवानितिनिश्चयस्यापिघटविशिष्टवह्न्यभाववत्ताबुद्धौवन्हिघटो
भयत्वावच्छिन्नाभाववत्ताबुद्धौचप्रतिबंधकतयातादृशप्रतिबंधकतायाश्चविशिष्टसाध्यवत्तानिश्चयत्वव्यापकत्वादितिचेन्न ॥
अगत्यातत्रसाध्यवत्तानिश्चयत्वव्यापकप्रतिबंधकतायांसाध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारत्वानवच्छिन्नत्वस्य

निवेशनीयत्वात् ॥ अथैवमपिपर्वतोऽभाववत्पर्वतकालीनवन्हिमानित्यादौपर्वतस्तादृशवह्न्यभावाभाववानभावसामान्या
भाववान्वापर्वतइतिसंशयस्यपक्षतात्वापत्तिः ॥ नचसाध्यवत्तानिश्चयत्वव्यापकप्रतिबंधकतायांसाध्यतावच्छेदकप्रकारकग्र
हत्वाव्यापकत्वविशेषणान्नोक्तदोषइतिवाच्यं ॥ तथासतिवन्हिमत्पर्वतकालीनवन्हिसाध्यकेपक्षस्तादृशवन्हिमान्वन्हिसामा
न्याभाववान्वेतिसंशयासंग्रहप्रसंगादिति-चेन्न ॥ साध्यवत्तानिश्चयत्वव्यापकप्रतिबंधकतायांसाध्यतावच्छेदकप्रकारकग्रह
त्वव्यापकत्वसाध्यतावच्छेदकावच्छिन्नप्रकारतानवच्छिन्नत्वोभयाभावनिवेशेनसर्वसामंजस्यादिति दिक् ॥ बाधप्रतिबध्य
त्वमात्रनिवेशत्यागबीजमाह ॥ तत्रेति ॥ ननुसंशयत्वघटकस्वनिष्ठविषयितायांबाधप्रतिबध्यतावच्छेदकत्वनिवेशे
संशयत्वघटकप्रतिबध्यतायांसाध्यवत्तानिश्चयनिर्वत्यतावच्छेदकावच्छिन्नत्वनिवेशोव्यर्थः पर्वतेवन्हिसाधनेघटविशि
ष्टपर्वतविषयितायांबाधप्रतिबध्यतावच्छेदकत्वविरहेणैववह्न्यभाववान्पर्वतोघटवान्नवेतिसंशयस्यपक्षतात्वाप्रसक्ते

रत आह ॥ एवंचेति ॥ अथवेति स्वघटितेनेति॥ स्वंप्रकारता॥ अत्रस्वपदार्थप्रकारतायांबाधप्रतिबध्यतावच्छेदकत्वं देयं ते
नवान्हिव्याप्यसाध्यकेवन्हिमान्नवेति संशयव्युदासः स्वघटितधर्मावच्छिन्नप्रतिबंधकतानिरूपितप्रतिबध्यतायांसाध्यवत्ता
निश्चयत्वव्यापकप्रतिबंधकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नत्वमपिदेयं तेनवन्हिसाध्यकेमहानसीयवान्हिमान्न
वेतिसंशयव्युदासः ॥ स्वघटितधर्मावच्छिन्नप्रतिबंधकतानिरूपितायासाध्यवत्तानिश्चयत्वव्यापकप्रतिबंधकतानिरूपि
तप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतातदवच्छेदकत्वस्वावच्छेदकधर्मावच्छिन्ननिरूपितविरोधविषयतानिरूपितत्व
सामानाधिकरण्येतन्निनयसंबंधेनबाधप्रतिबध्यतावच्छेदकप्रकारताविशिष्टप्रकारत्वंतादृशविषयताविशिष्टविषयत्वंवासंश
यत्वंपक्षतात्वमितिफलितंसामानाधिकरण्यसंबंधनिवेशाच्चनपर्वतोवन्ह्यभाववानितिज्ञाने ऽतिव्याप्तिः ॥ शेषपक्षताग्रंथेकृष्णं
भट्टलिखिताधिकलेखनीयविशेषांशाभावाद्विस्तरभयादत्रतद्विचारोनलिखितस्तदनुमोदंतुदयालवोविद्वांसः ॥ ॥

